॥ श्रीरस्तु ॥

श्रीमद्वेदान्तदेशिकग्रन्थमालायां

श्रीहयग्रीवस्तोत्रादि पादुकासहस्रान्त सकलस्तोत्रसंभृतः

# ॥ स्तोत्रावलीविभागः ॥

———:x:———

पर्यवेक्षकः परिष्कारकश्च

श्रीकाञ्ची प्रतिवादिभयङ्करमठाधीश जगद्गुरु

**गादि श्रीकृष्णमाचार्यस्वामी,**

तथा

**॥ श्रीकांञ्ची प्रतिवादिभयङ्करः अण्णंगराचार्यः ॥**


प्रकाशनादि सर्वाधिकारी

**विद्वान् अ. संपत्कुमाराचार्यः, M. A.**

३९, सन्निधिवीथी, कञ्जीवरम् ।

मद्रास्—गीताचार्य मुद्रणालये सममुद्यत ।

**1940**

॥ एतन्मूल्यं रूप्यद्वयमात्रम् ॥ [Postage Extra

# ॥ महोपकारस्मरणम् ॥

अस्य स्तोत्रावलीविभागस्य संमुद्रणाय सादरं द्रव्योपकारं कृतवतां सोळापुरीय-श्रीवैष्णव-सार्वभौम - श्रीयुत. सेठजी. गणेशराममुरलीधर. श्रीरामानुजबिल्डिङ्गाधिपतीनां श्रीवैष्णवरत्नानां श्रीनारायणदास-नरसिंहदास-रघुनाथदास - राजगोपालदासानां महोपकारः सुचिरं स्मरणीयः ॥

॥ एतेषां शुभमस्तु नित्यमनघम् ॥

॥ श्रीरस्तु ॥

# श्रीमद्वेदान्तदेशिकग्रन्थमालायां

## स्तोत्रावलीविभागस्य मुखपीठिका ।

———:o:———

## सादरमावेदनम् ।

विशिष्टाद्वैतसिद्धान्तनिर्धारणधुरंधरा भोभो महाभागाः !

बहुतिथादेव कालादस्माकमनुवर्तमानः कश्चिदयमुत्साहो निरवग्रहभगवद्भागवतानुग्रहभूम्ना कियत्याचन कालकलया फलेग्रहिस्संजायत इति सानन्दं सहृदयचरणसरोरुहसविधे समावेदयामः । अस्मदीयपरमपावनविशिष्टाद्वैतसिद्धान्तपद्धतिप्रतिष्ठापनधूर्वहैराचार्यसार्वभौमैरशेषैरनुगृहीतानां सर्वेषामपि सद्ग्रन्थानां सुपरिष्कृतफक्किकया मालात्मना प्रकाशने व्यवसिता वयं व्यतीते वत्सरे [१९३९. प्रमादिसंवत्सरे] श्रीभाष्यकृदनुगृहीतश्रीभाष्यादिग्रन्थरत्नसप्तकसमलंकृतां श्रीभगवद्रामानुजग्रन्थमालां प्राचीकशामेति प्रायस्संविदते प्राज्ञाः ।

अथ कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र श्रीमद्वेदान्ताचार्यानुगृहीतानां समेषामपि ग्रन्थानां श्रीमद्वेदान्तदेशिकग्रन्थमालात्मना प्रकाशने अङ्कुरितोत्कण्ठा वयं कतिपयेभ्य एव मासेभ्यः पूर्वं समुद्यता अनिर्वचनीयभगवत्कटाक्षमहिम्ना सद्यः फलवत्तरसमुद्यमाश्चाभूमेति कथं नु प्रभवामो महान्तमिममानन्दमन्तरमान्तमप्रकाश्य स्थातुम् । सर्वथा दुर्बलतमेनाप्यनेन जनेन सोत्कण्ठमारभ्यमाणेषु लोकोपकारक्षमेषु कार्यविशेषेषु भगवान् कलशजलधिकन्यावल्लरीकल्पशाखी साभिनिवेशं स्वयं सुदृढहस्तावलम्बप्रदस्संपद्यत इति चिरन्तनानुभवसाक्षिकं निस्संशयविपर्ययं निर्धारितोऽयमंशः। अत एव "महदिदं साहसम्" इति मनागप्यमन्यमान एव महता धीरभावेन महीयस्यस्मिन् कैङ्कर्ये प्रवृत्तः सुधियां हार्दहर्षप्रकर्षसंपत्तये कल्पते जनोऽयमिति सत्यं सर्वथा प्रशंसनीयोऽत्र भूयाननुग्रह एक एव तेषाम्—ये खलु सदाचार्यास्सन्ततमस्मदीयमन्तःकरणमण्डपमलङ्कुर्वन्ति ।

श्रीमद्वेदान्तदेशिकचरणैः नानाविभागेषु कृतयः कृतास्समुल्लसन्तीति विजानन्ति नामेदं विश्वे विपश्चितः । ते च विभागाः पञ्चेति च सुगमम्—१. स्तोत्रावलीविभागः २. वेदान्तविभागः ३. व्याख्यानविभागः ४. काव्यनाटकविभागः ५. संप्रदायविभागश्चेति ।

श्रीहयग्रीवस्तोत्रप्रभृतिपादुकासहस्रान्तसकलस्तोत्रग्रन्थसंभृतः स्तोत्रावलीविभागस्सांप्रतं सुष्ठु संपन्नमुद्रणः प्रादुर्भवति सहृदयानां पुरत इति ससंतोषं सूचयामः ।

अत्र च संशोधनादिसर्वकार्यनिर्वहणधौरन्धरीं सहर्षप्रकर्षमङ्गीकृतवत्सु अस्मत्प्रियजामातृपादेषु न्यायवेदान्तविशारदेषु M. A. इत्युपाधिभूषितेषु श्री. उ. वे. ति. अ. संपत्कुमाराचार्येषु, तथा शोधनसाहाय्यममितमाहितवत्सु अस्मत्प्रियमित्ररत्नेषु पण्डितवरेषु श्री. उ. वे. अ. मु. श्रीनिवासाचार्येषु च धन्यवादानाम्रेडयन् दासः प्रणतिततिभिरेव कथञ्चिदात्मीयमाधमर्ण्यमपोहतीव ।

निरतिशयया जाग्रत्तया निर्व्यूढेऽपि शोधने काश्चिदशुद्धयः अवशादत्र यदि लब्धपदास्स्युस्ता महामतिभिः कृपया समीकरणीयास्समुद्बोधनीयाश्चेति सप्रश्रयमभ्यर्थयामहे । अत्र च क्वचित्क्वचित्पाठविशेषादिसमुद्बोधनेन संशोधने साहायकं कृतवतां श्रीकाञ्चीस्थ, [अस्मदुपाध्यायपाद]

श्री. उ. वे. बालवन. रङ्गाचार्य, अय्याश्रीकृष्णतातार्य, तिरुपतिनगरस्थ - कोळियालम् श्रीशठकोपार्य शिरोमणि, उप्पिलियप्पन् सन्निधि - नवनीतम् श्रीरामदेशिकार्यशिरोमणिमहाशयानां विषये सुचिरं कृतज्ञास्स्मः - उत्तरोत्तरमेतेषामन्येषां चैवंविधं साहाय्यकमाशंसमानाः । अस्मत्प्रियसुहृन्मणिभिः श्रीकुम्भघोणनिवासरसिकैः श्री. उ. वे. महामहोपाध्याय. रा. च. वि. कृष्णमाचार्यमहाभागैर्बहुभ्यो वत्सरेभ्यः पूर्वं परिशोध्य प्रकाशितो देशिकस्तोत्रावलीश्रीकोशः साम्प्रतमस्माकमतितरामुपकारक आसीदिति च विशिष्य विनिवेदयामः ।

एवं वेदान्तविभागश्च महता जवेन संपद्यमानमुद्रणो बोभवीतीति सुधियो जानन्त्येव, यत्र च अधिकरणसारावली, शतदूषणी, मीमांसापादुका, सेश्वरमीमांसा, न्यायपरिशुद्धिः, न्यायसिद्धाञ्जनम्, ससर्वार्थसिद्धिकतत्त्वमुक्ताकलापः इत्यमी प्रबन्धाः प्रादुर्भवन्ति । एवमन्ये च विभागा अविलम्बितमेव प्रादुर्भवितार इति प्रतियन्तः प्राज्ञपुंगवा अत्र सर्वविधसाहाय्यसंपादनसमुत्सुका भूयासुरिति सादरमुदञ्चयते । $

एतत्तु विशेषतो निवेदनीयमवभाति यदुत-अस्य स्तोत्रावलीविभागस्य संमुद्रणौपयिकं वसु साभिनिवेशं सादरं च समर्पितवतां सोळापुरीय "श्रीरामानुजबिल्डिंग्ज" अध्यक्षमहोदयानां श्रीयुत सेठजी **गणेशराममुरलीधर** समाख्यया सर्वतः प्रसिद्धिमासेदुषामास्तिकशिखामणीनां श्रीवैष्णवसार्वभौमानां **श्रीनारायणदास - नरसिंहदास - रघुनाथदास - राजगोपालदासानां** सर्वतोमुखी श्रेयस्समृद्धिस्समुल्लसतुतमामिति ॥

13—9—1940
**विक्रमसंवत्सरीय सिंहश्रोणायाम्. श्रीकाञ्ची ।**

इति निवेदयति - श्रीवैष्णवदासः
**श्रीकाञ्ची - प्रतिवादिभयङ्कर - अण्णङ्गराचार्यः ।**
(श्रीमद्वेदान्तदेशिकग्रन्थमालायाः प्रधानसंपादकः)

$ प्रत्येकशः पुस्तकानि जिघृक्षतां सौकर्याय वेदान्तविभागः सम्पुटत्रितयात्मनाऽवतार्यते । प्रथमसम्पुटे अधिकरणसारावली शतदूषणी च प्रकाशिते अभूताम् । तन्मूल्यं रूप्यत्रितयमात्रम् । द्वितीयसम्पुटे मीमांसापादुका सेश्वरमीमांसा न्यायपरिशुद्धिः न्यायसिद्धाञ्जनं च प्राकाशिषत । तन्मूल्यं च तथा । अथ तृतीयसम्पुटे ससर्वार्थसिद्धिः तत्त्वमुक्ताकलापः प्रकाश्यते । (१९४० डिसम्बरमासात्प्रभृति क्रय्यं तत्) । तन्मूल्यं रूप्यचतुष्टयम् । एवं, हंससंदेश-सुभाषितनीवी - यादवाभ्युदय - संकल्पसूर्योदयाख्यग्रन्थचतुष्टयमण्डितः काव्यनाटकविभागो रूप्यत्रितयमूल्यकः (१९४० नवम्बरमासतः प्रभृति क्रय्यः) । ईशावास्योपनिषद्भाष्यम्, चतुःश्लोकीभाष्यम्, स्तोत्रभाष्यम्, मद्य-भाष्यमिति ग्रन्थचतुष्टयात्मकं व्याख्यानविभागस्य प्रथमसंपुटं रूप्यत्रितयमूल्यकं (१९४१ जनवरिमासतः प्रभृति क्रय्यम्) । गीतार्थसंग्रहरक्षा गीताभाष्यतात्पर्यचन्द्रिकाभिधानग्रन्थद्वयविभूषितं व्याख्यानविभागस्य द्वितीयसंपुटं रूप्यचतुष्टयमूल्यकम् (१९४१ मार्चमासतः प्रभृति क्रय्यम्) । तत्त्वटीका, निक्षेपरक्षा, सच्चरित्ररक्षा, पाञ्चरात्ररक्षेत्यादिग्रन्थमण्डितं व्याख्यानविभागस्य तृतीयसंपुटं रूप्यत्रितयमूल्यकम् (१९४१ एप्रल्मासतः प्रभृति क्रय्यम्) । संप्रदायविभागः द्राविडप्रबन्धरहस्यजालमण्डितः रूप्यपञ्चकमूल्यकः (१९४१ जूनमासात्प्रभृति क्रय्यः) ॥

सर्वेषाममीषां ग्रन्थानाम्, रूप्यषट्कमूल्यक (आन्ध्राक्षरमय) श्रीभगवद्रामानुजग्रन्थमालायाश्च प्राप्तिस्थानम्—

GRANTHAMALA OFFICE
*39. Sannidhi Street, Conjeeveram.*

"ग्रन्थमाला आफीस", ३९., सन्निधिवीधी, कञ्जीवरम्.

# ॥ अभिनन्दन श्रीमुखपत्राणि ॥

श्रीवेदान्तदेशिकग्रन्थमालाविषये श्रीमद्वेदमार्गेत्यादि. श्रीमत्परमहंसपरिव्राजकाचार्य-
श्रीमदहोबिलमठाधिपति संयमिसार्वभौमैरनुगृहीता श्रीमुखपत्रिका ।

## श्रीअहोबिलमठम्. श्रीलक्ष्मीनरसिंहस्वामिसन्निधि ।

॥ श्रीमते रामानुजाय नमः ॥

श्रीमदहोबिलमठाधीशानाम् श्रीमत्परमहंसेत्यादिविशेषणसंवलितानाम् श्रीमतां श्रीवण्-शठकोपयतीन्द्रमहादेशिकानामभिनन्दनश्रीमुखम्—महदिदमामोदस्थानम्, यत्किल भगवतः श्रीभाष्यकृतः श्रीभाष्यादिग्रन्थमाला पण्डितप्रकाण्डैः श्रीकाञ्ची प्रतिवादिभयङ्कर-अण्णङ्गराचार्यैः सोत्साहं संमुद्रय सादरमस्मदालोकपथमनायि ।

अयमपरोऽस्माकमतिरोहितः प्रमोदः यो हि श्रीमन्निगमान्तमहादेशिकैरनुगृहीतानां व्या-ख्येयरूपाणां व्याख्यानरूपाणां च ग्रन्थानामेकत्र राशीकृत्य मुद्रणोपक्रम इति । एवमादिमुद्रणेषु अनवद्यपाठानामावापोद्वापादिरहितं मुद्रणं समाप्तिमियादिति बलीयान् विस्रम्भः ।

आशास्महे च वयं विपश्चिदपश्चिमानां प्रतिवादिभयङ्कर-अण्णङ्गरार्यवर्याणाम् एवंरूप-प्रवृत्तयो वोभुवतु फलेग्रहयः कमलानरहरिकरुणापरिवाहेण यतिपुरन्दरवेदवतंसगुरूत्तमयोः कटाक्ष-लहरीसनाथेन । आस्तिकाग्रेसराः पोषकीभूय प्रोत्साहयन्त्विमान्—इति च । इत्थं श्रीमन्निदेशानु-सारी· अं. व. नरसिंहाचार्यः श्रीकार्यम् श्रीअहोबिलमठः । श्रीरङ्गम् । (१५ विक्रमाषाढ.)

---

श्रीमद्वेदमार्गेत्यादि श्रीमत्परमहंसपरिव्राजकाचार्य· श्रीमत्परकालमठाधिपति-
श्रीब्रह्मतन्त्रपरकालसंयमिसार्वभौमैरनुगृहीता श्रीमुखपत्रिका ।

## श्रीलक्ष्मीहयवदनलक्ष्मीनारायणौ विजयेताम् ।

अयि श्रीमद्वेदान्तसूरिसूक्तिमल्लीसौरभप्रणयिनो महाभागाः! अलाभि श्रीमद्वेदान्तदेशिक-ग्रन्थमालानामिका काचन सञ्चिका, सेयमवालोकि श्रीमत्परमहंसादिविरुदपरिकर्मितैः श्रीलक्ष्मीहय-ग्रीवदिव्यपादुकासेवक-श्रीमदभिनवरङ्गनाथ-ब्रह्मतन्त्र-परकालसंयमीन्द्रैः । तेन ते नितरां मुमुदिरे । इदमत्र निवेद्यते श्रीदेशिकेन्द्राणां नियमनानुरोधेन; भृशं श्लाघनीयोऽयं समारम्भः ।.....सञ्चिका-मेतां परिगृह्णन्तः श्रीमन्निगमान्तगुरुचरणप्रवणान्तरङ्गास्तदनुग्रहभाजनानि भवेयुरिति निस्संशय-मभिदध्मः । कार्योद्यमोऽयं निरन्तरायं सर्वात्मना फलेग्रहिर्भूयाद्भगवतो हयमुखस्य निरवग्रहेणानु-ग्रहेणेति सप्रमोदमाशास्महे इति । श्रीस्वामिपादानां निदेशानुसारी· ति· श्रीनिवासराघवाचार्यः - आनररि सूपरिण्टण्डण्ट, श्रीपरकालमठ· मैसूरु·    25—8—40

# OPINIONS

## H. H. Sri Ahobila Mathadhipathi Swamy,

SRIRANGAM, 30—7—40

It is a matter of great joy that the works, Sri Bhasya etc., of Sri Ramanuja have been printed together and presented to us by Sri Prathivadi Bhayankara Annangaracharya, the illustrious pandit of Conjeevaram.

Another cause of unconcealable joy is the beginning to print in a globe edition, the many and varied works of Sri Nigamanta Maha Desika, that are in the form of original texts and commentaries. It is our firm belief that this publication will be completed by incorporating correct readings, without any interpolation or omission. May these efforts of Pandit Annangaracharya be crowned with success by the grace of Sri Lakshmi Narasimha, Sri Ramanuja and Sri Vedanta Desika. We hope that all Astikas will support him by becoming subscribers.

(Translation of original in Sanskrit.)

---

## H. H. Sri Parakala Mathadhipathi Swamy,

MYSORE.

A copy of a Sanchika of Srimad Vedanta Desika Granthamala was recieved and gone through by H. H. Srimad Abhinava Ranganatha Brahmatantra Parakala Swami with great pleasure. I am desired by the Swami to convey you the following news. This is a very luadable effort.........

Those that get these books do certainly gain devotion towards Sri Vedanta Desika and win his favour, too. May this effort of yours be crowned with success, without impediments, by the grace of Bhagavan Sri Hayagriva.

(Translation of original in Sanskrit)

*N B.*—Similar letters of appreciation have been recieved from eminent Pandits like Sri Mahamahopadhyaya Abhinava Bhatta Bana R. V. Krishnamacharya of Kumbakonam and Sri Kali Rangacharya, Danadhikari, Pudukotah State. They will be published in due course.

# Sri Vedantha Desika Grantha Mala.

*(Complete Works of Sri Vedanta Desika)*

EDITOR, P. B. ANNANGARACHARYAR, CONJEEVARAM.

The public are aware of the fact that all the works of Sri Vedanta Desika are being printed in beautiful Devanagari characters and published so as to make a set. They will be published, not in parts of 120 pages as announced before, but in volumes as shown below. The whole series is expected to be published by the end of June 1941. Those that subscribe Rs. 25/- by the end of October 1940, will get the whole series without any more charges to pay. Others can get the volumes at the following rates, postage extra.

1. *Vedanta Section.* Vol. (i) Contains Adhikaranasaravali and Satadushani and is offered for Rs. 3—0—0. Vol. (ii) Contains Mimamsa Paduka, Seswara Mimamsa, Nyaya Parisuddhi and Nyaya-Siddhanjana. Price Rs. 3—0—0. Vol. (iii) Consists of Tatwamuktakalapa with Sarvartha Siddhi. Price Rs. 4—0—0.

2. *Stotra Section.* This volume Contains all stotras from Hayagrivastotra to Padukasahasra, as also Dramidopanishat-tatparya-ratnavali and Dramidopanishatsara. Price Rs. 2—0—0.

3 *Kavya Nataka Section.* This volume consists of Hamsa-sandesa, Subhashita-nivi, Yadavabhyudaya (24 Cantos) and Sankalpa-suryodaya. Price Rs. 3—0—0

4. *Commentary Section.* This contains all the commentaries composed by Sri Vedanta Desika. It will be published In three volumes. Vol. (i) is to be made up of Isavasyopanishat-bhashya, Chatussloki-bhasya, Stotra-bhashya and Gadya-bhashya. Price Rs. 3-0-0. Vol. (ii) contains Tatparya-chandrika, with Gita-bhashya, and Githartha-sangraharaksha. Price Rs. 4—0—0. Vol. (iii) contains Tatva-tika on Sri Bhashya, Saccharitra-raksha, Pancharatra-raksha and Nikshepa-raksha. Price Rs. 3—0—0.

5. *Sampradaya Section.* This contains all the Tamil works and will be published in both Tamil and Telugu characters. All the works beginning with Amrutharanjani and all the Rahasya Granthas will be published in one Volume priced at Rs. 5—0—0. Subscribers may get either the Tamil or Telugu edition at their own discretion.

AN IMPORTANT APPEAL TO WELL-TO-DO PERSONS.

It will be seen from the above that the prices are purposely kept very low, in order to enable poor students and Pandits get the complete works of Sri Desika. As such, it will not be possible to finance the work of publication with the meagre help of ordinary subscribers alone. So, well-to-do pessons are specially requested to come forward with liberal donations and help us, in this great task. These gentlemen are divided into three classes, as follows:

(i) Patrons who pay Rs. 100/- or more. (ii) Donors who pay Rs. 50/- and (iii) Sympathisers who pay Rs. 30/-

The names of all patrons and donors these will be published in each issue.

PUBLISHER:

25-9-40 VIDWAN T. A. SAMPATHKUMARACHARYA, M. A.,

*Granthamala Office,*

*39, Sannidhi St., Conjeeveram. (S. I. R.)*

# स्तोत्रानुक्रमसूची ।

॥ श्रीरस्तु ॥

॥ श्रीमते हयग्रीवाय नमः ॥

॥ श्रीमन्निगमान्तमहादेशिकाय नमः ॥

## श्रीमद्वेदान्तदेशिकग्रन्थमालायाम्

# ॥ स्तोत्रावली-विभागः ॥

## ॥ श्रीहयग्रीवस्तोत्रम् ॥ १ ॥

**श्रीमान् वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे सन्निधत्तां सदा हृदि ॥**

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् । आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ १

स्वतस्सिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।
अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं हताशेषावद्यं हयवदनमीडीमहि महः ॥ २

समाहारस्साम्नां प्रतिपदमृचां धाम यजुषां लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।
कथादर्पक्षुभ्यत्कथककुलकोलाहलभवं हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ ३

प्राची सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा ।
वक्त्री वेदान् भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥ ४

विशुद्धविज्ञानघनस्वरूपं विज्ञानविश्राणनबद्धदीक्षम् । दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥ ५

अपौरुषेयैरपि वाक्प्रपञ्चैः अद्यापि ते भूतिमदृष्टपाराम् । स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ कटाक्षणीयः ॥ ६

दाक्षिण्यरम्या गिरिशस्य मूर्तिर्देवी सरोजासनधर्मपत्नी । व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः ॥

मन्दोऽभविष्यन्नियतं विरिञ्चो वाचांनिधे वञ्चितभागधेयः। दैत्यापनीतान् दययैव भूयोऽप्यध्यापयिष्यो निगमान्न चेत्त्वम्॥८

वितर्कडोलां व्यवधूय सत्त्वे बृहस्पतिं वर्तयसे यतस्त्वम् । तेनैव देव त्रिदशेश्वराणामस्पृष्टडोलायितमाधिराज्यम् ॥ ९

अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान्मन्त्रमयं शरीरम् । अखण्डसारैर्हविषां प्रदानैराप्यायनं व्योमसदां विधत्से ॥१०

यन्मूलमीदृक्प्रतिभाति तत्त्वं या मूलमाम्नायमहाद्रुमाणाम् । तत्त्वेन जानन्ति विशुद्धसत्त्वास्तामक्षरामक्षरमातृकां ते ॥ ११

अव्याकृताद्व्याकृतवानसि त्वं नामानि रूपाणि च यानि पूर्वम् । शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर त्वां त्वदुपज्ञवाचः॥१२

मुग्धेन्दुनिष्यन्दविलोभनीयां मूर्तिं तवानन्दसुधाप्रसूतिम् । विपश्चितश्चेतसि भावयन्ते वेलामुदारामिव दुग्धसिन्धोः ॥१३

मनोगतं पश्यति यस्सदा त्वां मनीषिणां मानसराजहंसम् । स्वयंपुरोभावविवादभाजः किङ्कुर्वते तस्य गिरो यथार्हम् ॥१४

अपि क्षणार्धं कलयन्ति ये त्वामाप्लावयन्तं विशदैर्मयूखैः । वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते ॥१५

स्वामिन् भवद्ध्यानसुधाभिषेकाद्वहन्ति धन्याः पुलकानुबन्धम् । अलक्षिते क्वापि निरूढमूलमङ्गेष्विवानन्दथुमङ्कुरन्तम् ॥

स्वामिन् प्रतीचा हृदयेन धन्यास्त्वद्ध्यानचन्द्रोदयवर्धमानम् । अमान्तमानन्दपयोधिमन्तः पयोभिरक्ष्णां परिवाहयन्ति ॥१७

स्वैरानुभावास्त्वदधीनभावाः $ समृद्धवीर्यास्त्वदनुग्रहेण । विपश्चितो नाथ तरन्ति मायां वैहारिकीं मोहनपिञ्छिकां ते ॥
प्राङ्निर्मितानां तपसां विपाकाः प्रत्यग्रनिश्श्रेयससम्पदो मे । समेधिषीरंस्तव पादपद्मे सङ्कल्पचिन्तामणयः प्रणामाः ॥१९
विलुप्तमूर्धन्यलिपिक्रमाणां सुरेन्द्रचूडापदलालितानाम् । त्वदङ्घ्रिराजीवरजःकणानां भूयान्प्रसादो मयि नाथ भूयात् ॥२०
परिस्फुरन्नूपुरचित्रभानुप्रकाशनिर्धूततमोनुषङ्गाम् । पदद्वयीं ते परिचिन्महेऽन्तः प्रबोधराजीवविभातसन्ध्याम् ॥ २१
त्वत्किङ्करालङ्करणोचितानां त्वयैव कल्पान्तरपालितानाम् । मञ्जुप्रणादं मणिनूपुरं ते मञ्जूषिकां वेदगिरां प्रतीमः ॥ २२
सञ्चिन्तयामि प्रतिभादशास्थान् सन्धुक्षयन्तं समयप्रदीपान् । विज्ञानकल्पद्रुमपल्लवाभं व्याख्यानमुद्रामधुरं करं ते ॥ २३
चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ करं त्वदीयम् । ज्ञानामृतोदञ्चनलम्पटानां लीलाघटीयन्त्रमिवाश्रितानाम् ॥
प्रबोधसिन्धोररुणैः प्रकाशैः प्रवालसङ्घातमिवोद्वहन्तम् । विभावये देव सपुस्तकं ते वामं करं दक्षिणमाश्रितानाम् ॥ २५
तमांसि भित्त्वा विशदैर्मयूखैः सम्प्रीणयन्तं विदुषश्चकोरान् । निशामये त्वां नवपुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम् ॥
दिशन्तु मे देव सदा त्वदीयाः दयातरङ्गानुचराः कटाक्षाः । श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रितकामधेनुम् ॥ २७
विशेषवित्पारिषदेषु नाथ विदग्धगोष्ठीसमराङ्गणेषु । जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्रसिंहासनमभ्युपेयाः ॥ २८
त्वां चिन्तयंस्त्वन्मयतां प्रपन्नस्त्वामुद्गृणन् शब्दमयेन धाम्ना । स्वामिन्समाजेषु समेधिषीय स्वच्छन्दवादाहवबद्धशूरः ॥
नानाविधानामगतिः कलानां न चापि तीर्थेषु कृतावतारः । ध्रुवं तवानाथपरिग्रहायाः नवं नवं पात्रमहं दयायाः ॥ ३०
अकम्पनीयान्यपनीतिभेदैरलंकृषीरन्हृदयं मदीयम् । शङ्काकलङ्कापगमोज्ज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ॥

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।
अम्लानश्रीरमृतविशदैरंशुभिः प्लावयन्माम् आविर्भूयादनघमहिमा मानसे वागधीशः ॥ ३२

वागर्थसिद्धिहेतोः पठत हयग्रीवसंस्तुतिं भक्त्या । कवितार्किककेसरिणा वेङ्कटनाथेन विरचितामेताम् ॥ ३३

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु हयग्रीवस्तोत्रं समाप्तम् ॥ १ ॥**

---

## ॥ दशावतारस्तोत्रम् ॥ २ ॥

देवो नः शुभमातनोतु दशधा निर्वर्तयन् भूमिकां रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १
निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैरन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूहतरङ्गरिङ्खणमिथःप्रत्यूढपाथश्छटाडोलारोहसदोहलं भगवतो मात्स्यं वपुः पातु नः ॥ २
अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा निद्राणस्य परस्य कूर्मवपुषो निःश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयः प्रेङ्खोलपर्यङ्किकानित्यारोहणनिर्वृतो विहरते देवः सहैव श्रिया ॥ ३
गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृतब्रह्माण्डः प्रलयोर्मिघोषगुरुभिर्घोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिः ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वम्भरा ॥ ४

---

**$ संरब्धवीर्याम्, संरुद्धवीर्यामिति च पाठभेदः ।**

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः अव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां या काचित्सहसा महासुरगृ(हे)हस्थूणा पितामह्यभूत् ॥ ५
व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटस्त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।
यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः स्रोतोभिः सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥ ६
क्रोधाग्निं जमदग्निपीडनभवं सन्तर्पयिष्यन् क्रमात् अक्षत्रामपि सन्ततक्ष य इमां त्रिस्सप्तकृत्वः क्षितिम् ।
दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन् अब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥ ७
पारावारपयोविशोषणकलापारीणकालानलज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥ ८
फक्कत्कौरवपट्टणप्रभृतयः प्रास्तप्रलम्बादयः तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैः आकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ९
नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमैः भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।
कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिकारङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायचर्याय ते ॥ १०
भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलंकषः ।
निश्शेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ ११
इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे (माया)रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति प्रत्यहं जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥ १२
विद्योदन्वति वेङ्कटेश्वरकवौ जातं जगन्मङ्गलं देवेशस्य दशावतारविषयं स्तोत्रं विवक्षेत यः ।
वक्त्रे तस्य सरस्वती बहुमुखी भक्तिः परा मानसे शुद्धिः काऽपि तनौ दिशासु दशसु ख्यातिः शुभा जृम्भते ॥ १३

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु दशावतारस्तोत्रं समाप्तम् ॥ २ ॥

---

# ॥ भगवद्ध्यानसोपानम् ॥ ३ ॥

अन्तर्ज्योतिः किमपि यमिनामञ्जनं योगदृष्टेश्चिन्तारत्नं सुलभमिह नः सिद्धिमोक्षानुरूपम् ।
दीनानाथव्यसनशमनं दैवतं दैवतानां दिव्यं चक्षुः श्रुतिपरिषदां दृश्यते रङ्गमध्ये ॥ १
वेलातीतश्रुतिपरिमलं वेधसां मौलिसेव्यं प्रादुर्भूतं कनकसरितः सैकते हंसजुष्टे ।
लक्ष्मीभूम्योः करसरसिजैर्लालितं रङ्गभर्तुः पादाम्भोजं प्रतिफलति मे भावनादीर्घिकायाम् ॥ २
चित्राकारां कटकरुचिभिश्चारुवृत्तानुपूर्वां काले दूत्यद्रुततरगतिं कान्तिलीलाकलाचीम् ।
जानुच्छायाद्विगुणसुभगां रङ्गभर्तुर्मदात्मा जङ्घां दृष्ट्वा जननपदवीजाङ्घिकत्वं जहाति ॥ ३
कामारामस्थिरकदलिकास्तम्भसंभावनीयं क्षौमाश्लिष्टं किमपि कमलाभूमिनीलोपधानम् ।
न्यञ्चत्काञ्चीकिरणरुचिरं निर्विशत्यूरुयुग्मं लावण्यौघद्वयमिव मतिर्मामिका रङ्गयूनः ॥ ४

संप्रीणाति प्रतिकलमसौ मानसं मे सुजाता गम्भीरत्वात् क्वचन समये गूढनिक्षिप्तविश्वा ।
नालीकेन स्फुरितरजसा वेधसो निर्मिमाणा रम्यावर्तद्युतिसहचरी रङ्गनाथस्य नाभिः ॥ ५
श्रीवत्सेन प्रथितविभवं श्रीपदन्यासधन्यं मध्यं बाह्वोर्मणिवररुचा रञ्जितं रङ्गधाम्नः ।
सान्द्रच्छायं तरुणतुलसीचित्रया वैजयन्त्या सन्तापं मे शमयति धियश्चन्द्रिकोदारहारम् ॥ ६
एकं लीलोपहितमितरं बाहुमाजानुलम्बं प्राप्ता रङ्गेशयितुरखिलप्रार्थनापारिजातम् ।
दृप्ता सेयं दृढनियमिता रश्मिभिर्भूषणानां चिन्ताहस्तिन्यनुभवति मे चित्रमालानयन्त्रम् ॥ ७
साभिप्रायस्मितविकसितं चारुबिम्बाधरोष्ठं दुःखापायप्रणयिनि जने दूरदत्ताभिमुख्यम् ।
कान्तं वक्त्रं कनकतिलकालंकृतं रङ्गभर्तुः स्वान्ते गाढं मम विलगति स्वागतोदारनेत्रम् ॥ ८
माल्यैरन्तःस्थिरपरिमलैर्वल्लभास्पर्शमान्यैः कुप्यच्चोलीवचनकुटिलैः कुन्तलैः श्लिष्टमूले ।
रत्नापीडद्युतिशबलिते रङ्गभर्तुः किरीटे राजन्वत्यः स्थितिमधिगता वृत्तयश्चेतसो मे ॥ ९
पादाम्भोजं स्पृशति भजते रङ्गनाथस्य जङ्घाम् ऊरुद्वन्द्वे विलगति शनैरूर्ध्वमभ्येति नाभिम् ।
वक्षस्यास्ते वलति भुजयोर्मामिकेयं मनीषा वक्त्राभिख्यां पिबति वहते वासनां मौलिबन्धे ॥ १०
कान्तोदारैरयमिह भुजैः कङ्कणज्याकिणाङ्कैर्लक्ष्मीधाम्नः पृथुलपरिघैर्लक्षिताभीतिहेतिः ।
अग्रे किञ्चिद्भुजगशयनः स्वात्मनैवात्मनः सन् मध्येरङ्गं मम च हृदये वर्तते सावरोधः ॥ ११
रङ्गास्थाने रसिकमहिते रञ्जिताशेषचित्ते विद्वत्सेवाविमलमनसा वेङ्कटेशेन क्लृप्तम् ।
अक्लेशेन प्रणिहितधियामारुरुक्षोरवस्थां भक्तिं गाढां दिशतु भगवद्ध्यानसोपानमेतत् ॥ १२

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु भगवद्ध्यानसोपानं समाप्तम् ॥ ३ ॥

---

# ॥ गोपालविंशतिः ॥ ४ ॥

वन्दे बृन्दावनचरं वल्लवीजनवल्लभम् । जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ १
वाचं निजाङ्करसिकां प्रसमीक्षमाणो वक्त्रारविन्दविनिवेशितपाञ्चजन्यः ।
वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति वल्लवचक्रवर्ती ॥ २
आम्नायगन्धिरुदितस्फुरिताधरोष्ठमास्राविलेक्षणमनुक्षणमन्दहासम् ।
गोपालडिम्भवपुषं कुहनाजनन्याः प्राणस्तनन्धयमवैमि परं पुमांसम् ॥ ३
आविर्भवत्वनिभृताभरणं पुरस्तात् आकुञ्चितैकचरणं निभृतान्यपादम् ।
दध्ना निमन्थमुखरेण निबद्धतालं नाथस्य नन्दभवने नवनीतनाट्यम् ॥ ४
हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत्प्रचलितपदो नापगच्छन् नतिष्ठन् मिथ्यागोपः सपदि नयने मीलयन्विश्वगोप्ता ॥ ५
व्रजयोषिदपाङ्गवेदनीयं मधुराभाग्यमनन्यभोग्यमीडे । वसुदेववधूस्तनन्धयं तत्किमपि ब्रह्म किशोरभावदृश्यम् ॥ ६
परिवर्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं स्मरामि । विटपित्वनिरासकं कयोश्चिद्विपुलोलूखलकर्षकं कुमारम् ॥ ७

निकटेषु निशामयामि नित्यं निगमान्तैरधुनाऽपि मृग्यमाणम् । यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम् ॥
पदवीमदवीयसीं विमुक्तेः अटवीसंपदमम्बुवाहयन्तीम् । अरुणाधरसाभिलाषवंशां करुणां कारणमानुषीं भजामि ॥ ९
अनिमेषनिषेवणीयमक्ष्णोः अजहद्यौवनमाविरस्तु चित्ते । कलहायितकुन्तलं कलापैः करणोन्मादकविभ्रमं महो मे ॥ १०
अनुयायिमनोज्ञवंशनालैरवतु स्पर्शितवल्लवीविमोहैः । अनघस्मितशीतलैरसौ मामनुकम्पासरिदम्बुजैरपाङ्गैः ॥ ११
अधराहितचारुवंशनालाः मकुटालम्बिमयूरपिञ्छमालाः । हरिनीलशिलाविभङ्गनीलाः प्रतिभाः सन्तु ममान्तिमप्रयाणे ॥
अखिलानवलोकयामि कालान् महिलाधीनभुजान्तरस्य यूनः । अभिलाषपदं व्रजाङ्गनानाम् अभिलापक्रमदूरमाभिरूप्यम् ॥
हृदि मुग्धशिखण्डमण्डनो लिखितः केन ममैष शिल्पिना । मदनातुरवल्लवाङ्गनावदनाम्भोजदिवाकरो युवा ॥ १४
महसे महिताय मौलिना विनतेनाञ्जलिमञ्जनत्विषे । कलयामि विमुग्धवल्लवीवलयाभाषितमञ्जुवेणवे ॥ १५

जयति ललितवृत्तिं शिक्षितो वल्लवीनां शिथिलवलयशिञ्जाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णोः अधरमणिसुधायामंशवान्वंशनालः ॥ १६

चित्राकल्पः श्रवसि कलयँल्लाङ्गलीकर्णपूरं बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ।
गुञ्जाबद्धामुरसि ललितां धारयन् हारयष्टिं गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १७

लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्याम् अंसे देव्याः पुलकरुचिरे संनिविष्टान्यबाहुः ।
मेघश्यामो जयति ललितो मेखलादत्तवेणुः गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १८

प्रत्यालीढस्थितिमधिगतां प्राप्तगाढाङ्कपालिं पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्यात् वारिक्रीडानिविडवसनो वल्लवीवल्लभो नः ॥ १९

वासो हृत्वा दिनकरसुतासन्निधौ वल्लवीनां लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।
सव्रीलाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ २०

इत्यनन्यमनसा विनिर्मितां वेङ्कटेशकविना स्तुतिं पठन् । दिव्यवेणुरसिकं समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २१

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु गोपालविंशतिः समाप्ता ॥ ४ ॥**

---

# ॥ श्रीस्तुतिः ॥ ५ ॥

मानातीतप्रथितविभवां मङ्गलं मङ्गलानां वक्षःपीठीं मधुविजयिनो भूषयन्तीं स्वकान्त्या ।
प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ १

आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा ।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम् ॥ २

स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना तामेव त्वामनितरगतिः स्तोतुमाशंसमानः ।
सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ३

यत्संकल्पाद्भवति कमले यत्र देहिन्यमीषां जन्मस्थेमप्रलयरचना जङ्गमाजङ्गमानाम् ।
तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम् ॥ ४

निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं विष्णुस्त्वं चेत्यनवधिगुणं द्वन्द्वमन्योन्यलक्ष्यम् ।
शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां संपद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ५
उद्देश्यत्वं जननि भजतोरुज्झितोपाधिगन्धं प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात् ।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो नावच्छेदं भजति महिमा नर्तयन्मानसं नः ॥ ६
पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्धं मध्येकृत्य त्रिगुणफलकं निर्मितस्थानभेदम् ।
विश्वाधीशप्रणयिनि सदा विभ्रमद्यूतवृत्तौ ब्रह्मेशाद्या दधति युवयोरक्षशारप्रचारम् ॥ ७
अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं लक्ष्मीः पद्मा जलधितनया विष्णुपत्नीन्दिरेति ।
यन्नामानि श्रुतिपरिपणान्येवमावर्तयन्तो नावर्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ ८
त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं किं तैरन्तःकलहमलिनैः किंचिदुत्तीर्य मग्नैः ।
त्वत्संप्रीत्यै विहरति हरौ संमुखीनां श्रुतीनां भावारूढौ भगवति युवां दंपती दैवतं नः ॥ ९
आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य विष्णोः आचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम् ।
प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गैः ॥ १०
धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।
यस्यां गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धौ इच्छावेगोल्लसितलहरीविभ्रमं व्यक्तयस्ते ॥ ११
आसंसारं विततमखिलं वाङ्मयं यद्विभूतिर्यद्भ्रूभङ्गात्कुसुमधनुषः किंकरो मेरुधन्वा ।
यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः पद्मे तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥ १२
अग्रे भर्तुः सरसिजमये भद्रपीठे निषण्णाम् अम्भोराशेरधिगतसुधासंप्लवादुत्थितां त्वाम् ।
पुष्पासारस्थगितभुवनैः पुष्कलावर्तकाद्यैः क्लृप्तारम्भाः कनककलशैरभ्यषिञ्चन् गजेन्द्राः ॥ १३
आलोक्य त्वाममृतसहजे विष्णुवक्षःस्थलस्थां शापाक्रान्ताः शरणमगमन् सावरोधाः सुरेन्द्राः ।
लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः सर्वाकारस्थिरसमुदयां संपदं निर्विशन्ति ॥ १४
आर्तत्राणव्रतिभिरमृतासारनीलाम्बुवाहैः अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ।
यस्यांयस्यां दिशि विहरते देवि दृष्टिस्त्वदीया तस्यांतस्यामहमहमिकां तन्वते संपदोघाः ॥ १५
योगारम्भत्वरितमनसो युष्मदैकान्त्ययुक्तं धर्मं प्राप्तुं प्रथममिह ये धारयन्ते धनायाम् ।
तेषां भूमेर्धनपतिगृहादम्बरादम्बुधेर्वा धारा निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ १६
श्रेयस्कामाः कमलनिलये चित्रमाम्नायवाचां चूडापीडं तव पदयुगं चेतसा धारयन्तः ।
छत्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वाः श्लाघाशब्दश्रवणमुदिताः स्रग्विणः संचरन्ति ॥ १७
ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन् दूरीकर्तुं दुरितनिवहं त्यक्तुमाद्यामविद्याम् ।
अम्ब स्तम्बावधिकजननग्रामसीमान्तरेखाम् आलम्बन्ते विमलमनसो विष्णुकान्ते दयां ते ॥ १८
जाताकाङ्क्षा जननि युवयोरेकसेवाधिकारे मायालीढं विभवमखिलं मन्यमानास्तृणाय ।
प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते वेलाभङ्गप्रशमनफलं वैदिकं धर्मसेतुम् ॥ १९

सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते सिद्धिक्षेत्रं शमितविपदां संपदां पादपद्मम् ।
यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २०
सानुप्रासप्रकटितदयैः सान्द्रवात्सल्यदिग्धैः अम्ब स्निग्धैरमृतलहरीलब्धसब्रह्मचर्यैः ।
घर्मे तापत्रयविरचिते गाढतप्तं क्षणं माम् आकिञ्चन्यग्लपितमनघैरार्द्रयेथाः कटाक्षैः ॥ २१
संपद्यन्ते भवभयतमीभानवस्त्वत्प्रसादाद्भावाः सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ।
याचे किं त्वामहमिह यतः शीतलोदारशीला भूयोभूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २२
माता देवि त्वमसि भगवान्वासुदेवः पिता मे जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः ।
दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं किं ते भूयः प्रियमिति किल स्मेरवक्त्रा विभासि ॥ २३
कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा नित्यामोदा निगमवचसां मौलिमन्दारमाला ।
संपद्दिव्या मधुविजयिनः संनिधत्तां सदा मे सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २४
उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात् कलिकलुषनिवृत्त्यै कल्पमानं प्रजानाम् ।
सरसिजनिलयायाः स्तोत्रमेतत्पठन्तः सकलकुशलसीमासार्वभौमा भवन्ति ॥ २५

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु श्रीस्तुतिः समाप्ता ॥ ५ ॥**

---

# ॥ न्यासदशकम् ॥ ६ ॥

अहं मद्रक्षणभरो मद्रक्षणफलं तथा । न मम श्रीपतेरेवेत्यात्मानं निक्षिपेद्बुधः ॥ १
न्यस्याम्यकिंचनः श्रीमन्ननुकूलोऽन्यवर्जितः । विश्वासप्रार्थनापूर्वमात्मरक्षाभरं त्वयि ॥ २
स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् । स्वदत्तस्वधिया स्वार्थं स्वस्मिन्न्यस्यति मां स्वयम् ॥ ३
श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः । एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥ ४
त्वच्छेषत्वे स्थिरधियं त्वत्प्राप्त्यैकप्रयोजनम् । निषिद्धकाम्यरहितं कुरु मां नित्यकिङ्करम् ॥ ५
देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव । नित्यं निरपराधेषु कैङ्कर्येषु नियुङ्क्ष्व माम् ॥ ६
मां मदीयं च निखिलं चेतनाचेतनात्मकम् । स्वकैङ्कर्योपकरणं वरद स्वीकुरु स्वयम् ॥ ७
त्वदेकरक्ष्यस्य मम त्वमेव करुणाकर । न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥ ८
अकृत्यानां च करणं कृत्यानां वर्जनं च मे । क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥ ९
श्रीमान्नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् । अचीकरत्स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ॥ १०
[संसारावर्तवेगप्रशमनशुभदृग्देशिकप्रेक्षितोऽहं संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य शान्ताभिसन्धिः ।
निश्शङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्राप्य संरक्षकं त्वां न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥]

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु न्यासदशकं समाप्तम् ॥ ६ ॥**

---

## ॥ अभीतिस्तवः ॥ ७ ॥

अभीतिरिह यज्जुषां यदवधीरितानां भयं भयाभयविधायिनो जगति यन्निदेशे स्थिताः ।
तदेतदतिलङ्घितद्रुहिणशंभुशक्रादिकं रमासखमधीमहे किमपि रङ्गधुर्यं महः ॥ १
दयाशिशिरिताशया मनसि मे सदा जागृयुः श्रियाऽध्युषितवक्षसः श्रितमरुद्वृधासैकताः ।
जगद्दुरितघस्मरा जलधिडिम्भडम्भस्पृशः सकृत्प्रणतरक्षणप्रथितसंविदः संविदः ॥ २
यदद्य मितबुद्धिना बहुलमोहभाजा मया गुणग्रथितकायवाङ्मनसवृत्तिवैचित्र्यतः ।
अतर्कितहिताहितक्रमविशेषमारभ्यते तदप्युचितमर्चनं परिगृहाण रङ्गेश्वर ॥ ३
मरुत्तरणिपावकत्रिदशनाथकालादयः स्वकृत्यमधिकुर्वते त्वदपराधतो बिभ्यतः ।
महत्किमपि वज्रमुद्यतमिवेति यच्छ्रूयते तरत्यनघ तद्भयं य इह तावकः स्तावकः ॥ ४
भवन्तमिह यः स्वधीनियतचेतनाचेतनं पनायति नमस्यति स्मरति वक्ति पर्येति वा ।
गुणं कमपि वेत्ति वा तव गुणेश गोपायितुः कदाचन कुतश्चन क्वचन तस्य न स्याद्भयम् ॥ ५
स्थिते मनसि विग्रहे गुणिनि धातुसाम्ये सति स्मरेदखिलदेहिनं य इह जातुचित्त्वामजम् ।
तथैव खलु संधया तमथ दीर्घनिद्रावशं स्वयं विहितसंस्मृतिर्नयसि धाम नैःश्रेयसम् ॥ ६
रमादयित रङ्गभूरमण कृष्ण विष्णो हरे त्रिविक्रम जनार्दन त्रियुगनाथ नारायण ।
इतीव शुभदानि यः पठति नामधेयानि ते न तस्य यमवश्यता नरकपातभीतिः कुतः ॥ ७
कदाचिदपि रङ्गभूरसिक यत्र देशे वशी त्वदेकनियताशयस्त्रिदशवन्दितो वर्तते ।
तदक्षततपोवनं तव च राजधानी स्थिरा सुखस्य सुखमास्पदं सुचरितस्य दुर्गं महत् ॥ ८
त्रिवर्गपथवर्तिनां त्रिगुणलङ्घनोद्योगिनां द्विषत्प्रमथनार्थिनामपि च रङ्गदृश्योदयाः ।
स्खलत्समयकातरीहरणजागरूकाः प्रभो करग्रहणदीक्षिताः क इ(व)ह ते न दिव्या गुणाः ॥ ९
बिभेति भवभृत्प्रभो त्वदुपदेशतीव्रौषधात् कदध्वरसदुर्विषे बलिशभक्षवत्प्रीयते ।
अपथ्यपरिहारधीविमुखमित्थमाकस्मिकी तमप्यवसरे क्रमादवति वत्सला त्वद्दया ॥ १०
अपार्थ इति निश्चितः प्रहरणादियोगस्तव स्वयं वहसि निर्भयस्तदपि रङ्गपृथ्वीधर ।
स्वरक्षणमिवाभवत्प्रणतरक्षणं तावकं यदात्थ परमा(त्म)र्थविन्नियतमन्तरात्मेति (मे) ते ॥ ११
लघिष्ठसुखसङ्गदैः स्वकृतकर्मनिर्वर्तितैः कलत्रसुतसोदरानुचरबन्धुसंबन्धिभिः ।
धनप्रभृतिकैरपि प्रचुरभीतिभेदोत्तरैः न बिभ्रति धृतिं विभो त्वदनुभूतिभोगार्थिनः ॥ १२
न वक्तुमपि शक्यते नरकगर्भवासादिकं वपुश्च बहुधातुकं निपुणचिन्तने तादृशम् ।
त्रिविष्टपमुखं तथा तव पदस्य देदीपतः किमत्र न भयास्पदं भवति रङ्गपृथ्वीपते ॥ १३
भवन्ति सुखभेदतो भयनिदानमेव प्रभो शुभाशुभविकल्पिता जगति देशकालादयः ।
इति प्रचुरसाध्वसे मयि दयिष्यसे त्वं न चेत् क इत्थमनुकम्पिता त्वदनुकम्पनीयश्च कः ॥ १४

सकृत्प्रपदनस्पृशामभयदाननित्यव्रती न च द्विरभिभाषसे त्वमिति विश्रुतः स्वोक्तितः ।
यथोक्तकरणं विदुस्तव तु यातुधानादयः कथं वितथमस्तु तत्कृपणसार्वभौमे मयि ॥ १५
अनुक्षणसमुत्थिते दुरितवारिधौ दुस्तरे यदि क्वचन निष्कृतिर्भवति साऽपि दोषाविला ।
तदित्थमगतौ मयि प्रतिविधानमाधीयतां स्वबुद्धिपरिकल्पितं किमपि रङ्गधुर्य त्वया ॥ १६
विषादबहुलादहं विषयवर्गतो दुर्जयाद्बिभेमि वृजिनोत्तरस्त्वदनुभूतिविच्छेदतः ।
मया नियतनाथवानयमिति त्वमर्थापयन् दयाधन जगत्पते दयितरङ्ग संरक्ष माम् ॥ १७
निसर्गनिरनिष्टता तव निरंहसः श्रूयते ततस्त्रियुग सृष्टिवद्भवति संहृतिः क्रीडितम् ।
तथाऽपि शरणागतप्रणयभङ्गभीतो भवान् मदिष्टमिह यद्भवेत्किमपि मा स्म तज्जीहपत् ॥ १८
कयाधुसुतवायसद्विरदपुंगवद्रौपदीविभीषणभुजंगमव्रजगणाम्बरीषादयः ।
भवत्पदसमाश्रिता भयविमुक्तिमापुर्यथा लभेमहि तथा वयं सपदि रङ्गधुर्य त्वया ॥ १९
भयं शमय रङ्गधाम्न्यनितराभिलाषस्पृशां श्रियं बहुलय प्रभो श्रितविपक्षमुन्मूलय ।
स्वयं समुदितं वपुस्तव निशामयन्तः सदा वयं त्रिदशनिर्वृतिं भुवि मुकुन्द विन्देमहि ॥ २०
श्रियः परिवृढे त्वयि श्रितजनस्य संरक्षके सदद्भुतगुणोदधाविति समर्पितोऽयं भरः ।
प्रतिक्षणमतः परं प्रथय रङ्गधामादिषु प्रभुत्वमनुपाधिकं प्रथितहेतिभिर्हेतिभिः ॥ २१
कलिप्रणिधिलक्षणैः कलितशाक्यलोकायतैस्तुरुष्कयवनादिभिर्जगति जृम्भमाणं भयम् ।
प्रकृष्टनिजशक्तिभिः प्रसभमायुधैः पञ्चभिः क्षितित्रिदशरक्षकैः क्षपय रङ्गनाथ क्षणात् ॥ २२
दितिप्रभवदेहभिद्दहनसोमसूर्यात्मकं तमःप्रमथनं प्रभो समुदितास्त्रवृन्दं स्वतः ।
स्ववृत्तिवशवर्तितत्रिदशवृत्ति चक्रं पुनः प्रवर्तयतु धाम्नि ते महति धर्मचक्रस्थितिम् ॥ २३
मनुप्रभृतिमानिते महति रङ्गधामादिके दनुप्रभवदारुणैर्दरमुदीर्यमाणं परैः ।
प्रकृष्टगुणक श्रिया वसुधया च संधुक्षितः प्रयुक्तकरुणोद(धे)धिः प्रशमय स्वशक्त्या स्वयम् ॥ २४
भुजङ्गमविहङ्गमप्रवरसैन्यनाथाः प्रभो तथैव कुमुदादयो नगरगोपुरद्वारपाः ।
अचिन्त्यबलविक्रमास्त्वमिव रङ्ग संरक्षका जितं त इति वादिनो जगदनुग्रहे जाग्रतु ॥ २५
विधिस्त्रिपुरमर्दनस्त्रिदशपुंगवः पावको यमप्रभृतयोऽपि यद्भ्रिमतरक्षणे न क्षमाः ।
रिरक्षिषति यत्र च प्रतिभयं न किंचित्क्वचित् स नः प्रतिभटान्प्रभो शमय रङ्गधामादिषु ॥ २६
स कैटभतमोरविर्मधुपरागझञ्झामरुद्धिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना भजद्भवपयोधिमुष्टिंधयस्त्रिविक्रम भवत्क्रमः क्षिपतु मङ्क्षु रङ्गद्विषः ॥ २७
यतिप्रवरभारतीरसभरेण नीतं वयः प्रफुल्लपलितं शिरः परमिह क्षमं प्रार्थये ।
निरस्तरिपुसंभवे क्वचन रङ्गमुख्ये विभो परस्परहितैषिणां परिसरेषु मां वर्तय ॥ २८
प्रबुद्धगुरुवीक्षणप्रथितवेङ्कटेशोद्भवामिमामभयसिद्धये पठत रङ्गभर्तुः स्तुतिम् ।
भयं त्यजत भद्रमित्यभिदधत्स वः केशवः स्वयं घनघृणानिधिर्गुणगणेन गोपायति ॥ २९

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु अभीतिस्तवः समाप्तः ॥ ७ ॥**

---

॥ श्री ॥

# ॥ दयाशतकम् ॥ ८ ॥

प्रपद्ये तं गिरिं प्रायः श्रीनिवासानुकम्पया । इक्षुसारस्रवन्त्येव यन्मूर्त्या शर्करायितम् ॥ १

विगाहे तीर्थबहुलां शीतलां गुरुसंततिम् । श्रीनिवासदयाम्भोधेः परीवाहपरम्पराम् ॥ २

कृतिनः कमलावासकारुण्यैकान्तिनो भजे । धत्ते यत्सूक्तिरूपेण त्रिवेदी सर्वयोग्यताम् ॥ ३

पराशरमुखान्वन्दे भगीरथनये स्थितान् । कमलाकान्तकारुण्यगङ्गाप्लावितमद्विधान् ॥ ४

अशेषविघ्नशमनमनीकेश्वरमाश्रये । श्रीमतः करुणाम्भोधौ शिक्षास्रोत इवोत्थितम् ॥ ५

समस्तजननीं वन्दे चैतन्यस्तन्यदायिनीम् । श्रेयसीं श्रीनिवासस्य करुणामिव रूपिणीम् ॥ ६

वन्दे वृषगिरीशस्य महिषीं विश्वधारिणीम् । तत्कृपाप्रतिघातानां क्षमया वारणं यया ॥ ७

निशामयतु मां नीला यद्भोगपटलैर्ध्रुवम् । भावितं श्रीनिवासस्य भक्तदोषेष्वदर्शनम् ॥ ८

कमप्यनवधिं वन्दे करुणावरुणालयम् । वृषशैलतटस्थानां स्वयं व्यक्तिमुपागतम् ॥ ९

अकिञ्चननिधिं सूतिमपवर्गत्रिवर्गयोः । अञ्जनाद्रीश्वरदयामभिष्टौमि निरञ्जनाम् ॥ १०

अनुचरशक्त्यादिगुणामग्रेसरबोधविरचितालोकाम् । स्वाधीनवृषगिरीशां स्वयं प्रभूतां प्रमाणयामि दयाम् ॥ ११

अपि निखिललोकसुचरितमुष्टिंधयदुरितमूर्च्छनाजुष्टम् । संजीवयतु दये मामञ्जनगिरिनाथरञ्जनी भवती ॥ १२

भगवति दये भवत्या वृषगिरिनाथे समाप्लुते तुङ्गे । अप्रतिघमज्जनानां हस्तालम्बो मदागसां मृग्यः ॥ १३

कृपणजनकल्पलतिकां कृतापराधस्य निष्क्रियामाद्याम् । वृषगिरिनाथदये त्वां विदन्ति संसारतारिणीं विबुधाः ॥१४

वृषगिरिगृहमेधिगुणा बोधबलैश्वर्यवीर्यशक्तिमुखाः । दोषा भवेयुरेते यदि नाम दये त्वया विनाभूताः ॥ १५

आसृष्टिसंततानामपराधानां निरोधिनीं जगतः । पद्मासहायकरुणे प्रतिसंचरकेलिमाचरसि ॥ १६

अचिदविशिष्टान्प्रलये जन्तूनवलोक्य जातनिर्वेदा । करणकलेबरयोगं वितरसि वृषशैलनाथकरुणे त्वम् ॥ १७

अनुगुणदशार्पितेन श्रीधरकरुणे समाहितस्नेहा । शमयसि तमः प्रजानां शास्त्रमयेन स्थिरप्रदीपेन ॥ १८

रूढा वृषाचलपतेः पादे मुखकान्तिपत्रलच्छाया । करुणे सुखयसि विनतान्कटाक्षविटपैः करापचेयफलैः ॥ १९

नयने वृषाचलेन्दोस्तारामैत्रीं दधानया करुणे । दृष्टस्त्वयैव जनिमानपवर्गमकृष्टपच्यमनुभवति ॥ २०

समयोपनतैस्तव प्रवाहैरनुकम्पे कृतसंप्लवा धरित्री । शरणागतसस्यमालिनीयं वृषशैलेशकृषीवलं धिनोति ॥ २१

कलशोदधिसंपदो भवत्याः करुणे सन्मतिमन्थसंस्कृतायाः । अमृतांशमवैमि दिव्यदेहं मृतसञ्जीवनमञ्जनाचलेन्दोः ॥ २२

जलधेरिव शीतता दये त्वं वृषशैलाधिपतेः स्वभावभूता । प्रलयारभटीनटीं तदीक्षां प्रसभं ग्राहयसि प्रसत्तिलास्यम् ॥२३

प्रणतप्रतिकूलमूलघाती प्रतिघः कोऽपि वृषाचलेश्वरस्य । कलमे यवसापचायनीत्या करुणे किंकरतां तवोपयाति ॥ २४

अबहिष्कृतनिग्रहान्विदन्तः कमलाकान्तगुणान्स्वतन्त्रतादीन् । अविकल्पमनुग्रहं दुहानां भवतीमेव दये भजन्ति सन्तः ॥

कमलानिलयस्त्वया दयालुः करुणे निष्करुणा निरूपणे त्वम् । अत एव हि तावकाश्रितानां दुरितानां भवति त्वदेव भीतिः ॥

अतिलङ्घितशासनेष्वभीक्ष्णं वृषशैलाधिपतिर्विजृम्भितोष्मा । पुनरेव दये क्षमानिदानैर्भवतीमाद्रियते भवत्यधीनैः ॥ २७

करुणे दुरितेषु मामकेषु प्रतिकारान्तरदुर्जयेषु खिन्नः । कवचायितया त्वयैव शार्ङ्गी विजयस्थानमुपाश्रितो वृषाद्रिम् ॥

त्वयि तिष्ठति दुष्कृतां प्रधाने मितदोषानितरान्विचिन्वती त्वम् । अपराधगणैरपूर्णकुक्षिः कमलाकान्तदये कथं भवित्री ॥
अहमस्म्यपराधचक्रवर्ती करुणे त्वं च गुणेषु सार्वभौमी । विदुषी स्थितिमीदृशीं स्वयं मां वृषशैलेश्वरपादसात्कुरु त्वम् ॥

अशिथिलकरणेऽस्मिन्नक्षतश्वासवृत्तौ वपुषि गमनयोग्ये वासमासादयेयम् ।
वृषगिरिकटकेषु व्यञ्जयत्सु प्रतीतैर्मधुमथनदये त्वां वारिधाराविशेषैः ॥ ३१

अविदितनिजयोगक्षेममात्मानभिज्ञं गुणलवरहितं मां गोप्तुकामा दये त्वम् ।
परवति चतुरैस्ते विभ्रमैः श्रीनिवासे बहुमतिमनपायां विन्दसि श्रीधरण्योः ॥ ३२

फलवितरणदक्षं पक्षपातानभिज्ञं प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥ ३३

अनुभवितुमघौघं नालमागामिकालः प्रशमयितुमशेषं निष्क्रियाभिर्न शक्यम् ।
स्वयमिति हि दये त्वं स्वीकृतश्रीनिवासा शिथिलितभवभीतिः श्रेयसे जायसे नः ॥ ३४

अवतरणविशेषैरात्मलीलापदेशैरवमतिमनुकम्पे मन्दचित्तेषु विन्दन् ।
वृषभशिखरिनाथस्त्वन्निदेशेन नूनं भजति शरणभाजां भाविनो जन्मभेदान् ॥ ३५

परहितमनुकम्पे भावयन्त्यां भवत्यां स्थिरमनुपधि हार्दं श्रीनिवासो दधानः ।
ललितरुचिषु लक्ष्मीभूमिनीलासु नूनं प्रथयति बहुमानं त्वत्प्रतिच्छन्दबुद्ध्या ॥ ३६

वृषगिरिसविधेषु व्याजतो वासभाजां दुरितकलुषितानां दूयमाना दये त्वम् ।
करणविलयकाले कान्दिशीकस्मृतीनां स्मरयसि बहुलीलं माधवं सावधाना ॥ ३७

दिशिदिशि गतिविद्भिर्देशिकैर्नीयमाना स्थिरतरमनुकम्पे स्त्यानलग्ना गुणैस्त्वम् ।
परिगतवृषशैलं पारमारोपयन्ती भवजलधिगतानां पोतपात्री भवित्री ॥ ३८

परिमितफलसङ्गात्प्राणिनः किंपचाना निगमविपणिमध्ये नित्यमुक्तानुषक्तम् ।
प्रसदनमनुकम्पे प्राप्तवत्या भवत्या वृषगिरिहरिनीलं व्यञ्जितं निर्विशन्ति ॥ ३९

त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुधसिन्धौ संनिकर्षे वहन्त्यां शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ ४०

आज्ञां ख्यातिं धनमनुचरानाधिराज्यादिकं वा काले दृष्ट्वा कमलवसतेरप्यकिंचित्कराणि ।
पद्माकान्तं प्रणिहितवतीं पालनेऽनन्यसाध्ये साराभिज्ञा जगति कृतिनः संश्रयन्ते दये त्वाम् ॥ ४१

प्राजापत्यप्रभृतिविभवं प्रेक्ष्य पर्यायदुःखं जन्माकाङ्क्षन्वृषगिरिवने जग्मुषां तस्थुषां वा ।
आशासानाः कतिचन विभोस्त्वत्परिष्वङ्गधन्यैरङ्गीकारं क्षणमपि दये हार्दतुङ्गैरपाङ्गैः ॥ ४२

नाभीपद्मस्फुरणसुभगा नव्यनीलोत्पलाभा क्रीडाशैलं कमपि करुणे वृण्वती वेङ्कटाख्यम् ।
शीता नित्यं प्रसदनवती श्रद्दधानावगाह्या दिव्या काचिज्जयति महती दीर्घिका तावकीना ॥ ४३

यस्मिन्दृष्टे तदितरसुखैर्गम्यते गोष्पदत्वं सत्यं ज्ञानं त्रिभिरवधिभिर्मुक्तमानन्दसिन्धुम् ।
त्वत्स्वीकारात्तमिह कृतिनः सूरिबृन्दानुभाव्यं नित्यापूर्वं निधिमिव दये निर्विशन्त्यञ्जनाद्रौ ॥ ४४

सारं लब्ध्वा कमपि महतः श्रीनिवासाम्बुराशेः काले्काले घनरसवती कालिकेवानुकम्पे ।
व्यक्तोन्मेषा मृगपतिगिरौ विश्वमाप्याययन्ती शीलोपज्ञं क्षरति भवती शीतलं सद्गुणौघम् ॥ ४५
भीमे नित्यं भवजलनिधौ मज्जतां मानवानामालम्बार्थं वृषगिरिपतिस्त्वन्निदेशात्प्रयुङ्क्ते ।
प्रज्ञासारं प्रकृतिमहता मूलभागेन जुष्टं शाखाभेदैः सुभगमनघं शाश्वतं शास्त्रपाणिम् ॥ ४६
विद्वत्सेवाकतकनिकषैर्वीतपङ्काशयानां पद्माकान्तः प्रणयति दये दर्पणं ते स्वशास्त्रम् ।
लीलादक्षां त्वदनवसरे लालयन्विप्रलिप्सां मायाशास्त्राण्यपि शमयितुं त्वत्प्रपन्नप्रतीपान् ॥ ४७
दैवात्प्राप्ते वृषगिरितटं देहिनि त्वन्निदानात् स्वामिन्पाहीत्यवशवचने विन्दति स्वापमन्त्यम् ।
देवः श्रीमान्दिशति करुणे दृष्टिमिच्छंस्त्वदीयामुद्धातेन श्रुतिपरिषदामुत्तरेणाभिमुख्यम् ॥ ४८
श्रेयःसूतिं सकृदपि दये संमतां यः सखीं ते शीतोदारामलभत जनः श्रीनिवासस्य दृष्टिम् ।
देवादीनामयमनृणतां देहवत्त्वेऽपि विन्दन् बन्धान्मुक्तो बलिभिरनघैः पूर्यते तत्प्रयुक्तैः ॥ ४९
दिव्यापाङ्गं दिशसि करुणे येषु सद्देशिकात्मा क्षिप्रं प्राप्ता वृषगिरिपतिं क्षत्रबन्ध्वादयस्ते ।
विश्वाचार्या विधिशिवमुखाः स्वाधिकारोपरुद्धा मन्ये माता जड इव सुते वत्सला मादृशे त्वम् ॥ ५०
अतिकृपणोऽपि जन्तुरधिगम्य दये भवतीमशिथिलधर्मसेतुपदवीं रुचिरामचिरात् ।
अमितमहोर्मिजालमतिलङ्घ्य भवाम्बुनिधिं भवति वृषाचलेशपदपत्तननित्यधनी ॥ ५१
अभिमुखभावसंपदभिसंभविनां भविनां क्वचिदुपलक्षिता क्वचिदभङ्गुरगूढगतिः ।
विमलरसावहा वृषगिरीशदये भवती सपदि सरस्वतीव शमयत्यघमप्रतिघम् ॥ ५२
अपि करुणे जनस्य तरुणेन्दुविभूषणतामपि कमलासनत्वमपि धाम वृषाद्रिपतेः ।
तरतमतावशेन तनुते ननु ते विततिः परहितवर्ष्मणा परिपचेलिमकेलिमती ॥ ५३
धृतभुवना दये त्रिविधगत्यनुकूलतरा वृषगिरिनाथपादपरिरम्भवती भवती ।
अविदितवैभवाऽपि सुरसिन्धुरिवातनुते सकृदवगाहमानमपतापमपापमपि ॥ ५४
निगमसमाश्रिता निखिललोकसमृद्धिकरी भजदघकूलमुद्रुजगतिः परितप्तहिता ।
प्रकटितहंसमत्स्यकमठाद्यवतारशता विबुधसरिच्छ्रियं वृषगिरीशदये वहसि ॥ ५५
जगति मितंपचा त्वदितरा तु दये तरला फलनियमोज्झिता भवति संतपनाय पुनः ।
त्वमिह निरङ्कुशप्रशकनादिविभूतिमती वितरसि देहिनां निरवधिं वृषशैलनिधिम् ॥ ५६
सकरुणलौकिकप्रभुपरिग्रहनिग्रहयोर्नियतिमुपाधिचक्रपरिवृत्तिपरम्परया ।
वृषभमहीधरेश करुणे वितरङ्गयतां श्रुतिमितसंपदि त्वयि कथं भविता विशयः ॥ ५७
वृषगिरिकृष्णमेघजनितां जनितापहरां त्वदभिमतिं सुवृष्टिमुपजीव्य निवृत्ततृषः ।
बहुषु जलाशयेषु बहुमानमपोह्य दये न जहति सत्पथं जगति चातकवत्कृतिनः ॥ ५८
त्वदुदयतूलिकाभिरमुना वृषशैलजुषा स्थिर(त)चरशिल्पिनैव परिकल्पितचित्रधियः ।
यतिपतियामुनप्रभृतयः प्रथयन्ति दये जगति हितं न नस्त्वयि भरन्यसनादधिकम् ॥ ५९

मृदुहृदये दये मृदितकामहिते महिते धृतविबुधे बुधेषु विततात्मधुरे मधुरे ।
वृषगिरिसार्वभौमदयिते मयि ते महतीं भवुकनिधे निधेहि भवमूलहरां लहरीम् ॥ ६०
अकूपारैरेकोदकसमयवैतण्डिकजवैरनिर्वाप्यां क्षिप्रं क्षपयितुमविद्याख्यवडवाम् ।
कृपे त्वं तत्तादृक्प्रथिमवृषपृथ्वीधरपतिस्वरूपद्वैगुण्याद्द्विगुणनिजबिन्दुः प्रवहसि ॥ ६१
विवित्सावेतालीविगमपरिशुद्धेऽपि हृदये पटुप्रत्याहारप्रभृतिपुटपाकप्रचकिताः ।
नमन्तस्त्वां नारायणशिखरिकूटस्थकरुणे निरुद्धत्वद्द्रोहा नृपतिसुतनीतिं न जहति ॥ ६२
अनन्याधीनः सन् भवति परतन्त्रः प्रणमतां कृपे सर्वद्रष्टा न गणयति तेषामपकृतिम् ।
पतिस्त्वत्पारार्थ्यं प्रथयति वृषक्ष्माधरपतिर्व्यनक्त्यां वैयात्यादिति विघटयन्ती विहरसि ॥ ६३
अपांपत्युः शत्रूनसहनमुनेर्धर्मनिगलं कृपे काकस्यैकं हितमिति हिनस्ति स्म नयनम् ।
विलीनस्वातन्त्र्यो वृषगिरिपतिस्त्वद्विहृतिभिर्दिशत्येवं देवो जनितसुगतिं दण्डनगतिम् ॥ ६४
निषादानां नेता कपिकुलपतिः काऽपि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ।
अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि ॥ ६५
त्वया दृष्टस्तुष्टिं भजति परमेष्ठी निजपदे वहन्मूर्तीरष्टौ विहरति मृडानीपरिवृढः ।
बिभर्ति स्वाराज्यं वृषशिखरिशृङ्गारिकरुणे शुनासीरो देवासुरसमरनासीरसुभटः ॥ ६६
दये दुग्धोदन्वद्व्यतियुतसुधासिन्धुनयतस्त्वदाश्लेषान्नित्यं जनितमृतसंजीवनदशाः ।
स्वदन्ते दान्तेभ्यः श्रुतिवदनकर्पूरगुलिका विधुन्वन्तश्चित्तं वृषशिखरिविश्वंभरगुणाः ॥ ६७
जगज्जन्मस्थेमप्रलयरचनाकेलिरसिको विमुक्त्येकद्वारं विघटितकवाटं प्रणयिनाम् ।
इति त्वय्यायत्तं द्वितयमुपधीकृत्य करुणे विशुद्धानां वाचां वृषशिखरिनाथः स्तुतिपदम् ॥ ६८
कलिक्षोभोन्मीलत्क्षितिकलुषकूलंकषजवैरनुच्छेदैरेतैरवटतटवैषम्यरहितैः ।
प्रवाहैस्ते पद्मासहचरपरिष्कारिणि कृपे विकल्पन्तेऽनल्पा वृषशिखरिणो निर्झरगुणाः ॥ ६९
खिलं चेतोवृत्तेः किमिदमिति विस्मेरभुवनं कृपे सिंहक्ष्माभृत्कृतमुखचमत्कारकरणम् ।
भरन्यासच्छन्नप्रबलवृजिनप्राभृतभृतां प्रतिप्रस्थानं ते श्रुतिनगरशृङ्गाटकजुषः ॥ ७०
त्रिविधचिदचित्सत्तास्थेमप्रवृत्तिनियामिका वृषगिरिविभोरिच्छा सा त्वं परैरपराहता ।
कृपणभरभृत्किंकुर्वाणप्रभूतगुणान्तरा वहसि करुणे वैचक्षण्यं मदीक्षणसाहसे ॥ ७१
वृषगिरिपतेर्हृद्या विश्वावतारसहायिनी क्षपितनिखिलावद्या देवि क्षमादिनिषेविता ।
भुवनजननी पुंसां भोगापवर्गविधायिनी वितमसि पदे व्यक्तिं नित्यां बिभर्षि दये स्वयम् ॥ ७२
स्वयमुदयिनः सिद्धाश्चाविष्कृताश्च शुभालया विविधविभवव्यूहावासाः परं च पदं विभोः ।
वृषगिरिमुखेष्वेतेष्विच्छावधिप्रतिलब्धये दृढविनिहिता निश्रेणिस्त्वं दये निजपर्वभिः ॥ ७३
हितमिति जगद्दृष्ट्या क्लृप्तैरक्लृप्तफलान्तरैरमतिविहितैरन्यैर्धर्मायितैश्च यदृच्छया ।
परिणतबहुच्छद्मा पद्मासहायदये स्वयं प्रदिशसि निजाभिप्रेतं नः प्रशाम्यदपत्रपा ॥ ७४

अतिविधिशिवैरैश्वर्यात्मानुभूतिरसैर्जनानहृदयमिहोपच्छन्दैषामसङ्गदशार्थिनी ।
तृषितजनतार्तार्थस्नानक्रमक्षपितैनसां वितरसि दये वीतातङ्का वृषाद्रिपतेः पदम् ॥ ७५
वृषगिरिसुधासिन्धौ जन्तुर्दये निहितस्त्वया भवभयपरीतापच्छित्त्यै भजन्नघमर्षणम् ।
मुषितकलुषो मुक्तेरग्रेसरैरभिपूर्यते स्वयमुपनतैः स्वात्मानन्दप्रभृत्यनुबन्धिभिः ॥ ७६
अनितरजुषामन्तर्मूलेऽप्यपायपरिप्लवे कृतविदनघा विच्छिद्यैषां कृपे यमवश्यताम् ।
प्रपदनफलप्रत्यादेशप्रसङ्गविवर्जितं प्रतिविधिमुपाधत्से सार्धं वृषाद्रिहितैषिणा ॥ ७७
क्षणविलयिनां शास्त्रार्थानां फलाय निवेशिते सुरपितृगणे निर्वेशात्प्रागपि प्रलयं गते ।
अधिगतवृषक्ष्माभृन्नाथामकालवशंवदां प्रतिभुवमिह व्याचख्युस्त्वां कृपे निरुपप्लवाम् ॥ ७८
त्वदुपसदनादद्य श्वो वा महाप्रलयेऽपि वा वितरति निजं पादाम्भोजं वृषाचलशेखरः ।
तदिह करुणे तत्तत्क्रीडातरङ्गपरम्परातरतमतया जुष्टायास्ते दुरत्ययतां विदुः ॥ ७९
प्रणिहितधियां त्वत्संपृक्ते वृषाद्रिशिखामणौ प्रसृमरसुधाधाराकारा प्रसीदति भावना ।
दृढमिति दये दत्तास्वादं विमुक्तिवलाहकं निभृतगरुतो निध्यायन्ति स्थिराशयचातकाः ॥ ८०
कृपे विगतवेलया कृतसमग्रपोषैस्त्वया कलिज्वलनदुर्गते जगति कालमेघायितम् ।
वृषक्षितिधरादिषु स्थितिपदेषु सानुप्लवैर्वृषाद्रिपतिविग्रहैर्व्यपगताखिलावग्रहैः ॥ ८१
प्रसूय विविधं जगत्तदभिवृद्धये त्वं दये समीक्षणविचिन्तनप्रभृतिभिः स्वयं तादृशैः ।
विचित्रगुणचित्रितां विविधदोषवैदेशिकीं वृषाचलपतेस्तनुं विशसि मत्स्यकूर्मादिकाम् ॥ ८२
युगान्तसमयोचितं भजति योगनिद्रारसं वृषक्षितिभृदीश्वरे विहरणक्रमाज्जाग्रति ।
उदीर्णचतुरर्णवीकदनवेदिनीं मेदिनीं समुद्धृतवती दये त्वदभिजुष्टया दंष्ट्रया ॥ ८३
सटापटलभीषणे सरभसाट्टहासोद्भटे स्फुरत्क्रुधि परिस्फुरद्भ्रुकुटिकेऽपि वक्त्रे कृते ।
दये वृषगिरीशितुर्दनुजडिम्भदत्तस्तना सरोजसदृशा दृशा समुदिताकृतिर्दृश्यसे ॥ ८४
प्रसक्तमधुना विधिप्रणिहितैः सपर्योदकैः समस्तदुरितच्छिदा निगमगन्धिना त्वं दये ।
अशेषमविशेषतस्त्रिजगदञ्जनाद्रीशितुश्चराचरमचीकरश्चरणपङ्कजेनाङ्कितम् ॥ ८५
परश्वथतपोधनप्रथनसत्क्रतूपाकृतक्षितीश्वरपशुक्षरत्क्षतजकुङ्कुमस्थासकैः ।
वृषाचलदयालुना ननु विहर्तुमालिप्यथा निधाय हृदये दये निहतरक्षितानां हितम् ॥ ८६
कृपे कृतजगद्धिते कृपणजन्तुचिन्तामणे रमासहचरं क्षितौ रघुधुरीणयन्त्या त्वया ।
व्यभज्यत सरित्पतिः सकृदवेक्षणात्तत्क्षणात्प्रकृष्टबहुपातकप्रशमहेतुना सेतुना ॥ ८७
कृपे परवतस्त्वया वृषगिरीशितुः क्रीडितं जगद्धितमशेषतस्तदिदमित्थमर्थाप्यते ।
मदच्छलपरिच्युतप्रणतदुष्कृतप्रेक्षितैर्हतप्रबलदानवैर्हलधरस्य हेलाशतैः ॥ ८८
प्रभूतविबुधद्विषद्भरणखिन्नविश्वंभराभरापनयनच्छलात्त्वमवतार्य लक्ष्मीधरम् ।
निराकृतवती दये निगमसौधदीपश्रिया विपश्चिदविगीतया जगति गीतयाऽन्धं तमः ॥ ८९

वृषाद्रिहयसादिनः प्रबलदोर्मरुत्प्रोङ्क्षितस्त्विषा स्फुटतटिद्गुणस्त्वदवसेकसंस्कारवान् ।
करिष्यति दये कलिप्रबलधर्मनिर्मूलनः पुनः कृतयुगाङ्कुरं भुवि कृपाणधाराधरः ॥ ९०

विश्वोपकारमिति नाम सदा दुहानामद्यापि देवि भवतीमवधीरयन्तम् ।
नाथे निवेशय वृषाद्रिपतौ दये त्वं न्यस्तस्वरक्षणभरं त्वयि मां त्वयैव ॥ ९१

नैसर्गिकेण तरसा करुणे नियुक्ता निम्नेतरेऽपि मयि ते विततिर्यदि स्यात् ।
विस्मापयेद्वृषगिरीश्वरमप्यवार्या वेलातिलङ्घनदशेव महाम्बुराशेः ॥ ९२

विज्ञातशासनगतिर्विपरीतवृत्त्या वृत्रादिभिः परिचितां पदवीं भजामि ।
एवंविधे वृषगिरीशदये मयि त्वं दीने विभोः शमय दण्डधरत्वलीलाम् ॥ ९३

मासाहसोक्तिघनकञ्चुकवञ्चितान्यः पश्यन्तु तेषु विदधाम्यतिसाहसानि ।
पद्मासहायकरुणे न रुणत्सि किं त्वं घोरं कुलिङ्गशकुनेरिव चेष्टितं मे ॥ ९४

विक्षेपमर्हसि दये विपलायितेऽपि व्याजं विभाव्य वृषशैलपतेर्विहारम् ।
स्वाधीनसत्त्वसरणिः स्वयमत्र जन्तौ द्राघीयसी दृढतरा गुणवागुरा त्वम् ॥ ९५

संतन्यमानमपराधगणं विचिन्त्य त्रस्यामि हन्त भवतीं च विभावयामि ।
अह्नाय मे वृषगिरीशदये जहीमामाशीविषग्रहणकेलिनिभामवस्थाम् ॥ ९६

औत्सुक्यपूर्वमुपहृत्य महापराधान् मातः प्रसादयितुमिच्छति मे मनस्त्वाम् ।
आलिह्य तान्निरवशेषमलब्धतृप्तिस्ताम्यस्यहो वृषगिरीशधृता दये त्वम् ॥ ९७

जह्याद्वृषाचलपतिः प्रतिघेऽपि न त्वां घर्मोपतप्त इव शीतलतामुदन्वान् ।
सा मामरुन्तुदभरन्यसनानुवृत्तिस्तद्वीक्षणैः स्पृश दये तव केलिपद्मैः ॥ ९८

दृष्टेऽपि दुर्बलधियं दमनेऽपि दृप्तं स्नात्वाऽपि धूलिरसिकं भजनेऽपि भीमम् ।
बद्ध्वा गृहाण वृषशैलपतेर्दये मां त्वद्वारणं स्वयमनुग्रहशृङ्खलाभिः ॥ ९९

नातः परं किमपि मे त्वयि नाथनीयं मातर्दये मयि कुरुष्व तथा प्रसादम् ।
बद्धादरो वृषगिरिप्रणयी यथाऽसौ मुक्तानुभूतिमिह दास्यति मे मुकुन्दः ॥ १००

निःसीमवैभवजुषां मिषतां गुणानां स्तोतुर्दये वृषगिरीशगुणेश्वरीं त्वाम् ।
तैरेव नूनमवशैरभिनन्दितं मे सत्यापितं तव बलादकुतोभयत्वम् ॥ १०१

अद्यापि तद्वृषगिरीशदये भवत्यामारम्भमात्रमनिदंप्रथमस्तुतीनाम् ।
संदर्शितस्वपरनिर्वहणा सहेथा मन्दस्य साहसमिदं त्वयि वन्दिनो मे ॥ १०२

प्रायो दये त्वदनुभावमहाम्बुराशौ प्राचेतसप्रभृतयोऽपि परं तटस्थाः ।
तत्रावतीर्णमतलस्पृशमाप्लुतं मां पद्मापतेः प्रहसनोचितमाद्रियेथाः ॥ १०३

वेदान्तदेशिकपदे विनिवेश्य बालं देवो दयाशतकमेतदवादयन्माम् ।
वैहारिकेण विधिना समये गृहीतं वीणाविशेषमिव वेङ्कटशैलनाथः ॥ १०४

अनवधिमधिकृत्य श्रीनिवासानुकम्पामवितथविषयत्वाद्विश्वमव्रीडयन्ती ।
विविधकुशलनीवी वेङ्कटेशप्रसूता स्तुतिरियमनवद्या शोभते सत्त्वभाजाम् ॥ १०५

शतकमिदमुदारं सम्यगभ्यस्यमानान्वृषगिरिमधिरुह्य व्यक्तमालोकयन्ती ।
अनितरशरणानामाधिराज्येऽभिषिञ्चेच्छमितविमतपक्षा शार्ङ्गधन्वानुकम्पा ॥ १०६

विश्वानुग्रहमातरं व्यतिषजत्स्वर्गापवर्गां सुधासध्रीचीमि(ह)ति वेङ्कटेश्वरकविर्भक्त्या दयामस्तुत ।
पद्यानामिह यद्विधेयभगवत्संकल्पकल्पद्रुमात् झंझामारुतधूतचूतनयतः सांपातिकोऽयं क्रमः ॥ १०७

कामं सन्तु मिथःकरम्बितगुणावद्यानि पद्यानि नः कस्यास्मिञ्छतके सदम्बुकतके दोषश्रुतिं क्षाम्यति ।
निष्प्रत्यूहवृषाद्रिनिर्झरझरत्कारच्छलेनोच्चलन् दीनालम्बनदिव्यदम्पतिदयाकल्लोलकोलाहलः ॥ १०८

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु दयाशतकं समाप्तम् ॥ ८ ॥**

---

## ॥ वरदराजपञ्चाशत् ॥ ९ ॥

द्विरदशिखरिसीम्ना सद्मवान् पद्मयोनेस्तुरगसवनवेद्यां श्यामलो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥ १

यस्यानुभावमधिगन्तुमशक्नुवन्तो मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः क्षन्तव्य एष भवता करिशैलनाथ ॥ २

जानन्ननादिविहितानपराधवर्गान् स्वामिन्भयात्किमपि वक्तुमहं न शक्तः ।
अव्याजवत्सल तथाऽपि निरङ्कुशं मां वात्सल्यमेव भवतो मुखरीकरोति ॥ ३

किं व्याहरामि वरद स्तुतये कथं वा खद्योतवत्प्रलघुसंकुचितप्रकाशः ।
तन्मे समर्पय मतिं च सरस्वतीं च त्वामञ्जसा स्तुतिपदैर्यदहं धिनोमि ॥ ४

मच्छक्तिमात्रगणने किमिहास्ति शक्यं शक्येन वा तव करीश किमस्ति साध्यम् ।
यद्यस्ति साधय मया तदपि त्वया वा किं वा भवेद्भवति किंचिदनीहमाने ॥ ५

स्तोत्रं मया विरचितं त्वदधीनवाचा त्वत्प्रीतये वरद यत्तदिदं न चित्रम् ।
आवर्जयन्ति हृदयं खलु शिक्षकाणां मञ्जूनि पञ्जरशकुन्तविजल्पितानि ॥ ६

यं चक्षुषामविषयं हयमेधयज्वा द्राघीयसा सुचरितेन ददर्श वेधाः ।
तं त्वां करीश करुणापरिणामतस्ते भूतानि हन्त निखिलानि निशामयन्ति ॥ ७

तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे शक्रादयो वरद पूर्वमलब्धभागाः ।
अध्यक्षिते मखपतौ त्वयि चक्षुषैव हैरण्यगर्भहविषां रसमन्वभूवन् ॥ ८

सर्गस्थितिप्रलयविभ्रमनाटिकायां शैलूषवद्विविधवेषपरिग्रहं त्वाम् ।
संभावयन्ति हृदयेन करीश धन्याः संसारवारिनिधिसंतरणैकपोतम् ॥ ९

प्राप्तोदयेषु वरद त्वदनुप्रवेशात् पद्मासनादिषु शिवादिषु कञ्चुकेषु ।
तन्मात्रदर्शनविलो(पि)भितशेमुषीकास्तादात्म्यमूढमतयो निपतन्त्यधीराः ॥ १०
मध्ये विरिञ्चिशिवयोर्विहितावतारः ख्यातोऽसि तत्समतया तदिदं न चित्रम् ।
मायावशेन मकरादिशरीरिणं त्वां तानेव पश्यति करीश यदेष लोकः ॥ ११
ब्रह्मेति शंकर इतीन्द्र इति स्वराडित्यात्मेति सर्वमिति सर्वचराचरात्मन् ।
हस्तीश सर्ववचसामवसानसीमां त्वां सर्वकारणमुशन्त्यनपायवाचः ॥ १२
आशाधिपेषु गिरिशेषु चतुर्मुखेष्वप्यव्याहता विधिनिषेधमयी तवाज्ञा ।
हस्तीश नित्यमनुपालनलङ्घनाभ्यां पुंसां शुभाशुभमयानि फलानि सूते ॥ १३
त्राताऽऽपदि स्थितिपदं भरणं प्ररोहश्छाया करीश सरसानि फलानि च त्वम् ।
शाखागतत्रिदशवृन्दशकुन्तकानां किं नाम नासि महतां निगमद्रुमाणाम् ॥ १४
सामान्यबुद्धिजनकाश्च सदादिशब्दास्तत्त्वान्तरभ्रमकृतश्च शिवादिवाचः ।
नारायणे त्वयि करीश वहन्त्यनन्यमन्वर्थवृत्तिपरिकल्पितमैककण्ठ्यम् ॥ १५
संचिन्तयन्त्यखिलहेयविपक्षभूतं शान्तोदितं शमवता हृदयेन धन्याः ।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं निष्पन्दनन्दथुमयं भवतः स्वरूपम् ॥ १६
विश्वातिशायिसुखरूप यदात्मकस्त्वं व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां सा किं त्वमेव तव वेति वितर्कडोलाम् ॥ १७
मोहान्धकारविनिवर्तनजागरूके दोषा दिवाऽपि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरदशैलपते विमृष्टे श्लाघ्येत संतमसपर्व सहस्रभानोः ॥ १८
रूढस्य चिन्मयतया हृदये करीश स्तम्बानुकारिपरिणामविशेषभाजः ।
स्थानेषु जाग्रति चतुर्ष्वपि सत्त्ववन्तः शाखाविभागचतुरे तव चातुरात्म्ये ॥ १९
नागाचलेश निखिलोपनिषन्मनीषामञ्जूषिकामरकतं परिचिन्वतां त्वाम् ।
तन्वी हृदि स्फुरति काऽपि शिखा मुनीनां सौदामनीव निभृता नवमेघगर्भा ॥ २०
औदन्वते महति सद्मनि भासमाने श्लाघ्ये च दिव्यसदने तमसः परस्मिन् ।
अन्तःकलेबरमिदं सुषिरं सुसूक्ष्मं जातं करीश कथमादरणास्पदं ते ॥ २१
बालाकृतेर्वटपलाशमितस्य यस्य ब्रह्माण्डमण्डलमभूदुदरैकदेशे ।
तस्यैव तद्वरद हन्त कथं प्रभूतं वाराहमास्थितवतो वपुरद्भुतं ते ॥ २२
भक्तस्य दानवशिशोः परिपालनाय भद्रां नृसिंहकुहनामधिजग्मुषस्ते ।
स्तम्भैकवर्जमधुनाऽपि करीश नूनं त्रैलोक्यमेतदखिलं नरसिंहगर्भम् ॥ २३
क्रामन् जगत्कपटवामनतामुपेतस्त्रेधा करीश स भवान्निदधे पदानि ।
अद्यापि जन्तव इमे विमलेन यस्य पादोदकेन विधृतेन शिवा भवन्ति ॥ २४

येनाचलप्रकृतिना रिपुसंक्षयार्थी वारां निधिं वरद पूर्वमलङ्घयस्त्वम् ।
तं वीक्ष्य सेतुमधुनाऽपि शरीरवन्तः सर्वे षडूर्मिबहुलं जलधिं तरन्ति ॥ २५

इत्थं करीश दुरपह्नवदिव्यभव्यरूपान्वितस्य विबुधादिविभूतिसाम्यात् ।
केचिद्विचित्रचरितान्भवतोऽवतारान् सत्यान्दयापरवशस्य विदन्ति सन्तः ॥ २६

सौशील्यभावितधिया भवता कथंचित्संछादितानपि गुणान्वरद त्वदीयान् ।
प्रत्यक्षयन्त्यविकलं तव संनिकृष्टाः पत्युस्त्विषामिव पयोदवृतान्मयूखान् ॥ २७

नित्यं करीश तिमिराविलदृष्टयोऽपि सिद्धाञ्जनेन भवतैव विभूषिताक्षाः ।
पश्यन्त्युपर्युपरि संचरतामदृश्यं मायानिगूढमनपायमहानिधिं त्वाम् ॥ २८

सद्यस्त्यजन्ति वरद त्वयि बद्धभावाः पैतामहादिषु पदेष्वपि भावबन्धम् ।
कस्मै स्वदेत सुखसंचरणोत्सुकाय कारागृहे कनकशृङ्खलयाऽपि बन्धः ॥ २९

हस्तीश दुःखविषदिग्धफलानुबन्धिन्याब्रह्मकीटमपराहतसंप्रयोगे ।
दुष्कर्मसंचयवशाद्दुरतिक्रमे नः प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे ॥ ३०

त्वद्भक्तिपोतमवलम्बितुमक्षमाणां पारं परं वरद गन्तुमनीश्वराणाम् ।
स्वैरं लिलङ्घयिषतां भववारिराशिं त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ॥ ३१

अश्रान्तसंसरणघर्मनिपीडितस्य भ्रान्तस्य मे वरद (विषय) भोगमरीचिकासु ।
जीवातुरस्तु निरवग्रहमेधमानो देव त्वदीयकरुणामृतदृष्टिपातः ॥ ३२

अन्तः प्रविश्य भगवन्नखिलस्य जन्तोरासेदुषस्तव करीश भृशं दवीयान् ।
सत्यं भवेयमधुनाऽपि स एव भूयः स्वाभाविकी तव दया यदि नान्तरायः ॥ ३३

अज्ञातनिर्गममनागमवेदिनं माम् अन्धं न किंचिदवलम्बनमश्नुवानम् ।
एतावतीं गमयितुः पदवीं दयालोः शेषाध्वलेशनयने क इवातिभारः ॥ ३४

भूयोऽपि हन्त वसतिर्यदि मे भवित्री याम्यासु दुर्विषहवृत्तिषु यातनासु ।
सम्यग्भविष्यति ततः शरणागतानां संरक्षितेति बिरुदं वरद त्वदीयम् ॥ ३५

पर्याकुलं महति दुःखपयोनिधौ मां पश्यन्करीश यदि जोषमवस्थितस्त्वम् ।
स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं पारे करिष्यति दया तव दुर्निवारा ॥ ३६

किं वा करीश कृपणे मयि रक्षणीये धर्मादिबाह्यसहकारिगवेषणेन ।
नन्वस्ति विश्वपरिपालनजागरूकः संकल्प एव भवतो निपुणः सहायः ॥ ३७

निर्यन्त्रणं परिणमन्ति न यावदेते नीरन्ध्रदुष्कृतभवा दुरितप्ररोहाः ।
तावन्न चेत्त्वमुपगच्छसि शार्ङ्गधन्वा शक्यं त्वयाऽपि न हि वारयितुं करीश ॥ ३८

यावन्न पश्यति निकाममममर्षणो मां भ्रूभङ्गभीषणकरालमुखः कृतान्तः ।
तावत्पतन्तु मयि ते भगवन्दयालोरुन्निद्रपद्मकलिकामधुराः कटाक्षाः ॥ ३९

स त्वं स एव रभसो भवदौपवाह्यश्चक्रं तदेव शितधारमहं च पाल्यः ।
साधारणे त्वयि करीश समस्तजन्तोर्मातङ्गमानुषभिदा न विशेषहेतुः ॥ ४०
निर्वापयिष्यति कदा करिशैलधामन् दुर्वारकर्मपरिपाकमहादवाग्निम् ।
प्राचीनदुःखमपि मे सुखयन्निव त्वत्पादारविन्दपरिचाररसप्रवाहः ॥ ४१
मुक्तः स्वयं सुकृतदुष्कृतशृङ्खलाभ्यामर्चिर्मुखैरधिकृतैरतिवाहिताध्वा ।
स्वच्छन्दकिङ्करतया भवतः करीश स्वाभाविकं प्रतिलभेय महाधिकारम् ॥ ४२
त्वं चेत्प्रसीदसि तवास्मि समीपतश्चेत्त्वय्यस्ति भक्तिरनघा करिशैलनाथ ।
संसृज्यते यदि च दासजनस्त्वदीयः संसार एष भगवन्नपवर्ग एव ॥ ४३
आहूयमानमनपायविभूतिकामैरालोकलुप्तजगदान्ध्यमनुस्मरेयम् ।
आलोहितांशुकमनाकुलहेतिजालं हैरण्यगर्भहयमेधहविर्भुजं त्वाम् ॥ ४४
भूयो भूयः पुलकनिचितैरङ्गकैरेधमानाः स्थूलस्थूलान्नयनमुकुलैर्बिभ्रतो बाष्पबिन्दून् ।
धन्याः केचिद्वरद भवतः संसदं भूषयन्तः स्वान्तैरन्तर्वि(ल)नयनिभृतैः स्वादयन्ते पदं ते ॥ ४५
वरद तव विलोकयन्ति धन्या मरकतभूधरमातृकायमाणम् । व्यपगतपरिकर्मवारवाणं मृगमदपङ्कविशेषनीलमङ्गम् ॥ ४६
अनिभृतपरिरम्भैराहितामिन्दिरायाः कनकवलयमुद्रां कण्ठ(देशे)भागे दधानः ।
फणिपतिशयनीयादुत्थितस्त्वं प्रभाते वरद सततमन्तर्मानसं संनिधेयाः ॥ ४७
तुरगविहगराजस्यन्दनान्दोलिकादिष्वधिकमधिकमन्यामात्मशोभां दधानम् ।
अनवधिकविभूतिं हस्तिशैलेश्वरं त्वामनुदिनमनिमेषैर्लोचनैर्निर्विशेयम् ॥ ४८
निरन्तरं निर्विशतस्त्वदीयमस्पृष्टचिन्तापदमाभिरूप्यम् । सत्यं शपे वारणशैलनाथ वैकुण्ठवासेऽपि न मेऽभिलाषः ॥ ४९
व्यातन्वाना तरुणतुलसीदामभिः स्वामभिख्यां मातङ्गाद्रौ मरकतरुचिं पुष्णती मानसे नः ।
भोगैश्वर्यप्रियसहचरैः काऽपि लक्ष्मीकटाक्षैर्भूयः श्यामा भुवनजननी देवता संनिधत्ताम् ॥ ५०
इति विहितमुदारं वेङ्कटेशेन भक्त्या श्रुतिसुभगमिदं यः स्तोत्रमङ्गीकरोति ।
करिशिखरिविटङ्कस्थायिनः कल्पवृक्षाद्भवति फलमशेषं तस्य हस्तापचेयम् ॥ ५१

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु वरदराजपञ्चाशत् समाप्ता ॥ ९ ॥**

---

## (यथोक्तकारिस्तोत्रम्) ॥ वेगासेतुस्तोत्रम् ॥ १० ॥

एकं वेगवतीमध्ये हस्तिशैले च दृश्यते । उपायफलभावेन स्वयं व्यक्तं परं महः ॥ १
ईष्टे गमयितुं पारमेष सेतुरभङ्गुरः । यत्र सान्त्वतं स्रोतो विश्राम्यति विशृङ्खलम् ॥ २
जयति जगदेकसेतुर्वेगवतीमध्यलक्षितो देवः । प्रशमयति यः प्रजानां प्रथितान्संसारजलधिकल्लोलान् ॥ ३
विभातु मे चेतसि विष्णुसेतुर्वेगापगावेगविघातहेतुः । अम्भोजयोनेर्यदुपज्ञमासीदभङ्गरक्षा हयमेधदीक्षा ॥ ४

चतुराननसप्ततन्तुगोप्ता सरितं वेगवतीमसौ निरुन्धन् । परिपुष्यति मङ्गलानि पुंसां भगवद्भक्तिमतां यथोक्तकारी ॥ ५

श्रीमान्पितामहवधूपरिचर्यमाणः शेते भुजङ्गशयने स महाभुजङ्गः ।
प्रत्यादिशन्ति भवसंचरणं प्रजानां भक्तानुगन्तुरिह यस्य गतागतानि ॥ ६

प्रशमितहयमेधव्यापदं पद्मयोनेः श्रितजनपरतन्त्रं शेषभोगे शयानम् ।
शरणमुपगताः स्मः शान्तनिश्शेषदोषं शतमखमणिसेतुं शाश्वतं वेगवत्याः ॥ ७

शरणमुपगतानां सोऽयमादेशकारी शमयति परितापं संमुखः सर्वजन्तोः ।
शतगुणपरिणामः संनिधौ यस्य नित्यं वरवितरणभूमा वारणाद्रीश्वरस्य ॥ ८

काञ्चीभाग्यं कमलनिलयाचेतसोऽभीष्टसिद्धिः कल्याणानां निधिरविकलः कोऽपि कारुण्यराशिः ।
पुण्यानां नः परिणतिरसौ भूषयन्भोगिशय्यां वेगासेतुर्जयति विपुलो विश्वरक्षैकहेतुः ॥ ९

वेगासेतोरिदं स्तोत्रं वेङ्कटेशेन निर्मितम् । ये पठन्ति जनास्तेषां यथोक्तं कुरुते हरिः ॥ १०

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु वेगासेतुस्तोत्रं समाप्तम् ॥ १० ॥**

---

## ॥ अष्टभुजाष्टकम् ॥ ११ ॥

गजेन्द्ररक्षात्वरितं भवन्तं ग्राहैरिवाहं विषयैर्विकृष्टः । अपारविज्ञानदयानुभावमाप्तं सतामष्टभुजं प्रपद्ये ॥ १
त्वदेकशेषोऽहमनात्मतन्त्रस्त्वत्पादलिप्सां दिशता त्वयैव । असत्समोऽप्यष्टभुजास्पदेश सत्तामिदानीमुपलम्भितोऽस्मि ॥ २
स्वरूपरूपास्त्रविभूषणाद्यैः परत्वचिन्तां त्वयि दुर्निवाराम् । भोगे मृदूपक्रमतामभीप्सञ्छीलादिभिर्वारयसीव पुंसाम् ॥ ३

शक्तिं शरण्यान्तरशब्दभाजां सारं च संतोल्य फलान्तराणाम् ।
त्वद्दास्यहेतोस्त्वयि निर्विशङ्कं न्यस्तात्मनां नाथ बिभर्षि भारम् ॥ ४

अभीतिहेतोरनुवर्तनीयं नाथ त्वदन्यं न विभावयामि । भयं कुतः स्यात्त्वयि सानुकम्पे रक्षा कुतः स्यात्त्वयि जातरोषे ॥
त्वदेकतन्त्रं कमलासहाय स्वेनैव मां रक्षितुमर्हसि त्वम् । त्वयि प्रवृत्ते मम किं प्रयासैस्त्वय्यप्रवृत्ते मम किं प्रयासैः ॥
समाधिभङ्गेष्वपि संपतत्सु शरण्यभूते त्वयि बद्धकक्ष्ये । अपत्रपे सोढुमकिञ्चनोऽहं दूराधिरोहं पतनं च नाथ ॥ ७
प्राप्ताभिलाषं त्वदनुग्रहान्मां पद्मानिषेव्ये तव पादपद्मे । आदेहपातादपराधदूरमात्मान्तकैङ्कर्यरसं विधेयाः ॥ ८

प्रपन्नजनपाथेयं प्रपित्सूनां रसायनम् । श्रेयसे जगतामेतच्छ्रीमदष्टभुजाष्टकम् ॥ ९
शरणागतसंत्राणत्वराद्विगुणबाहुना । हरिणा वेङ्कटेशीया स्तुतिः स्वीक्रियतामियम् ॥ १०

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु अष्टभुजाष्टकं समाप्तम् ॥ ११ ॥**

---

## ॥ कामासिकाष्टकम् ॥ १२ ॥

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् । कामादधिवसञ्जीयात्कश्चिदद्भुतकेसरी ॥ १
तपनेन्द्वग्निनयनस्तापानपचिनोतु नः । तापनीयरहस्यानां सारः कामासिकाहरिः ॥ २

श्राकण्ठमादिपुरुषं कण्ठीरवमुपरि कुण्ठितारातिम् । वेगोपकण्ठसङ्गाद्विमुक्तवैकुण्ठबहुमतिमुपासे ॥ ३
न्धुमखिलस्य जन्तोर्बन्धुरपर्यङ्कबन्धरमणीयम् । विषमविलोचनमीडे वेगवतीपुलिनकेलिनरसिंहम् ॥ ४
वस्थानेषु मरुद्गणान्नियमयन्स्वाधीनसर्वेन्द्रियः पर्यङ्कस्थिरधारणाप्रकटितप्रत्यङ्मुखावस्थितिः ।
ायेण प्रणिपेदुषः प्रभुरसौ योगं निजं शिक्षयन् कामानातनुतादशेषजगतां कामासिकाकेसरी ॥ ५

विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थलीनिरर्गलविनिर्गलद्रुधिरसिन्धुसंध्यायिताः ।
अवन्तु मदनासिकामनुजपञ्चवक्त्रस्य मामहंप्रथमिकामिथःप्रकटिताहवा बाहवः ॥ ६

सटापटलभीषणे सरभसाट्टहासोद्भटे स्फुरत्क्रुधि परिस्फुटभ्रुकुटिकेऽपि वक्त्रे कृते ।
कृपा कपटकेसरिन् दनुजडिम्भदत्तस्तना सरोजसदृशा दृशा व्यतिविषज्य ते व्यज्यते ॥ ७

त्वयि रक्षति रक्षकैः किमन्यैस्त्वयि चारक्षति रक्षकैः किमन्यैः ।
इति निश्चितधीः श्रयामि नित्यं नृहरे वेगवतीतटाश्रयं त्वाम् ॥ ८

इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः श्रीवेङ्कटेशरचितैस्त्रिदशेन्द्रवन्द्यः ।
दुर्दान्तघोरदुरितद्विरदेन्द्रभेदी कामासिकानरहरिर्वितनोतु कामान् ॥ ९

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु कामासिकाष्टकं समाप्तम् ॥ १२ ॥**

---

# ॥ परमार्थस्तुतिः ॥ १३ ॥

श्रीमद्गृध्रसरस्तीरपारिजातमुपास्महे । यत्र तुङ्गैरतुङ्गैश्च प्रणतैर्गृह्यते फलम् ॥ १
गुरुभिस्त्वदनन्यसर्वभावैर्गुणसिन्धौ कृतसंप्लवस्त्वदीये । रणपुंगव वन्दिभावमिच्छन्नहमस्म्येकमनुग्रहास्पदं ते ॥ २
भुवनाश्रयभूषणास्त्रवर्गं मनसि त्वन्मयतां ममातनोतु । वपुराहवपुंगव त्वदीयं महिषीणामनिमेषदर्शनीयम् ॥ ३
अभिरक्षितुमग्रतः स्थितं त्वां प्रणवे पार्थरथे च भावयन्तः । अहितप्रशमैरयत्नलभ्यैः कथयन्त्याहवपुंगवं गुणज्ञाः ॥ ४
कमला निरपायधर्मपत्नी करुणायाः स्वयमृत्विजो गुणास्ते । अवनं श्रयतामहीनमाद्यं स च धर्मस्त्वदनन्यसेवनीयः ॥ ५
कृपणाः सुधियः कृपासहायं शरणं त्वां रणपुंगव प्रपन्नाः । अपवर्गनयादनन्यभावा वरिवस्यारसमेकमाद्रियन्ते ॥ ६
अवधीर्य चतुर्विधं पुमर्थं भवदर्थे विनियुक्तजीवितः सन् । लभते भवतः फलानि जन्तुर्निखिलान्यत्र निदर्शनं जटायुः ॥ ७
शरणागतरक्षणव्रती मां न विहातुं रणपुंगवार्हसि त्वम् । विदितं भुवने विभीषणो वा यदि वा रावण इत्युदीरितं ते ॥ ८
भुजगेन्द्रगरुत्मदादिलभ्यैस्त्वदनुज्ञानुभवप्रवाहभेदैः । स्वपदे रणपुंगव स्वयं मे परिचर्याविभवैः परिष्क्रियेथाः ॥ ९
विमलाशयवेङ्कटेशजन्मा रमणीया रणपुङ्गवप्रसादात् । अनसूयुभिरादरेण भाव्या परमार्थस्तुतिरन्वहं प्रपन्नैः ॥ १०

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु परमार्थस्तुतिः समाप्ता ॥ १३ ॥**

---

# (दीपप्रकाशस्तोत्रम्) ॥ शरणागतिदीपिका ॥ १४ ॥

पद्मापतेः स्तुतिपदेन विपच्यमानं पश्यन्त्विह प्रपदनप्रवणा महान्तः ।
मद्वाक्यसंवलितमप्यजहत्स्वभावं मान्यं यतीश्वरमहानससंप्रदायम् ॥ १

नित्यं श्रिया वसुधया च निषेव्यमाणं निर्व्याजनिर्भरदयाभरितं विभाति ।
वेदान्तवेद्यमिह वेगवतीसमीपे दीपप्रकाश इति दैवतमद्वितीयम् ॥ २

दीपस्त्वमेव जगतां दयिता रुचिस्ते दीर्घं तमः प्रतिनिवर्त्यमिदं युवाभ्याम् ।
स्तव्यं स्तवप्रियमतः शरणोक्तिवश्यं स्तोतुं भवन्तमभिलष्यति जन्तुरेषः ॥ ३

पद्माकरादुपगता परिषस्वजे त्वां वेगासरिद्विहरणा कलशाब्धिकन्या ।
आहुस्तदाप्रभृति दीपसमावभासमाजानतो मरकतप्रतिमं वपुस्ते ॥ ४

स्वामिन्गभीरसुभगं श्रमहारि पुंसां माधुर्यरम्यमनघं मणिभङ्गदृश्यम् ।
वेगान्तरे वितनुते प्रतिबिम्बशोभां लक्ष्मीसरः सरसिजाश्रयमङ्गकं ते ॥ ५

आविश्य धारयसि विश्वममुष्य यन्ता शेषी श्रियःपतिरशेषतनुर्निदानम् ।
इत्यादिलक्षणगणैः पुरुषोत्तमं त्वां जानाति यो जगति सर्वविदेष गीतः ॥ ६

विश्वं शुभाश्रयवदीश वपुस्त्वदीयं सर्वा गिरस्त्वयि पतन्ति ततोऽसि सर्वः ।
सर्वे च वेदविषयस्त्वदनुग्रहार्थाः सर्वाधिकस्त्वमिति तत्त्वविदस्तदाहुः ॥ ७

ज्ञानं बलं नियमनक्षमताऽथ वीर्यं शक्तिश्च तेज इति ते गुणषट्कमाद्यम् ।
सर्वातिशायिनि हिमोपवनेश यस्मिन्नन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ ८

दीपावभास दयया विधिपूर्वमेतद्विश्वं विधाय निगमानपि दत्तवन्तम् ।
शिष्यायिताः शरणयन्ति मुमुक्षवस्त्वामाद्यं गुरुं गुरुपरम्परयाऽधिगम्यम् ॥ ९

सत्तास्थितिप्रयतनप्रमुखैरुपात्तं स्वार्थं सदैव भवता स्वयमेव विश्वम् ।
दीपप्रकाश तदिह त्वदवाप्तये त्वामव्याजसिद्धमनपायमुपायमाहुः ॥ १०

भोग्यं मुकुन्द गुणभेदमचेतनेषु भोक्तृत्वमात्म(नि)सु निवेश्य निजेच्छयैव ।
पाञ्चालिकाशुकविभूषणभोगदायी सम्राडिवात्मसमया सह मोदसे त्वम् ॥ ११

त्वां मातरं च पितरं सहजं निवासं सन्तः समेत्य शरणं सुहृदं गतिं च ।
निःसीमनित्यनिरवद्यसुखप्रकाशं दीपप्रकाश सविभूतिगुणं विशन्ति ॥ १२

जन्तोरमुष्य जनने विधिशम्भुदृष्टौ रागादिनेव रजसा तमसा च योगः ।
द्वैपायनप्रभृतयस्त्वदवेक्षितानां सत्त्वं विमुक्तिनियतं भवतीत्युशन्ति ॥ १३

कर्मस्वनादिविषमेषु समो दयालुः स्वेनैव क्लृप्तमुपदेशमवेक्षमाणः ।
स्वप्राप्तये तनुभृतां त्वरसे मुकुन्द स्वाभाविकं तव सुहृत्त्वमिदं गृणन्ति ॥ १४

निद्रायितान्निगमवर्त्मनि चारुदर्शी प्रस्थानशक्तिसहितान्प्रतिबोध्य जन्तून् ।
जीर्णस्तनंधयजडान्धमुखानिवास्मान्नेतुं मुकुन्द यतसे दयया सह त्वम् ॥ १५
भक्तिः प्रपत्तिरथ वा भगवंस्तदुक्तिस्तन्निष्ठसंश्रय इतीव विकल्प्यमानम् ।
यत्किंचिदेकमुपपादयता त्वयैव त्रातास्तरन्त्यवसरे भविनो भवाब्धिम् ॥ १६
नानाविधैरकपटैरजहत्स्वभावैरप्राकृतैर्निजविहारवशेन सिद्धैः ।
आत्मीयरक्षणविपक्षविनाशनार्थैः संस्थापयस्यनघजन्मभिरात्मधर्मम् ॥ १७
निम्नोन्नतानि निखिलानि पदानि गाढं मज्जन्ति ते महिमसागरशीकरेषु ।
नीरन्ध्रमाश्रयसि नीचजनांस्तथाऽपि शीलेन हन्त शिशिरोपवनेश्वर त्वम् ॥ १८
काशीवृकान्धकशरासनबाणगङ्गासंभूतिनामकृतिसंवदनाद्युदन्तैः ।
स्वोक्त्यम्बरीषभयशापमुखैश्च शंभुं त्वन्निघ्नमीक्षितवतामिह कः शरण्यः ॥ १९
क्वासौ विभुः क्व वयमित्युपसत्तिभीतान् जन्तून्क्षणात्त्वदनुवृत्तिषु योग्ययन्ती ।
संप्राप्तसद्गुरुतनोः समये दयालोरात्मावधिर्भवति संस्कृतधीः क्षणं ते ॥ २०
योग्यं यमैश्च नियमैश्च विधाय चित्तं सन्तो जितासनतया स्ववशासुवर्गाः ।
प्रत्याहृतेन्द्रियगणाः स्थिरधारणास्त्वां ध्यात्वा समाधियुगलेन विलोकयन्ति ॥ २१
पद्माभिरामवदनेक्षणपाणिपादं दिव्यायुधाभरणमाल्यविलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रयमात्मवन्तः सालम्बनेन परिचिन्त्य न यान्ति तृप्तिम् ॥ २२
मानातिलङ्घिसुखबोधमहाम्बुराशौ मग्नास्निसीमरहिते भवतः स्वरूपे ।
तापत्रयेण विहतिं न भजन्ति (भूयः) सन्तः संसारघर्मजनितेन समाधिमन्तः ॥ २३
धीसंस्कृतान्विदधतामिह कर्मभेदान् शुद्धं जिते मनसि चिन्तयतां स्वमेकम् ।
त्वत्कर्मसक्तमनसामपि चापरेषां सूते फलान्यभिमतानि भवान्प्रसन्नः ॥ २४
उद्बाहुभावमपहाय यथैव खर्वः प्रांशुं फलार्थमभियाचति योगिचिन्त्य ।
एवं सुदुष्करमुपायगणं विहाय स्थाने निवेशयति तस्य विचक्षणस्त्वाम् ॥ २५
नित्यालसार्हमभयं निरपेक्षमन्यैर्विश्वाधिकारमखिलाभिमतप्रसूतिम् ।
शिक्षाविशेषसुभगं व्यवसायसिद्धाः सत्कुर्वते त्वयि मुकुन्द षडङ्गयोगम् ॥ २६
त्वत्प्रातिकूल्यविमुखाः स्फुरदानुकूल्याः कृत्वा पुनः कृपणतां विगतातिशङ्काः ।
स्वामिन्भव स्वयमुपाय इतीरयन्तस्त्वय्यर्पयन्ति निजभारमपारशक्तौ ॥ २७
अर्थान्तरेषु विमुखानधिकारहानेः श्रद्धाधनांस्त्वदनुभूतिविलम्बभीतान् ।
दीपप्रकाश लभसे सुचिरात्कृतीव न्यस्तात्मनस्तव पदे निभृतान्प्रपन्नान् ॥ २८
मन्त्रैरनुश्रवमुखेष्वधिगम्यमानैः स्वाधिक्रियासमुचितैर्यदि वाऽन्यवाक्यैः ।
नाथ त्वदीयचरणौ शरणं गतानां नैवायुतायुतकलाऽप्यपरैरवाप्या ॥ २९

दत्ताः प्रजा जनकवत्तव देशिकेन्द्रैः पत्याऽभिनन्द्य भवता परिणीयमानाः ।
मध्ये सतां महितभोगविशेषसिद्धैय माङ्गल्यसूत्रमिव बिभ्रति किंकरत्वम् ॥ ३०
दिव्ये पदे नियतकिंकरताधिराज्यं दातुं त्वदीयदयया विहिताभिषेकाः ।
आदेहपातमनघाः परिचर्यया ते युञ्जानचिन्त्य युवराजपदं भजन्ति ॥ ३१
त्वां पाञ्चरात्रिकनयेन पृथग्विधेन वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः प्रीत्या नयन्ति फलवन्ति दिनानि धन्याः ॥ ३२
वर्णाश्रमादिनियतक्रमसूत्रबद्धा भक्त्या यथार्हविनिवेशितपत्रपुष्पा ।
मालेव कालविहिता हृदयंगमा त्वामामोदयत्यनुपरागधियां सपर्या ॥ ३३
ब्रह्मा गिरीश इतरेऽप्यमरा य एते निर्धूय तान्निरयतुल्यफलप्रसूतीन् ।
प्राप्तुं तवैव पदपद्मयुगं प्रतीताः पातिव्रतीं त्वयि वहन्ति परावरज्ञाः ॥ ३४
नाथ त्वदिष्टविनियोगविशेषसिद्धं शेषत्वसारमनपेक्ष्य निजं गुणज्ञाः ।
भक्तेषु ते वरगुणार्णव पारतन्त्र्याद्दास्यं भजन्ति विपणिव्यवहारयोग्यम् ॥ ३५
सद्भिस्त्वदेकशरणैर्नियतं सनाथाः सर्पादिवत्त्वदपराधिषु दूरयाताः ।
धीरास्तृणीकृतविरिञ्चिपुरंदराद्याः कालं क्षिपन्ति भगवन्करणैरवन्ध्यैः ॥ ३६
वागादिकं मनसि तत्पवने स जीवे भूतेष्वयं पुनरसौ त्वयि तैः समेति ।
साधारणोत्क्रमणकर्म समाश्रितानां यन्त्रा मुकुन्द भवतैव यथा यमादेः ॥ ३७
सव्यान्ययोरयनयोर्निशि वासरे वा संकल्पितायुरवधीन्सपदि प्रपन्नान् ।
हार्दः स्वयं निजपदे विनिवेशयिष्यन्नाडीं प्रवेशयसि नाथ शताधिकां त्वम् ॥ ३८
अर्चिर्दिनं विशदपक्ष उदक्प्रयाणं संवत्सरो मरुदशीतकरः शशाङ्कः ।
सौदामनी जलपतिर्वलजित्प्रजेश इत्यातिवाहिकसखो नयसि स्वकीयान् ॥ ३९
त्वच्छेषवृत्त्यनुगुणैर्महितैर्गुणौघैराविर्भवत्ययुतसिद्धनिजस्वरूपे ।
त्वल्लक्षणेषु नियतेष्वपि भोगमात्रे साम्यं भजन्ति परमं भवता विमुक्ताः ॥ ४०
इत्थं त्वदेकशरणैरनघैरवाप्ये त्वत्किंकरत्वविभवे स्पृहयाऽपराध्यन् ।
आत्मा ममेति भगवन्भवतैव गीता वाचो निरीक्ष्य भरणीय इह त्वयाऽहम् ॥ ४१
पञ्चामहोप्रभृतिभिः परिभुक्तभूम्नः का हानिरत्र मयि भोक्तरि ते भवित्री ।
दुष्येत्किमङ्घ्रितटिनी तव देवसेव्या दुर्वारतर्षचपलेन शुनाऽवलीढा ॥ ४२
सत्त्वानि नाथ विविधान्यभिसंजिघृक्षोः संसारनाट्यरसिकस्य तवास्तु तृप्त्यै ।
प्रत्यक्पराङ्मुखमतेरसमीक्ष्यकर्तुः प्राचीनसज्जनविडम्बनभूमिका मे ॥ ४३
कर्तव्यमित्यनुकलं कलयाम्यकृत्यं स्वामिन्नकृत्यमिति कृत्यमपि त्यजामि ।
अन्यद्व्यतिक्रमणजातमनन्तमर्थस्थाने दया भवतु ते मयि सार्वभौमी ॥ ४४

यं पूर्वमाश्रितजनेषु भवान्यथावद्धर्मं परं प्रणिजगौ स्वयमानृशंस्यम् ।
संस्मारितस्त्वमसि तस्य शरण्यभावान्नाथ त्वदात्तसमया ननु मादृशार्थम् ॥ ४५
त्राणं भवेति सकृदुक्तिसमुद्यतानां तैस्तैरसह्यवृजिनैरुदरंभरिस्ते ।
सत्यापिता शतमखात्मजशंकरादौ नाथ क्षमा न खलु जन्तुषु मद्विवर्जम् ॥ ४६
कर्मादिषु त्रिषु कथां कथमप्यजानन्कामादिमेदुरतया कलुषप्रवृत्तिः ।
साकेतसंभवचराचरजन्तुनीत्या वीक्ष्यः प्रभो विषयवासितयाऽप्यहं ते ॥ ४७
ब्रह्माण्डलक्षशतकोटिगणाननन्तानेकक्षणे विपरिवर्त्य विलज्जमानाम् ।
मत्पापराशिमथने मधुदर्पहन्त्रीं शक्तिं नियुङ्क्ष्व शरणागतवत्सल त्वम् ॥ ४८
आस्तां प्रपत्तिरिह देशिकसाक्षिका मे सिद्धा तदुक्तिरनघा त्वदवेक्षितार्था ।
न्यस्तस्य पूर्वनिपुणैस्त्वयि नन्विदानीं पूर्णे मुकुन्द पुनरुक्त उपाय एषः ॥ ४९
यद्वा मदर्थपरिचिन्तनया तवालं संज्ञां प्रपन्न इति साहसिको बिभर्मि ।
एवं स्थिते त्वदपवादनिवृत्तये मां पात्रीकुरुष्व भगवन्भवतः कृपायाः ॥ ५०
त्यागे गुणेश शरणागतसंज्ञिनो मे स्यानागसोऽपि सहसैव परिग्रहे वा ।
किं नाम कुत्र भवतीति कृपादिभिस्ते गूढं निरूपय गुणेतरतारतम्यम् ॥ ५१
स्वामी दयाजलनिधिर्मधुरः क्षमावान् शीलाधिकः श्रितवशः शुचिरत्युदारः ।
एतानि हातुमनघो न किलार्हसि त्वं विख्यातिमन्ति बिरुदानि मया सहैव ॥ ५२
वेलाधनञ्जयरथादिषु वाचिकैः स्वैराघोषितामखिलजन्तुशरण्यतां ते ।
जानन्दशाननशतादधिकागसोऽपि पश्यामि दत्तमभयं सकृते त्वया मे ॥ ५३
रक्ष्यस्त्वया तव भरोऽस्म्यहमित्यपूर्वान्वर्णानिमानहृदयानपि वाचयित्वा ।
मद्दोषनिर्जितगुणो महिषीसमक्षं मा भूस्त्वदन्य इव मोघपरिश्रमस्त्वम् ॥ ५४
मुख्यं च यत्प्रपदनं स्वयमेव साध्यं दातव्यमीश कृपया तदपि त्वयैव ।
तन्मे भवच्चरणसङ्गवतीमवस्थां पश्यन्नुपायफलयोरुचितं विधेयाः ॥ ५५
अल्पास्थिरैरसुकरैरसुखावसानैर्दुःखान्वितैरनुचितैरभिमानमूलैः ।
प्रत्यक्परागनुभवैः परिघूर्णितं मां त्वय्येव नाथ चरितार्थय (निर्व्यपेक्षम्) निर्विविक्षुम् ॥ ५६
तत्त्वावबोधशमितप्रतिकूलवृत्तिं कैङ्कर्यलब्धकरणत्रयसामरस्यम् ।
कृत्वा त्वदन्यविमुखं कृपया स्वयं मां स्फातिं दृशोः प्रतिलभस्व जगज्जनन्याः ॥ ५७
इत्थं स्तुतिप्रभृतयो यदि संमताः स्युर्यद्वाऽपराधपदवीष्वभिसंविशन्ति ।
स्तोकानुकूल्यकणिकावशवर्तिनस्ते प्रीतिक्षमाप्रसरयोरहमस्मि लक्ष्यम् ॥ ५८
स्नेहोपपन्नविषयः स्वदशाविशेषाद्भूयस्तमिस्रशमनीं भुवि वेङ्कटेशः ।
दिव्यां स्तुतिं निरमिमीत सतां नियोगाद्दीपप्रकाशशरणागतिदीपिकाख्याम् ॥ ५९

(एतां दीपप्रकाशस्तुतिमिह रुचिरामित्थमभ्यस्यमानः सम्यग्दृष्ट्वा शरण्यप्रभृतिनिगदितं न्यासविद्याख्यतत्त्वम् ।
प्रत्यासीदद्विमुक्तानुभवफलसमुद्भेदलब्ध्या कृतार्थः प्राप्ते पिण्डस्य भेदे परिणमति परब्रह्मसब्रह्मचारी ॥) ६०

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु शरणागतिदीपिका समाप्ता ॥ १४ ॥

---

# ॥ देवनायकपञ्चाशत् ॥ १५ ॥

प्रणतसुरकिरीटप्रान्तमन्दारमालाविगलितमकरन्दस्निग्धपादारविन्दः ।
पशुपतिविधिपूज्यः पद्मपत्रायताक्षः फणिपतिपुरनाथः पातु मां देवनाथः ॥ १

देवाधिनाथकमलापृतनेशपूर्वां दीक्षान्तरां वकुलभूषणनाथमुख्यैः ।
रामानुजप्रभृतिभिः परिभूषिताग्रां गोप्त्रीं जगन्ति गुरुपङ्क्तिमहं प्रपद्ये ॥ २

दिव्ये दयाजलनिधौ दिविषन्नियन्तुस्तीर्थे निदर्शितवतस्त्रिजगन्निषेव्यम् ।
प्राचः कवीन्निगमसंमितसूनृतोक्तीन्प्राचेतसप्रभृतिकान्प्रणमाम्यभीक्ष्णम् ॥ ३

मातस्त्वमम्बुरुहवासिनि किंचिदेतद्विज्ञाप्यते मयि कुरुष्व तथा प्रसादम् ।
आकर्णयिष्यति यथा विबुधेश्वरस्ते प्रेयानसौ पृथुकजल्पितवन्मदुक्तिम् ॥ ४

निर्विश्यमानविभवं निगमोत्तमाङ्गैः स्तोतुं क्षमं मम च देवपते भवन्तम् ।
गावः पिबन्तु गणशः कलशाम्बुराशिं किं तेन तर्णकगणाश्चिरमाददानाः ॥ ५

अज्ञातसीमकमनन्तगरुत्मदाद्यैस्तं त्वां समाधिनियतैरपि सामि दृष्टम् ।
तुष्टूषतो मम मनोरथसिद्धिदायी दासेषु सत्य इति धारय नामधेयम् ॥ ६

विश्राणयन्मम विशेषविदामनिन्द्यामन्तर्वर्ती गिरमहीन्द्रपुराधिराज ।
स्तव्यः स्तवप्रिय इतीव तपोधनोक्तं स्तोतेति च त्वदभिधानमवन्ध्यय त्वम् ॥ ७

संरक्षणीयममराधिपते त्वयैव दूरं प्रयातमपि दुस्त्यजगाढबन्धम् ।
आकृष्टवानसि भवाननुकम्पमानः सूत्रानुबद्धशकुनिक्रमतः स्वयं माम् ॥ ८

व्यामोहिता विविधभोगमरीचिकाभिर्विश्रान्तिमद्य लभते विबुधैकनाथ ।
गम्भीरपुण्यमधुरं मम धीर्भवन्तं ग्रीष्मे तटाकमिव शीतमनुप्रविष्टा ॥ ९

दिव्ये पदे जलनिधौ निगमोत्तमाङ्गे स्वान्ते सतां सवितृमण्डलमध्यभागे ।
ब्रह्माचले च बहुमानपदे मुनीनां व्यक्तिं तव त्रिदशनाथ वदन्ति नित्याम् ॥ १०

तीर्थैर्वृतं वृजिनदुर्गतिनाशनार्हैः शेषक्ष्माविहगराजविरिञ्चिजुष्टैः ।
नाथ त्वया नतजनस्य भवौषधेन प्रख्यातमौषधगिरिं प्रणमन्ति देवाः ॥ ११

स्वाधीनविश्वविभवं भगवन्विशेषात्त्वां देवनायकमुशन्ति परावरज्ञाः ।
प्रायः प्रदर्शयितुमेतदिति प्रतीमस्त्वद्भक्तिभूषितधियामिह देवभावम् ॥ १२

तत्त्वानि यानि चिदचित्प्रविभागवन्ति त्रय्यन्तवृद्धगणितानि सितासितानि ।
दीव्यन्ति तान्यहिपुरन्दरधामनाथ दिव्यास्त्रभूषणतया तव विग्रहेऽस्मिन् ॥ १३
भूषायुधैरधिगतं निजकान्तिहेतोर्भुक्तं प्रियाभिरनिमेषविलोचनाभिः ।
प्रत्यङ्गपूर्णसुषमासुभगं वपुस्ते दृष्ट्वा दृशौ विबुधनाथ न तृप्यतो मे ॥ १४
वेदेषु निर्जरपते निखिलेष्वधीतं व्यासादिभिर्बहुमतं तव सूक्तमग्र्यम् ।
अङ्गान्यमूनि भवतः सुभगान्यधीते विश्वं विभो जनितवन्ति विरिञ्चपूर्वम् ॥ १५
देवेश्वरत्वमिह दर्शयितुं क्षमस्ते नाथ त्वयाऽपि शिरसा विधृतः किरीटः ।
एकीकृतद्युमणिबिम्बसहस्रदीप्तिर्निर्मूलयन्मनसि मे निबिडं तमिस्रम् ॥ १६
मुग्धस्मितामृतशुभेन मुखेन्दुना ते संगम्य संसरणसंज्वरशान्तये नः ।
संपद्यते विबुधनाथ समाधियोग्या शर्वर्यसौ कुटिलकुन्तलकान्तिरूपा ॥ १७
बिम्बाधरं विकचपङ्कजलोचनं ते लम्बालकं ललितकुण्डलदर्शनीयम् ।
कान्तं मुखं कनककैतककर्णपूरं स्वान्तं विभूषयति देवपते मदीयम् ॥ १८
लब्धा तिथौ क्वचिदियं रजनीकरेण लक्ष्मीः स्थिरा सुरपते भवतो ललाटे ।
यत्स्वेदबिन्दुकणिकोद्गतबुद्बुदान्तस्त्र्यक्षः पुरा(स)णपुरुषोऽजनि शूलपाणिः ॥ १९
लावण्यवर्षिणि ललाटतटे घनाभे बिभ्रत्तटिद्गुणविशेषमिवोर्ध्वपुण्ड्रम् ।
विश्वस्य निर्जरपते तमसाऽऽवृतस्य मन्ये विभावयसि माङ्गलिकप्रदीपम् ॥ २०
आहुः श्रुतिं विबुधनायक तावकीनामाशागणप्रसवहेतुमधीतवेदाः ।
आकर्णिते तदियमार्तरवे प्रजानामाशाः प्रसाधयितुमादिशति स्वयं त्वाम् ॥ २१
कन्दर्पलाञ्छनतनुत्रिदशैकनाथ कान्तिप्रवाहरुचिरे तव कर्णपाशे ।
पुष्यत्यसौ प्रतिमुखस्थितिदर्शनीया भूषामयी मकरिका विविधान्विहारान् ॥ २२
नेतुं सरोजवसतिर्निजमाधिराज्यं नित्यं निशामयति देवपते भ्रुवौ ते ।
एवं न चेदखिलजन्तुविमोहनार्हा किं मातृका भवति कामशरासनस्य ॥ २३
आलक्ष्यसत्त्वमतिवेलदयोत्तरङ्गमभ्यर्थिनामभिमतप्रतिपादनार्हम् ।
स्निग्धायतं प्रथिमशालि सुपर्वनाथ दुग्धाम्बुधेरनुकरोति विलोचनं ते ॥ २४
विश्वाभिरक्षणविहारकृतक्षणैस्ते वैमानिकाधिप विडम्बितमुग्धपद्मैः ।
आमोदवाहिभिरनामयवाक्यगर्भैरार्द्रीभवाम्यमृतवर्षनिभैरपाङ्गैः ॥ २५
नित्योदितैर्निगमनिःश्वसितैस्तवैषा नासा नभश्चरपते नयनाब्धिसेतुः ।
आम्रेडितप्रियतमामुखपद्मगन्धैराश्वासिनी भवति संप्रति मुह्यतो मे ॥ २६
आरुण्यपल्लवितयौवनपारिजातमाभीरयोषिदनुभूतममर्त्यनाथ ।
वंशेन शङ्खपतिना च निषेवितं ते बिम्बाधरं स्पृशति रागवती मतिर्मे ॥ २७

पद्मालयावलयदत्तसुजातरेखे त्वत्कान्तिमेचकितशङ्खनिभे मतिर्मे ।
विस्मेरभावरुचिरा वनमालिकेव कण्ठे गुणीभवति देवपते त्वदीये ॥ २८
आजानुलम्बिभिरलंकृतहेतिजालैर्ज्याघातराजिरुचिरैर्जितपारिजातैः ।
चित्राङ्गदैस्त्रिदशपुङ्गव जातसङ्गा त्वद्बाहुभिर्मम दृढं परिरभ्यते धीः ॥ २९
नीलाचलोदितनिशाकरभास्कराभे शान्ताहिते सुरपते तव शङ्खचक्रे ।
पाणेरमुष्य भजतामभयप्रदस्य प्रत्यायनं जगति भावयतः स्वभूम्ना ॥ ३०
अक्षोभणीयकरुणाम्बुधिविद्रुमाभं भक्तानुरञ्जनममर्त्यपते त्वदीयम् ।
नित्यापराधचकिते हृदये मदीये दत्ताभयं स्फुरति दक्षिणपाणिपद्मम् ॥ ३१
दुर्दान्तदैत्यविशिखक्षतपत्रभङ्गं वीरस्य ते विबुधनायक बाहुमध्यम् ।
श्रीवत्सकौस्तुभरमावनमालिकाङ्कं चिन्ताऽनुभूय लभते चरितार्थतां नः ॥ ३२
वर्णक्रमेण विबुधेश विचित्रिताङ्गी स्मेरप्रसूनसुभगा वनमालिकेयम् ।
हृद्या सुगन्धिरजहत्कमलामणीन्द्रा नित्या तव स्फुरति मूर्तिरिव द्वितीया ॥ ३३
आर्द्रं तमोमथनमाश्रिततारकं ते शुद्धं मनः सुमनसाममृतं दुहानम् ।
तत्तादृशं विबुधनाथ समृद्धकामं सर्गेष्विदं भवति चन्द्रमसां प्रसूतिः ॥ ३४
विश्वं निगीर्य विबुधेश्वर जातकार्श्यं मध्यं वलित्रयविभाव्यजगद्विभागम् ।
आमोदिनाभिनलिनस्थविरिञ्चिभृङ्गमाकल्पयत्युदरबन्ध इवाशयो मे ॥ ३५
नाकौकसां प्रथमतामधिकुर्वते ते नाभीसरोजरजसां परिणामभेदाः ।
आराधयद्भिरिह तैर्भवतः समीची वीरोचिता विबुधनायक इत्यभिख्या ॥ ३६
पीताम्बरेण परिवारवती सुजाता दास्ये निवेशयति देवपते दृशौ मे ।
विन्यस्तसव्यकरसङ्गमजायमानरोमाञ्चरम्यकिरणा रशना त्वदीया ॥ ३७
स्त्रीरत्नकारणमुपात्ततृतीयवर्णं दैत्येन्द्रवीरशयनं दयितोपधानम् ।
देवेश यौवनगजेन्द्रकराभिराममूरीकरोति भवदूरुयुगं मनो मे ॥ ३८
लावण्यपूरललितोर्ध्वपरिभ्रमाभं लक्ष्मीविहारमणिदर्पणबद्धसख्यम् ।
गोपाङ्गणेषु कृतचङ्क्रमणं तवैतज्जानुद्वयं सुरपते न जहाति चित्तम् ॥ ३९
दूत्ये दुकूलहरणे व्रजसुन्दरीणां दैत्यानुधावनविधावपि लब्धसाह्यम् ।
कन्दर्पकाहलनिषङ्गकलाचिकाभं जङ्घायुगं जयति देवपते त्वदीयम् ॥ ४०
पाषाणनिर्मिततपोधनधर्मदारं भस्मन्युपाहितनरेन्द्रकुमारभावम् ।
संवाहितं त्रिदशनाथ रमामहीभ्यां सामान्यदैवतमुशन्ति पदं त्वदीयम् ॥ ४१
आवर्जिताभिरनुषज्य निजांशुजालैर्देवेश दिव्यपदपद्मदलायताभिः ।
अन्याभिलाषपरिलोलमिदं मदीयमङ्गीकृतं हृदयमङ्गुलिभिः स्वयं ते ॥ ४२

पङ्कान्यसौ मम निहन्ति महस्तरङ्गैर्गङ्गाधिकां विदधती गरुडस्रवन्तीम् ।
नाकौकसां मणिकिरीटगणैरुपास्या नाथ त्वदीयपदयोर्नखरत्नपङ्क्तिः ॥ ४३
वज्रध्वजाङ्कुशसुधाकलशातपत्रकल्पद्रुमाम्बुरुहतोरणशङ्खचक्रैः ।
मत्स्यादिभिश्च विबुधेश्वर मण्डितं ते मान्यं पदं भवतु मौलिविभूषणं नः ॥ ४४
चित्रं त्वदीयपदपद्मपरागयोगाद्योगं विनाऽपि युगपद्विलयं प्रयान्ति ।
विष्वञ्चि निर्जरपते शिरसि प्रजानां वेधःस्वहस्तलिखितानि दुरक्षराणि ॥ ४५
ये जन्मकोटिभिरुपार्जितशुद्धधर्मास्तेषां भवच्चरणभक्तिरनन्यभोग्या ।
त्वज्जीवितैस्त्रिदशनायक दुर्लभैस्तैरात्मानमप्यकथयः स्वयमात्मवन्तम् ॥ ४६
निष्किंचनत्वधनिना विबुधेश येन न्यस्तः स्वरक्षणभरस्तव पादपद्मे ।
नानाविधप्रथितयोगविशेषधन्या नार्हन्ति तस्य शतकोटितमांशकक्ष्याम् ॥ ४७
आत्मापहाररसिकेन मयैव दत्तमन्यैरधार्यमधुना विबुधैकनाथ ।
स्वीकृत्य धारयितुमर्हसि मां स्वकीयं चोरोपनीतनिजनूपुरवत्स्वपादे ॥ ४८
अज्ञानवारिधिमपायधुरंधरं मामाज्ञाविभञ्जनमकिञ्चनसार्वभौमम् ।
विन्दन्भवान्विबुधनाथ समस्तवेदी किं नाम पात्रमपरं मनुते कृपायाः ॥ ४९
प्रह्लादगोकुलगजेन्द्रपरिक्षिदाद्यास्त्रातास्त्वया ननु विपत्तिषु तादृशीषु ।
सर्वं तदेकमपरं मम रक्षणं ते संतोल्यतां त्रिदशनायक किं गरीयः ॥ ५०
वात्याशतैर्विषयरागतया विवृत्तैर्व्याघूर्णमानमनसं विबुधाधिराज ।
नित्योपतप्त इति मां निजकर्मघर्मैर्निर्वेशय स्वपदपद्ममधुप्रवाहम् ॥ ५१
जय विबुधपते त्वं दर्शिताभीष्टदानः सह सरसिजवासामेदिनीभ्यां वशाभ्याम् ।
नलवनमिव मृद्नन्पापराशिं नतानां गरुडसरिदनूपे गन्धहस्तीव दीव्यन् ॥ ५२
निरवधिगुणजातं नित्यनिर्दोषमाद्यं नरकमथनदक्षं नाकिनामेकनाथम् ।
विनतविषयसत्यं वेङ्कटेशः कविस्त्वां स्तुतिपदमधिगच्छञ्छोभते सत्यवादी ॥ ५३

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु देवनायकपञ्चाशत् समाप्ता ॥ १५ ॥**

---

# ॥ अच्चुअसअअम् - अच्युतशतकम् ॥ १६ ॥

**[सिरिवेङ्कडणाहज्जो कइतक्किअसीहसव्वतन्तसतन्तो । वेअन्तारिअवज्जो मइ सण्णिहेउ सइ सअं हिअअम्मि ॥]**
**श्रीवेङ्कटनाथार्यः कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रः । वेदान्ताचार्यवर्यो मम संनिधत्तां सदा स्वयं हृदये ॥**

णमह तिअसाण णाहं सच्चं दासाण अच्चुअं ठिरजोइम् । गलुलणइतडतमालं अहिन्दणअरोसहाअलेक्कगइन्दम् ॥ १
नमत त्रिदशानां नाथं सत्यं दासानामच्युतं स्थिरज्योतिः । गरुडनदीतटतमालमहीन्द्रनगरौषधाचलैकगजेन्द्रम् ॥ १

किङ्करसच्च थुई तुह सअंभुगेहिणिविलासवाहित्तमई । फणिआ बालेण मए पञ्जरसुअजप्पिअं व कुणउ पसाअम् ॥ २
किङ्करसत्य स्तुतिस्तव स्वयंभूगेहिनीविलासव्याहृतिमयी । फणिता बालेन मया पञ्जरशुकजल्पितमिव करोतु प्रसादम् ॥

मइणं वि भासिअं मह किंकरसच्च तुह कित्तिजोण्हापसरे । लग्गं लहउ विसुद्धिं रच्छासलिलं व तिवहआसोत्तगअम् ॥
मलिनमपि भाषितं मम किङ्करसत्य तव कीर्तिज्योत्स्नाप्रसरे । लग्नं लभतां विशुद्धिं रथ्यासलिलमिव त्रिपथगास्रोतोगतम् ॥

तत्थरिणएण ठविआ सोहउ तिअसाण णाह तुज्झ समाए । वन्दित्तणमहिआणं मज्झम्मि सुईण बालिसा मज्झ थुई ॥
त्रस्तरीनयेन स्थापिता शोभतां त्रिदशानां नाथ तव समाजे । वन्दित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः ॥४

अम्हगुरूणं अच्चुअ जीहासीहासणम्मि लद्धपइट्ठो । पडिवाइअपरमट्ठो वारेसि अपण्डिअत्तणं अम्हाणम् ॥　　५
अस्मद्गुरूणामच्युत जिह्वासिंहासने लब्धप्रतिष्ठः । प्रतिपादितपरमार्थो वारयस्यपण्डितत्वमस्माकम् ॥　　५

हिअएसु देसिआणं जण्हविलहरीसु पुण्णचन्दो व्व फुडो । कलुसजलेसु व हंसो कसाअकब्बुरेसु ठासि अच्चुअ ण खणम् ॥
हृदयेषु देशिकानां जाह्नवीलहरीषु पूर्णचन्द्र इव स्फुटः । कलुषजलेष्विव हंसः कषायकर्बुरेषु तिष्ठस्यच्युत न क्षणम् ॥६

आअममेत्तपमाणो आगोविअणं पआसणिअमाहप्पो । सद्दहिअहिअअसुलहो दूरं मुअसि णअसच्च डोलाअन्ते ॥　　७
आगममात्रप्रमाणः आगोपीजनं प्रकाशनिजमाहात्म्यः । श्रद्दधद्धृदयसुलभो दूरं मुञ्चसि नतसत्य दोलायमानान् ॥　　७

संखविअसअलहेअं सरणागअसच्च सच्चणाणाणन्दम् । उल्लङ्घिअतिविहन्तं उवणिसआणं सआइ गाअन्ति तुमम् ॥　८
संक्षपितसकलहेयं शरणागतसत्य सत्यज्ञानानन्दम् । उल्लङ्घितत्रिविधान्तमुपनिषदां शतानि गायन्ति त्वाम् ॥　　८

कुणसि ण कीरसि केण वि ठवेसि ण संठविज्जसि अणण्णठिओ।हरसि णिहिलं ण हीरसि अहिन्दणअरिन्द अणहजोइफुरन्तो
करोषि न क्रियसे केनापि स्थापयसि न संस्थाप्यसेऽनन्यस्थितः । हरसि निखिलं न ह्रियसे अहीन्द्रनगेरेन्द्रानघज्योतिस्स्फुरन्॥

अणुपमिअस्स वि अच्चुअ सत्ती तुह सअलधारणाइवहुत्ता । तेण पडिवत्थुपुण्णो सुव्वसि अपडिहअणिअठिई सव्वगओ ॥
अणुप्रमितस्याप्यच्युत शक्तिस्तव सकलधारणादिप्रभूता । तेन प्रतिवस्तुपूर्णः श्रूयसेऽप्रतिहतनिजस्थितिः सर्वगतः ॥ १०

सअलाण धरणणिअमणसामित्तणणिअमसंठिओ सव्वतणू । सुव्वसि अच्चुअ सव्वो सइ दंसिअकज्जकारणत्तणकबुरो ॥
सकलानां धरणनियमनस्वामित्वनियमसंस्थितः सर्वतनुः । श्रूयसेऽच्युत सर्वः सदा दर्शितकार्यकारणत्वकर्बुरः ॥　　११

पुरिसपहाणसरीरो भुवणाणं होसि अच्चुअ उवाआणम् । णिअसंकप्पसणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ॥
पुरुषप्रधानशरीरो भुवनानां भवस्यच्युतोपादानम् । निजसंकल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ॥　　१२

विसमगुणङ्कुरपअरे जलं व सामण्णकारणं तुह केली । णिअकम्मसत्तिणिअआ अच्चुअ बम्हाइठावरन्तविसेसा ॥ १३
विषयगुणाङ्कुरप्रकरे जलमिव सामान्यकारणं तव केलिः । निजकर्मशक्तिनियता अच्युत ब्रह्मादिस्थावरान्तविशेषाः ॥१३

पुरिसा तुज्झ विहूई अच्चुअ लच्छीअ इत्थिआसण्णाओ । णत्थि परं तुज्झाणं सा वि सिरी होइ तुज्झ किं उण इअरम् ॥
पुरुषास्तव विभूतिरच्युत लक्ष्म्याः स्त्रीसंज्ञाः । नास्ति परं युवयोः साऽपि श्रीर्भवति तव किं पुनरितरत् ॥　　१४

ण हु तुह सरिसब्भहिआ णाह तुमं एव्व सव्वलोअसरण्णो । एआव णाणसारं इअ मुणिउं तिअसणाह इअरविइन्ता॥ १५
न खलु तव सदृशाभ्यधिका नाथ त्वमेव सर्वलोकशरण्यः । एतावज्ज्ञानसारमिति ज्ञातुं त्रिदशनाथेतरविचिन्ता ॥ १५

भाइ फणिन्दउराहिव पडिवालन्तेसु पाअडवहुत्तफला । अवि दुहिणप्पमुहेहिं आणत्तो तुह अलङ्घणिज्जपहावा ॥ १६
भाति फणीन्द्रपुराधिप प्रतिपालयत्सु प्रकटप्रभूतफला । अपि द्रुहिणप्रमुखैराज्ञप्तिस्तवालङ्घनीयप्रभावा ॥ १६

णिअमविहीण पउत्ती सव्वाण वि दाससच्च उद्दिसिअ तुमम् । सद्धणिमन्तिअवम्हणसमाहिसिद्धं लहन्ति तिअसा मुत्तिम् ॥
नियमविधीनां प्रवृत्तिः सर्वेषामपि दाससत्योद्दिश्य त्वाम् । श्राद्धनिमन्त्रितब्राह्मणसमाधिसिद्धां लभन्ते त्रिदशा मुक्तिम्॥ १७

आरज्झतिअसविलए अच्चुअ णिच्चं ण ठासि जइ णाम तुमम् । कम्माण कप्पिआणं काही कप्पन्तरेसु को णिव्वेसम् ॥
आराध्यत्रिदशविलयेऽच्युत नित्यं न तिष्ठसि यदि नाम त्वम् । कर्मणां कल्पितानां करिष्यति कल्पान्तरेषु को निर्वेशम् ॥

कप्पेसि कंखिआइं कप्पदुमो व्व सिरिकञ्चणलआसहिओ । णअसच्चसइफलाइं णिअछाहिणिवुण्णणिच्चतावतिहुवणो॥ १९
कल्पयसि काङ्क्षितानि कल्पद्रुम इव श्रीकाञ्चनलतासहितः । नतसत्य सदाफलानि निजच्छायाविश्रान्तनित्यतापत्रिभुवनः॥

सअलाअमाण णिट्ठा सअलसुराणं वि अन्तरो अप्पाणो । सअलफलाण पसूई सअलजणाणं समो खु णअसच्च तुमम् ॥
सकलागमानां निष्ठा सकलसुराणामप्यन्तर आत्मा । सकलफलानां प्रसूतिः सकलजनानां समः खलु नतसत्य त्वम् ॥२०

इअ सव्वाण समाणो सच्चठिओ दाससच्च सइ परिपुण्णो । कह वहसि पक्खवाअं पण्डवपमुहेसु पेसणं वि सहन्तो ॥ २१
इति सर्वेषां समानः सत्यस्थितो दाससत्य सदा परिपूर्णः । कथं वहसि पक्षपातं पाण्डवप्रमुखेषु प्रेषणमपि सहमानः ॥ २१

विसमम्मि कम्ममग्गे विपरिक्खलन्ताण विहलिअकरणाणम् । णाह णिहिलाण अण्णो णत्थि तुमाहि णअसच्च हत्थालम्बो ॥
विषमे कर्ममार्गे विपरिस्खलतां विह्वलितकरणानाम् । नाथ निखिलानामन्यो नास्ति त्वत्तोनतसत्य हस्तालम्बः ॥ २२

णाणस्स को अविसओ अच्चुअ कलणाइ तुज्झ को दूरठिओ।सत्तीअ को अइभरो ता खु उवाओ तुमं चिअ सअं सिद्धो ॥
ज्ञानस्य कोऽविषयोऽच्युत करुणायास्तव को दूरस्थितः । शक्तेः कोऽतिभरस्तस्मात्खलूपायस्त्वमेव स्वयं सिद्धः ॥ २३

संकप्पकण्णहारो किंकरसच्च भवसाअरे अइगहिरे । अणहो तुमं खु पोओ अप्पाण किवासमीरणेण प्रवट्टो ॥ २४
संकल्पकर्णधारः किङ्करसत्य भवसागरेऽतिगभीरे । अनघस्त्वं खलु पोत आत्मनां कृपासमीरणेन प्रवृत्तः ॥ २४

अच्चुअ ण देन्ति मोक्खं ईसरभावेण भाविआ इअरसुरा । रत्तिं परिवट्टेउं लक्खं आलेक्खदिणअराण वि ण खमम् ॥ २५
अच्युत न ददति मोक्षमीश्वरभावेन भाविता इतरसुराः । रात्रिं परिवर्तयितुं लक्षमालेख्यदिनकराणामपि न क्षमम् ॥२५

अमअरससाअरस्स व अहिन्दउरणाह णिम्मलमहग्घाइम् । तीरन्ति ण विगणेउं अणण्णसुलहाइ तुज्झ गुणरअणाइम् ॥
अमृतरससागरस्येवाहीन्द्रपुरनाथ निर्मलमहार्घाणि । तीर्यन्ते न विगणयितुमनन्यसुलभानि तव गुणरत्नानि ॥ २६

भूसिअसुइसीमन्तो भुअइन्दउरेस सव्वगुणसीमन्तो । खविअतिसामलमोहो मुणीण हिअएसु फुरसि सामलमोहो ॥ २७
भूषितश्रुतिसीमन्तो भुजगेन्द्रपुरेश सर्वगुणसीमान्तः । क्षपिततृषामलमोहो मुनीनां हृदयेषु स्फुरसि श्यामलमयूखः ॥ २७

सुहलक्खणसिरिवच्छो सोहसि णिम्मुत्तविरहलक्खणसिरिवच्छो । रणदेवणसविहगओ उद्धणगलुलणईतीरवणसविहगओ ॥
शुभलक्षणश्रीवत्सः शोभसे निर्मुक्तविरहक्षणश्रीवत्सः । रणदेवनसविभगतः उद्भटगरुडनदीतीरवनसविधगतः ॥ २८

अकुमारजोव्वणठिअं अहिन्दउरणाह अहिमअं अणुरूवम् । णिच्चं सहावसिद्धं सुव्वइ सूरिमहिअं सुहं तुह रूवम् ॥ २९
अकुमारयौवनस्थितमहीन्द्रपुरनाथाभिमतमनुरूपम् । नित्यं स्वभावसिद्धं श्रूयते सूरिमहितं सुखं तव रूपम् ॥ २९

तिउणं तस्स विआरा अच्चुअ पुरिसोत्ति आअमगणिज्जन्ता । अत्था तुह खु समत्था परम्मि रूवम्मि भूसणत्थसरूवा ॥
त्रिगुणं तस्य विकारा अच्युत पुरुष इत्यागमगण्यमानाः । अर्थास्तव खलु समस्ताः परस्मिन् रूपे भूषणास्त्रस्वरूपाः ॥

णिन्ति तुमाओ अच्चुअ णिक्खविअविवक्खणिट्ठुरपरक्कमणा । संठविअपरमधम्मा साहुपरित्ताणसप्फला ओआरा ॥ ३१
निर्यान्ति त्वत्तोऽच्युत निक्षपितविपक्षनिष्ठुरपराक्रमणाः । संस्थापितपरमधर्माः साधुपरित्राणसत्फला अवताराः ॥ ३१

हरिमणिसरिच्छणिअरुइहरिआअन्तभुअइन्दवुरपेरन्तो । काले दासजणाणं कण्ह घणो होसि दिण्णकालुण्णरसो ॥ ३२
हरिमणिसदृक्षनिजरुचिहरितायमानभुजगेन्द्रपुरपर्यन्तः । काले दासजनानां कृष्ण घनो भवसि दत्तकारुण्यरसः ॥ ३२

गलुलणइकच्छरण्णे लक्खिज्जसि लच्छिमहिकणेरुमणहरो । दीसन्तबहुलदाणो दिसागइन्दो व खुडिअदणुइन्ददुमो ॥
गरुडनदीकच्छारण्ये लक्ष्यसे लक्ष्मीमहीकरेणुमनोहरः । दृश्यमानबहुलदानो दिशागजेन्द्र इव खण्डितदनुजेन्द्रद्रुमः ॥ ३३

मुहचन्दमोलिदिणअरमज्झठिओ तुज्झ चिहुरभारन्धारो । अघडिअघडणासत्तिं सच्चं ठावेइ दाससच्च समग्गम् ॥ ३४
मुखचन्द्रमौलिदिनकरमध्यस्थितस्तव चिकुरभारान्धकारः । अघटितघटनाशक्तिं सत्यं स्थापयति दाससत्य समग्राम् ॥ ३४

परिहसिअपुण्णअन्दं पउमसरिच्छप्पसण्णलोअणजुअलम् । संकप्पिअदुरिआइ वि सम्हरिअं हरइ दाससच्च तुह मुहम् ॥
परिहसितपूर्णचन्द्रं पद्मसदृक्षप्रसन्नलोचनयुगलम् । संकल्पितदुरितान्यपि संस्मृतं हरति दाससत्य तव मुखम् ॥ ३५

माहप्पं तुह महिअं मङ्गलिअं तुलसिकोत्थुहप्पमुहाणम् । अच्चुअ ठिरवणमालं वच्छं दावेइ लच्छिलक्खणसुहअम् ॥
माहात्म्यं तव महितं माङ्गलिकं तुलसीकौस्तुभप्रमुखाणाम् । अच्युत स्थिरवनमालं वत्सं दापयति लक्ष्मीलक्षणसुभगम् ॥

निव्विसइ णिच्चतावो देवअणो देवणाअअ विहिप्पमुहो । सीअलसन्तवहुत्तं छाहिं तुह विउलबाहुकप्पदुमाणम् ॥ ३७
निर्विशति नित्यतापो देवजनो देवनायक विधिप्रमुखः । शीतलशान्तप्रभूतां छायां तव विपुलबाहुकल्पद्रुमाणाम् ॥ ३७

संकप्पअन्दखोहिअतिउणोअहिविउलबुब्बुअप्पअरेहिम् । बम्हण्डेहि वि भरिअं किङ्करसच्च तुह कीस णु किसं उअरम् ॥
संकल्पचन्द्रक्षोभितत्रिगुणोदधिविपुलबुद्बुदप्रकरैः । ब्रह्माण्डैरपि भरितं किंकरसत्य तव कस्मान्नु कृशमुदरम् ॥ ३८

णाहिरुहं तुह णलिणं भुअईसरणअरणाह सोहइ सुहअम् । मज्झठिअबम्हभमरं वच्छासणलच्छिपाअवीढसरिच्छम् ॥ ३९
नाभिरुहं तव नलिनं भुजगेश्वरनगरनाथ शोभते सुभगम् । मध्यस्थितब्रह्मभ्रमरं वत्सासनलक्ष्मीपादपीठसदृक्षम् ॥ ३९

दिढपीडिअमहुकइढवसोणिअपडलपरिपाडलम्बरघडिआ । राअइ अच्चुअ मुहला रइणाहगइन्दसिंखला तुह रसणा ॥४०
दृढपीडितमधुकैटभशोणितपटलपरिपाटलाम्बरघटिता । राजत्यच्युत मुखरा रतिनाथगजेन्द्रशृङ्खला तव रशना ॥ ४०

दासाण सच्च दीसइ दाणववीराण दीहणिद्दासअणम् । तुह उअरट्ठिअतिहुवणपासाअक्खम्भसच्छअं ऊरुजुअम् ॥ ४१
दासानां सत्य दृश्यते दानववीरयोः दीर्घनिद्राशयनम् । तवोदरस्थितत्रिभुवनप्रसादस्तम्भसच्छायमूरुयुगम् ॥ ४१

जाणुमणिदप्पणेण अ जङ्घामरगअकलाइआए अ धणिआ । अच्चुअ ण मुअइ कन्ती लच्छी व सरोअलञ्छणे तुह चलणे ॥
जानुमणिदर्पणेन च जङ्घामरकतकलाचिकया च धन्या । अच्युत न मुञ्चति कान्तिर्लक्ष्मीरिव सरोजलाञ्छनौ तव चरणौ ॥

सुइसीमन्तपसूणं सोहइ णअसच्च तुज्झ सव्वसरण्णम् । कमणक्खणजणिअसुरणइपसमिअतेल्लोक्कपाअअं पअपउमम् ॥४३
श्रुतिसीमन्तप्रसूनं शोभते नतसत्य तव सर्वशरण्यम् । क्रमणक्षणजनितसुरनदीप्रशमितत्रैलोक्यपातकं पदपद्मम् ॥ ४३

इअ तिहुवणेक्कमूलं आसाएन्ति अणहा अमअसाउरसम् । ओसहिमहिहरपासे उइअं तुं ओसहं व दासरुआणम् ॥ ४४
इति त्रिभुवनैकमूलमास्वादयन्त्यनघा अमृतस्वादुरसम् । ओषधिमहीधरपार्श्वे उदितं त्वामौषधमिव दासरुजाम् ॥ ४४

सिद्धञ्जणं व सामं तुज्झ तणुं णिअविलोअणेसु णिहिन्ता । अच्चुअ लच्छिणिवासं णिच्चणिऊढं णिहिं व पेच्छन्ति तुमम् ॥
सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनयोर्निदधतः । अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव पश्यन्ति त्वाम् ॥

विहडिअणिबिडन्धारो घडन्तजोई तिलोअएक्कगहवई । दिट्ठिगओ जाण तुमं णमन्तसच्च ण हु ताण मोहतिआमा ॥ ४६
विघटितनिबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रहपतिः । दृष्टिगतो येषां त्वं नमत्सत्य न खलु तेषां मोहत्रियामा ॥४६

विसअरसम्मि सुवन्ता विआरजणणेहि अवि णहु विईरन्ता । जीवन्तमुक्कसरिसा अच्चुअ दीसन्ति पावणा तुह भत्ता ॥ ४७
विषयरसे स्वपन्तः विकारजननैरपि न खलु विक्रियमाणाः । जीवन्मुक्तसदृशा अच्युत दृश्यन्ते पावनास्तव भक्ताः ॥ ४७

गन्धव्वणअरसिविणअसारिच्छाणं सिरीण वणसरिआणम् । ण सुमरइ तुम्हगहिओ सरणागअसच्च सइमओ जीअगओ ॥
गन्धर्वनगरस्वप्नसदृक्षाणां श्रियां वनसरिताम् । न स्मरति त्वद्गृहीतः शरणागतसत्य सदामदो जीवगजः ॥ ४८

ण महेन्ति णाणवन्ता तरङ्गडिण्डीरबुब्बुअसरिच्छाइम् । विहिपमुहाण पआइं घणकन्दलिकन्दकअलिखम्भसमाइम् ॥
न महयन्ति ज्ञानवन्तस्तरङ्गडिण्डीरबुद्बुदसदृक्षाणि । विधिप्रमुखानां पदानि घनकन्दलीकन्दकदलीस्तम्भसमानि ॥ ४९

पुलइअसपरसहावा पुरिसा घेत्तूण सामिणो तुह सीलम् । णाह णअसच्च सघिणा ण मुअन्ति कहं वि सव्वजणसोहद्दम् ॥
दृष्टस्वपरस्वभावाः पुरुषा गृहीत्वा स्वामिनस्तव शीलम् । नाथ नतसत्य सघृणा न मुञ्चन्ति कथमपि सर्वजनसौहार्दम् ॥

माणमएसामच्छरडम्भासूआभआमरिसलोहमुहा । दीसन्ति ण मोहसुआ दोसा दासाण सच्च तुह भत्ताणम् ॥ ५१
मानमदेर्ष्यामत्सरदम्भासूयाभयामर्षलोभमुखाः । दृश्यन्ते न मोहसुता दोषा दासानां सत्य तव भक्तानाम् ॥ ५१

जाण मई इअरमुही कालो सअलो वि ताण कलिवित्थारो । जे तुह पअम्मि पवणा णत्थि कली णाअवइणअरवइ ताणम्॥
येषां मतिरितरमुखी कालः सकलोऽपि तेषां कलिविस्तारः । ये तव पदे प्रवणा नास्ति कलिर्नागपतिनगरपते तेषाम् ॥

अच्चासण्णविणासा अच्चुअ पेच्छन्ति तावए भत्तअणे । मोक्खरुईण सुमग्गे मूढा दिअहअरमण्डलम्मि व छिद्दम् ॥
अत्यासन्नविनाशा अच्युत पश्यन्ति तावके भक्तजने । मोक्षरुचीनां सुमार्गे मूढा दिवसकरमण्डल इव च्छिद्रम् ॥ ५३

णिखुडिअदुम्माणघणा णिम्मलगुणघडिअतारआपब्भारा । भासन्तभत्तिजोण्हा णअसच्च पुरन्ति णहणिहा तुह भत्ता ॥
निखण्डितदुर्मानघना निर्मलगुणघटिततारकाप्राग्भाराः । भासमानभक्तिज्योत्स्ना नतसत्य स्फुरन्ति नभोनिभास्तव भक्ताः ॥

णहु जमविसअम्मि गई णअसच्च पअम्बुअं तुह पवण्णाणम्।खलिआण वि जहजोग्गं सिक्खा सुद्धन्तकिंकराण व लहुई ॥
न खलु यमविषये गतिर्नतसत्य पदाम्बुजं तव प्रपन्नानाम् । स्खलितानामपि यथायोग्यं शिक्षा शुद्धान्तकिंकराणामिव लघ्वी ॥

कम्मगइदोसदुहिआ कअन्तभिउडीभुअङ्गिदंसणतत्था । अच्चन्ति तुज्झ चलणे अच्चुअ पब्भट्ठवम्महरसासाआ ॥ ५६
कर्मगतिदोषदुःखिताः कृतान्तभ्रुकुटीभुजंगीदर्शनत्रस्ताः । अर्चन्ति तव चरणावच्युत प्रभ्रष्टमन्मथरसास्वादाः ॥ ५६

आलग्गइ तुह चलणे अच्चुअ विहिणा वि अच्चणा आअरिआ । जा एक्कन्तिपउत्ता सेसं व सअं सिरेण पडिगेण्हसि तम् ॥
आलगति तव चरणेऽच्युत विधिनाऽप्यर्चनाऽऽचरिता । यैकान्तिप्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥५७

तुह मुहजोण्हादाविअमाणससिअन्तपवहसंणिहबाहे । अच्चुअ ण मुअसि भत्ते कलम्बगोलणिहकण्टअन्तणिअङ्गे॥ ५८
तव मुखज्योत्स्नाद्रावितमानसशशिकान्तप्रवाहसंनिभबाष्पान्। अच्चुत न मुञ्चसि भक्तान्कदम्बगोलनिभकण्टकण्टकन्निजाङ्गान्

सव्वेसु वि णिव्वेरा सरणागअसच्च गहिअसासअधम्मा । गअसङ्गा तुह भत्ता जन्ति तुमं एव्व दुलहं इअरेहिम् ॥ ५९
सर्वेष्वपि निर्वैराः शरणागतसत्य गृहीतशाश्वतधर्माः । गतसङ्गास्तव भक्ता यान्ति त्वामेव दुर्लभमितरैः ॥ ५९

अहिवइणअरिन्द तुमं आसण्णं वि गअणं व सइ दुग्गेज्झम् । विसएसु विलग्गन्ता तूरन्ता वि ण लहन्ति डोलन्तमणा॥
अहिपतिनगरीन्द्र त्वामासन्नमपि गगनमि सदा दुर्ग्राह्यम् । विषयेषु विलगन्तस्त्वरमाणा अपि न लभन्ते डोलायमानमनसः॥

भत्ता तावअसेवारसभरिआ सअलरक्खणूसुअरुइणा । करणाइ धरन्ति चिरं कङ्खिअमोक्खा वि अच्चुअ तुए ठविआ ॥
भक्तास्तावकसेवारसभरिताः सकलरक्षणोत्सुकरुचिना । करणानि धरन्ति चिरं काङ्क्षितमोक्षा अप्यच्युत त्वया स्थापिताः॥

ठिरगुणगिरिजणिएहिं संतारेसि णअसच्च णिअभत्तेहिम् । जम्मपरिवाडिजलहिं जङ्गमठिरसेउदंसणिज्जेहि जणे ॥ ६२
स्थिरगुणगिरिजनितैः संतारयसि नतसत्य निजभक्तैः । जन्मपरिपाटीजलधिं जङ्गमस्थिरसेतुदर्शनीयैर्जनान् ॥ ६२

पसमिअभवन्तरभआ पत्तं पत्तं हिअं ति परिपेक्खन्ता । भावेन्ति तुज्झ भत्ता पिआइहिं व णअसच्च पच्छिमदिअहम् ॥
प्रशमितभवान्तरभयाः प्राप्तंप्राप्तं हितमिति परिपश्यन्तः । भावयन्ति तव भक्ताः प्रियातिथिमिव नतसत्य पश्चिमदिवसम् ॥

पअडतिमिरम्मि भुवणे पत्तपडिट्ठविअपरमणाणपईवा । णिज्जन्ति अच्चुअ तुए णिअं पअं सइ सअंपहं कअकज्जा ॥ ६४
प्रकटतिमिरे भुवने पात्रप्रतिष्ठापितपरमज्ञानप्रदीपाः । नीयन्तेऽच्युत त्वया निजं पदं सदा स्वयंप्रभं कृतकार्याः ॥ ६४

दिढतिव्वभत्तिणअणा परिपेच्छन्ता अहिन्दउरणाह तुमम् । पत्ता तुह साउज्जं पन्तिं पूरेन्ति पण्णइन्दमुहाणम् ॥ ६५
दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्रपुरनाथ त्वाम् । प्राप्तास्तव सायुज्यं पङ्क्तिं पूरयन्ति पन्नगेन्द्रमुखानाम् ॥ ६५

संणअसुलहं अच्चुअ समाहिसोवाणकमविलम्बविमुहिआ । सरणं गन्तूण तुमं मुत्ता मुउउन्दखत्तबन्धुप्पमुहा ॥ ६६
संनतसुलभमच्युत समाधिसोपानक्रमविलम्बविमुखिताः । शरणं गत्वा त्वां मुक्ता मुचुकुन्दक्षत्रबन्धुप्रमुखाः ॥ ६६

देवाण पसुसमाणो जन्तू गन्तूण देवणाह तुह पअम् । तेहिं चिअ सव्वेहिं संसरमाणेहि होइ सइ दिण्णबली ॥ ६७
देवानां पशुसमानो जन्तुर्गत्वा देवनाथ तव पदम् । तैरेव सर्वैः संसरद्भिर्भवति सदा दत्तबलिः ॥ ६७

मोहन्धारमहण्णवमुच्छिअमाआमहारअणिपच्चूहो । अच्चुअ तुज्झ कडक्खो विमुत्तिपत्थाणपुढमपरिअरबन्धो ॥ ६८
मोहान्धकारमहार्णवमूर्च्छितमायामहारजनीप्रत्यूषः । अच्युत तव कटाक्षो विमुक्तिप्रस्थानप्रथमपरिकरबन्धः ॥ ६८

मोक्खसुहरुक्खमूलं मोहजराउरमहारसाअणपवरम् । सअलकुसलेक्कखेत्तं किंकरसच्च तुह कित्तणं अमअणिहम् ॥ ६९
मोक्षसुखवृक्षमूलं मोहजरातुरमहारसायनप्रवरम् । सकलकुशलैकक्षेत्रं किंकरसत्य तव कीर्तनममृतनिभम् ॥ ६९

णत्थि अहिक्कमणासो विच्छेअम्मि वि ण पच्चवाअपसङ्गो । सप्पा वि तुह सपज्जा रक्खइ अच्चुअ महत्तरादु भआदो॥
नास्त्यभिक्रमनाशो विच्छेदेऽपि न प्रत्यवायप्रसङ्गः । स्वल्पाऽपि तव सपर्या रक्षत्यच्युत महत्तराद्भयात् ॥ ७०

अपसाए अपसण्णा तुज्झ पसाअम्मि दाससच्च पसण्णा । आरज्झा होन्ति परे किं तेहि पसङ्गलम्भिअपहावेहिम् ॥ ७१
अपसादे अप्रसन्नास्तव प्रसादे दाससत्य प्रसन्नाः । आराध्या भवन्ति परे किं तैः प्रसङ्गलम्भितप्रभावैः ॥ ७१

इअरतिअसा पसण्णा किंकरसच्च मह किं णु काहेन्ति हिअम् । णीहारघणसएहिं णहु पूरिज्जइ कहं वि चाअअतिण्हा ॥
इतरत्रिदशाः प्रसन्नाः किंकरसत्य मम किं नु करिष्यन्ति हितम् । नीहारघनशतैर्न खलु पूर्यते कथमपि चातकतृष्णा ॥
अणुगअसुहमिअतिण्हा अच्चुअ वीसमइ तुज्झ मामअतिण्हा । पवहेसु पसरिआए आसिअपवहन्तघणकिवासरिआए ॥
अनुगतसुखमृगतृष्णा अच्युत विश्राम्यति तव मामकतृष्णा । प्रवाहेषु प्रसृतायाः आश्रितप्रवहद्घनकृपासरितः ॥ ७३
विअलसअलङ्गविसमे धम्मे णअसच्च धअणिहे धारेन्तो । कन्तारपन्थओ विअ खलन्तचलणो म्हि काअरविइरन्तो ॥
विकलसकलाङ्गविषमान्धर्मान्नतसत्य ध्वजनिभान्धारयन् । कान्तारपान्थक इव स्खलच्चरणोऽस्मि कातरविदीर्यमाणः ॥ ७४
ठिरधम्मवम्मथइअं अधम्मपवणाण अग्गखन्धपवुत्तम् । अघडन्तविप्पडिसारं अच्चुअ मं हससि णूण लच्छिसमक्खम् ॥
स्थिरधर्मवर्मस्थगितमधर्मप्रवणानामग्रस्कन्धप्रवृत्तम् । अघटमानविप्रतीसारमच्युत मां हससि नूनं लक्ष्मीसमक्षम् ॥ ७५
तरिउं अच्चुअ दुरिअं इमम्मि देहम्मि एक्कदिअहे वि कअम् । कालो अलं ण सअलो कलुणाए तुज्झ पुण्णपत्तं होमो ॥
तरितुमच्युत दुरितमस्मिन्देह एकदिवसेऽपि कृतम् । कालोऽलं न सकलः करुणायास्तव पूर्णपात्रं भवामः ॥ ७६
अच्चुअ तुज्झ गुणाणं मह दोसाणं वि णत्थि कुत्थ वि गणणा । तह वि जओ पुढमाणं अहिअं लीणाण होइ णहु दुब्बलम्
अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापि गणना।तथापि जयः प्रथमानामधिकं लीनानां भवति न खलु दौर्बल्यम्॥
रत्तिं दिअहं अच्चुअ खुडिअपडन्ताइ आउदुमखण्डाइं । दठ्ठूण वि दरिअमणं बालं एण्हिं वि भरसु मं अपमत्तो ॥७८
रात्रिं दिवसमच्युत खण्डितपटायमानान्यायुर्द्रुमखण्डानि । दृष्ट्वाऽपि दृप्तमनसं बालमिदानीमपि भरस्व मामप्रमत्तः ॥७८
णीसाससंकणिज्जे देहे पडलन्तसलिलबिन्दुसरिच्छे । जाणसि णअसच्च तुमं जरन्तकरणे वि दीहजोव्वणतिण्हम् ॥७९
निश्वासशङ्कनीये देहे पटलान्तसलिलबिन्दुसदृक्षे । जानासि नतसत्य त्वं जरत्करणेऽपि दीर्घयौवनतृष्णाम् ॥ ७९
अमुणिअणिअकाअव्वं तिलग्गमुणिएसु मं वि पडिऊलगइम्। इअ णिअसहावविलिअं हाउं दासाण सच्च णहु तुह जुत्तम्॥
अज्ञातनिजकर्तव्यं तिलाग्रज्ञातेषु मामपि प्रतिकूलगतिम् । इति निजस्वभावव्रीडितं हातुं दासानां सत्य न खलु तव युक्तम् ॥
कोहं किं करणिज्जं परिहरणिज्जं वि किंति जाणसि सव्वम्।तोरसि अ तं हिअं मह तिअसेसर कुणसु णिअहिअअणिक्खित्तम्
कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम् । शक्नोषि च तद्धितं मम त्रिदशेश्वर कुरु निजहृदयनिक्षिप्तम् ॥
एण्हिं उवरिं वि इमो गुणगहिओ दारुपुत्तओ व परवसो । तस्स वि मह तिअसेसर तीसु वि करणेसु होसु सुहसंकप्पो॥
इदानीमुपर्यप्ययं गुणगृहीतो दारुपुत्रक इव परवशः । तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव सुखसंकल्पः ॥ ८२
णिअकम्मणिअलजुअलं अच्चुअ काऊण मह पिआपिअवग्गे । काहे घोरकलेवरकाराघरकुहरणिग्गअं काहिसि मम्॥८३
निजकर्मनिगलयुगलमच्युत कृत्वा मम प्रियाप्रियवर्गे । कदा घोरकलेवरकारागृहकुहरनिर्गतं करिष्यसि माम् ॥ ८३
हद्दे तुमम्मि कइआ वीसमिअं बम्हधमणिमग्गणिहिन्तम् ।दिणअरदिण्णग्गअरं अच्चुअ दच्छिहिसि दइअडिम्भं विअ मम् ॥
हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमनिमार्गेगमिष्यन्तम् । दिनकरदत्ताग्रकरमच्युत द्रक्ष्यसि दयितडिम्भमिव माम् ॥ ८४
काहे अमाणवन्ता अग्गिमुहा आइवाहिआ तुह पुरिसा । अइलङ्घिहिअन्ति मिमं अच्चुअ तमगहणतिउणमरुकन्तारम्॥८५
कदा अमानवान्ता अग्निमुखा आतिवाहिकास्तव पुरुषाः । अतिलङ्घयिष्यन्ति मामच्युत तमोगहनत्रिगुणमरुकान्तारम् ॥

लङ्घिअविरआसरिअं लम्भिअसइसुद्धसत्तमअसोम्मतणुम् । कअबम्हालंकारं काहिसि णअसच्च किंकरं काहे मम् ॥ ८६
लङ्घितविरजासरितं लम्भितसदाशुद्धसत्त्वमयसौम्यतनुम् । कृतब्रह्मालङ्कारं करिष्यसि नतसत्य किंकरं कदा माम् ॥ ८६

संसारसाअराओ उक्खित्तं तिअसणाह फुरिआलोअम् । काहे काहिसि हिअए कोत्थुहमणिदप्पणं व लच्छिपुलइअम् ॥
संसारसागरादुत्क्षिप्तं त्रिदशनाथ स्फुरितालोकम् । कदा करिष्यसि हृदये कौस्तुभमणिदर्पणमिव लक्ष्मीदृष्टम् ॥ ८७

काहे तुह पअपउमे होहिमि णअसच्च केलिकन्ततिहुवणे । मअणरिउमउडमण्डणसुरसरिआसोत्तसूइअमहुप्पवहे ॥ ८८
कदा तव पदपद्मे भविष्यामि नतसत्य केलिक्रान्तत्रिभुवने । मदनरिपुमकुटमण्डनसुरसरित्स्रोतस्सूचितमधुप्रवाहे ॥ ८८

उवणिसआसिरकुसुमं उत्तंसेऊण तुह पअम्बुअजुअलम् । दइओ होहिमि कइआ दासो दासाण सच्च सूरिसरिच्छो ॥
उपनिषच्छिरःकुसुममुत्तंसयित्वा तव पदाम्बुजयुगलम् । दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः॥ ८९

अउणोणिउत्तिजोग्गं ओआरविहारसहअरत्तणधणिअम् । अप्पसमभोअमेत्तं अणुहोहिसि देअणाह काहे णु ममम् ॥९०
अपुनर्निवृत्तियोग्यमवतारविहारसहचरत्वधन्यम् । आत्मसमभोगमात्रमनुभविष्यसि देवनाथ कदा नु माम् ॥ ९०

इअ फुडमणोरहं मं एआरिसवअणमेत्तसारं वसअम् । कुणसु णिअगुणगणेहिं सच्चं दासाण सच्च सइ सच्छन्दो ॥ ९१
इति स्फुटमनोरथं मामेतादृशवचनमात्रसारं वशगम् । कुरुष्व निजगुणगणैः सत्यं दासानां सत्य सदा स्वच्छन्दः ॥ ९१

बालपवओव्व तरलो मारुइजाइत्ति साअरं तरिउमणो । पत्थेमि तुमं अच्चुअ कङ्खिअपअपउम खमसु मह कावेअम् ॥ ९२
बालप्लवग इव तरलो मारुतिजातिरिति सागरं तरितुमनाः । प्रार्थये त्वामच्युत काङ्क्षितपदपद्म क्षमस्व मम कापेयम् ॥

अच्चुअ विसअक्कन्तं भवण्णवावट्टभमिणिउड्डिज्जन्तम् । जणणी थणंधअं विअ मं उद्धरिऊण सेवसु सअं पच्छम् ॥ ९३
अच्युत विषयाक्रान्तं भवार्णवावर्तभ्रमिमज्जन्तम् । जननी स्तनंधयमिव मामुद्धृत्य सेवस्व स्वयं पथ्यम् ॥ ९३

कम्ममअघम्मतविअं सुहमिअतिण्हाहि कारइअतिण्हाअम् । कारेसु णिव्वुअं मं करआसिसिरेहि अच्चुअ कडक्खेहिम् ॥
कर्ममयघर्मतापितं सुखमृगतृष्णाभिः कारिततृष्णाकम् । कारय निर्वृतं मां करकाशिशिरैरच्युत कटाक्षैः ॥ ९४

तुह चिन्तणविमुहाणं दिट्ठिविसाणं व दंसणाउ मुअन्तो । अमअमुहाणं विअ मं अच्चुअ भत्ताण णेसु णअणूसारम् ॥
तव चिन्तनविमुखानां दृष्टिविषाणामिव दर्शनान्मुञ्चन् । अमृतमुखानामिव मामच्युत भक्तानां नयस्व नयनासारम् ॥९५

विसमिलिअमहुणिहेसु अ तणपडिमेसु अपडिग्गहेसु पलुठिअम् ।अमअणिहिम्मिवअच्चुअठावेसुतुमम्मि णिम्ममं ममहिअअम्
विषमिलितमधुनिभेषु च तृणप्रतिमेषु च प्रतिग्रहेषु प्रलुठितम् । अमृतनिधाविवाच्युत स्थापय त्वयि निर्ममं मम हृदयम् ॥

णिच्चं इमम्मि किवणे णिक्खिवसु णमन्तसच्च णिहिसारिच्छे । पवहन्तणहपहाझरपसमिअपणमन्तसंजरे तुह चलणे ॥ ९७
नित्यमस्मिन्कृपणे निक्षिप नमत्सत्य निधिसदृक्षौ । प्रवहन्नखप्रभाझरप्रशमितप्रणमत्संज्वरौ तव चरणौ ॥ ९७

सरणागओत्ति जणिए जणवाए वि जइ अच्चुअ ण रक्खसि मम्।होज्ज खु साअरघोसो साअरपुलिणम्मि तारिसं तुह वअणम्
शरणागत इति जनिते जनवादेऽपि यद्यच्युत न रक्षसि माम् । भवेत्खलु सागरघोषः सागरपुलिने तादृशं तव वचनम् ॥

णिक्खित्तो म्हि अ अगई णिवुणेहि तुमम्मि णाह कारुणिएहिम् ।ते तुह दठ्ठूण पिए णिहुअं णअसच्च भरसु अप्पाण भरम्॥
निक्षिप्तोऽस्मि चागतिर्निपुणैस्त्वयि नाथ कारुणिकैः । तांस्तव दृष्ट्वा प्रियान् निभृतं नतसत्य भरस्वात्मनो भरम् ॥ ९९

णअसच्च पक्कणाणिअगलिअचिलाअभमणिअकुमारं व णिवो । होज्जन्तजोव्वणवहुं वरो व मं लहसु मन्तिअणविण्णविअम् ॥

नतसत्य पक्काणानीतगलितकिरातभ्रमनिजकुमारमिव नृपः । भविष्यद्यौवनवधूं वर इव मां लभस्व मन्त्रिजनविज्ञापितम् ॥

इअ कइतक्किअकेसरिवेअन्ताअरिअवेङ्कडेसविरइअम् । सुहअं अच्चुअसअअं सहिअअहिअएसु सोहउ समग्गगुणम् ॥

इति कवितार्किककेसरिवेदान्ताचार्यवेङ्कटेशविरचितम् । सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥ १०१

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु अच्चुअसअअम् - अच्युतशतकं समाप्तम् ॥ १६ ॥

---

# ॥ देहलीशस्तुतिः ॥ १७ ॥

विक्रम्य येन विजितानि जगन्ति भूम्ना विश्वस्य यं परमकारणमामनन्ति ।
विश्राणयन्प्रणयिनां विविधान्पुमर्थान् गोप्ता स मे भवतु गोपपुराधिराजः ॥ १

देहल्यधीश्वर तवेदृशमीश्वरत्वं शुश्रूषतां दिशति गद्गदिकानुबन्धम् ।
वाचालयस्यथ च मां क्वचन क्षपायां क्षान्तेन दान्तकविमुख्यविमर्दनेन ॥ २

त्वच्चक्रवद्द्रुतमनेहसि घूर्णमाने निम्नोन्नतक्रमनिदर्शितनेमिवृत्ताः ।
आराध्य गोपनगरे कृपयोदितं त्वां स्वाराज्यमग्र्यमलभन्त सुरासुरेन्द्राः ॥ ३

आकल्पपुष्पसुभगोन्नतबाहुशाखः पादे सदा परिपचेलिमसत्फलस्त्वम् ।
पण्णातटस्पृशि मृकण्डुतपोवनेऽस्मिन् छायानिलीनभुवनोऽसि तमालशाखी ॥ ४

चक्रस्य दैत्यदनुजादिषु वामभावं शङ्खस्य चाश्रितजनेष्वपि दक्षिणत्वम् ।
व्यक्तं प्रदर्शयसि गोपपुराधिराज व्यत्यस्य नूनमनयोः करसंप्रयोगम् ॥ ५

दीपेन केनचिदशीतरुचा निशीथे स्नेहोपपन्नपरिशुद्धगुणार्पितेन ।
दह्यावकाशनिबिडं ददृशुर्भवन्तं स्वाध्याययोगनयनाः शुचयः कवीन्द्राः ॥ ६

कासारपूर्वकविमुख्यविमर्दजन्मा पण्णातटेक्षुसुभगस्य रसो बहुस्ते ।
त्वत्पादपद्ममधुनि त्वदनन्यभोग्ये नूनं समाश्रयति नूतनशर्करात्वम् ॥ ७

वैरोचनेः सदसि वामनभूमिकावान् विक्रान्तिताण्डवरसेन विजृम्भमाणः ।
चक्रे भवान्मकरकुण्डलकर्णपाशः श्यामैकमेघभरितामिव सप्तलोकीम् ॥ ८

चित्रं न तत्त्रिषु मितानि पदेषु (य) धत्ते विश्वान्यमूनि भुवनानि विशङ्कटेषु ।
भक्तैः समं क्वचिदसौ भवनैकदेशे माति स्म मूर्तिरमिता तदिहाद्भुतं नः ॥ ९

भक्तप्रिय त्वयि तथा परिवर्धमाने मुक्तावितानविततिस्तव पूर्वमासीत् ।
हारावलिः परमथो रशनाकलापस्तारागणस्तदनु मौक्तिकनूपुरश्रीः ॥ १०

भिक्षोचितं प्रकटयन्प्रथमाश्रमत्वं कृष्णाजिनं यवनिकां कृतवान्प्रियायाः ।
व्यक्ताकृतेस्तव समीक्ष्य भुजान्तरे तां त्वामेव गोपनगरीश जना विदुस्त्वाम् ॥ ११

सत्कुर्वतां तव पदं चतुराननत्वं पादोदकं च शिरसा वहतां शिवत्वम् ।
एकत्र विक्रमणकर्मणि तद्द्वयं ते देहल्यधीश युगपत्प्रथितं पृथिव्याम् ॥ १२

भक्तोपरोधसह पादसरोजतस्ते मन्दाकिनी विगलिता मकरन्दधारा ।
सद्यस्त्रिवर्गमपवर्गमपि क्षरन्ती पुण्या बभूव पुरशासनमौलिमाला ॥ १३

विक्रान्तिकेतुपटिका पदवाहिनी ते न्यञ्चन्त्युपैति नतजीवित शिंशुमारम् ।
औत्तानपादिममृतांशुमशीतभानुं हेमाचलं पशुपतिं हिमवन्तमुर्वीम् ॥ १४

वेधःकमण्डलुजलैर्विहितार्चनं ते पादाम्बुजं प्रतिदिनं प्रतिपद्यमाना ।
स्तोत्रप्रिय त्रिपथगादिसरिद्वराणां पण्णा बभूव भुवने बहुमानपात्रम् ॥ १५

स्वच्छन्दविक्रमसमुन्नमितादमुष्मात्स्रोतस्त्रयं यदभवत्तव पादपद्मात् ।
वेतालभूतसरसामपदिश्य धाचं प्रायेण तत्प्रसवभूमिमवाप भूयः ॥ १६

क्रीडापरेण भवता विहितोपरोधानाराधकाननुपरोधमुदञ्चयिष्यन् ।
ताम्रेण पादनखरेण तदाऽण्डमध्ये घण्टापथं कमपि नूनमवर्तयस्त्वम् ॥ १७

कामाविलेऽपि करुणार्णवबिन्दुरेकः क्षिप्तः स्वकेलितरसा तव देहलीश ।
तत्संततेरुभयधा विततिं भजन्त्याः संसारदावदहनं शमयत्यशेषम् ॥ १८

नीडोदरान्निपतितस्य शुकार्भकस्य त्राणेन नाथ विहरन्निव सार्वभौमः ।
आदाय गोपनगराधिपते स्वयं मां क्रीडादयाव्यतिकरेण कृतार्थय त्वम् ॥ १९

लीलाशकुन्तमिव मां स्वपदोपलब्ध्यै स्वैरं क्षिपन्दुरितपञ्जरतो गुणस्थम् ।
तत्तादृशं कमपि गोपपुरीविहारिन् संतोषमुल्ललय सागरसंभवायाः ॥ २०

वातूलकल्पवृजिनप्रभवैर्मदीयां वैयाकुलीं विषयसिन्धुतरङ्गभङ्गैः ।
दासोपमर्दसह दुर्निरसां त्वदन्यैरन्वीक्ष्य गाढमनुकम्पितुमर्हसि त्वम् ॥ २१

एनस्विनीमिति सदा मयि जायमानां देहल्यधीश दृषदोऽपि विलापयन्तीम् ।
नाथे समग्रशकने त्वयि जागरूके किं ते सहेत करुणा करुणामवस्थाम् ॥ २२

आत्मोन्नतिं परनिकर्षमपीह वाञ्छन् निम्ने विमोहजलधौ निपतामि भूयः ।
तन्मामुदञ्चय तवोन्नतपादनिम्नं देहल्यधीश गुणितेन दयागुणेन ॥ २३

अक्षीणकल्मषरसोऽपि तवानृशंस्याल्लक्ष्मीसमक्षमपि विज्ञपयाम्यभीतः ।
भक्तोपमर्दरसिक स्वयमल्पबुद्धेर्यन्मन्यसे मम हितं तदुपाददीथाः ॥ २४

मन्ये दयार्द्रहृदयेन महाधनं मे दत्तं त्वयेदमनपायमकिंचनत्वम् ।
येन स्तनंधयमिव स्वहितानभिज्ञं न्यासीकरोषि निजपादसरोरुहे माम् ॥ २५

दुर्वारतीव्रदुरितप्रतिवावदूकैरौदार्यवद्भिरनघस्मितदर्शनीयैः ।
देहल्यधीश्वर दयाभरितैरपाङ्गैर्वाचं विनाऽपि वदसीव मयि प्रसादम् ॥ २६

अयमनवमसूक्तैरादिभक्तैर्यथावद्विशदितनिजतत्त्वो विश्वमव्यादभव्यात् ।
रथचरणनिरूढव्यञ्जनानां जनानां दुरितमथनलीलादोहली देहलीशः ॥ २७
इयमवितथवर्णा वर्णनीयस्वभावाद्विदितनिगमसीम्ना वेङ्कटेशेन गीता ।
भवमरुभुवि तृष्णालोभपर्याकुलानां दिशतु फलमभीष्टं देहलीशस्तुतिर्नः ॥ २८

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु देहलीशस्तुतिः समाप्ता ॥ १७ ॥

---

# ॥ न्यासतिलकम् ॥ १८ ॥

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे । वृणीमहे च तत्राद्यौ दंपती जगतां पती ॥ १
प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् । हस्तः श्रीरङ्गभर्तुर्मामव्यादभयमुद्रितः ॥ २
अनादेर्निःसीम्नो दुरितजलधेर्यन्निरुपमं विदुः प्रायश्चित्तं यदुरघुधुरीणाशयविदः ।
तदारम्भे तस्या गिरमवदधानेन मनसा प्रपद्ये तामेकां श्रियमखिलनाथस्य महिषीम् ॥ ३
महेन्द्राग्नाविष्णुप्रभृतिषु महत्त्वप्रभृतिवत्प्रपत्तव्ये तत्त्वे परिणमितवैशिष्ट्यविभवाम् ।
अधृष्यत्वं धृत्वा कमितुरभिगम्यत्वजननीं श्रियं शीतापाङ्गामहमशरणो यामि शरणम् ॥ ४
स्वतः सिद्धः श्रीमानमितगुणभूमा करुणया विधाय ब्रह्मादीन्वितरति निजादेशमपि यः ।
प्रपत्त्या साक्षाद्वा भजनशिरसा वाऽपि सुलभं मुमुक्षुर्देवेशं तमहमधिगच्छामि शरणम् ॥ ५
वृन्दानि यः स्ववशयन्व्रजसुन्दरीणां बृन्दावनान्तरभुवां सुलभो बभूव ।
श्रीमानशेषजनसंग्रहणाय शेते रङ्गे भुजङ्गशयने स महाभुजङ्गः ॥ ६
रङ्गास्तीर्णभुजङ्गपुंगववपुः पर्यङ्कवर्यं गतौ सर्गस्थित्यवसानकेलिरसिकौ तौ दंपती नः पती ।
नाभीपङ्कजशायिनः श्रुतिसुखैरन्योन्यबद्धस्मितौ डिम्भस्याम्बुजसंभवस्य वचनैरोंतत्सदित्यादिभिः ॥ ७
घनकरुणारसौघभरितां परितापहरां नयनमहश्छटां मयि तरङ्गय रङ्गपते ।
दुरितहुताशनस्फुरितदुर्दमदुःखमषीमलिनितविश्वसौधदुरपह्नववर्णसुधाम् ॥ ८
दुर्मोचोद्भटकर्मकोटिनिबिडोऽप्यादेशवश्यः कृतो बाह्यैर्नैव विमोहितोऽस्मि कुदृशां पक्षैर्न विक्षोभितः ।
यो माहानसिको महान्यतिपतेर्नीतश्च तत्पौत्रजानाचार्याननिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भरः ॥ ९
आर्तेष्वाशुफला तदन्यविषयेऽप्युच्छिन्नदेहान्तरा वह्न्यादेरनपेक्षणात्तनुभृतां सत्यादिवद्व्यापिनी ।
श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता त्वय्येव त्वदुपायधीरपिहितस्वोपायभावाऽस्तु मे ॥ १०
त्वय्याचार्यैर्विनिहितभरास्तावका रङ्गनाथ त्वत्कैङ्कर्यप्रवणमनसस्त्वद्गुणास्वादमत्ताः ।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत्साधनत्वं त्वच्छेषत्वस्वरसरसिकाः सूरयो मे स्वदन्ताम् ॥ ११
कल्पस्तोमेऽप्यपास्तत्वदितरगतयोऽशक्तिधीभक्तिभूम्ना रङ्गेश प्रातिकूल्यक्षरणपरिणमन्निर्विघातानुकूल्याः ।
त्रातारं त्वामभेद्याच्छरणवरणतो नाथ निर्विघ्नयन्तस्त्वन्निक्षिप्तात्मरक्षां प्रति रभसजुषः स्वप्रवृत्तिं त्यजन्ति ॥ १२

त्यक्तोपायव्यपायांस्तदुभयकरणे सत्रपान्सानुतापान् भूयोऽपि त्वत्प्रपत्त्या प्रशमितकलुषान्हन्त सर्वंसहस्त्वम् ।
रङ्गिन्नयासान्तरङ्गाखिलजनहिततागोचरत्वन्निदेशप्रीतिप्राप्तस्ववर्णाश्रमशुभचरितान्पासि धन्याननन्यान् ॥ १३
शोकास्पदांशमथनः श्रयतां भवाब्धौ रागास्पदांशसहजं न रुणत्सि दुःखम् ।
नो चेदमी जगति रङ्गधुरीण भूयः क्षोदिष्ठभोगरसिकास्तव न स्मरेयुः ॥ १४
हेतुर्वैधे विमर्शे भजनवदितरत्किंत्वनुष्ठानकाले वेद्यस्त्वद्रूपभेदो विविध इह स तूपायताऽन्यानपेक्षा ।
रङ्गिन्प्रारब्धभङ्गात्फलमधिकमनावृत्तिरुक्तेष्टिवत्स्यान्नानाशब्दादिभेदात्प्रपदनभजने सूचिते सूत्रकारैः ॥ १५
भक्तौ रङ्गपते यथा खलु पशुच्छागादिवद्वेदनध्यानोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम् ।
व्यक्त्यैक्याच्छरणागतिप्रपदनत्यागात्मनिक्षेपणन्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते ॥ १६
विश्वासायासभूम्ना न्यसनभजनयोर्गौरवे को विशेषस्तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद्विकल्पः ।
तद्भेदो रङ्गशायिन्ननितरगतितायुत्थशोकातिरेकात्सद्विद्यादौ विकल्पस्त्वभिमतिभिदया तेन तत्रैकराश्यम् ॥ १७
ध्रुवमधिकृतिभेदात्कर्मवद्रङ्गशायिन् फलति फलमनेकं त्वत्पदे भक्तिरेका ।
शरणवरणवाणी सर्वहेतुस्तथाऽसौ कृपणभजननिष्ठा बुद्धिदौर्बल्यकाष्ठा ॥ १८
कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं मया द्रागिति ।
विश्वासप्रतिबन्धि चिन्तनमिदं पर्यस्यति न्यस्यतां रङ्गाधीश रमापतित्वसुभगं नारायणत्वं तव ॥ १९
धीकर्मभक्तिरहितस्य कदाऽप्यशक्त्या रङ्गेश भावकलुषप्रणतिद्वयोक्तेः ।
मन्ये बलं प्रबलदुष्कृतशालिनो मे त्वन्मूलदेशिककटाक्षनिपातमाद्यम् ॥ २०
अन्धोऽनन्धग्रहणवशगो याति रङ्गेश यद्वत्पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुङ्क्ते भोगानविदितनृपः सेवकस्यार्भकादिस्त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः ॥ २१
उक्त्या धनञ्जयविभीषणलक्ष्यया ते प्रत्याय्य लक्ष्मणमुनेर्भवता वितीर्णम् ।
श्रुत्वा वरं तदनुबन्धमदावलिप्ते नित्यं प्रसीद भगवन्मयि रङ्गनाथ ॥ २२
सकृदपि विनतानां सर्वदे सर्वदेहिन्युपनिषदभिधेये भागधेये विधेये ।
विरमति न कदाचिन्मोहतो हा हतोऽहं विषमविषयचिन्तामेदुरा मे दुराशा ॥ २३
यावज्जीवं जगति नियतं देहयात्रा भवित्री त्यक्ताः सर्वे त्रिचतुरदिनग्लानभोगा नभोगाः ।
दत्ते रङ्गी निजमपि पदं देशिकादेशकाङ्क्षी किं ते चिन्ते परमभिमतं खिद्यसे यत्पुनस्त्वम् ॥ २४
अपि मुहुरपराधैरप्रकम्प्यानुकम्पे वहति महति योगक्षेमवृन्दं मुकुन्दे ।
मदकलुषमनीषावज्रलेपावलेपाननुगुणयितुमीहे न प्रभून्प्रभूतान् ॥ २५
मातर्भारति मुञ्च मानुषचटून्हे देह लब्धैरलं लुब्धद्वारदुरासिकापरिभवैस्तोषं जुषेथा मनः ।
वाचःसीमनि रङ्गधामनि महानन्दोन्नमद्भूमनि स्वामिन्यात्मनि वेङ्कटेश्वरकवेः स्वेनार्पितोऽयं भरः ॥ २६
दास्यं लास्यवताऽनुमत्य मनसा रङ्गेश्वर त्वत्पदे नित्यं किंकरवाण्यहं न तु पुनः कुर्यां कदर्याश्रयाम् ।
मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥ २७

त्वय्येकाञ्जलिकिंकरे तनुभृतां निर्व्याजसर्वंसहे कल्याणात्मनि रङ्गनाथ कमलाकान्ते मुकुन्दे स्थिते ।
स्वामिन्पाहि दयस्व देव कुशलिन्जीव प्रभो भावयेत्यालापानवलेपिषु प्रलपितुं जिह्नेति जिह्वा मम ॥ २८

त्वयि सति रङ्गधुर्ये शरणागतकामदुघे निरुपधिकप्रवाहकरुणापरिणाहवति ।
परिमितदेशकालफलदान्फलदाकृतिकान् कथमधिकुर्महे विधिशिवप्रमुखानमुकान् ॥ २९

ओमित्यभ्युपगम्य रङ्गनृपतेऽनन्योचितां शेषतां स्वातन्त्र्यादिमयीमपोह्य महतीमाद्यामविद्यास्थितिम् ।
नित्यासंख्यविसीमभूतिगुणयोर्यामनायासतः सेवासंपदमिन्दिरेश युवयोरैकान्तिकात्यन्तिकीम् ॥ ३०

आचार्याद्रङ्गधुर्ये द्वयसमधिगमे लब्धसत्ते तदात्वे विश्लिष्टाश्लिष्टपूर्वोत्तरदुरितभरं यापितारब्धदेहम् ।
नीतं त्वत्कैस्त्वया वा निरवधिकदयोद्भूतबोधादिरूपं त्वद्भोगैकस्वभावं दयितमनुचरं त्वत्कृते मां कुरुष्व ॥ ३१

विधानं रङ्गेशादधिगतवतो वेङ्कटकवेः स्फुरद्वर्णं वक्त्रे परिकलयतां न्यासतिलकम् ।
इहामुत्राऽप्येष प्रणतजनचिन्तामणिगिरिः सपर्यङ्के सेवां दिशति फणिपर्यङ्करसिकः ॥ ३२

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु न्यासतिलकं समाप्तम् ॥ १८ ॥**

---

# ॥ रघुवीरगद्यम् ॥ १९ ॥

जयत्याश्रितसंत्रासध्वान्तविध्वंसनोदयः । प्रभावान्सीतया देव्या परमव्योमभास्करः ॥

जय जय महावीर, महाधीरधौरेय, देवासुरसमरसमयसमुदितनिखिलनिर्जरनिर्धारितनिरवधिकमाहात्म्य, दशवदनदमितदैवतपरिषदभ्यर्थितदाशरथिभाव, दिनकरकुलकमलदिवाकर, दिविषदधिपतिरणसहचरणचतुरदशरथ-चरमऋणविमोचन, कोसलसुताकुमारभावकञ्चुकितकारणाकार, कौमारकेलिगोपायितकौशिकाध्वर, रणाध्वरधुर्यभव्य-दिव्यास्त्रबृन्दवन्दित, प्रणतजनविमतविमथनदुर्ललितदोर्ललित, तनुतरविशिखविताडनविघटितविशरारुशरारुताटकाताट-केय, जडकिरणशकलधरजटिलनटपतिमकुटतटनटनपटुविबुधसरिदतिबहुलमधुगलनललितपदनलिनरजउपमृदितनिज-वृजिनजहदुपलतनुरुचिरपरममुनिवरयुवतिनुत, कुशिकसुतकथितविदितनवविविधकथ, मैथिलनगरसुलोचनालोचनचकोर-चन्द्र, खण्डपरशुकोदण्डप्रकाण्डखण्डनशौण्डभुजदण्ड, चण्डकरकिरणमण्डलबोधितपुण्डरीकवनरुचिलुण्टाकलोचन, मोचितजनकहृदयशङ्कातङ्क, परिहृतनिखिलनरपतिवरणजनकदुहितृकुचतटविहरणसमुचितकरतल, शतकोटिशतगुण-कठिनपरशुधरमुनिवरकरधृतदुरवनमतमनिजधनुराकर्षणप्रकाशितपारमेष्ठ्य, क्रतुहरशिखरिकन्तुकविहृत्युन्मुखजगदरुन्तु-दजितहरिदन्तदन्तिदन्तदन्तुरोरोन्तदशवदनदमनकुशलदशशतभुजनृपतिकुलरुधिरझरभरभरितपृथुतरतटाकतर्पितपितृक-भृगुपतिसुगतिविहतिकरनतपरुडिषुपरिघ, अनृतभयमुषितहृदयपितृवचनपालनप्रतिज्ञावज्ञातयौवराज्य, निषादराजसौ-हृदसूचितसौशील्यसागर, भरद्वाजशासनपरिगृहीतविचित्रचित्रकूटगिरिकटकतटरम्यावसथ, अनन्यशासनीय, प्रणतभरत-मकुटतटसुघटितपादुकाग्र्याभिषेकनिर्वर्तितसर्वलोकयोगक्षेम, पिशितरुचिविहितदुरितवलमथनतनयबलिभुगनुगतिसरभस-शयनतृणशकलपरिपतनभयचकितसकलसुरमुनिवरबहुमतमहास्त्रसामर्थ्य, द्रुहिणहरवलमथनदुरालक्ष्यशरलक्ष्य, दण्डका-

तपोवनजङ्गमपारिजात, विराधहरिणशार्दूल, विलुलितबहुफलमखकलमरजनिचरमृगमृगयारम्भसंभृतचीरभृदनुरोध, त्रिशिरःशिरस्त्रितयतिमिरनिरासवासरकर, दूषणजलनिधिशोषणतोषितऋषिगणघोषितविजयघोषण, खरतरखरतरुखण्डनचण्डपवन, द्विःसप्तरक्षःसहस्रनलवनविलोलनमहाकलभ, असहायशूर, अनपायसाहस, महितमहामृधदर्शनमुदितमैथिलीदृढतरपरिरम्भणविभवविरोपितविकटवीरव्रण, मारीचमायामृगचर्मपरिकर्मितनिर्भरदर्भास्तरण, विक्रमयशोलाभविक्रीतजीवितगृध्रराजदेहदिधक्षालक्षितभक्तजनदाक्षिण्य, कल्पितविबुधभावकबन्धाभिनन्दित, अवन्ध्यमहिममुनिजनभजनमुषितहृदयकलुषशबरीमोक्षसाक्षिभूत, प्रभञ्जनतनयभावुकभाषितरञ्जितहृदय, तरणिसुतशरणागतिपरतन्त्रीकृतस्वातन्त्र्य, दृढघटितकैलासकोटिविकटदुन्दुभिकङ्कालकूटदूरविक्षेपदक्षदक्षिणेतरपादाङ्गुष्ठदरचलनविश्वस्तसुहृदाशय, अतिपृथुलबहुविटपिगिरिधरणिविवरयुगपदुदयविवृतचित्रपुङ्खवैचित्र्य, विपुलभुजशैलमूलनिबिडनिपीडितरावणरणरणकजनकचतुरुदधिविहरणचतुरकपिकुलपतिहृदयविशालशिलातलदारणदारुणशिलीमुख, अपारपारावारपरिखापरिवृतपरपुरपरिसृतदवदहनजवनपवनभवकपिवरपरिष्वङ्गभावितसर्वस्वदान, अहितसहोदररक्षःपरिग्रहविसंवादिविविधसचिवविप्रलम्भसमयसंरम्भसमुज्जृम्भितसर्वेश्वरभाव, सकृत्प्रपन्नजनसंरक्षणदीक्षितवीर, सत्यव्रत, प्रतिशयनभूमिकाभूषितपयोधिपुलिन, प्रलयशिखिपरुषविशिखशिखाशोषिताकूपारवारिपूर, प्रबलरिपुकलहकुतुकचटुलकपिकुलकरतलतुलितहृतगिरिनिकरसाधितसेतुपथसीमासीमन्तितसमुद्र, द्रुतगतितरुमृगवरूथिनीनिरुद्धलङ्कावरोधवेपथुलास्यलीलोपदेशदेशिकधनुर्ज्याघोष, गगनचरकनकगिरिगरिमधरनिगममयनिजगरुडगरुदनिललवगलितविषवदनशरकदन, अकृतचरवनचररणकरणवैलक्ष्यकूणिताक्षबहुविधरक्षोबलाध्यक्षवक्षःकवाटपाटनपटिमसाटोपकोपावलेप, कटुरटदटनिटङ्कृतिचटुलकठोरकार्मुकविनिर्गतविशङ्कटविशिखविताडनविघटितमकुटविह्वलविश्रवस्तनयविश्रमसमयविश्राणनविख्यातविक्रम, कुम्भकर्णकुलगिरिविदलनदम्भोलिभूतनिःशङ्ककङ्कपत्र, अभिचरणहुतवहपरिचरणविघटनसरभसपरिपतदपरिमितकपिबलजलधिलहरिकलकलरवकुपितमघवजिदभिहननकृदनुजसाक्षिकराक्षसद्वन्द्वयुद्ध, अप्रतिद्वन्द्वपौरुष, त्र्यम्बकसमधिकघोरास्त्राडम्बर, सारथिहृतरथसत्रपशात्रवसत्यापितप्रताप, शितशरकृतलवनदशमुखमुखदशकनिपतनपुनरुदयदरगलितजनितदरतरलहरिहयनयननलिनवनरुचिखचितनिपतितसुरतरुकुसुमविततिसुरभितरथपथ, अखिलजगदधिकभुजबलवरबलदशलपनलपनदशकलवनजनितकदनपरवशरजनिचरयुवतिविलपनवचनसमविषयनिगमशिखरनिकरमुखरमुखमुनिवरपरिपणित, अभिगतशतमखहुतवहपितृपतिनिर्ऋतिवरुणपवनधनदगिरिशमुखसुरपतिनुतिमुदित, अमितमतिविधिविदितकथितनिजविभवजलधिपृषतलव, विगतभयविबुधविबोधितवीरशयनशायितवानरपृतनौघ, स्वसमयविघटितसुघटितसहृदयसहधर्मचारिणीक, विभीषणवशंवदीकृतलङ्कैश्वर्य, निष्पन्नकृत्य, खपुष्पितरिपुपक्ष, पुष्पकरभसगतिगोष्पदीकृतगगनार्णव, प्रतिज्ञार्णवतरणकृतक्षणभरतमनोरथसंहितसिंहासनाधिरूढ, स्वामिन्, राघवसिंह, हाटकगिरिकटकलडहपादपीठनिकटतटपरिलुठितनिखिलनृपतिकिरीटकोटिविविधमणिगणकिरणनिकरनीराजितचरणराजीव, दिव्यभौमायोध्याधिदैवत, पितृवधकुपितपरशुधरमुनिविहितनृपहननकदनपूर्वकालप्रभवशतगुणप्रतिष्ठापितधार्मिकराजवंश, शुभचरितरतभरतखर्वितगर्वगन्धर्वयूथगीतविजयगाथाशत, शासितमधुसुतशत्रुघ्नसेवित, कुशलवपरिगृहीतकुलगाथाविशेष, विधिवशपरिणमदमरभणितिकविवररचितनिजचरितनिबन्धननिशमननिर्वृत, सर्वजनसंमानित, पुनरुपस्थापितविमानवरविश्राणनप्रीणितवैश्रवणविश्रावितयशःप्रपञ्च, पञ्चतापन्नमुनिकुमारसंजीवनामृत, त्रेतायुगप्रवर्तितकार्तयुगवृत्तान्त, अविकलबहुसुवर्णहयमखसहस्रनिर्वहणनिर्वर्तितनिजवर्णाश्रमधर्म, सर्वकर्मसमाराध्य, सनातनधर्म, साकेत-

जनपदजनिधनिकजङ्गमतदितरजन्तुजातदिव्यगतिदानदर्शितनित्यनिःसीमवैभव, भवतपनतापितभक्तजनभद्राराम, श्रीरामभद्र, नमस्ते पुनस्ते नमः ॥

चतुर्मुखेश्वरमुखैः पुत्रपौत्रादिशालिने । नमः सीतासमेताय रामाय गृहमेधिने ॥

कविकथकसिंहकथितं कठोरसुकुमारगुम्भगम्भीरम् । भवभयभेषजमेतत्पठत महावीरवैभवं सुधियः ॥

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु रघुवीरगद्यं समाप्तम् ॥ १९ ॥**

---

# ॥ भूस्तुतिः ॥ २० ॥

संकल्पकल्पलतिकामवधिं क्षमायाः (माया) स्वेच्छावराहमहिषीं सुलभानुकम्पाम् ।
विश्वस्य मातरमकिंचनकामधेनुं विश्वंभरामशरणः शरणं प्रपद्ये ॥ १

त्वं व्याहृतिः प्रथमतः प्रणवः प्रियं ते संवेदयत्यखिलमन्त्रगणस्तमेव ।
इत्थं प्रतीतविभवामितरेष्विदानीं स्तोतुं यथावदवने क इवार्हति त्वाम् ॥ २

नित्यं हिताहितविपर्ययबद्धभावे त्वद्वीक्षणैकविनिवर्त्यबहुव्यपाये ।
मुग्धाक्षरैरखिलधारिणि मोदमाना मातः स्तनंधयधियं मयि वर्तयेथाः ॥ ३

संकल्पकिंकरचराचरचक्रवालं सर्वातिशायिनमनन्तशयस्य पुंसः ।
भूमानमात्मविभवैः पुनरुक्तयन्ती वाचामभूमिरपि भूमिरसि त्वमेका ॥ ४

वेधस्तृणावधि विहारपरिच्छदं ते विश्वं चराचरतया व्यतिभिद्यमानम् ।
अम्ब त्वदाश्रिततया परिपोषयन्ती विश्वंभरस्य दयिताऽसि तदेकनामा ॥ ५

सर्वंसहेत्यवनिरित्यचलेति मातर्विश्वंभरेति विपुलेति वसुंधरेति ।
अन्यानि चान्यविमुखान्यभिधानवृत्त्या नामान्यमूनि कथयन्ति तवानुभावम् ॥ ६

तापान्क्षिपन्प्रसविता सुमनोगणानां प्रच्छायशीतलतलः प्रदिशन्फलानि ।
त्वत्संगमाद्भवति माधवि लब्धपोषः शाखाशतैरधिगतो हरिचन्दनोऽसौ ॥ ७

स्मेरेण वर्धितरसस्य मुखेन्दुना ते निस्पन्दतां विजहतो निजया प्रकृत्या ।
विश्रान्तिभूमिरसि तत्त्वतरङ्गपङ्क्तेर्वेलेव विष्णुजलधेरपृथग्भवन्ती ॥ ८

स्वाभाविके वसुमति श्रुतिभिर्विभाव्ये पत्युर्महिम्नि भवतीं प्रतिपन्नवासाम् ।
शङ्के विमानवहनप्रतिमासमानाः स्तम्बेरमप्रभृतयोऽपि वहन्ति सत्त्वाः ॥ ९

संभावयन्मधुरिपुः प्रणयानुरोधाद्वक्षःस्थलेन वरुणालयराजकन्याम् ।
विश्वंभरे बहुमुखप्रतिपन्नभोगः शेषात्मना(ऽपि) तु भवतीं शिरसा दधाति ॥ १०

क्रीडावराहदयिते कृतिनः क्षितीन्द्राः संक्रन्दनस्तदितरेऽपि दिशामधीशाः ।
आमोदयन्ति भुवनान्यलिकाश्रितानामम्ब त्वदङ्घ्रिरजसां परिणामभेदैः ॥ ११

भूतेषु यत्त्वदभिमानविशेषपात्रं पोषं तदेव भजतीति विभावयन्तः ।
भूतं प्रभूतगुणपञ्चकमाद्यमे(तत् )व प्रायो निदर्शनतया प्रतिपादयन्ति ॥ १२
कान्तस्तवैष करुणाजलधिः प्रजानामाज्ञातिलङ्घनवशादुपजातरोषः ।
अह्नाय विश्वजननि क्षमया भवत्या सर्वावगाहनसहामुपयात्यवस्थाम् ॥ १३
आश्वासनाय जगतां पुरुषे परस्मिन्नापन्नरक्षणदशामभिनेतुकामे ।
अन्तर्हितेतरगुणादबलास्वभावादौदन्वते पयसि मज्जनमभ्यनैषीः ॥ १४
पूर्वं वराहवपुषा पुरुषोत्तमेन प्रीतेन भोगिसदने समुदीक्षितायाः ।
पादाहताः प्रलयवारिधयस्तवासन्नुद्वाहमङ्गलविधेरुचिता मृदङ्गाः ॥ १५
व्योमातिलङ्घिनि विभोः प्रलयाम्बुराशौ वेशन्तलेश इव मातुमशक्यमूर्तेः ।
सद्यः समुद्रवसने सरसैरकार्षीरानन्दसागरमपारमपाङ्गपातैः ॥ १६
दंष्ट्राविदारितमहासुरशोणिताङ्कैरङ्गैः प्रियस्तव दधे परिरम्भलीलाम् ।
सा ते पयोधिजलकेलिसमुत्थितायाः सैरन्ध्रिकेव विदधे नवमङ्गरागम् ॥ १७
अन्योन्यसंवलनजृम्भिततूर्यघोषैः संवर्तसिन्धुसलिलैर्विहिताभिषेका ।
एकातपत्रयसि विश्वमिदं गुणैः स्वैरध्यास्य भर्तुरधिकोन्नतमंसपीठम् ॥ १८
भर्तु(पत्यु)स्तमालरुचिरे भुजमध्यभागे पर्यायमौक्तिकवती पृषतैः पयोधेः ।
तापानुबन्धशमनी जगतां त्रयाणां तारापथे स्फुरसि तारकिता निशेव ॥ १९
आसक्तवासवशरासनपल्लवैस्त्वां संवृद्धये शुभतटिद्गुणजालरम्यैः ।
देवेशदिव्यमहिषीं धृतसिन्धुतोयैर्जीमूतरत्नकलशैरभिषिञ्चति द्यौः ॥ २०
आविर्मदैरमरदन्तिभिरुह्यमानां रत्नाकरेण रुचिरां रशनागुणेन ।
मातस्त्रिलोकजननीं वनमालिनीं त्वां मायावराहमहिषीमवयन्ति सन्तः ॥ २१
निष्कण्टकप्रशमयोगनिषेवणीयां छायाविशेषपरिभूतसमस्ततापाम् ।
स्वर्गापवर्गसरणिं भवतीमुशन्ति स्वच्छन्दसूकरवधूमवधूतपङ्काम् ॥ २२
गण्डोज्ज्वलां गहनकुन्तलदर्शनीयां शैलस्तनीं तरलनिर्झरलम्बहाराम् ।
श्यामां स्वतस्त्रियुगसूकरगेहिनि त्वं व्यक्तिं समुद्रवसनामुभयीं बिभर्षि ॥ २३
निःसंशयैर्निगमसीमनि विष्णुपत्नि प्रख्यापितं भृगुमुखैर्मुनिभिः प्रतीतैः ।
पश्यन्त्यनन्यपरधीरससंस्तुतेन सन्तः समाधिनयनेन तवानुभावम् ॥ २४
संचोदिता करुणया चतुरः पुमर्थान्व्यातन्वती विविधमन्त्रगणोपगीता ।
संचिन्त्यसे वसुमति स्थिरभक्तिबन्धैरन्तर्बहिश्च बहुधा प्रणिधानदक्षैः ॥ २५
क्रीडागृहीतकमलादिविशेषचिह्नां विश्राणिताभयकरां वसुधे सभूतिम् ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां संचिन्तयन् हि लभते धनदाधिकारम् ॥ २६

उद्वेलकल्मषपरंपरितादमर्षादुत्तंसितेन हरिमञ्जलिनाऽप्यधृष्यम् ।
आकस्मिकोऽयमधिगम्ययति प्रजानामम्ब त्वदीयकरुणापरिणाम एव ॥ २७
प्रत्येकमब्दनियुतैरपि दुर्व्यपोहात्प्राप्ते विपाकसमये जनितानुतापात् ।
(गाढा) नित्यापराधनिवहाच्चकितस्य जन्तोर्गन्तुं मुकुन्दचरणौ शरणं क्ष(मा)मे त्वम् ॥ २८
त्राणाभिसंधिसुभगेऽपि सदा मुकुन्दे संसारतन्त्रवहनेन विलम्बमाने ।
रक्षाविधौ तनुभृतामनघानुकम्पा मातः स्वयं वितनुषे महतीमपेक्षाम् ॥ २९
धर्मद्रुहं सकलदुष्कृतिसार्वभौममात्मानभिज्ञमनुतापलवोज्झितं माम् ।
वैतानसूकरपतेश्चरणारविन्दे सर्वंसहे ननु समर्पयितुं क्षमा त्वम् ॥ ३०
तापत्रयीं निरवधिं भवतीदयार्द्राः संसारघर्मजनितां सपदि क्षिपन्तः ।
मातर्भजन्तु मधुरामृतवर्षमैत्रीं मायावराहदयिते मयि ते कटाक्षाः ॥ ३१
पत्युर्दक्षिणपाणिपङ्कजपुटे विन्यस्तपादाम्बुजा वामं पन्नगसार्वभौमसदृशं पर्यङ्कयन्ती भुजम् ।
पोत्रस्पर्शलसत्कपोलफलका फुल्लारविन्देक्षणा सा मे पुष्यतु मङ्गलान्यनुदिनं सर्वाणि सर्वंसहा ॥ ३२
अस्येशाना जगत इति या श्रूयते विष्णुपत्नी तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या ।
श्रद्धाभक्तिप्रचयगुरुणा चेतसा संस्तुवानो यद्यत्का(म्यं)मः सपदि लभते तत्रतत्र प्रतिष्ठाम् ॥ ३३

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु भूस्तुतिः समाप्ता ॥ २० ॥**

---

## ॥ गोदास्तुतिः ॥ २१ ॥

श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं श्रीरङ्गराजहरिचन्दनयोगदृश्याम् ।
साक्षात्क्षमां करुणया कमलामिवान्यां गोदामनन्यशरणः शरणं प्रपद्ये ॥ १
वैदेशिकः श्रुतिगिरामपि भूयसीनां वर्णेषु माति महिमा न हि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २
त्वत्प्रेयसः श्रवणयोरमृतायमानां तुल्यां त्वदीयमणिनूपुरशिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभिष्टवार्हां वाचं प्रसन्नमधुरां मम संविधेयाः ॥ ३
कृष्णान्वयेन दधतीं यमुनानुभावं तीर्थैर्यथावदवगाह्य सरस्वतीं ते ।
गोदे विकस्वरधियां भवतीकटाक्षाद्वाचः स्फुरन्ति मकरन्दमुचः कवीनाम् ॥ ४
अस्मादृशामपकृतौ चिरदीक्षितानामह्नाय देवि दयते यदसौ मुकुन्दः ।
तन्निश्चितं नियमितस्तव मौलिदाम्ना तन्त्रीनिनादमधुरैश्च गिरां निगुम्भैः ॥ ५
शोणाऽधरेऽपि कुचयोरपि तुङ्गभद्रा वाचां प्रवाह(विभवे)निवहेऽपि सरस्वती त्वम् ।
अप्राकृतैरपि रसैर्विरजास्स्वभावात् गोदाऽपि देवि कमितुर्ननु नर्मदाऽसि ॥ ६

वल्मीकतः श्रवणतो वसुधात्मनस्ते जातो बभूव स मुनिः कविसार्वभौमः ।
गोदे किमद्भुतमिदं यदमी स्वदन्ते वक्त्रारविन्दमकरन्दनिभाः प्रबन्धाः ॥ ७
भोक्तुं तव प्रियतमं भवतीव गोदे भक्तिं निजां प्रणयभावनया गृणन्तः ।
उच्चावचैर्विरहसंगमजैरुदन्तैः शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ ८
मातः समुत्थितवतीमधिविष्णुचित्तं विश्वोपजीव्यममृतं वचसा दुहानाम् ।
तापच्छिदं हिमरुचेरिव मूर्तिमन्यां सन्तः पयोधिदुहितुः सहजां विदुस्त्वाम् ॥ ९
तातस्तु ते मधुभिदः स्तुतिलेशवश्यात्कर्णामृतैः स्तुतिशतैरनवाप्तपूर्वम् ।
त्वन्मौलिगन्धसुभगामुपहृत्य मालां लेभे महत्तरपदानुगुणं प्रसादम् ॥ १०
दिग्दक्षिणाऽपि परिपक्त्रिमपुण्यलभ्यात्सर्वोत्तरा भवति देवि तवावतारात् ।
यत्रैव रङ्गपतिना बहुमानपूर्वं निद्रालुनाऽपि नियतं निहिताः कटाक्षाः ॥ ११
प्रायेण देवि भवतीव्यपदेशयोगात् गोदावरी जगदिदं पयसा पुनीते ।
यस्यां समेत्य समयेषु चिरं निवासात् भागीरथीप्रभृतयोऽपि भवन्ति पुण्याः ॥ १२
नागेशयः सुतनु पक्षिरथः कथं ते जातः स्वयंवरपतिः पुरुषः पुराणः ।
एवंविधाः समुचितं प्रणयं भवत्याः संदर्शयन्ति परिहासगिरः सखीनाम् ॥ १३
त्वद्भुक्तमाल्यसुरभीकृतचारुमौलेर्हित्वा भुजान्तरगतामपि वैजयन्तीम् ।
पत्युस्तवेश्वरि मिथः प्रतिघातलोला बर्हातपत्ररुचिमारचयन्ति भृङ्गाः ॥ १४
आमोदवत्यपि सदा हृदयंगमाऽपि रागान्विताऽपि ललिताऽपि गुणोत्तराऽपि ।
मौलिस्रजा तव मुकुन्दकिरीटभाजा गोदे भवत्यधरिता खलु वैजयन्ती ॥ १५
त्वन्मौलिदामनि विभोः शिरसा गृहीते स्वच्छन्दकल्पितसपीतिरसप्रमोदाः ।
मञ्जुस्वना मधुलिहो विदधुः स्वयं ते स्वायंवरं कमपि मङ्गलतूर्यघोषम् ॥ १६
विश्वायमानरजसा कमलेन नाभौ वक्षःस्थले च कमलास्तनचन्दनेन ।
आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे धत्ते नतेन शिरसा तव मौलिमालाम् ॥ १७
चूडापदेन परिगृह्य तवोत्तरीयं मालामपि त्वदलकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे सौभाग्यसंपदभिषेकमहाधिकारम् ॥ १८
तुङ्गैरकृत्रिमगिरः स्वयमुत्तमाङ्गैर्यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः सोऽपि त्वदीयकुटिलालकवासिताभिः ॥ १९
धन्ये समस्तजगतां पितुरुत्तमाङ्गे त्वन्मौलिमाल्यभरसंभरणेन भूयः ।
इन्दीवरस्रजमिवादधति त्वदीयान्याकेकराणि बहुमानविलोकितानि ॥ २०
रङ्गेश्वरस्य तव च प्रणयानुबन्धादन्योन्यमाल्यपरिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं न्यूनाधिकत्वसमताविषयैर्विवादैः ॥ २१

दूर्वादलप्रतिमया तव देहकान्त्या गोरोचनारुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झितशिखावलकण्ठशोभं माङ्गल्यदं प्रणमतां मधुवैरिगात्रम् ॥ २२
अर्च्यं समर्च्य नियमैर्निगमप्रसू(तै)नैर्नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन्निजमाधिराज्यं मान्या मनुप्रभृतयोऽपि महीक्षितस्ते ॥ २३
आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र (न स्यात्) नासीत्प्रायेण देवि वदनं परिवर्तितं स्यात् ॥ २४
गोदे गुणैरपनयन्प्रणतापराधान् भ्रूक्षेप एव तव भोगरसानुकूलः ।
कर्मानुबन्धिफलदानरतस्य भर्तुः स्वातन्त्र्यदुर्व्यसनमर्मभिदानिदानम् ॥ २५
रङ्गे तटिद्गुणवतो रमयैव गोदे कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां सन्तः प्रपद्य शमयन्त्यचिरेण तापान् ॥ २६
जातापराधमपि मामनुकम्प्य गोदे गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्यनिर्भरतया जननी कुमारं स्तन्येन वर्धयति दष्टपयोधराऽपि ॥ २७
शतमखमणिनीला चारुकल्हारहस्ता स्तनभरनमिताङ्गी सान्द्रवात्सल्यसिन्धुः ।
अलकविनिहिताभिः स्रग्भिराकृष्टनाथा विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ २८
इति विकसितभक्तेरुत्थितां वेङ्कटेशात् बहुगुणरमणीयां वक्ति गोदास्तुतिं यः ।
स भवति बहुमान्यः श्रीमतो रङ्गभर्तुश्चरणकमलसेवां शाश्वतीमभ्युपैष्यन् ॥ २९

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु गोदास्तुतिः समाप्ता ॥ २१ ॥**

---

## ॥ षोडशायुधस्तोत्रम् ॥ २२ ॥

स्वसंकल्पकलाकल्पैरायुधैरायुधेश्वरः । जुष्टः षोडशभिर्दिव्यैर्जुषतां वः परः पुमान् ॥ १
यदायत्तं जगच्चक्रं कालचक्रं च शाश्वतम् । पातु वस्तत्परं चक्रं चक्ररूपस्य चक्रिणः ॥ २
यत्प्रसूतिशतैरासन् रुद्राः परशुलाञ्छिताः । स दिव्यो हेतिराजस्य परशुः परिपातु वः ॥ ३
हेलया हेतिराजेन यस्मिन्दैत्याः समुद्धृते । शकुन्ता इव धावन्ति स कुन्तः पालयेत वः ॥ ४
दैत्यदानवमुख्यानां दण्ड्यानां येन दण्डनम् । हेतिदण्डेशदण्डोऽसौ भवतां दण्डयेद्द्विषः ॥ ५
अनन्यान्वयभक्तानां रुन्धन्नाशामतङ्गजान् । अनङ्कुशविहारो वः पातु हेतीश्वराङ्कुशः ॥ ६
संभूय शलभायन्ते यत्र पापानि देहिनाम् । स पातु शतवक्त्राग्निर्हेतिर्हेतीश्वरस्य वः ॥ ७
अविद्यां स्वप्रकाशेन विद्यारूपश्छिनत्ति यः । स सुदर्शननिस्त्रिंशः सौतु वस्तत्त्वदर्शनम् ॥ ८
क्रियाशक्तिगुणो विष्णोर्यो भवत्यतिशक्तिमान् । अकुण्ठशक्तिः सा शक्तिरशक्तिं वारयेत वः ॥ ९
तारत्वं यस्य संस्थाने शब्दे च परिदृश्यते । प्रभोः प्रहरणेन्द्रस्य पाञ्चजन्यः स पातु वः ॥ १०
यं सात्त्विकमहंकारमामनन्त्यक्षसायकम् । अव्याद्वश्चक्ररूपस्य तद्धनुः शार्ङ्गधन्वनः ॥ ११

आयुधेन्द्रेण येनैव विश्वसर्गो विरच्यते । स वः सौदर्शनः कुर्यात्पाशः पाशविमोचनम् ॥ १२
विहारो येन देवस्य विश्वक्षेत्रकृषीवलः । व्यज्यते तेन सीरेण नासीरविजयोऽस्तु वः ॥ १३
आयुधानामहं वज्रमित्यगीयत यः स वः । अव्याद्धेतीशवज्रोऽसावदधीच्यस्थिसंभवः ॥ १४
विश्वसंहृतिशक्तिर्या विश्रुता बुद्धिरूपिणी । सा वः सौदर्शनी भूयाद्धदप्रशमनी गदा ॥ १५
यात्यतिक्षोदशालित्वं मुसलो येन तेन वः । हेतीशमुसलेनाशु भिद्यतां मोहमौसलम् ॥ १६
शूलिदृष्टमनोर्वाच्यो येन शूलयति द्विषः । भवतां तेन भवतात् त्रिशूलेन विशूलता ॥ १७
अस्त्रग्रामस्य कृत्स्नस्य प्रसूतिं यं प्रचक्षते । सोऽव्यात्सुदर्शनो विश्वमायुधैः षोडशायुधः ॥ १८
श्रीमद्वेङ्कटनाथेन श्रेयसे भूयसे सताम् । कृतेयमायुधेन्द्रस्य षोडशायुधसंस्तुतिः ॥ १९

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु षोडशायुधस्तुतिः समाप्ता ॥ २२ ॥**

---

## ॥ सुदर्शनाष्टकम् ॥ २३ ॥

प्रतिभटश्रेणिभीषण वरगुणस्तोमभूषण जनिभयस्थानतारण जगदवस्थानकारण ।
निखिलदुष्कर्मकर्शन निगमसद्धर्मदर्शन जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ १
शुभजगद्रूपमण्डन सुरगणत्रासखण्डन शतमखब्रह्मवन्दित शतपथब्रह्मनन्दित ।
प्रथितविद्वत्सपक्षित भजदहिर्बुध्न्यलक्षित जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ २
स्फुटतटिज्जालपिञ्जर पृथुतरज्वालपञ्जर परिगतप्रत्नविग्रह परिमितप्रज्ञदुर्ग्रह ।
प्रहरणग्राममण्डित परिजनत्राणपण्डित जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ३
निजपदप्रीतसद्गण निरुपधिस्फीतषड्गुण निगमनिर्व्यूढवैभव निजपरव्यूहवैभव ।
हरिहयद्वेषिदारण हरपुरप्लोषकारण जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ४
दनुजविस्तारकर्तन जनितमिस्राविकर्तन दनुजविद्यानिकर्तन भजदविद्यानिवर्तन ।
अमरदृष्टस्वविक्रम समरजुष्टभ्रमिक्रम जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ५
प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर विकटमायाबहिष्कृत विविधमालापरिष्कृत ।
पृथुमहायन्त्रतन्त्रित दृढदयातन्त्रयन्त्रित जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ६
महितसंपत्सदक्षर विहितसंपत्षडक्षर षडरचक्रप्रतिष्ठित सकलतत्त्वप्रतिष्ठित ।
विविधसंकल्पकल्पक विबुधसंकल्पकल्पक जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ७
भुवननेतस्त्रयीमय सवनतेजस्त्रयीमय निरवधिस्वादुचिन्मय निखिलशक्ते जगन्मय ।
अमितविश्वक्रियामय शमितविष्वग्भयामय जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ ८
द्विचतुष्कमिदं प्रभूतसारं पठतां वेङ्कटनायकप्रणीतम् । विषमेऽपि मनोरथः प्रधावन्न विहन्येत रथाङ्गधुर्यगुप्तः ॥ ९

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु सुदर्शनाष्टकं समाप्तम् ॥ २३ ॥**

---

## ॥ गरुडदण्डकः ॥ २४ ॥

नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने । श्रुतिसिन्धुसुधोत्पादमन्दराय गरुत्मते ॥

गरुडमखिलवेदनीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठपीठीकृतस्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तनाभोगगाढोपगूढं स्फुरत्कण्टकव्रातवेधव्यथावेपमानद्विजिह्वाधिपाकल्पविष्फार्यमाणस्फटावाटिकारत्नरोचिश्छटाराजिनीराजितं कान्तिकल्लोलिनीराजितम् ॥

जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन् दिवौकस्पतिक्षिप्तदम्भोलिधाराकिणाकल्प कल्पान्तवातूलकल्पोदयानल्पवीरायितोद्यच्चमत्कारदैत्यारिजैत्रध्वजारोहनिर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादिमूर्ते न कश्चित्समस्ते नमस्ते पुनस्ते नमः ॥

नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेलपाथोधिवीचीचपेटाहतागाधपातालभांकारसंक्रुद्धनागेन्द्रपीडासृणीभावभास्वन्नखश्रेणये चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यमध्यात्मविद्या विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे ॥

मनुरनुगतपक्षिवक्त्रस्फुरत्तारकस्तावकश्चित्रभानुप्रियाशेखरस्त्रायतां नस्त्रिवर्गापवर्गप्रसूतिः परव्योमधामन् वलद्वेषिदर्पज्वलद्वालखिल्यप्रतिज्ञावतीर्ण स्थिरां तत्त्वबुद्धिं परां भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा मुधाकामहीनामहीनामहीनान्तक ॥

षट्त्रिंशद्गणचरणो नरपरिपाटीनवीनगुम्भगुणः । विष्णुरथदण्डकोऽयं विघटयतु विपक्षवाहिनीव्यूहम् ।
विचित्रसिद्धिदः सोऽयं वेङ्कटेशविपश्चिता । गरुडध्वजतोषाय गीतो गरुडदण्डकः ॥

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु गरुडदण्डकः समाप्तः ॥ २४ ॥

---

## ॥ गरुडपञ्चाशत् ॥ २५ ॥

॥ परव्यूहवर्णकः प्रथमः ॥ १ ॥

अङ्गेष्वानन्दमुख्यश्रुतिशिखरिमिलद्दण्डकं गण्डपूर्वं प्रागेवाभ्यस्य षट्सु प्रतिदिशमनघं न्यस्य शुद्धास्त्रबन्धाः ।
पक्षिव्यत्यस्तपक्षद्वितयमुखपुटप्रस्फुटोदारतारं मन्त्रं गारुत्मतं तं हुतवहदयिताशेखरं शीलयामः ॥ १

वेदः स्वार्थाधिरूढो बहिरबहिरभिव्यक्तिमभ्येति यस्यां सिद्धिः सांकर्षणी सा परिणमति यया सापवर्गात्रिवर्गा ।
प्राणस्य प्राणमन्यं प्रणिहितमनसो यत्र निर्धारयन्ति प्राची सा ब्रह्मविद्या परिचितगहना पातु गारुत्मती नः ॥ २

नेत्रं गायत्रमूचे त्रिवृदिति च शिरो नामधेयं यजूंषि च्छन्दांस्यङ्गानि धिष्ण्यात्मभिरजनि शफैर्विग्रहो वामदेव्यम् ।
यस्य स्तोमात्मनोऽसौ बृहदितरगरुत्तादृशाम्नायपुच्छः स्वाच्छन्द्यं नः प्रसूतां श्रुतिशतशिखराभिष्टुतात्मा गरुत्मान् ॥ ३

यो यं धत्ते स्वनिष्ठं वहनमपि वरः स्पर्शितो येन यस्मै यस्माद्यस्याहवश्रीर्विदधति भजनं यत्रयत्रेति सन्तः ।
प्रायो देवः स इत्थं हरिगरुडभिदाकल्पितारोहवाहस्वाभाव्यः स्वात्मभव्यः प्रदिशतु शकुनिर्ब्रह्मसब्रह्मतां नः ॥ ४

एको विष्णोर्द्वितीयस्त्रिचतुरविदितं पञ्चवर्णीरहस्यं षाड्गुण्यस्मेरसप्तस्वरगतिरणिमाद्यष्टसंपन्नवात्मा ।
देवो दर्वीकरारिर्दशशतनयनारातिसाहस्रलक्षैर्विक्रीडत्पक्षकोटिर्विघटयतु भयं वीतसंख्योदयो नः ॥ ५
सत्याद्यैः सात्त्वतादिप्रथितमहिमभिः पञ्चभिर्व्यूहभेदैः पञ्चाभिख्यो निरुन्धन्भवगरलभवं प्राणिनां पञ्चभावम् ।
प्राणापानादिभेदात्प्रतितनु मरुतो दैवतं पञ्चवृत्तेः पञ्चात्मा पञ्चधाऽसौ पुरुष उपनिषद्घोषितस्तोषयेन्नः ॥ ६
श्लिष्यद्भोगीन्द्रभोगे श्रुतिनिकरनिधौ मूर्तिभेदे स्वकीये वर्णव्यक्तौर्विचित्राः परिकलयति यो वक्त्रबाहूरुपादैः ।
प्राणः सर्वस्य जन्तोः प्रकटितपरमब्रह्मभावः स इत्थं क्लेशं छिन्दन्खगेशः सपदि विपदि नः सन्निधिः सन्निधत्ताम् ॥ ७
अग्रे तिष्ठन्नुदग्रो मणिमुकुर इवानन्यदृष्टेर्मुरारेः पायान्मायाभुजङ्गीविषमविषभयाद्गाढमस्मान्गरुत्मान् ।
क्षुभ्यत्क्षीराब्धिपाथःसहभवगरलस्पर्शशङ्की स शङ्के छायां धत्ते यदीयां हृदि हरिहृदयारोहधन्यो मणीन्द्रः ॥ ८

॥ इति परव्यूहवर्णकः प्रथमः ॥ १ ॥ ॥ अथ अमृतहरणवर्णको द्वितीयः ॥ २ ॥

आहर्तारं सुधाया दुरधिगममहा(श)चक्रदुर्गस्थिताया जेतारं वज्रपाणेः सह विबुधगणैराहवे बाहुवेगात् ।
विष्णौ संप्रीयमाणे वरविनिमयतो विश्वविख्यातकीर्तिं देवं याऽसूत सासौ दिशतु भगवती शर्म दाक्षायणी नः ॥ ९
वित्रासाद्धीतिहोत्रं प्रथममधिगतैरन्तिके मन्दधाम्ना भूयस्तेनैव सार्धं भयभरतरलैर्वन्दितो देववृन्दैः ।
कल्पान्तक्षोभदक्षं कथमपि कृपया संक्षिपन्धाम चण्डं भित्त्वाऽण्डं निर्जिहानो भवभयमिह नः खण्डयत्वण्डजेन्द्रः ॥ १०
क्षुण्णक्षोणीधराणि क्षुभितचतुरकूपारतिम्यद्गुरुन्ति त्रुट्यत्तारासराणि स्थपुटितविबुधस्थानकानि क्षिपेयुः ।
पातालब्रह्मसौधावधिविहितसुधावर्तनान्यस्मदार्तिं ब्रह्माण्डस्यान्तराले बृहति खगपतेरर्भकक्रीडितानि ॥ ११
संविच्छस्त्रं दिशन्त्या सह विजयचमूराशिषः प्रेषयन्त्या संवध्नन्त्या तनुत्रं सुचरितमशनं पक्कणं निर्दिशन्त्या ।
एनोऽस्मद्वैनतेयो नुदतु विनतया कलत्ररक्षाविशेषः कद्रूसंकेतदास्यक्षपणपणसुधालक्ष्मभैक्षं जिघृक्षुः ॥ १२
विक्षेपैः पक्षतीनामनिभृतगतिभिर्वादितव्योमतूर्यो वाचालाम्भोधिवीचीवलयविरचितालोकशब्दानुबन्धः ।
दिक्कन्याकीर्यमाणक्षरदुडुनिकरव्याजलाजाभिषेको नाकोन्माथाय गच्छन्नरकमपि स मे नागहन्ता निहन्तु ॥ १३
ऋक्षाक्षेपदक्षो मिहिरहिमकरोत्तालतालाभिघाती वेलावाःकेलिलोलो विविधघनघटाकन्दुकाघातशीलः ।
पायान्नः पातकेभ्यः पतगकुलपतेः पक्षविक्षेपजातो वातः पातालहेलापटहपटुरवारम्भसंरम्भधीरः ॥ १४
किं निर्घातः किमर्कः परिपतति दिवः किं समिद्धोऽयमौर्वः किंस्वित्कार्तस्वराद्रिर्ननु विदितमिदं व्योमवर्त्मा गरुत्मान् ।
आसीदत्याजिहीर्षत्यभिपतति हरत्यत्ति हा तात हाऽम्बेत्यालापोद्युक्तभिल्लाकुलजठरपुटः पातु नः पत्रिनाथः ॥ १५
आस्वाक्तैरस्थिभिर्दुरुपरमतृषाशातनी शातदंष्ट्राकोटीलोटत्करोटीविकटकटकटारावघोरावतारा ।
भिन्द्यात्सार्धं पुलिन्द्या सपदि परिहृतब्रह्मगा जिह्मगारेरुद्वेलद्भिल्लपल्लीनिगरणकरणा पारणा कारणा नः ॥ १६
स्वच्छन्दस्वर्गिवृन्दप्रथमतममहोत्पातनिर्घातघोरः स्वान्तध्वान्तं निरुन्ध्याद्धुतधरणिपयोराशिराशीविषारेः ।
प्रत्युद्यद्भिल्लपल्लीभटरुधिरसरिल्लोलकल्लोलमालाहालानिर्वेशहेलाहलहलबहुलो हर्षकोलाहलो नः ॥ १७
सान्द्रक्रोधानुबन्धात्सरसि नखमुखे पादपे गण्डशैले तुण्डाग्रे कण्ठरन्ध्रे तदनु च जठरे निर्विशेषं युयुत्सू ।
अव्यादस्मानभव्याद्विदितनखरश्रेणिदंष्ट्रानिवेशौ जीवग्राहं गृहीत्वा कमठकरटिनौ भक्षयन्पक्षिमल्लः ॥ १८

अल्पः कल्पान्तलोलानटमुकुटसुधासूतिखण्डो बहूनां निःसारस्त्वब्जजाद्रेरनुभवतु सुधा मन्थनं त्वेष सिन्धुः ।
राकाचन्द्रस्तु राहोः स्वमिति कथयतः प्रेक्ष्य कद्रूकुमारान् सान्तर्हासं खगेन्द्रः सपदि हृतसुधस्त्रायतामायतान्नः ॥ १९

आरादभ्युत्थितैरावतमनितजवोदञ्चदुच्चैःश्रवस्कं जातक्षोभे विमर्शन्दिशि दिशि दिविषद्वाहिनीशे क्षणेन ।
भ्राम्यन्सव्यापसव्यं सुमहति मिषति स्वर्गिसार्थे सुधार्थे प्रेङ्खन्नेत्रः श्रियं नः प्रकटयतु चिरं पक्षवान्मन्थशैलः ॥ २०

अस्थानेषु ग्रहाणामनियतविहिता(तङ्क)नन्तवक्रातिचारा त्रिश्रोपाधिव्यवस्थाविगमविलुलितप्राग्वागादिभेदाः ।
द्वित्राः सुत्रामभक्तग्रहकलहविधावण्डजेन्द्रस्य चण्डाः पक्षोत्क्षेपा विपक्षक्षपणसरभसाः शर्म मे निर्मिमीरन् ॥ २१

तत्तत्प्रत्यर्थिसारावधिविहितमृषारोषगन्धो रुषान्धैरेकः क्रीडन्ननेकैः सुरपतिसुभटैरक्षतो रक्षतान्नः ।
अन्योन्यावद्धलक्षापहरणविहितामन्दमात्सर्यतुङ्गैरङ्गैरेव स्वकीयैरहमहमिकया मानितो वैनतेयः ॥ २२

अस्तव्योमान्तनन्तर्हितनिखिलहरिन्मण्डलं चण्डभानोर्लुण्टाकैर्यैरकाण्डे जगदखिलमिदं शर्वरी वर्वरीति ।
प्रेङ्खोलत्स्वर्गगोलस्खलदुडुनिकरस्कन्धबन्धान्निरुन्धन् रंहोभिस्तैर्मदंहो हरतु तरलितब्रह्मसद्मा गरुत्मान् ॥ २३

यः स्वाङ्गे संगरान्तर्गरुदनिललवस्तम्भिते जम्भशत्रौ कुण्ठास्त्रे सन्नकण्ठं प्रणयति पचये पक्षलेशं दिदेश ।
सोऽस्माकं संविधत्तां सुरपतिपृतनाद्वन्द्वयुद्धैकमल्लो माङ्गल्यं वालखिल्यद्विजवरतपसां कोऽपि मूर्तो विवर्तः ॥ २४

रुद्रान्विद्राव्य सेन्द्रान्हुतवरसहितं गन्धवाहं गृहीत्वा कालं निष्काल्य धूत्वा निर्ऋतिधनपती पाशिनं क्लेशयित्वा ।
सर्पाणां छाद्मिकानाममृतमयपणप्रापणप्राप्तदर्पो निर्बाधं क्वापि सर्पन्नपहरतु हरेरौपवाह्यो मदंहः ॥ २५

॥ इति अमृतहरणवर्णको द्वितीयः ॥ २ ॥ ॥ अथ नागदमनवर्णकस्तृतीयः ॥ ३ ॥

सुभ्रभ्रूभ्रूकुटीभृद्भ्रमदमितगरुत्क्षोभितक्ष्मान्तरिक्षश्चक्राक्षो वक्रतुण्डः खरतरनखरः क्रूरदंष्ट्राकरालः ।
पायादस्मानपायाद्भयभरविगलद्दन्दशूकेन्द्रशूकः शौरेः संक्रन्दनादिप्रतिभटपृतनाक्रन्दनः स्यन्दनेन्द्रः ॥ २६

अर्यम्णा धुर्ययोक्त्रग्रहणभयभृता सान्त्वितोऽनूरुबन्धात्कोदण्डज्यां जिघृक्षेदिति चकितधिया शङ्कितः शंकरेण ।
तल्पे कल्पेत मा ते प्रतिरिति हरिणाऽप्यादरेणानुनीतः पक्षीन्द्रस्त्रायतां नः फणधरमहिषीपत्रभङ्गापहारी ॥ २७

छायाताक्ष्यान्महीनां फणमणिमुकुरश्रेणिविस्पष्टबिम्बांस्त्राणापेक्षाधृतस्वप्रतिकृतिमनसा वीक्ष्य जातानुकम्पः ।
तेषां दृष्ट्वाऽथ चेष्टाः प्रतिगरुडगणाशङ्कया तुङ्गरोषः सर्पन्दर्पोद्धतो नः शमयतु दुरितं सर्पसन्तानहन्ता ॥ २८

उच्छ्वासाकृष्टताराणगणघटितमृषामौक्तिकाकल्पशिल्पः पक्षव्याधूतपाथोनिधिकुहरगुहागर्भदत्तावकाशः ।
दृष्टिं दंष्ट्राग्रदूतीं पृथुषु फणभृतां प्रेषयन्नुत्तमाङ्गेष्वङ्गैरङ्गानि रुन्धन्नवतु पिपतिषुः पत्रिणामग्रणीर्नः ॥ २९

आवेधःसौधशृङ्गादनुपरतगतेराभुजङ्गेन्द्रलोकाच्छ्रेणीबन्धं वितन्वन्क्षणपरिणमितालातपातप्रकारः ।
पायान्नः पुण्यपापप्रचयमयपुनर्गर्भकुम्भीनिपातात्पातालस्यान्तराले बृहति खगपतेर्निर्विघातो निपातः ॥ ३०

प्रत्यग्राकीर्णतत्तत्फणमणिनिकरं शङ्कुलाकोटिवक्रं तुण्डाग्रं संक्षुवानः कुलगिरिकठिने कर्परे कूर्मभर्तुः ।
पातालक्षेत्रपङ्कद्विरसनपृतनाशालिविच्छेदशाली शैली नः सप्तशैलीलघिमदरभसः सौतु साध्वीं सुपर्णः ॥ ३१

पर्यस्यत्पन्नगीनां युगपदसमयानर्भकान्गर्भकोशाद्ब्रह्मस्तम्बप्रकम्पव्यतिषजदखिलोदन्चदुन्निद्रघोषम् ।
चक्षुश्चक्षुःश्रुतीनां सपदि बधिरयत्पातु पत्रीश्वरस्य क्षिप्रक्षिप्तक्षमाभृत्क्षणघटितनभःस्फोटमास्फोटितं नः ॥ ३२

तोयस्कन्धो न सिन्धोः समघटत मिथः पक्षविक्षेपभिन्नः पातालं न प्रविष्टं पृथुनि च विवरे रश्मिभिस्तिग्मरश्मेः ।
तावद्ध्वस्ताहिवक्त्रक्षरितविषमषीपङ्ककस्तूरिकाङ्कः प्रत्यायातः स्वयूथ्यैः स्थित इति विदितः पातु पत्रीश्वरो नः ॥ ३३
बद्धस्पर्धैरिव स्वैर्बहुभिरभिमुखैरेककण्ठं स्तुवाने तत्तद्विश्वोपकारप्रणयिसुरगणप्रार्थितप्राणरक्षे ।
पायान्नः प्रत्यहं ते कमपि विषधरं प्रेषयामीति भीते संधित्सौ सर्पराजे सकरुणमरुणानन्तरं धाम दिव्यम् ॥ ३४
क्वाप्यस्था शर्कराढ्यं क्वचन घनतरासृक्छटाशीधुदिग्धं निर्मोकैः क्वापि कीर्णं विषयमपरतो मण्डितं रत्नखण्डैः ।
अध्यारूढैः स्ववारेष्वहमहमिकया वध्यवेषं दधानैः काले खेलन्भुजङ्गैः कलयतु कुशलं काद्रवेयान्तको नः ॥ ३५

॥ इति नागदमनवर्णकस्तृतीयः ॥ ३ ॥ ॥ अथ परिष्कारवर्णकश्चतुर्थः ॥ ४ ॥

वामे वैकुण्ठशय्याफणिपतिकटको वासुकिब्रह्मसूत्रो रक्षेन्नस्तक्षकेण ग्रथितकटितटश्चारुकार्कोटहारः ।
पद्मं कर्णेऽपसव्ये प्रथिमवति महापद्ममन्यत्र बिभ्रच्चूडायां शङ्खपालं गुलिकमपि भुजे दक्षिणे पक्षिमल्लः ॥ ३६
वर्त्यामस्वस्तिकाग्रस्फुरदरुणशिखादीपरत्नप्रदीपैर्वध्नद्भिस्तापमन्तर्बहुलविषमषीगन्धतैलाभिपूर्णैः ।
नित्यं नीराजनार्थैर्निजफणफलकैर्घूर्णमानानि तूर्णं भोगैरापूरयेयुर्भुजगकुलरिपोर्भूषणानीषणां नः ॥ ३७
अङ्गप्रत्यङ्गलीनामृतरसविसरस्पर्शलोभादिवान्तस्त्रासाद्ध्रासानुबन्धादिव सहजमिथोवैरशङ्कोत्तरङ्गात् ।
रुद्रागाढोपगूढोच्छ्वसननिबिडितस्थानयोगादिवास्मद्भद्राय स्युर्भजन्तो भगवति गरुडे गाढतां गूढपादः ॥ ३८
कोटीरे रत्नकोटिप्रतिफलिततया नैकधा भिन्नमूर्तिर्वल्मीकस्थान्स्वयूथ्यानभित इव निजैर्वेष्टनैः क्लृप्तरक्षः ।
क्षेमं नः सौतु हेमाचलविधृतशरन्मेघलेखानुकारी रोचिश्चूडालचूडामणिरुरगरिपोरेष चूडाभुजङ्गः ॥ ३९
द्राघीयः कर्णपाशद्युतिपरिभवनव्रीलयेव स्वभोगं संक्षिप्याश्वन्समीरं दरविनतमुखो निश्वसन्मन्दमन्दम् ।
आसीदद्गण्डभित्तिप्रतिफलनमिषात्क्वापि गूढं विविक्षुः क्षिप्रं दोषान्क्षिपेन्नः खगपतिकुहनाकुण्डलः कुण्डलीन्द्रः ॥ ४०
वालाग्रग्रन्थिबन्धग्रथितपृथुशिरोरत्नसंदर्शनीयो मुक्ताशुभ्रोदराभो हरिमणिशकलश्रेणिदृश्येतरांशः ।
विष्वग्दम्भोलिधाराव्रणकिणविषमोत्तम्भनस्तब्धवृत्तिर्व्यालाहारस्य हृद्यो हरतु स मदघं हारदर्वीकरेन्द्रः ॥ ४१
वैकक्ष्यस्रग्विशेषच्छुरणपरिणमच्छस्त्रबन्धानुबन्धो वक्षःपीठाधिरूढो भुजगदमयितुर्ब्रह्मसूत्रायमाणः ।
अश्रान्तस्वैरनिद्राविरचितविविधोच्छ्वासनिश्वासवेगक्षामोच्छूनाकृतिर्नः क्षपयतु दुरितं कोऽपि कद्रूकुमारः ॥ ४२
श्लिष्यद्रुद्रासुकीर्तिस्तनतटघुसृणालेपसंक्रान्तसारस्फारामोदाभिलाषोन्नमितपृथुफणाचक्रवालाभिरामः ।
प्रायः प्रेयःपटीरद्रुमविटपधियाऽऽश्लिष्टपक्षीन्द्रबाहुर्व्याहन्यादस्मदीयं वृजिनभरमसौ बृन्दशो दन्दशूकः ॥ ४३
ग्रस्तानन्तर्निविष्टान्फणिन इव शुचा गाढमाश्लिष्य दुःख्यन् क्षुण्णानेकः स्वबन्धून्क्षुधमिव कुपितः पीडयन्वेष्टनेन ।
व्यालस्तार्क्ष्योदरस्थो विपुलगलगुहावाहिफूत्कारवात्यापौनःपुन्येन हन्यात्पुनरुदरगुहागेहवास्तव्यतां नः ॥ ४४
गाढासक्तो गरुत्मत्कटितटनिकटे रक्तचण्डातकाङ्के फक्कत्काञ्चीमहिम्ना फणिमणिमहसा लोहिताङ्गो भुजङ्गः ।
सत्तासांसिद्धिकं नः सपदि बहुविधं कर्मबन्धं निरुन्ध्याद्विन्ध्याद्यालीनसंध्याघनघटिततटित्कान्तिचातुर्यधुर्यः ॥ ४५

॥ इति परिष्कारवर्णकश्चतुर्थः ॥ ४ ॥ ॥ अथ अद्भुतवर्णकः पञ्चमः ॥ ५ ॥

वेगोत्तानं वितानं व्यजनमनुगुणं वैजयन्ती जयन्ती मित्रं नित्याभ्यमित्रं युधि विजयरथो युग्ययोगानपेक्षः ।
दासो निष्पर्युदासो दनुतनयभिदो निःसहायः सहायो दोधूयेतास्मदीयं दुरितमधरितारातिपक्षः स्वपक्षैः ॥ ४६

उक्षा दक्षान्तकस्य स्खलति वलजितः कुञ्जरः खञ्जरीतिः क्रान्तो धातुः शकुन्तोऽनुग इति दयया स्वामिरुद्धस्यदोऽपि ।
ग्राहग्रस्तद्विपेन्द्रक्षतिभयचकिताकुण्ठवैकुण्ठचिन्तानासीरोदारमूर्तिर्नरकविहतये स्ताद्विहङ्गेश्वरो नः ॥ ४७
वेगोद्वेलः सुवेले किमिदमिति मिथो मन्त्रितो वानरेन्द्रैर्मायामानुष्यलीलामभिनयति हरौ लब्धसेवाविशेषः ।
वैदेहीकर्णपूरस्तवकसुरभिणा यः समाश्लेषि दोष्णा तृष्णापारिप्लवानां स भवतु गरुडो दुःखवारिप्लवो नः ॥ ४८
दुग्धोदन्वत्प्रभूतः स्वकमहिमपृथुर्विष्णुना कृष्णनाम्ना पिञ्छाकल्पानुकल्पः समघटि सुदृढो यत्प्रदिष्टः किरीटः ।
वीरो वैरोचनास्त्रव्रणकिणगुणितोदग्रनिर्घातघातः संघातं सर्पघाती स हरतु महतामस्मदत्याहितानाम् ॥ ४९

रुन्ध्यात्संवर्तसंध्याघनपटलकनत्पक्षविक्षेपहेलावातूलस्फालतूलाञ्चलनिचयतुलावेयदैतेयलोकः ।
आसाकैः कर्मपाकैरभिगतमहितानीकमप्रत्यनीकैर्दीव्यन्दिव्यापदानैर्दनुजविजयिनो वैजयन्तीशकुन्तः ॥ ५०
यत्पक्षस्था त्रिवेदी त्रिगुणजलनिधिर्लङ्घ्यते यद्गुणज्ञैर्वर्गैस्त्रैवर्गिकाणां गतिमिह लभते नाथवत्त्वसनाथः ।
त्रैकाल्योपस्थितास्त त्रियुगनिधिरथादायतास्त्रायतां नस्त्रातानेकस्त्रिधाम्नस्त्रिदशरिपुचमूमोहनो वाहनेन्द्रः ॥ ५१
सैकां पञ्चाशतं यामतनुत विनतानन्दनं नन्दयिष्यन् कृत्वा मौलौ तदाज्ञां कविकथकघटाकेसरी वेङ्कटेशः ।
तामेतां शीलयन्तः शमितविषधरव्याधिदैवाधिपीडाः काङ्क्षापौरस्त्यलाभाः कृतमितरफलैस्तार्क्ष्यकल्पा भवन्ति ॥ ५२

॥ इति अद्भुतवर्णकः पञ्चमः ॥ ५ ॥

**॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु गरुडपञ्चाशत् समाप्ता ॥ २५ ॥**

---

## ॥ यतिराजसप्ततिः ॥ २६ ॥

कमप्याद्यं गुरुं वन्दे कमलागृहमेधिनम् । प्रवक्ता च्छन्दसां वक्ता पञ्चरात्रस्य यः स्वयम् ॥ १
सहधर्मचरीं शौरेः संमन्त्रितजगद्धिताम् । अनुग्रहमयीं वन्दे नित्यमज्ञातनिग्रहाम् ॥ २
वन्दे वैकुण्ठसेनान्यं देवं सूत्रवतीसखम् । यद्वेत्रशिखरस्पन्दे विश्वमेतद्व्यवस्थितम् ॥ ३
यस्य सारस्वतं स्रोतो वकुलामोदवासितम् । श्रुतीनां विश्रमायालं शठारिं तमुपास्महे ॥ ४
नाथेन मुनिना(ते)थेन भवेयं नाथवानहम् । यस्य नैगमिकं तत्त्वं हस्तामलकतां गतम् ॥ ५
नमस्याम्यरविन्दाक्षं नाथभावे व्यवस्थितम् । शुद्धसत्त्वमयं शौरेरवतारमिवापरम् ॥ ६
अनुज्झितक्षमायोगमपुण्यजनबाधकम् । अस्पृष्टमदरागं तं रामं तुर्यमुपास्महे ॥ ७
विगाहे यामुनं तीर्थं साधुवृन्दावने स्थितम् । निरस्तजिह्मगस्पर्शे यत्र कृष्णः कृतादरः ॥ ८
दयानिघ्नं यतीन्द्रस्य देशिकं पूर्णमाश्रये । येन विश्वसृजो विष्णोरपूर्यत मनोरथः ॥ ९
प्रणामं लक्ष्मणमुनिः प्रतिगृह्णातु मामकम् । प्रसाधयति यत्सूक्तिः स्वाधीनपतिकां श्रुतिम् ॥ १०
उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् । शरणागतसार्थवाहमीडे शिखया शेखरिणं पतिं यतीनाम् ॥ ११
प्रथयन्विमतेषु तीक्ष्णभावं प्रभुरस्मत्परिरक्षणे यतीन्द्रः । अपृथक्प्रतिपन्नयन्मयत्वैर्ववृधे पञ्चभिरायुधैर्मुरारेः ॥ १२
शमितोदयशंकरादिगर्वः स्वबलादुद्धृतयादवप्रकाशः । अवरोपितवान् श्रुतेरपार्थान्ननु रामावरजः स एष भूयः ॥ १३
अबहुश्रुतसंभवं श्रुतीनां जरतीनामयथायथप्रचारम् । विनिवर्तयितुं यतीश्वरोक्तिर्विदधे ताः स्थिरनीतिपञ्जरस्थाः ॥ १४

अमुना तपनातिशायिभूम्ना यतिराजेन निबद्धनायकश्रीः । महती गुरुपङ्क्तिहारयष्टिर्विबुधानां हृदयंगमा विभाति ॥ १५
अकलङ्कपक्षस्य यतिक्षमाभृतो विभाति वंशे हरितत्त्वमक्षतम् । यदुद्भवाः शुद्धसुवृत्तशीतला भवन्ति मुक्तावलिभूषणं भुवः॥१६
अनपायविष्णुपदसंश्रयं भजे कलया कयाऽपि कलयाऽप्यनुज्झितम्।अकलङ्कयोगमजडाशयोदयं यतिराजचन्द्रमुपरागदूरगम्॥
अभिगम्य सम्यगनघाः सुमेधसो यतिचक्रवर्तिपदपद्मपत्तनम् । हरिभक्तदास्यरसिकाः परस्परं क्रयविक्रयार्हदशया समिन्धते ॥
परुषातिवादपरिवादपैशुनप्रभृतिप्रभूतपतनीयपङ्किला । स्वदते ममाद्य सुभगा सरस्वती यतिराजकीर्तिकतकैर्विशोधिता॥ १९
अनुकल्पभूतमुरभित्पदं सतामजहत्त्रिवर्गमपवर्गवैभवम् । चलचित्तवृत्तिविनिवर्तनौषधं शरणं यतीन्द्रचरणं वृणीमहे ॥ २०
श्वसितावधूतपरवादिवैभवा निगमान्तनीतिजलधेस्तलस्पृशः । प्रतिपादयन्ति गतिमापवर्गिकीं यतिसार्वभौमपदसात्कृताशयाः॥

मूले निविश्य महतां निगमद्रुमाणां मुष्णन्प्रतारकभयं धृतनैकदण्डः ।
रङ्गेशभक्तजनमानसराजहंसो रामानुजः शरणमस्तु मुनिः स्वयं नः ॥ २२

सन्मन्त्रविक्षिपति संयमिनां नरेन्द्रः संसारजिह्मगमुखैः समुपस्थितं नः ।
विष्वक्कृतं विषयलोभविषं निजाभिर्गाढानुभावगरुडध्वजभावनाभिः ॥ २३

नाथः स एष यमिनां नखरश्मिजालैरन्तर्निलीनमपनीय तमो मदीयम् ।
विज्ञानचित्रमनघं लिखतीव चित्ते व्याख्यानकेलिरसिकेन कराम्बुजेन ॥ २४

उद्धृत्वतीमुपनिषत्सु निगूढमर्थं चित्ते निवेशयितुमल्पधियां स्वयं नः ।
पश्येम लक्ष्मणमुनेः प्रतिपन्नहस्तामुन्निद्रपद्मसुभगामुपदेशमुद्राम् ॥ २५

आकर्षणानि निगमान्तसरस्वतीनामुच्चाटनानि बहिरन्तरुपप्लवानाम् ।
पथ्यानि घोरभवसंज्वरपीडितानां हृद्यानि भान्ति यतिराजमुनेर्वचांसि ॥ २६

शीतस्वभावसुभगानुभवः शिखावान् दोषावमर्दनियतोन्नतिरोषधीशः ।
तापानुबन्धशमनस्तपनः प्रजानां रामानुजो जयति संवलितत्रिधामा ॥ २७

जयति सकलविद्यावाहिनीजन्मशैलो जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी ।
निखिलकुमतिमायाशर्वरीबालसूर्यो निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः ॥ २८

मुनिबहुमतसारा मुक्तिनिश्रेणिकेयं सहृदयहृदयानां शाश्वती दिष्टसिद्धिः ।
शमितदुरितगन्धा संयमीन्द्रस्य सूक्तिः परिचितगहना नः प्रस्नुवीत प्रसादम् ॥ २९

भवमरुपरिखिन्नस्फीतपानीयसिन्धुर्दुरितरहितजिह्वादुग्धकुल्यासकुल्या ।
श्रुतिनयनसनाभिः शोभते लक्ष्मणोक्तिर्नरकमथनसेवास्वादनाडिंधमा नः ॥ ३०

हरिपदमकरन्दस्यन्दिनः संश्रितानामनुगतबहुशाखास्तापमुन्मूलयन्ति ।
शमितदुरितगन्धाः संयमीन्द्रप्रबन्धाः कथकजनमनीषाकल्पनाकल्पवृक्षाः ॥ ३१

नानाभूतैर्जगति समयैर्नर्मलीलां विधित्सोरन्त्यं वर्णं प्रथयति विभोरादिमव्यूहभेदे ।
विश्वं त्रातुं विषयनियतं व्यञ्जितानुग्रहः सन् विष्वक्सेनो यतिपतिरभूद्वेत्रसार(त्रि)स्त्रिदण्डः ॥ ३२

लक्ष्यं बुद्धे रसिकरसनालास्यलीलानिदानं शुद्धास्वादं किमपि जगति श्रोत्रदिव्यौषधं नः ।
लक्ष्यालक्ष्यैः सितजलधिवद्भाति तात्पर्यरत्नैर्लक्ष्मीकान्तस्फटिकमुकुरो लक्ष्मणार्योपदेशः ॥ ३३
स्थितिमवधीरयन्त्यतिमनोरथसिद्धिमतीं यतिपतिसंप्रदायनिरपायधनोपचिताः ।
मधुकरमौलिदघ्नमददन्तुरदन्तिघटाकरटकटाहवाहिघनशीकरशीभरिताम् ॥ ३४
निरुपधिरङ्गवृत्तिरसिकानभिताण्डवयन्निगमविमर्शकेलिरसिकैर्निभृतैर्विधुतः ।
गुणपरिणद्धसूक्तिदृढकोणविघट्टनया रटति दिशामुखेषु यतिराजयशःपटहः ॥ ३५
इदंप्रथमसंभवत्कुमतिजालकूलङ्कषा मृषामतविषानलज्वलितजीवजीवातवः ।
क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तयश्चिरंतनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ ३६
सुधाशनसुदुर्ग्रहश्रुतिसमष्टिमुष्टिन्धयः कथाहवमसौ गताङ्कपटसौगतान्खण्डयन् ।
मुनिर्मनसि लक्ष्मणो मुदमुदञ्चयत्यञ्जसा मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥ ३७
कपर्दिमतकर्दमं कपिलकल्पनावागुरां दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ३८
कणादपरिपाटिभिः कपिलकल्पनानाटकैः कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैस्तदनुसारिजल्पैरपि प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ३९
कथाकलहकौतुकग्रहगृहीतकौतस्कुतप्रथाजलधिसंप्लवग्रसनकुम्भसंभूतयः ।
जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासनाप्रभावपरिपक्त्रिमप्रमितिभारतीसंपदः ॥ ४०
यतीश्वरसरस्वतीसुरभिताशयानां सतां वहामि चरणाम्बुजं प्रणतिशालिना मौलिना ।
तदन्यमतदुर्मदज्वलितचेतसां वादिनां शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥ ४१
भजस्व यतिभूपतेरनिदमादिदुर्वासनाकदध्वपरिवर्तनश्रमनिवर्तनीं वर्तनीम् ।
लभस्व हृदय स्वयं रथपदायुधानुग्रहद्रुतप्रहतिनिस्त्रुटद्दुरितदुर्वृतिं निर्वृतिम् ॥ ४२
कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तरग्रहिलमनसः पश्यन्त्वल्पां यतीश्वरभारतीम् ।
विकटसुरभिद्वक्षःपीठीपरिष्करणोचितः कुलगिरितुलारोहे भावी कियानिव कौस्तुभः ॥ ४३
स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं कुमतिफणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा ।
रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं लवणवणिजः कर्पूं(र्पू)रोद्धं किमित्यभिमन्वते ॥ ४४
वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखैर्वरतनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्त्वं गोपीजनस्य वशंवदं मदनकदनैर्न क्लिश्यन्ते यतीश्वरसंश्रयाः ॥ ४५
निगमपथिकच्छायाशाखी निराशमहानिधिर्महितविविधच्छात्रश्रेणीमनोरथसारथिः ।
त्रिभुवनतमःप्रत्यूषोऽयं त्रिविद्यशिखामणिः प्रथयति यतिक्ष्माभृत्पारावरीमविपर्ययाम् ॥ ४६
जडमतिमुधादन्तादन्तिव्यथौषधसिद्धयः प्रमितिनिधयः प्रज्ञाशालिप्रपालनयष्टयः ।
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदा यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्तयः ॥ ४७

प्रतिकलमिह प्रत्यक्तत्त्वावलोकनदीपिका यतिपरिबृढग्रन्थाश्चिन्तां निरन्तरयन्ति नः ।
अकलुषप(रि)रज्ञानौत्सुक्यक्षुधातुरदुर्दशापरिणतफलप्रत्यासीदत्फलेग्रहिसुग्रहाः ॥ ४८
मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभा मुमुक्षामक्षोभ्यां ददति मुनिवृन्दारकगिरः ।
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिषद्दिवाभीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥ ४९
निराबाधा बोधायनभणितिनिष्यन्दसुभगा विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः ।
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखैरनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम् ॥ ५०
विकल्पाटोपेन श्रुतिपथमशेषं विघटयन् यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।
वितण्डाहंकुर्वत्प्रतिकथकवेतण्डपृतनावियातव्यापारव्यतिमथनसंरम्भकलहः ॥ ५१
प्रतिष्ठा तर्काणां प्रतिपदमृचां धाम यजुषां परिष्कारः साम्नां परिपणमथर्वाङ्गिरसयोः ।
प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापसगिरां प्रसत्तिं संवित्तेः प्रदिशति यतीशानफणितिः ॥ ५२
हतावद्ये हृद्ये हरिचरणपङ्केरुहयुगे निबध्नन्त्यैकान्त्यं किमपि यतिभूभृत्फणितयः ।
शुनासीरस्कन्दद्रुहिणहरहेरम्बहुतभुक्प्रमेशादिक्षुद्रप्रणतिपरिहारप्रतिभुवः ॥ ५३
यथाभूतस्वार्था यतिनृपतिसूक्तिर्विजयते सुधासंदोहाब्धिः सुचरितविपक्तिः श्रुतिमताम् ।
कथाहप्यत्कौतस्कुतकलहकोलाहलहतत्रिवेदीनिर्वेदप्रशमनविनोदप्रणयिनी ॥ ५४
श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमने स्वपक्षस्थान्दोषान्वितथमतिरारोपयति यः ।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलं गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥ ५५
निरालोके लोके निरुपधिपरस्नेहभरितो यतिक्ष्माभृद्दीपो यदि न किल जाज्वल्यत इह ।
अहंकारध्वान्तं विजहति कथंकारमनघाः कुतर्कव्यालौघं कुमतिमतपातालकुहरम् ॥ ५६
यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किं ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे ।
निशाम्यन्तां यद्वा निजमतितिरस्कारविगमान्निरातङ्काष्टङ्कद्रमिडगुहदेवप्रभृतयः ॥ ५७
सुधासारं श्रीमद्यतिवरभुवः श्रोत्रकुहरे निषिञ्चन्ति न्यञ्चन्निगमगरिमाणः फणितयः ।
यदास्वादाभ्यासप्रचयमहिमोल्लासितधियां सदास्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥ ५८
यतिक्षोणीभर्तुर्यदिदमनिदंभोगजनताशिरःश्रेणीजुष्टं तदिह दृढबन्धं प्रभवति ।
अविद्यारण्यानीकुहरविहरन्मामकमनःप्रमाद्यन्मातङ्गप्रथमनिगलं पादयुगलम् ॥ ५९
सवित्री मुक्तानां सकलजगदेनःप्रशमनी गरीयोभिस्तीर्थैरुपचितरसा यामुनमुखैः ।
निरुच्छेदा निम्नेतरमपि समाप्लावयति मां यदृच्छाविक्षेपाद्यतिपतिदयादिव्यतटिनी ॥ ६०
चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः सिद्धान्ता न समिन्धते यतिवरग्रन्थानुसंधायिनि ।
मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः किं कुल्यां कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम् ॥ ६१
वन्दे तं यमिनां धुरंधरमहं मानान्धकारद्रुहा पन्थानं परिपन्थिनां निजदृशा रुन्धानमिन्धानया ।
दत्तं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः काले नः करिशैलकृष्णजलदः काङ्क्षाधिकं वर्षति ॥ ६२

काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी ।
यत्प्रख्यापिततीर्थवर्धितधियामभ्यस्यतां यद्गुणान् आसिन्धोरनिदंप्रदेशनियता कीर्तिः प्रजागर्ति नः ॥ ६३
लिप्से लक्ष्मणयोगिनः पदयुगं रथ्यापरागच्छटारक्षारोपणधन्यसूरिपरिषत्सीमन्तसीमान्तिकम् ।
भिक्षापर्यटनक्षणेषु विभरांचक्रे गलत्किल्बिषा यद्विन्यासमिषेण प(द्म)त्रमकरीमुद्रां समुद्राम्बरा ॥ ६४
नानातन्त्रविलोभितेन मनसा निर्णीतदुर्नीतिभिः कष्टं कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशिकैः ।
व्यासो हासपदीकृतः परिहृतः प्राचेतसश्चेतसः क्लृप्तः केलिशुकः शुकः स च मुधावाधाय बोधायनः ॥ ६५
अध्यर्या तिष्ठति मामिका मतिरसावाजन्मराजन्वती पत्या संयमिनामनेन जगतामत्याहितच्छेदिना ।
यत्सारस्वतदुग्धसागरसुधासिद्धौषधास्वादिनां प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥ ६६
शुद्धादेशवशंवदीकृतयतिक्षोणीशवाणीशतप्रत्यादिष्टबहिर्गतिः श्रुतिशिरःप्रासादमासीदति ।
दुग्धोदन्वदपत्यसंनिधिसदासामोददामोदरश्लक्ष्णालोकनदौर्ललित्यललितोन्मेषा मनीषा मम ॥ ६७
आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धा मतिस्तच्चाव्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतम् ।
को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटाशस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥ ६८
पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे मीमांसामांसलात्मा समजनिषि मुहुः सांख्ययोगौ समाख्यम् ।
इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थैरन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयं तनीयः ॥ ६९
गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ ७०
विष्वग्व्यापिन्यगाधे यतिनृपतियशःसंपदेकार्णवेऽस्मिन् श्रद्धाशुद्धावगाहैः शुभमतिभिरसौ वेङ्कटेशोऽभिषिक्तः ।
प्रज्ञादौर्जन्यगर्जत्प्रतिकथकवचस्तूलवातूलवृत्त्या सप्तत्या सारवत्या समतनुत सतां प्रीतिमेतां समेताम् ॥ ७१
आशामतङ्गजगणानविषह्यवेगान्पादे यतिक्षितिभृतः प्रसभं निरुन्धन् ।
कार्यः कथाहवकुतूहलिभिः परेषां कर्णे स एष कवितार्किकसिंहनादः ॥ ७२
उपशमितकुदृष्टिविप्लवानामुपनिषदामुपचारदीपिकेयम् । कबलितभगवद्विभूतियुग्मां दिशतु मतिं यतिराजसप्ततिर्नः ॥७३
करतलामलकीकृतस(त्क)त्पथाः श्रुतिवतंसितसूनृतसूक्तयः । दिवसतारकयन्ति समत्सरान् यतिपुरन्दरसप्ततिसादराः ॥७४

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु यतिराजसप्ततिः समाप्ता ॥ २६ ॥

---

## ॥ सव्याख्या न्यासविंशतिः ॥ २७, २८ ॥

**सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम् । डम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं दयालुं स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥ १ ॥**

श्रुतिस्मृत्यादितात्पर्यनिरूढा न्यासविंशतिः । स्वयं व्याक्रियतेऽस्माभिर्दिङ्मात्रेण सदिच्छया ॥

प्रपत्त्याद्यपरपर्यायां न्यासविद्यां संजिघृक्षुः तत्त्वज्ञानादिमुखेन तदधिकारहेतुभूतमाचार्यसङ्ग्रहणमाह **सिद्धमिति** । एतेषमाचार्यगुणानां प्रमाणानि * तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमित्यादीनि द्रष्टव्यानि । **समयनियतया**-यथाकालं प्रवृत्तया ; यद्वा धर्मज्ञसमयव्यवस्थितया । **जितविषयगणं** स्ववशेन्द्रियवर्गम् । सम्यग्ज्ञानार्थतया गुर्वभिगमनेऽपि स्वेच्छया प्रवर्तमानस्य नियमांशमात्रे विधिरिति ज्ञापनार्थम् ईप्सेदिति सन्प्रत्ययप्रयोगः॥

**अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वाज्जन्मप्रध्वंसिजन्मप्रदगरिमतया**
**दिव्यदृष्टिप्रभावात् । निष्प्रत्यूहानृशंस्यान्नियतरसतया नित्यशेषित्वयोगादाचार्यः सद्भिर-**
**प्रत्युपकरणधिया देववत्स्यादुपास्यः ॥ २ ॥**

एवम् *आचार्यवान् पुरुषो वेद, *आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्, *आचार्यवत्तया मुक्तावित्यादिप्रमाणानुसारादाचार्यवरणे सिद्धे *आचार्यदेवो भव *देवमिवाचार्यमुपासीत इत्यादिविहितं तत्सेवनमाह **अज्ञानेति** । अत्रोक्ता हेतवः आचार्ये भगवति च अन्वीयन्ते । **जन्मप्रध्वंसिजन्म**-विद्याजन्म । * ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते । प्रतिप्रदानमथवा दद्याच्छक्तित आदरात्'' इत्याद्यभिप्रेत्य **अप्रत्युपकरणधियेत्युक्तम्** ॥ २

**सद्बुद्धिः साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषी शुश्रूषुस्त्यक्तमानः प्रणिपतनपरः**
**प्रश्नकालप्रतीक्षः । शान्तो दान्तोऽनसूयुः शरणमुपगतः शास्त्रविश्वासशाली शिष्यः प्राप्तः**
**परीक्षां कृतविदभिमतं तत्त्वतः शिक्षणीयः ॥ ३ ॥**

सम्यगुपसन्ने सच्छिष्ये * तस्मै स विद्वानित्यादिविहितमाचार्यकृत्यमाह-**सद्बुद्धिरिति** । **अभिमतं**-मोक्षोपयुक्तमर्थजातम् ॥ ३

**स्वाधीनाशेषसत्तास्थितियतनफलं विद्धि लक्ष्मीशमेकं प्राप्यं नान्यं प्रतीया न च**
**शरणतया कंचिदन्यं वृणीयाः । एतस्मादेव पुंसां भयमितरदपि प्रेक्ष्य मोज्झीस्तदाज्ञा-**
**मित्येकान्तोपदेशः प्रथममिह गुरोरेकचित्तेन धार्यः ॥ ४ ॥**

मुक्तिकामस्य मूलमन्त्राद्यभिधेयतया शिक्षणीये प्रधानांशं तस्य च नित्यानुसन्धेयत्वमाह **स्वाधीनेति** ॥ ४

**मोक्षोपायार्हतैवं भवति भवभृतां कस्यचित्क्वापि काले तद्वद्भक्तिप्रपत्त्योरधिकृतिनिय-**
**मस्तादृशा स्यान्नियत्या । शक्ताशक्तादितत्तत्पुरुषविषयतः स्थाप्यते तद्व्यवस्था यच्चाहु-**
**स्तद्विकल्पः सम इति कतिचित्तत्फलस्याविशेषात् ॥ ५ ॥**

ईदृशोपदेशलब्धसम्यग्ज्ञानस्य पुरुषस्य *अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्, *मामेकं शरणं व्रज इत्यादिभिरपवर्गोपायतया विहितयोर्भक्तिप्रपत्त्योः अधिकारव्यवस्थामाह-**मोक्षोपायेति** ॥ ५

**सानुक्रोशे समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्टसिद्ध्यै लोकेऽप्येतत्प्रसिद्धं न च विमति-**
**रिह प्रेक्ष्यते क्वापि तन्त्रे । तस्मात्कैमुत्यसिद्धं भगवति तु भरन्यासविद्यानुभावं धर्मस्थे-**
**याश्च पूर्वे स्वकृतिषु बहुधा स्थापयांचक्रुरेवम् ॥ ६ ॥**

इत्थमधिकारिभेदाद्गुरुलघुविकल्पसम्भवेऽपि प्रपत्तिप्रभावे दुर्बलबुद्धीन् प्रत्याययति-**सानुक्रोश इति** । वायसवानरराक्षसद्रौपदीगजेन्द्रसुमुखत्रिशङ्कुशुनश्शेफाद्याख्यानैरिति शेषः । **धर्मस्थेयाः**-विवादगोचरधर्मनिर्णेतारः । **पूर्वे**-भगवद्यामुनादयः ॥ ६

**शास्त्रप्रामाण्यवेदी ननु विधिविषये निर्विशङ्कोऽधिकारी विश्वासस्याङ्गभावे पुनरिह विदुषा किं महत्त्वं प्रसाध्यम् । मैवं घोरापराधैः सपदि गुरुफले न्यासमात्रेण लभ्ये शङ्का पार्ष्णिग्रहार्हा शमयितुमुचिता हेतुभिस्तत्तदर्हैः ।। ७ ।।**

अस्त्वेवमशक्तिपरिहारेण सर्वशास्त्रार्थसाधारणो विश्वासः, प्रपत्तिलक्षणवाक्ये महत्त्वेन विशेषणं किमर्थमित्यनुभाष्य परिहरति-**शास्त्रप्रामाण्येति** । अर्थस्वभावेन शङ्काप्रकर्षसम्भवात् तन्निवृत्त्यै *विदितस्स हि धर्मज्ञः, *मित्रभावेन संप्राप्तं, *सकृदेव प्रपन्नायेत्यादिप्रसिद्धशरण्यगुणविशेषादिपरामर्शभूम्ना विश्वासप्रकर्षः सम्पाद्यमान इति भावः ।। ७

**नेहाभिक्रान्तिनाशो न च विमतिरिह प्रत्यवायो भवेदित्युक्तं कैमुत्यरीत्या प्रपदनविषये योजितं शास्त्रविद्भिः । तस्मात्क्षेत्रे तदर्हे सुविदितसमयैर्देशिकैः सम्यगुप्तं मन्त्राख्यं मुक्तिबीजं परिणतिवशतः कल्पते सत्फलाय ।। ८ ।।**

किमीदृशविश्वासापेक्षया गुरुतरया प्रपत्त्या? *सकृज्जप्तेन मन्त्रेण कृतकृत्यस्सुखी भवेत्, *प्रपत्तिवाचैव निरीक्षितुं वृणे इत्यादिप्रमाणसम्प्रदायैः शरणागतिमन्त्रोच्चारणमात्रेणैव मुक्तिस्सिद्ध्येदित्यत्राह-**नेहाभिक्रान्तिनाश** इति । **उक्तम्** कर्मयोगप्रकरण इति शेषः । *सकृदुच्चरितं येन हरिरित्यक्षरद्वयमित्यादिन्यायेनात्र मन्त्रोच्चारणादिकं यथावस्थितं प्रपत्त्यनुष्ठानमुत्पाद्य तन्मुखेनैव मुक्तिं साधयति; यथोक्तं सात्त्वततन्त्रे-*अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्त कर्तव्यः कृतकृत्यो भविष्यतीति ।। ८

**न्यासः प्रोक्तोऽतिरिक्तं तप इति कथितः स्वध्वरश्चास्य कर्ताऽहिर्बुध्न्योऽप्यन्ववादीदगणि दिविषदामुत्तमं गुह्यमेतत् । साक्षान्मोक्षाय चासौ श्रुत इह तु मुधा बाधशङ्का गुणाढ्ये तन्निष्ठो ह्यन्यनिष्ठान्प्रभुरतिशयितुं कोटिकोट्यंशतोऽपि ।। ९ ।।**

नन्वेवं प्रपत्तिरपि भक्तियोगद्वारेणैव मुक्तिहेतुस्स्यादित्याशङ्कायां *मुमुक्षुर्वै शरणमहं प्रपद्ये इति श्रुतिस्वारस्यसिद्धम् अव्यवहितमोक्षसाधनत्वं व्यञ्जकान्तरेणापि द्रढयति-**न्यासः प्रोक्त** इति । **प्रोक्तः** * तस्मान्न्यासमेषां तपसामतिरिक्तमाहुरिति वाक्येन कथितः । *यस्समिधेत्यारभ्य *यो नमसा स्वध्वर इत्यृगंशेनान्ववादीत्—ऋगर्थमन्वभाषत । यथा- *समित्साधनकादीनां यज्ञानां न्यासमात्मनः । नमसा योऽकरोद्देवे स स्वध्वर इतीरित इति । **अगणि** *एतद्वै देवानां गुह्यमित्यादिश्रुत्या । **तन्निष्ठ** इत्यादिना* सत्कर्मनिरताश्शुद्धा इत्युक्तः प्रपन्नप्रभावो विवृतः । यद्यपि * ओमित्यात्मानं युञ्जीत इति प्रणवकरणको न्यासः श्रुतः, तथाऽपि तदनर्हाणां तद्विरहेऽपि तन्त्रोक्तप्रकारेण तत्प्रयोगो युज्यत इत्यभिप्रायेण तन्निष्ठ इति सामान्योक्तिः । श्रुतिसिद्धेऽपि प्रपदने सामान्यधर्मभूतसत्यवचनन्यायात्सर्वाधिकारत्वं च न विरुद्धम् *सर्वस्य शरणं सुहृत्, * सर्वलोकशरण्यायेत्यादिष्वेतदभिप्रेतम् ।। ९

**नानाशब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यङ्न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात् । आख्यारूपादिभेदः श्रुत इतरसमः किंच भिन्नोऽधिकारः शीघ्रप्राप्त्यादिभिः स्याज्जगुरिति च मधूपासनादौ व्यवस्थाम् ।। १० ।।**

सन्तु भाष्योक्तभक्त्यङ्गभूतप्रपत्तिप्रशंसापराण्येतानि वाक्यानि; गुणोपसंहारपादे प्रपत्तेः स्वतन्त्रविद्यात्वस्थापनाभावात् अनन्यथासिद्धसामान्यन्यायाभावाच्चेति शङ्कायां प्रपदनस्य मोक्षं प्रति पृथगुपायत्वोपपादनं तत्रैव सुस्पष्टमित्याह-**नानाशब्दादिभेदा**दिति । **अभाक्तात्**-अनौपचारिकादित्यर्थः । सद्विद्यादहरविद्यादिषु शब्दभेदो हि तत्तद्गुणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यभिधायित्वरूपेणापाद्यः; इहतु यागदानहोमादिवदपर्यायतयैव व्युत्पत्तेस्सिद्धिरितिभावः।न्यासविद्येत्याख्या

अर्थस्वभावादत्राभिमतप्रदानसामर्थ्यविशिष्टपरनिरपेक्षरक्षकत्वरूपम् । आदिशब्देन परिकरप्रकरणयोर्ग्रहणम् । **इतरसमः** विद्यान्तरसमः । **किञ्चे**त्यादि प्राग्दर्शिताधिकारिभेदस्मारणम् । स्वातन्त्र्येण मोक्षोपायत्वेन सद्विद्यादेर्व्यावृत्त इहाधिकारो न स्यादिति शङ्कायां मधुविद्याद्युदाहरणम् । भाष्ये तु प्रपत्तेर्भक्त्यङ्गत्वोक्तिः न स्वातन्त्र्यविषयबाधिका, विषयभेदादुभयाकारयोगिषु क्वचिदन्यतरोक्तेरविरोधात् ॥ १०

**यत्किंचिद्रक्षणीयं तदवननिपुणे न्यस्यतोऽकिंचनस्य प्रस्पष्टं लोकदृष्ट्याऽप्यवगमित इह प्रार्थनाद्यङ्गयोगः । तस्मात्कर्माङ्गकत्वं व्यपनयति परापेक्षणाभाववादः साङ्गे त्वष्टाङ्गयोगव्यवहृतिनयतः षड्विधत्वोपचारः ॥ ११ ॥**

अङ्गत्वमेव प्रपत्तेरिति पक्षः परिहृतः। अथ स्वातन्त्र्येऽपि निरङ्गत्वपक्षं परिहरति-**यत्किञ्चिद्रक्षणीय**मिति । **अवगमितः** *तदेकोपायता याच्ञा प्रपत्तिः * अप्रार्थितो न गोपायेत् *शरणं च प्रपन्नानामित्यादिभिरिति शेषः। **तस्मा**दित्यादिना प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यत इत्यस्य निर्विषयत्वशङ्काव्युदासः । तथा षड्विधा शरणागतिरिति वचनात् आग्नेयादिषट्कवत् आनुकूल्यसङ्कल्पादिषट्कं सम्भूयैकं करणं स्यादित्यत्रोत्तरं-**साङ्गेत्वि**त्यादि । *न्यासः पञ्चाङ्गसंयुत इति व्यवस्थापकवचनानुगुणमङ्गाङ्गिसमुच्चयेन षड्विधत्ववचनं नेयमिति भावः ॥ ११

**पञ्चाप्यङ्गान्यभिज्ञाः प्रणिजगुरविनाभावभाञ्जि प्रपत्तेः कैश्चित्संभावितत्वं यदिह निगदितं तत्प्रपत्त्युत्तरं स्यात् । अङ्गेष्वङ्गित्ववादः फलकथनमिह द्वित्रिमात्रोक्तयश्च प्राशस्त्यं तत्रतत्र प्रणिदधति ततः सर्ववाक्यैककण्ठ्यम् ॥ १२ ॥**

एवमङ्गाङ्गिविभागस्सिद्धः। तत्रावान्तरवैयाकुलीं शमयति-**पञ्चाप्यङ्गानी**ति । प्रपत्तिदशायां प्रातिकूल्यवर्जनाद्यभावे साङ्गस्योपायस्य वैकल्यात्, पश्चात्तु प्रातिकूल्यादिसंभवेऽपि कृतस्य उपायस्य न वैकल्यं, किंतु प्रत्यवायान्तरपरिहारार्थं यथार्हं प्रतिविधानमेव कार्यम्; *तथा पुंसामविस्रम्भात् प्रपत्तिः प्रच्युता भवेत् इत्येतदपि तात्कालिकविस्रम्भवैकल्याभिप्रायम्; उत्तरकाले सतोऽसतोऽपि विश्वासस्य पूर्वकृतप्रपत्त्यङ्गत्वाभावेन तद्विरहे प्रपत्तिप्रच्यवनायोगात् । एवञ्च ब्रह्मास्त्रन्यायदृष्टान्तोऽप्यत्र योग्यांशे स्थाप्यः; अन्यथा अतिप्रसङ्गात् । एतेन *उपायापायसंयोगे निष्ठया हीयतेऽनयेत्येतदपि गतार्थम्; तात्कालिकोपायापायसंयोगस्य प्रपत्तिविरोधित्वे तात्पर्यात् । न चानुकूल्यसङ्कल्पस्याङ्गत्वेन श्रवणात् सङ्कल्पितकरणमप्यङ्गं, तथा श्रुत्यभावात् यथाश्रुति सङ्कल्पमात्रस्याङ्गत्वे सङ्कल्पितकरणस्याङ्गत्वकल्पनानुपपत्तेश्च । कृत्याकरणरूपापायानिवृत्तिस्तु स्वतन्त्रविधेरेव सिध्यतीति नोपप्लवावकाशः । * आनुकूल्येतराभ्यां तु विनिवृत्तिरपायत इत्यनेनापि अपायनिवृत्तौ सङ्कल्पादिविशेषस्य तात्कालिक उपयोगः प्रदृश्यते । अत्रानुकूल्यशब्दो हि तत्सङ्कल्पप्रतिपादनपरः, * आनुकूल्यस्य सङ्कल्प इत्यादिसिद्धानुवादात्। न चोपायापायेत्यादौ प्रपत्तिनिष्ठाहानिर्विवक्षिता, किन्तूपायापायत्यागविशिष्टमध्यमवृत्तिहानिः, विशेषणाभावेऽपि हि विशिष्टाभावस्सिध्यति ; अत एव हि तत्र * अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेदित्यादिना तावन्मात्रनिमित्तत्वे प्रायश्चित्तमेव विधीयते, न तु पूर्वकृतां प्रपत्तिं प्रच्युतामभिप्रेत्य तत्फलार्थं पुनः प्रपत्तिः ॥

**रक्षापेक्षा स्वसाध्यप्रणयवति भरन्यास आज्ञादिदक्षे दृष्टा नात्र प्रपत्तिव्यवहृतिरिह तन्मेलने लक्षणं स्यात् । गेहागत्यादिमात्रे निपततु शरणागत्यभिख्योपचाराद्यद्वाऽनेकार्थभावाद्भवति च विविधः पालनीयत्वहेतुः ॥ १३ ॥**

प्रस्तुतमुख्योपचारप्रयोगव्यवस्थापनाय प्रपत्तिलक्षणं शोधयति **रक्षापेक्षेति** । प्रणयोऽत्र याच्ञा । आदिशब्देन स्मृतिप्रदानादिसङ्ग्रहः।**अनेकार्थभावात्**-शरणशब्दस्यानेकार्थरूढत्वादित्यर्थः। प्रपदनरूपत्वाभावेऽपि केषाञ्चिद्गृहागमनादीनां रक्ष्यताहेतुत्वं प्रसिद्धमित्यभिप्रेत्य **भवति** चेत्यादिकमुक्तम् ॥ १३

**आत्मात्मीयस्वरूपन्यसनमनुगतं यावदर्थं मुमुक्षोस्तत्त्वज्ञानात्मकं तत्प्रथममथ विधेः स्यादुपाये समेतम् । कैङ्कर्याख्ये पुमर्थेऽप्यनुषजति तदप्यर्थनाहेतुभावात्स्वाभीष्टानन्यसाध्यावधिरिह तु भरन्यासभागोऽङ्गिभूतः ॥ १४ ॥**

एवं लौकिकवैदिकसर्वप्रपत्तीनां साधारणरूपमुक्तम् । अथ मोक्षैकप्रयोजनायां मुक्तप्रपत्तौ सर्वनिवृत्तिधर्मसाधारणं स्वाभाविकपरशेषत्वाभिमानरूपं विशेषमाह-**आत्मात्मीयेति** । **आत्मीयम्** उपायफलादि।आत्मा चात्मीयाश्च यावन्तोऽर्थाः प्रमाणसिद्धाः तावतां सर्वेषां भगवच्छेषत्वानुसन्धानं कार्यम् । तच्चानुसन्धानमुपायदशायामपि निवृत्तिधर्मविधिस्वाभाव्यादनुवर्तते । इह चामुत्र च स्वयंप्रयोजनकैङ्कर्ये स्वत एव भवति; अङ्गिभूतो भरन्यासांशस्तु न यावदर्थम्, किन्तु यावदनन्यसाध्यं स्वाभीष्टं तावत्येव भवतीत्यर्थः ॥ १४

**न्यासादेशेषु धर्मत्यजनवचनतोऽकिंचनाधिक्रियोक्ता कार्पण्यं वाऽङ्गमुक्तं भजनवदितरापेक्षणं वाऽप्यपोढम् । दुःसाधेच्छोद्यमौ वा क्वचिदुपशमितावन्यसंमेलने वा ब्रह्मास्त्रन्याय उक्तस्तदिह न विहतो धर्म आज्ञादिसिद्धः ॥ १५ ॥**

सर्वशक्तौ भरं न्यस्यतः सर्वधर्मत्यागवचनात् वर्णाश्रमादिधर्मरूपमाज्ञाकैङ्कर्यं तदनुविद्धमनुज्ञाकैङ्कर्यं च न स्यातामित्यत्राह **न्यासादेशेष्विति**।**क्वचित्**-चपलत्वादशक्यप्रवृत्ते कस्मिंश्चिदधिकारिणि।**अन्यसंमेलने** प्रपत्त्यङ्गव्यतिरिक्तानां तदर्थतया स्वीकृतौ । **तत्** तस्मात् । धर्माणां स्वरूपत्यागस्य प्रपत्त्यङ्गत्वाभावात् तेषां प्रपत्त्यर्थत्वेनाप्रतिपादनाच्चेत्यर्थः।सर्वधर्मपरित्यागवचनस्यात्र सर्वाविरुद्धेष्वर्थान्तरेषु सम्भवत्सु तद्विपरीतार्थकथनमयुक्तमिति भावः।एतेनालेपकादिपक्षाश्च प्रतिक्षिप्ताः।

**आदेष्टुं स्वप्रपत्तिं तदनुगुणगुणाद्यन्वितं स्वं मुकुन्दो मामित्युक्त्वैकशब्दं वदति तदुचितं तत्र तात्पर्यमूह्यम् । तत्प्राप्यप्रापकैक्यं सकलफलदतां न्यासतोऽन्यानपेक्षां प्राधान्याद्यं च किंचित्प्रथयति स परं श्रीसखे मुक्त्युपाये ॥ १६ ॥**

ननु यदि प्रपत्तिरुपायस्स्यात् तदा हि अङ्गित्वं केषांचिदङ्गत्वं च वक्तव्यम् ; सा तु तत्तद्वाक्येषूपायतयोक्तस्य शरण्यस्य विशेषणतया प्रयुक्तैरेकादिशब्दैः उपायबुद्ध्यनर्हत्वेन व्यवच्छिद्यते तस्मात्पूर्वोक्तं सर्वमयुक्तमित्यत्राह-**आदेष्टुमिति**। तद्विध्यनुरोधेन नेतव्यत्वादिति भावः । अन्यथाऽप्युपपन्ने सिद्धोपायस्यैक्यं प्रपत्तेस्तत्प्रसादोपायत्वं न विरुन्ध्यादितिभावः । एवं निर्विशेषाद्वैतबुद्धिविधानादिपक्षाश्चात्र निरस्ता वेदितव्याः ॥ १६

**स्वाभीष्टप्राप्तिहेतुः स्वयमिह पुरुषैः स्वीकृतः स्यादुपायः शास्त्रे लोके च सिद्धः स पुनरुभयथा सिद्धसाध्यप्रभेदात् । सिद्धोपायस्तु मुक्तौ निरवधिकदयः श्रीसखः सर्वशक्तिः साध्योपायस्तु भक्तिर्न्यसनमिति पृथक्तद्वशीकारसिद्ध्यै ॥ १७ ॥**

उक्तार्थस्थिरीकरणाय सामान्यत उपायशब्दार्थं सिद्धसाध्योपायविशेषौ तत्प्रयोजनं च विभजते-**स्वाभीष्टेति**॥

**अत्यन्ताकिञ्चनोऽहं त्वदपचरणतः संनिवृत्तोऽद्य नाथ त्वत्सेवैकान्तधीः स्यां त्वमसि शरणमित्यध्यवस्यामि गाढम् । त्वं मे गोपायिता स्यास्त्वयि निहितभरोऽस्म्येवमित्य-र्पितात्मा यस्मै स न्यस्तभारः सकृ(दिति)दथ तु सदा न प्रयस्येत्तदर्थम् ॥ १८ ॥**

समर्थितमेव साङ्गभरन्यासं यथावदनुष्ठानाय मुखभेदेन शिक्षयन् तद्विषयं कर्तव्यशेषं नास्तीत्याह-**अत्यन्तेति** । यस्मै प्रयोजनायेति शेषः । सकृदित्यनेन उपासनवदस्यावृत्तिसापेक्षत्वं नास्तीत्युच्यते । सकृत्कृतश्शास्त्रार्थ इत्यस्यात्रापवादो नास्ति, प्रत्युत * सकृदेवेत्यादिः अनुग्रह एव । **सदा** यावत्फलप्राप्तीत्यर्थः । ननु न्यासनिष्ठमेव * तस्यैवं विदुष इति परामृश्य तत्कर्तव्यत्वेन पुरुषविद्याऽऽम्नाता; सा च *यन्मरणं तदवभृथ इत्यन्ता यज्ञदृष्टिरूपा च; अतो यावज्जीवं तदर्थं कर्तव्यस्य विधीयमानत्वात् न प्रयस्येत्तदर्थमित्यनुपपन्नम् । मैवम्; तत्रापि हि न्यस्तभरस्य कर्तव्यान्तरनैरपेक्ष्यमेव विवक्षितम् । यदि तु प्रस्तुतविद्याङ्गतयाऽत्र यज्ञक्लृप्तिर्विधीयते तर्हि दर्शपूर्णमासादीनां क्लृप्तिर्न वाच्या, तेषां यज्ञोपयोगित्वाभावात् । अश्रुतापूर्वतदन्वितयज्ञान्तरकल्पनं शास्त्रार्थदृष्टिविधित्वकल्पनञ्चात्यन्तगौरवोपहतम् । एकस्यावभृथात्पूर्वमन्येषां क्लृप्तिश्चानुपपन्ना । तस्मात् * एवं शरणमभ्येत्य भगवन्तं सुदर्शनम् । अनुष्ठितक्रतुशतो भवत्येष न संशय इतिवत् यज्ञादिकं सर्वमस्य स्वतस्सम्पन्नं भवतीति स्तुतिमात्रे तात्पर्यं ग्राह्यम् । शारीरकभाष्यमपि एतदविरोधेन भाव्यम् ॥ १८

**त्यक्त्वोपायानपायानपि परमजहन्मध्यमां स्वार्हवृत्तिं प्रायश्चित्तं च योग्यं विगत-ऋणततिर्द्वन्द्ववात्यां तितिक्षुः । भक्तिज्ञानादिवृद्धिं परिचरणगुणान्सत्समृद्धिं च युक्तां नित्यं याचेदनन्यस्तदपि भगवतस्तस्य यद्वाऽऽप्तवर्गात् ॥ १९ ॥**

कृतकृत्यस्योत्तरदशायां स्वाधिकाराद्यनुगुणं त्याज्यं स्वतन्त्रविधिप्राप्तं कर्तव्यमनुसन्धेयं प्रार्थनीयञ्च संगृह्णाति-**त्यक्त्वेति**।**उपायान्**-काम्यधर्मान् **अपायान्**-प्रत्यवायहेतून् । **परं**-केवलंप्रपत्त्युत्तरं वा । **मध्यमाम्**-उपायापायवर्गानन्विताम् । **स्वार्हवृत्तिं**-नित्यरूपां तत्समाननैमित्तिकरूपाञ्च वृत्तिम् । *अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत् । प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत्-इत्युक्तमाह-**प्रायश्चित्तञ्च योग्यमिति** । अजहदित्यनुषज्यते । *देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन् इत्याद्युक्तं सूचयति–**विगतऋणततिरिति** । ब्रह्मचर्यादिभिरपाकर्तव्यं भगवत्प्रपन्नस्य प्रपत्त्यैवापाकृतं देवयज्ञादिकं त्वस्य मध्यमवृत्त्यनुप्रविष्टं कैङ्कर्यमिति भावः । द्वन्द्वतितिक्षावचनंप्रारब्धकर्मक्षयदर्शनजनितप्रीतिसूचकम्, अव्याकुलकैङ्कर्योपादानार्थञ्च। **परिचरणगुणान्**-कैङ्कर्योपकरणभूतान् गन्धपुष्पादीन्; यद्वा फलसङ्गत्यागादीन्।सत्समृद्धिरपि कैङ्कर्यानुपयुक्ता न याच्येत्यभिप्रायेण **युक्तामि**त्युक्तम् । भगवत इत्यादिना देवान्तरेभ्यस्तदीयेभ्यश्च भक्त्यादिकमपि न याच्यमिति सूच्यते ॥ १९

**आज्ञाकैङ्कर्यवृत्तिष्वनघगुरुजनप्रक्रियानेमिवृत्तिः स्वार्हानुज्ञातसेवाविधिषु च शकने यावदिष्टं प्रवृत्तः । कर्म प्रारब्धकार्यं प्रपदनमहिमध्वस्तशेषं द्विरूपं भुक्त्वा स्वाभीष्टकाले विशति भगवतः पादमूलं प्रपन्नः ॥ २० ॥**

उक्तप्रकारस्याधिकारिणः स्वाभिमतकाले परमफलप्राप्तिमाह-**आज्ञेति** । प्रपत्त्यङ्गत्वाभावेऽपि *विहितत्वाच्चाश्रमकर्मापीति न्यायेन स्वतन्त्राधिकारसिद्धेः शक्तस्यास्य कर्तव्यमाज्ञाकैङ्कर्यमकरणे प्रत्यवायरहितमनुज्ञाकैङ्कर्यम् । **द्विरूप**मिति–पुण्यपापरूपमित्यर्थः ॥ २०

**श्रुत्या स्मृत्यादिभिश्च स्वयमिह भगवद्वाक्यवर्गैश्च सिद्धां स्वातन्त्र्ये पारतन्त्र्येऽप्य-
नितरगतिभिः सद्भिरास्थीयमानाम् । वेदान्ताचार्य इत्थं विविधगुरुजनग्रन्थसंवादवत्या
विंशत्या न्यासविद्यां व्यवृणुत सुधियां श्रेयसे वेङ्कटेशः ॥ २१ ॥**

परमपुरुषार्थसाधिनीं भगवत्प्रपत्तिं प्रमाणतः प्रभावतः प्रवक्तृतश्च विशिंषन् तद्विषयग्रन्थनिर्माणप्रयोजनञ्च प्रतिपादयति-**श्रुत्येति** । *यो ब्रह्माणं विदधाति पूर्वमित्यादिकया श्रुत्या, *देवानां दानवानां च *शरण्यं शरणञ्च त्वां, *शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिता इति स्मृत्यादिभिश्च, *स्थिते मनसि सुस्वस्थे, *सकृदेव प्रपन्नाय, *सर्वधर्मान् परित्यज्य इत्यादिभिः भगवद्वाक्यवर्गैश्च । **सिद्धां**-प्रमितामित्यर्थः।आप्ततमत्वसूचनाय अत्र भगवच्छब्दः । **स्वातन्त्र्ये पार-तन्त्र्येऽपि**-अव्यवधानेन व्यवधानेन वा मुक्तिसाधनत्वे, यद्वा स्वतन्त्राङ्गत्वविवादेऽपीत्यर्थः।**गुरुजनग्रन्थाः**-स्तोत्रगद्यादयः॥

**संसारावर्तवेगप्रशमनशुभदृग्देशिकप्रेक्षितोऽहं संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य
शान्ताभिसन्धिः । निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्रा(र्थ्य)प्य संरक्षकं त्वां न्यस्य
त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥ २२ ॥**

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु न्यासविंशतिः समाप्ता ॥ २७ ॥

---

उक्तमुपायं सुखग्रहणाय स्वानुष्ठानमुखेन निगमयति-**संसारेति** । अत्र सर्वशक्तौ परमकारुणिके सर्वाभिमतवर-प्रदे संन्यस्तभरत्वान्निर्भयत्वसिद्धिः । अयमत्र मुमुक्षोरनुशासनीयसंग्रहः-सदाचार्योपसत्तिपूर्वकं समन्त्रकं सम्यग्ज्ञानं सम्पाद्य गुरुतरोपायान्तरनिष्पादनाद्यनुगुणज्ञानशक्त्यादिविरहान्निर्विण्णः स्वशक्यस्तुतिकर्तव्यलघूपायपरामर्शे प्रत्यवस्थापितः फल-सङ्गकर्तृत्वत्यागयुक्तसाङ्गभरन्यासेन कृतकृत्यः स्वीकृतभरं श्रियःपतिमवलोक्य निर्भरो निर्भयश्च स्वयंप्रयोजनकैङ्कर्येण सुखं वर्तेत इति ॥ २२

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु न्यासविंशतेर्व्याख्या समाप्ता ॥ २८ ॥

---

## ॥ वैराग्यपञ्चकम् ॥ २९ ॥

क्षोणीकोणशतांशपालनकलादुर्वारगर्वानलक्षुभ्यत्क्षुद्रनरेन्द्रचाटुरचनाधन्यान्न मन्यामहे ।
देवं सेवितुमेव निश्चिनुमहे योऽसौ दयालुः पुरा धानामुष्टिमुचे कुचेलमुनये दत्ते स्म वित्तेशताम् ॥ १

सिलं किमनलं भवेदनलमौदरं बाधितुं पयः प्रसृतिपूरकं किमु न धारकं सारसम् ।
अयत्नमलमल्लकं पथि पटच्चरं कच्चरं भजन्ति विबुधा मुधा ह्यहह कुक्षितः कुक्षितः ॥ २

ज्वलतु जलधिक्रोडक्रीडत्कृपीडभवप्रभाप्रतिभटपटुज्वालामालाकुलो जठरानलः ।
तृणमपि वयं सायंसंफुल्लमल्लिमतल्लिकापरिमलमुचा वाचा याचामहे न महीश्वरान् ॥ ३

दुरीश्वरद्वारबहिर्वितर्दिकादुरासिकायै रचितोऽयमञ्जलिः । यदञ्जनाभं निरपायमस्ति मे धनञ्जयस्यन्दनभूषणं धनम् ॥ ४

शरीरपतनावधि प्रभुनिषेवणापादनादबिन्धनधनञ्जयप्रशमदं धनं दन्धनम् ।
धनञ्जयविवर्धनं धनमुदूढगोवर्धनं सुसाधनमबाधनं सुमनसां समाराधनम् ॥ ५
नास्ति पित्राऽऽर्जितं किञ्चिन्न मया किञ्चिदार्जितम् । अस्ति मे हस्तिशैलाग्रे वस्तु पैतामहं धनम् ॥ ६

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु वैराग्यपञ्चकं समाप्तम् ॥ २९ ॥

---

# ॥ द्रमिडोपनिषत्तात्पर्यरत्नावलिः ॥ ३० ॥

सारः सारस्वतानां शठरिपुभणितिः शान्तिशुद्धान्तसीमा मायामायामिनीभिः स्वगुणवितितिभिर्बन्धयन्तीं धयन्ती ।
पारं पारम्परीतो भवजलधिभवन्मज्जनानां जनानां प्रत्यक्प्रत्यक्षयेन्नः प्रतिनियतरमासन्निधानं निधानम् ॥ १
प्रज्ञाख्ये मन्थशैले प्रथितगुणरुचिं नेत्रयन् संप्रदायं तत्तल्लब्धिप्रसक्तैरनुपधिविबुधैरर्थितो वेङ्कटेशः ।
तल्पं कल्पान्तयूनःशठजिदुपनिषद्दुग्धसिन्धुं विमथ्नन् ग्रथ्नाति स्वादुगाथालहरिदशशतीनिर्गतं रत्नजातम् ॥ २
पाञ्चालीगात्रशोभाहृतहृदयवधूवर्गपुम्भावनीत्या पत्यौ पद्मासहाये प्रणयिनि भजतः प्रेयसीपारतन्त्र्यम् ।
भक्तिः शृङ्गारवृत्त्या परिणमति मुनेर्भावबन्धप्रथिम्ना योगात्प्रागुत्तरावस्थितिरिह विरहो देशिकास्तत्र दूताः ॥ ३
भाषागीतिः प्रशस्ता भगवति वचनाद् राजवच्चोपचारात् सा चागस्त्यप्रसूता त्विति परिजगृहे भूमिकाभेदयोग्या ।
यत्तत्कृत्यं श्रुतीनां मुनिगणविहितैः सेतिहासैः पुराणैस्तत्रासौ सत्त्वसीम्नः शठमथनमुनेः संहिता सार्वभौमी ॥ ४
आदौ शारीरकार्थक्रममिह विशदं विंशतिर्वक्ति साम्ना संक्षेपोऽसौ विभागं प्रथयति च ऋचां चारुपाठोपपन्नम् ।
सम्यग्गीतानुबद्धं सकलमनुगतं सामशाखासहस्रं संलक्ष्यं साभिधेयैर्यजुरपि दशकैर्भात्यथर्वाररसैश्च ॥ ५
प्राच्ये सेव्यानुगुण्यात्प्रभुमिह शतकेऽमंस्त मुक्तेरुपायम् मुक्तप्राप्यं द्वितीये मुनिरनुबुबुधे भोग्यताविस्तरेण ।
प्राप्यत्वोपायभावौ शुभसुभगतनोरित्यवादीत्तृतीयेऽनन्यप्राप्यश्चतुर्थे समभवदितरैरप्यनन्याद्युपायः ॥ ६
देवः श्रीमान् स्वसिद्धेः करणमिति वदन्नेकमर्थं सहस्रे सेव्यत्वादीन् दशार्थान् पृथगिह शतकैर्वक्ति तत्स्थापनार्थान् ।
ऐकैकश्यात्परत्वादिषु दशकगुणेष्वायतन्ते तथा ते तत्तद्गाथागुणानामनुविदधति तत्पङ्क्तयः पङ्क्तिसङ्ख्याः ॥ ७
सेव्यत्वात् भोग्यभावात् शुभतनुविभवात् सर्वभोग्याधिकत्वात् श्रेयस्तद्धेतुदानात् श्रितविवशतया स्वाश्रितानिष्टहृत्त्वात् ।
भक्तच्छन्दानुवृत्तेः निरुपधिकसुहृद्भावतः सत्पदव्यां साहाय्याच्च स्वसिद्धेः स्वयमिह करणं श्रीधरः प्रत्यपादि ॥ ८
ब्रूते गाथासहस्रं मुरमथनगुणस्तोमगर्भं मुनीन्द्रः प्रत्येकञ्चात्र गाथाः प्रथितविभुगुणाः स्पष्टमध्यक्षयामः ।
तत्रासङ्कीर्णतत्तद्दशकगुणशतस्थापनौचित्ययुक्तान् ऐदम्पर्याविरुद्धानगणितगुणितान् तद्गुणानुद्गृणीमः ॥ ९
इच्छासारथ्यसत्यापितगुणकमलाकान्तगीतान्तसिध्यच्छुद्धान्ताचारशुद्धैरियमनघगुणग्रन्थिबन्धानुबद्धा ।
तत्ताद्दक्ताम्रपर्णीतटगतशठजिद्दृष्टसर्वीयशाखागाथातात्पर्यरत्नावलिरखिलभयोत्तारिणी धारणीया ॥ **इत्यवतारिका** ॥ १०
निस्सीमोद्यद्गुणत्वात् अमितरसतयाऽनन्तलीलास्पदत्वात् स्वायत्ताशेषसत्तास्थितियतनभिदावैभवात् वैश्वरूप्यात् ।
त्र्यक्षब्रह्मात्मभावात् सदसदवगतेः सर्वतत्त्वेषु पूर्तेः पश्यन् योगी परं तत्पदकमलनतावन्वशादात्मचित्तम् ॥ (1-1) ११

स्वामित्वात् सुस्थिरत्वात् निखिलनिरुपधिस्वात्मविद्ग्राह्यभावात् तादृक्सर्वानुकूल्यात् च्यवनवदितरप्राप्यवैषम्यवत्त्वात् ।
सर्वत्रापक्षपातात् शुभविभवतया मानसाद्यर्च्यभावात् सङ्कोचोन्मोचकत्वात् जगदवनतयोपादिशत्सर्वयोग्यम् ॥ (1-2) १२
बन्धार्हत्वात् स्वभक्तैरधिकतरगुणानन्तदिव्यावतारात् सर्वेष्वासक्तिमत्त्वात् नतसुगमतया स्वप्रबोधप्रदत्वात् ।
ख्याताभिख्यादिचिह्नात्स्वरुचिवितरणात्सर्वकालाश्रयत्वाच्छर्वादेःस्वाङ्गदानात्प्रहितपदतयाऽनन्तसौलभ्यमाह ॥ (1-3) १३
त्राणे बद्धध्वजत्वात् शुभनयनतया स्वार्थलाभेऽर्थिभावात् तिम्यन्मेवस्वभावात् जगदुपजननस्थापनातिप्रियत्वात् ।
कारुण्याप्तत्वयोगादनुगतमहिषीसन्निधेः सङ्गदैर्घ्यात् नानाबन्धैः स्वरक्षावहिततमतया क्षाम्यतीत्याह कृष्णम् ॥ (1-4) १४
सद्ध्रीभव्यान् सुवाचस्सुचरितसुभगान् कृष्णसारूप्यसौम्यान् स्वाहारोदारशीलान् तनुधृतभगवल्लक्ष्मणो बाल्यगुप्तान् ।
छात्रस्वच्छन्दवृत्तीनभिगतशिशिरानन्तरङ्गोक्तियोग्यानाचार्यान् कृष्णलब्धावव्रुणुत शठजित्प्रेयसीदूतनीत्या ॥ (1-4) १५
क्षुद्राह्वानाभिमुख्यात् निजमहिमतिरस्कारकार्चाप्रियत्वात् सर्वत्राप्यङ्घ्रिदानात् सविधशयनतः स्वाङ्घ्रिसक्तैकरस्यात् ।
गोपाद्यातेरशेपेक्षणविषयतया भक्तवस्तुप्रसक्तेः श्लिष्यन्नाशव्यपोहात् तदहितशमनात्प्राह नाथं सुशीलम् ॥ (1-5) १६
अक्रीतैरर्च्यभावात् अनियतविविधाभ्यर्चनात् अल्पतुष्टेः प्रह्वावर्ज्येशभावात् स्वविषयनियतेष्वादरात् स्वादुभूम्ना ।
पादासक्तप्रसक्तेःसकृदुपसदने मोक्षणात् धर्मसौस्थ्यात् क्षिप्रक्षिप्ताहितत्वात् सुकरभजनतां माधवस्याभ्यधत्त ॥ (1-6) १७
सच्चित्ताकर्षहेतोरघशमननिधेर्नित्यभोग्यामृतस्य त्यागे हेतूज्झितस्य प्रवहदुपकृतेर्दुस्त्यजस्वानुभूतेः ।
त्यागाकाङ्क्षानिरोद्धुःश्रितहृदयपृथक्कारनित्याक्षमस्य स्वात्मश्लिष्टस्य गायत्प्रमहरयशसः सेवनं स्वाद्ववोचत् ॥ (1-7) १८
सूरीणां स्वैरसेव्ये स्वयमवतरति क्षुद्रदिव्यैकनेत्रे गोपायर्थं धृताद्रौ श्रिततनुरसिके वामनीभावदृश्ये ।
सच्चित्तानन्यवृत्तौ विभवसमतनौ स्वायुधारूढहस्ते नीचोच्चग्राह्यपादे निरुपधिमृजुतां नीरवर्णे जगाद ॥ (1-8) १९
पर्यन्तेऽत्के च दृष्टं स्वविरहविधुरं डिम्भवत्पार्श्वलीनं चित्ते क्लृप्तप्रवेशं भुजशिखरगतं तालुसिंहासनस्थम् ।
चक्षुर्मध्ये निविष्टं स्थितमलिकतटे मस्तके तस्थिवांसं प्रत्याहारोक्तरीत्या विभुमनुबुभुजे सात्म्यभोगप्रदानात् ॥ (1-9) २०
विष्वक्विक्रान्तिदृश्यं विगणनसुलभं व्यक्तपूर्वोपकारं स्वान्तस्यैकाग्र्यहेतुं स्वयमुदयजुषं बन्धमात्रोपयातम् ।
चिन्तास्तुत्यादिलक्ष्यं नतजनसततश्लेषिणं दर्शितार्चं स्मृत्यै चित्ते निषण्णं स्ववितरणमहौदार्यतुष्टोऽभ्यचष्ट ॥ (1-10) २१
आदावित्थं परत्वात् अखिलसमतया भक्तसौलभ्यभूम्ना निश्शेषागस्सहत्वात् कृपणसुघटनाच्छक्यसंराधनत्वात् ।
स्वादुस्वोपासनत्वात् प्रकृतिऋजुतया सात्म्यभोगप्रदत्वात् अव्याजोदारभावादमनुत शतके माधवं सेवनीयम् ॥ (शतकं 1)

॥ अथ द्वितीयशतकम् ॥ வாயுந்திரையுகளும்.

निद्रादिच्छेदकत्वात् अरतिजननतोऽजस्रसंक्षोभकत्वात् अन्वेष्टुं प्रेरकत्वात् विलयवितरणात् कार्श्यदैन्यादिकृत्त्वात् ।
चित्ताक्षेपाद्विसंज्ञीकरणत उपसंशोषणावर्जनाभ्यां दृष्टास्वादस्य शौरेः क्षणविरहदशादुस्सहत्वं जगाद ॥ (2-1) २३
पूर्णैश्वर्यावतारं भवदुरितहरं वामनत्वे महान्तं नाभीपद्मोत्थविश्वं तदनुगुणदृशं कल्पतल्पीकृताब्धिम् ।
सुप्तं न्यग्रोधपत्रे जगदवनधियं रक्षणायावतीर्णं रुद्रादिस्तुत्यलीलं व्यवृणुत ललितोत्तुङ्गभावेन नाथम् ॥ (2-2) २४
चित्रास्वादानुभूतिं प्रियमुपकृतिभिः दास्यसारस्यहेतुं स्वात्मन्यासार्हकृत्यं भजदमृतरसं भक्तचित्तैकभोग्यम् ।
सर्वाक्षप्रीणनार्हं सपदि बहुफलस्नेहमास्वाद्यशीलं सभ्यैः साध्यैस्समेतं निरविशदनघाश्लेषनिर्वेशमीशम् ॥ (2-3) २५

प्रह्लादार्थे नृसिंहं क्षपितविपदुषावल्लभं क्षिप्तलङ्कं क्ष्वेलप्रत्यर्थिकेतुं श्रमहरतुलसीमालिनं धैर्यहेतुम् ।
त्राणे दत्तावधानं स्वरिपुहृतिकृताश्वासनं दीप्तहेतिं सत्प्रेक्षारक्षितारं व्यसननिरसनव्यक्तकीर्तिं जगाद ॥ (2-4) २६
स्वप्राप्त्या सिद्धकान्तिं सुघटितदयितं विस्फुरत्तुङ्गमूर्तिं प्रीत्युन्मेषातिभोग्यं नवघनसरसं नैकभूषादिदृश्यम् ।
प्रख्यातप्रीतिलीलं दुरभिलपरसं सद्गुणामोदहृद्यं विश्वव्यावृत्तचित्रं व्रजयुवतिगणख्यातरीत्याऽन्वभुङ्क्त ॥ (2-5) २७
स्वास्वादख्यापकत्वात् श्रितनियतदृशेः नैकभोगप्रदानात् त्यागानर्हप्रकाशात् स्थिरपरिचरणस्थापनात्पापभङ्गात् ।
दुस्साधार्थस्य सिद्धेर्विरहभयकृतेः दुर्विभेदात्मयोगात् नित्यानेकोपकारात् स्वविरहचकितं प्रैक्षताम्भोरुहाक्षम् ॥ (2-6) २८
सर्वादिस्सर्वनाथस्त्रिभुवनजननीवल्लभः स्वाश्रितार्थी विष्वग्व्याप्त्याऽतिदीप्तो विमतनिरसनः स्वाङ्घ्रिसद्भक्तिदायी ।
विश्वाप्त्यै वामनाङ्गः स्वविभवरसदः स्वान्तनिर्वाह्योग्यः स्वार्थेहो बन्धमोक्ता स्वजनहिततया द्वादशाख्याभिरूचे ॥ (2-7)
प्राप्याकारोपपत्त्या जनिपरिहरणात् विश्वसृष्ट्यादिशक्तेः निस्सीमानन्ददेशान्वयत उपजगौ रक्षणार्थावतारात् ।
सुप्रख्यातानुभावाद्विविधविहरणाद्व्याप्तिवैचित्र्यवत्त्वात् भक्तेर्दृग्दृश्यभावादखिलफलकृतेर्मुक्तिसौख्यं मुकुन्दे ॥ (2-8) ३०
श्रद्धेयस्वाङ्घ्रियोगं शुभमतिकरदं स्तोत्रसामर्थ्यहेतुं स्वार्थीकारोपकारं स्मृतिरसशमितान्यादरं प्रीतिवश्यम् ।
प्राप्तौ कालाक्षमत्वप्रदममृतरसध्यानमात्मार्पणार्हं वैमुख्याद्वारयन्तं वृतपरिचरणं चक्रपाणिं जगाद ॥ (2-9) ३१
दीताश्चर्यस्वभावं मुखरितजलजं वर्षुकाम्भोदवर्णं शैलच्छत्राभिगुप्ताश्रितमतिविलसद्धेतिमापीतगव्यम् ।
संरम्भोत्क्षिप्तभूमिं प्रणमदनुगुणं पूतनाचेतनान्तं पूर्वाचार्यं श्रुतीनां शुभसविधगिरिस्थानतो निर्विवेश ॥ (2-10) ३२
इत्यत्रूतात्यसह्यक्षणविरहतया मानुषत्वे परत्वात् सर्वास्वादत्वभूम्ना व्यसनहरतया स्वाप्तिसम्प्रीतिमत्त्वात् ।
वैमुख्यत्रासयोगान्निजसुहृदवनान्मुक्तिसारस्यदानात् कैङ्कर्योद्देश्यभावाच्छुभनिलयतया चातिभोग्यं द्वितीये ॥ (**शतकं** 2)

॥ अथ तृतीयशतकम् ॥ முடிச்சோதியாய்.

सुश्लिष्टाकल्पमङ्गैः अनुपमसुषमं वक्ति निस्सीमदीप्तं स्वान्तस्वादुस्वदेहं सुखभजनपदं मण्डिताङ्गं महिष्या ।
स्तोत्रातिक्रान्तकीर्तिं मलिनिमरहितौज्ज्वल्यमिष्टोपवाह्यं वीताश्चर्यत्रिणेत्रप्रभृतिसुरनुतिं चित्रसौन्दर्यवित्तम् ॥ (3-1) ३४
स्रष्टा कान्ता च लोकान् हृतधरणिभरोऽनन्यभोग्याङ्घ्रियुग्मः चिन्तोयन्त्रोरुरूपो निरवधिरसदस्वाङ्घ्रिरध्यक्षमूर्तिः ।
नियोगास्यस्वपादो निखिलवसुमतीगोपनस्वाङ्घ्रिवृत्तिः मुष्णन्मूर्तिप्रतीत्या यमपरवशतां प्रैक्षि लोकैकनाथः ॥ (3-2) ३५
स्थानोत्कर्षात्सुदीप्तं श्रमहरवपुषं स्वाङ्गपर्याप्तभूषं तेजिष्ठं नीचयोगात् प्रणमितभुवनं पावनं सन्नतानाम् ।
प्राप्यं देस्थानमंहःप्रशमनविषयं बन्धविच्छेदिपादं भेजे शीघ्राभियानक्षमशुभवसतिं लम्भितार्चाभिमुख्यम् ॥ (3-3) ३६
भूतैस्तत्कार्यभूतैः शुभनिजवपुषा दीप्तिसिद्धैः पदार्थैः पथ्यास्वादोपपन्नैः श्रुतिमुखसुभगाशेषशब्दप्रपञ्चैः ।
नानाकारैःपुमर्थैः जगदधिपतिभिश्चेतनाचेतनौघैः जुष्टं दोषैरदुष्टं निखिलतनुतया संप्रतुष्टाव तुष्टः ॥ (3-4) ३७
ग्राहग्रस्तेभमोक्षे सुररिपुदमने गोकुलत्राणकार्ये (नीला)गोदार्थोक्षावमर्दे सदहितमथने सिन्धुपर्यङ्कयोगे ।
क्षोणीभारव्यपोहे क्षितिवरवसतौ निर्जराराध्यतायां विश्वारम्भे च शौरेः शुभतनुसुषमोन्मादकत्वं जगाद ॥ (3-5) ३८
पद्मार्क्षी पापहन्त्रीं मणिरुचिममरावीशचिन्त्याङ्घ्रिपद्मां तत्तादृक्कुन्तलश्रीसुघटितमकुटां भावुकप्राप्यपादाम् ।
शुद्धास्वादस्वभावां यमभटमथनीं भक्तनीवृत्तिभव्यां नीचोच्चाभीष्टवृत्तिं हरितनुमवदन्निर्मलार्चानुरक्तः ॥ (3-6) ३९

स्फीतालोकातिभूम्ना पृथुबहुभुजया दिव्यमाल्यास्त्रभाजा सद्गस्त्राकल्पक्लृप्त्या त्रिदशरसकृता रक्षणौन्मुख्यवत्या ।
मुक्तैरुत्तंसिताङ्घ्र्यास्थिरधृतरमयाश्यामयानित्यसत्याशौरेःकान्त्याजितानांस्वबहुमतजनस्वामितामन्वमंस्त ॥ (3-7) ४०
चित्ताकृष्टिप्रवीणैरभिलपनसुखैः स्पर्शवाञ्छां दुहानैः आतन्वानैर्दिदृक्षां श्रुतिहितमहितैरात्मनित्यादरार्हैः ।
विश्लेषाक्रोशकृद्भिः स्मरदरतिहरैर्दत्तसायुज्यसङ्गैः कुर्वाणैर्बाललौल्यं मिलितगुणगणैः नित्यदृश्याङ्गमाह ॥ (3-8) ४१
रम्यस्थानादियोगादमितविभवतः सत्पथप्रापकत्वात् सम्यक्सायुज्यदानात् अनघवितरणात्सर्वशेषित्वचिह्नात् ।
प्रख्याताख्यासहस्रैरवतरणरसैः भुक्तिमुक्त्याभिमुख्यात् त्रैलोक्योत्पादनाच्च स्तुतिविषयमजं व्याहरन्निन्दितान्यः ॥ (3-9)
प्रादुर्भावानुभावात् परिजनविभवात् पावनालङ्क्रियत्वात् जैत्रव्यापारयोगात् अघटितघटनाद्देवभावप्रसिद्धेः ।
आश्चर्यक्रीडनत्वात् सरसिजनिलयानन्दनात् छन्दवृत्तेः ऐश्वर्यव्यक्तिमत्त्वादवशमनततनुं केशवं व्याजहार ॥ (3-10) ४३
एवं सौन्दर्यभूम्ना तनुविहितजगत्कृत्यसौभाग्ययोगात् स्वेच्छासेव्याकृतित्वात् निखिलतनुतयोन्माददानार्हकान्त्या ।
लभ्यार्चाविभवत्वात् गुणरसिकगुणोत्कर्षणादक्षकृष्ट्या स्तुत्यत्वात्पापभङ्गाच्छुभसुभगतनुं प्राह नाथं तृतीये ॥ (शतकं 3)

॥ अथ चतुर्थशतकम् ॥ ஒரு நாயகமாய்.

श्रीमान्नारायणस्स्वाम्यनुगुणमकुटो वीरदामाङ्कमौलिः दुर्दान्तारातिहन्ताऽद्भुतनियततनुः कल्पपाथोधितल्पः ।
विश्वाद्यंज्योतिरुर्वीधरफणिशयनो वेदरूपस्वकेतुः निर्धूताशेषदोषः प्रभुरथ कथितस्सुस्थिरैश्वर्यसीमा ॥ (4-1) ४५
शैत्यात्सौगन्ध्यभूम्ना रुचिरुचिरतया पोषणादाभिरूप्यात् सन्दर्भात्पुष्पसङ्गान्महिततुलसिकामालया शङ्कुतश्च ।
चक्राधीशस्य योगाद्वटदलशयानाद्यर्हणीयापदानैः सम्पन्नानेकभोग्यं निरविशदजितं कृष्णमूर्तिं शठारिः ॥ (4-2) ४६
चेतोगन्धानुलेपः स्तुतिवचनकृतस्रक्पटोऽञ्जल्युपात्तालङ्कारः प्राणवासी कलितवरशिरोभूषणश्चेतनेन ।
शीर्ष्णा सत्पादपीठः स्वतनुसदनतामात्मरूपे वितन्वन्नन्योन्यात्मत्वयोगात्प्रभुरगणि मिथःश्लिष्टभावोऽथ तेन ॥ (4-3)
भूम्याद्यैस्सागराद्यैः ज्वलनशशिमुखैः वस्तुभिर्वत्सपूर्वैः नृत्यद्भिः स्वैश्च लोकादिभिरथ पृथिवीक्षिद्भिरात्मीयदासैः ।
सौलभ्यैश्वर्यवर्गैरपि च गुणगणैः वासुदेवो वियोगे स्वीयैस्तुल्यैश्च भक्तान्व्यथयति मधुहेत्यब्रवीत्कारिसूनुः ॥ (4-4) ४८
आपन्नानन्यबन्धौ सरसिजनिलयावल्लभे सान्द्रमोदे भक्ताघध्वंसशीले तदुचितसमयाश्वासदानप्रवीणे ।
कर्पूरालेपशोभे समधिकरहिते तोषके सर्वपूर्णे कृष्णे स्तुत्यादिभाजां शठरिपुरवदत् धन्यतां निन्दितान्यः ॥ (4-5) ४९
इच्छासारथ्ययोगात् प्रहरणनवनाच्छ्रीतुलस्याढ्यमौलेः स्तुत्याङ्घ्र्योःपादधूल्या स्वजनभजनतत्पादधूलीनमोभिः ।
तन्मूलस्वाङ्घ्रिनुत्या तदितरभजनत्यागपूर्वोपसत्त्या देवं प्राचिख्यपत् स्वप्रणयिषु भिषजं केसरस्रग्विभूषः ॥ (4-6) ५०
आपद्बन्धुत्वदीप्तं निरवधिकमहानन्ददं क्रान्तलोकं दुर्दर्शं देवतानां पितरमनुपधिं सर्वभूतान्तरस्थम् ।
पूर्णज्ञानैकमूर्तिं धृतशुभतुलसिं चक्रनाथं श्रुतीनां विश्रान्तिस्थानमीशं विशदबहुगुणं प्राह खिन्नः शठारिः ॥ (4-7) ५१
दुश्शीलो मांसचक्षुः निरवधिदुरितो वीतलज्जो विलोलः प्रेक्षाहीनोऽन्यसङ्गात् कृतमपि लघयन् श्रीशमन्तर्दधानः ।
कर्मज्ञानादिशून्यो निरुपधिविहितां ज्ञानदृष्टिं विनिन्दन् प्रख्याप्यैवं स्वदोषान् पतिगुणरसिकस्तद्दिदृक्षां चचक्षे ॥ (4-7)
सौन्दर्यादौ स्वकीये हृदि च खनिकरे पूर्णतायां च कान्तौ सम्यग्ज्ञाने प्रकाशे वलयरशनयोर्वर्ष्मणि स्वस्वरूपे ।
स्याद्विष्णोर्यद्युपेक्षा तदिदमखिलमुन्मूलनीयं तदीयैः इत्यूचे कारिसूनुस्तदुपरि कथयंस्तं शिवाद्याश्रिताङ्गम् ॥ (4-8) ५३

कारुण्यादब्धिमाथी तदुपरि शयितः तत्समानाङ्गवर्णः ख्यातौदार्यस्स्वदाने रुचिरमणिरुचिः वेषतोऽतीव भोग्यः ।
आत्मत्वेनानुभाव्यो दुरधिगमपदो बन्धमोक्षस्वतन्त्रः स्वान्यप्रेमोपरोधी स्वदत इह विभुस्तत्पदोत्कण्ठिताय ॥ (4-9) ५४
तापैस्संबन्धिदुःखैस्स्वविभवमरणैः तापकृद्भोग्यसङ्गैः दुर्गत्याज्ञातिवृत्तेः अनितरविधुतेरण्डकारानिरोधात् ।
प्रह्वीभावोज्झितत्वात् प्रलघुसुखपरिष्वङ्गतश्चातिशोच्यं विश्वं द्रष्टुं न शक्तो निजपदनयने नाथति स स्वनाथम् ॥ (4-9)
स्वानां निर्वाहकत्वात् अहिपतिशयनादब्धिवर्णस्वभावात् अत्यन्तोदारभावाद्बलभिदुपलवद्दर्शनीयत्वयोगात् ।
सन्मौलित्वात्तुलस्या प्रियकरणमुखैरण्डसृष्टौ पटुत्वात् सुप्रापत्वादिभिस्तं फलमतुलमवैद्भृजुषामेष नाथम् ॥ (4-9) ५६
कल्पान्तेऽपि स्थितत्वात् सकलसुरगणस्रष्टृभावाज्जनानां रक्षाद्यापादकत्वात् शिवविधिभरणात् सर्वदेवात्मभावात् ।
तत्तत्कर्मानुरूपं फलवितरणतो वैनतेयध्वजत्वात् मार्कण्डेयावनादेः प्रभुमथ शठजित् प्राह सर्वामरोच्चम् ॥ (4-10) ५७
नित्यैश्वर्यं तु तुर्ये सहजबहुलसद्भोग्यमन्योन्यसक्तं क्लेशापादिस्वतुल्यं स्वजनकृतकृतार्थीकृतिं स्नेहिवैद्यम् ।
संयुक्तं सद्गुणौघैः स्वजनपरिहृतोपेक्ष्यमिष्टार्थरूपं श्रेष्ठं निश्शेषभोग्यादमनुत शतके देवतासार्वभौमम् ॥ (शतकं 4) ५८

॥ अथ पञ्चमशतकम् ॥ கையார் சக்கரத்து.

चक्रस्फायत्करत्वात् स्वजनवशतया रक्षणोद्युक्तभावात् भव्यत्वात्स्वात्मदानात् अमलतनुतया श्रीगजेन्द्रावनाच्च ।
नानाबन्धुत्वयोगाद्विपदि सखितया व्याजमात्राभिलाषात्कारुण्याधीनवृत्तिं कमलदृशमवैत्कारिसूनुः कृतार्थः ॥ (5-1) ५९
पाथोधिप्रौढकान्तौ सरसतुलसिकालङ्कृतौ दातृभावे वैकुण्ठत्वे च चक्रप्रहरणवशितादेवतास्थापनादौ ।
स्वानामच्यावनादौ सकलनियमने सर्वकर्मेज्यभावे नित्यासक्तैस्स्वभक्तैः जगदघशमनं प्राह कृष्णं शठारिः ॥ (5-2) ६०
ज्योतीरूपाङ्गकत्वात्सरसिजनयनानिष्टविध्वंसकत्वात् मेघौघश्यामलत्वात् श्रितसरसतयोत्कृष्टसौलभ्ययोगात् ।
रक्षायां चावधानात् सुभगतनुतया सोपकारास्त्रवत्त्वात् स्वानां प्रेमातिमात्रं जनयति भगवानित्यवादीत् शठारिः ॥ (5-3)
आपद्बन्धुत्वकीर्त्या यदुकुलजननाद्वीरवीरत्वकीर्त्या लोकानां विक्रमाच्चाश्रितदुरितहृतेरद्भुतैश्चेष्टितैश्च ।
चक्राद्यस्त्रान्वितत्वात् कमलनयनतासंपदा वामनत्वात् क्षीराब्धौ शेषशायी जगदवनमहादीक्षितोऽज्ञायि तेन ॥ (5-4)
शङ्खाद्यैः यज्ञसूत्रादिभिरपि च तथा शार्ङ्गमुख्यैस्तुलस्या बिम्बोष्ठाद्यैस्सुनासात्रततिनिरवधिज्योतिरूर्जस्विमूर्त्या ।
नेत्राब्जाद्यैरशेषाभरणसुषमया स्वैश्च भक्तैर्मनोज्ञो देवः स्वानामजस्रं स्मृतिविषयतया भाति चेत्यभ्यधायि ॥ (5-5) ६३
स्रष्टृत्वाद्यैः जगत्याः सकलविधकलावर्तकत्वेन भूतान्तर्यामित्वेन कृत्युद्धरण(भ)परतया भूभरापाकृतेश्च ।
शैलेन्द्रोद्धारणाद्यैः स्वजनहिततया ब्रह्मरुद्रेन्द्रभावात् दुष्कर्मोन्मूलनाद्यैःप्रभुरनिशमहम्बुद्धिबोध्योऽन्वभावि ॥ (5-6) ६४
सर्पाधीशेशयत्वादरिदरभरणात्सानुकम्पत्वयोगात् सत्साहाय्यादशेषान्तरनिलयतया भूसमुद्धृत्युदन्तैः ।
सर्वेषां तातभावात् इतरजनदुराधर्षतादेश्शरण्यं दीनानां प्राह विष्णुं शठजनमथनो देवतासार्वभौमम् ॥ (5-7) ६५
निस्सौहित्यामृतत्वात् स्ववशजनितयाऽनन्यभावप्रदानात् मर्यादातीतकीर्त्या नलिननयनतो नायकत्वात्सुराणाम् ।
सर्वश्रैष्ठ्यादियोगादनितरगतिताद्यावहासन्नभावाद्दास्ये स्वे स्थापयेत्स्वान्हरिरिति शठजित्स्थापयामास कृष्णम् ॥ (5-8)
स्वामित्वात्संश्रितानामुपकरणरसात्स्वेष्टसंश्लेषकत्वात्सर्वास्वादत्वभूम्ना कपटवटुतया दारुणापत्सखत्वात् ।
दिव्यस्थानोपसत्त्या भ्रमदरिभरणाच्चापि नारायणत्वादत्यासन्नः श्रितानां भवति हरिरिति प्राह कारेस्तनूजः ॥ (5-9) ६७

प्रादुर्भावादिवृत्तैः वृषगणदमनात् पूतनाशातनाद्यैः मोहार्थं बौद्धकृत्यैः गिरिवरभजनस्वीकृतेः स्थानभेदैः ।
तेजोध्वान्तादिभावाज्जलनिधिशयनाद्धिक्षणाद्यैस्त्रिपद्याः पीयूषस्पर्शनाद्यैःशिथिलयति हरिःस्वीयहृच्चेत्यथोचे ॥ (5-10) ६८
इत्थं कारुण्यनिघ्नं दुरितहरजनं प्रेम तीव्रं दुहानं लोकानां रक्षितारं स्मृतिविषयमहम्भावनागोचरं च ।
दीनानां सच्छरण्यं स्वरसकृतनिजप्रेष्यतावाञ्छमूचे प्राप्तं शक्तिप्रदं श्रीपतिमिह शतके श्रेयसामेकहेतुम् ॥ (शतकं 5) ६९

॥ अथ षष्ठशतकम् ॥ வைகல் பூங்கழிவாய்.

चक्रित्वात्स्वामिभावात् विपदि सखितया बिम्बदृश्याधरत्वात् अब्धिश्यामात्मकान्त्या धृततुलसितया निर्जराधीशभावात् ।
रक्ताभास्याङ्घ्रिभावात् पृथुमकुटतयाऽऽश्चर्यचर्याविशेषैर्लङ्काध्वंसाच्च कृष्णं शठजिदकथयद्देशिकद्वारगम्यम् ॥ (6-1) ७०
पूर्णत्वाद्गोपनारीजनसुलभतया लोडनादम्बुराशेः न्यग्रोधाग्रेशयत्वात् अरिसुभगतया श्रीमहीवल्लभत्वात् ।
निर्दोषोत्तुङ्गभावान्निरवधिकयशस्सद्वशीकारिदक्त्वात् मोक्षस्पर्शेच्छया च स्वयमभिसरतीत्याह कृष्णं शठारिः ॥ (6-2) ७१
सम्पद्दारिद्र्यभावादसुखसुखकृतेः पत्तनग्रामभावात् पुण्यापुण्यादिभावात् कपटऋजुतया सर्वलोकादिभावात् ।
दिव्यादिव्याङ्गवत्त्वात्सुरदितिजगणस्निग्धशत्रुत्वकीर्त्या छायाच्छायादिभावादघटितघट(कं)नं प्राह कृष्णं शठारिः ॥ (6-3)
रासक्रीडादिकृत्यैः विविधमुरलिकावादनैर्मल्लभङ्गैः गोपीबन्धार्हभावात् व्रजजननसुखैः कंसदैत्यादिभङ्गैः ।
प्रादुर्भावैर्निहीनेष्वसुरभुजवनच्छेदमुख्यैश्चरित्रैः आकर्षैस्सर्वचित्तं हरिरिति कथयामास कारेरपत्यम् ॥ (6-4) ७३
शङ्खाच्चक्रादितश्च त्रिदशसुरतया सिन्धुशायित्वभूम्ना तद्वच्चोदारभावात् अरुणसरसिजाक्षत्वचिह्नेन देवः ।
देवीभिःसेव्यभावादतिसुलभतया स्वेष्वतिस्निग्धभावाद्बन्धुम्यस्स्वान्मुरारिर्विघटयति हठादित्यवोचच्छठारिः ॥ (6-5) ७४
पारम्याद्यैश्च पञ्चायुधविहृतिमुखैः ब्रह्मणस्स्रष्टृभावात देवानां स्वामिभावादपि सुभगतयाऽलङ्कृतेः कुन्दभङ्गात् ।
प्रादुर्भावैश्च सर्वान्तरनिलयतयाऽहंममत्वेऽतिधैर्यं चातुर्यादीनि नृणामपहरति हरिश्चेत्यभाणीत् शठारिः ॥ (6-6) ७५
पारम्याद्भव्यभावात् स्वगभिहितिमुखैः श्रीशतैश्वर्यभूम्ना स्नेहित्वादाभिरूप्यात् श्रितपरवशतासर्वलोकेशताद्यैः ।
धृत्यादेरादिहेतुं मुरमथनमथ व्याहरत्संश्रितानां वेदानागस्त्यभाषावपुष उदधरत् श्रेयसे देहिनां यः ॥ (6-7) ७६
लोकस्रष्टृत्वशक्त्याऽऽयुधसुभगतया जिष्णुसारथ्ययोगात् स्वर्भ्राड्देवेशभावाद्गरुडरथतया स्वाश्रिते पक्षपातात् ।
कान्त्या साम्राज्ययोगात् अवतरणदशास्पष्टपारम्यतश्च स्वीयायत्तस्वभूतिद्वयमथ कथयामास देवं शठारिः ॥ (6-8) ७७
सर्वात्मत्वाज्जगत्याःक्रमणत उत संरक्षणाद्विष्टपानां शत्रुध्वंसात्परत्वाद्यभिमतदशया पञ्चधाऽवस्थितत्वात् ।
निर्वाहादण्डकोट्या बुधदयिततया सर्वशीर्ष्ण्यङ्घ्रिदानान्मोक्षेच्छोत्पादकत्वाद्धरिमथ शठजिद्व्यक्तयन्नर्हद्वियोगम्॥ (6-9) ७८
आपत्संरक्षणादर्युपकरणतया मेघसाम्यादिभूम्ना स्वानां विश्वासदानात् सुरगणभजनाद्दिव्यदेशोपसत्त्या ।
प्राप्याप्राप्यत्वयोगात् स्वजनविजनयोः सत्प्रपत्तव्यभावात् ऊचे नाथं शरण्यं श्रुतिशतविदितं वेङ्कटेशं शठारिः ॥ (6-10)
इत्थं सद्वारगम्यं स्वयमितमसहस्थायिनां योजनार्हं कर्षन्तं स्वैश्चरित्रैः विघटितविजनं स्वान्वितस्तेयदक्षम् ।
धृत्यादीनां निदानं घटकवशमहाभूतियुग्मं शठारिः वैघट्यस्याप्यनर्हं प्रपदनसुलभं प्राह षष्ठे शरण्यम् ॥ (शतकं 6) ८०

॥ अथ सप्तमशतकम् ॥ உண்ணிலாவிய வைவரால்.

निस्सङ्ख्याश्चर्ययोगादतिमधुरतयाऽथो जगत्कारणत्वात् न्यग्रोधार्हत्वभूम्ना त्रिदशपतितया वाङ्मनस्सन्निधानात् ।
पीयूषस्पर्शनाद्यैरखिलपतितया लोकसंरक्षणाद्यैः शाठ्याशङ्कां सहेत त्रितनुरसुरहेत्याह चिह्नान्तिकस्थः ॥ (7-1) ८१

श्रीरङ्गे सन्निधानात् निखिलजगदनुस्सृष्टताद्यैरशुचित्वात् विध्वस्तानिष्टभावात् उरगशयनतः पुंसु कर्मानुरूपम् ।
शर्माशर्मप्रदानाज्जलदतनुतयोपक्रियातत्परत्वात् स्वामी स्वानां विगर्हासुपशमयति चेत्याह धीमान् शठारिः ॥ (7-2) ८२
पद्माक्षत्वेन हृत्स्थः परमसुखनिलयः स्वोपकारी विगर्जच्छङ्खोऽनिष्टप्रहर्ताऽऽदरविलसनकृद्रक्षकोऽम्भोधिदृश्यः ।
आपत्संरक्षकश्रीमकरवरलसत्कुण्डलस्स्वाङ्गकान्त्या स्वेषु स्वं गोप्तृभावं प्रकटयति हरिश्चेत्यशंसत् शठारिः ॥ (7-3) ८३
विक्रान्त्या विष्टपानाममृतमथनतश्चोद्धृतेर्भूतधात्र्याः कल्पे लोकादनाच्च क्षितिभरहरणात् दैत्यराजप्रहारात् ।
लङ्कासङ्कोचकत्वात् असुरभुजवनच्छेदनाल्लोकसृष्टेः धृत्या गोवर्धनाद्रेः स्फुटजगदवनप्रक्रियं श्रीशमाह ॥ (7-4) ८४
साकेते मुक्तिदानात् स्थिरचरजनुषां सर्वशो रक्षकत्वात् चैद्ये सायुज्यदानाज्जगदुदयकृतेरुद्धृतेर्भूमिदेव्याः ।
याच्ञार्थं वामनत्वाच्छिवभजकमुनेर्मोक्षदानाद्युदन्तैः स्नेहं सर्वाश्रयं स्वं प्रकटयति हरिश्चेत्यथाज्ञायि तेन ॥ (7-5) ८५
नाभीपद्मोज्ज्वलत्वात् विधिशिवभजनीयाङ्घ्रिभावाद्भवां च त्राणाद्यैः सर्वभूतान्तरनियमनतः संश्रिते भव्यभावात् ।
ब्रह्माद्यापद्विमोक्षादसुरनिरसनात् त्रातरक्षोनुजत्वात् स्वीयाक्रन्दापहारी भवति च भगवानित्यवादीत् शठारिः ॥ (7-6) ८६
दृग्भ्यां पद्माकृतिभ्याममरतरुलतानासिकातोऽधरेण भ्रूचापेन स्मितेनाप्यथ मकरलसत्कुण्डलाभ्यां विशिष्टः ।
फालेनार्धेन्दुभासाऽमलमुखशशिना नेत्रशोभादिभाजा श्रीमान् देवःकिरीटी स्मृतिविशदतनुर्भाति चेत्यभ्यधायि ॥ (7-7)
भूतैश्चन्द्रार्यमाद्यैः सकलयुगगतैः वस्तुभिः चेतनाद्यैः स्वैर्लोकानां नियत्या स्मरणतदितरोत्पादनात् माननाद्यैः ।
दुर्ज्ञेयत्वात् स्वभार्या बहुशुभकरणात् वेदसंवेद्यभावात् श्रीमानाश्चर्यनानाविभव इति ततः श्रीधरः प्रत्यपादि ॥ (7-8) ८८
स्वामित्वाश्चर्यभावादपि च करुणया दत्तवाग्जृम्भणत्वात् उज्जीवापादकत्वात् अघटितघटनाशक्तिवैकुण्ठयोगात् ।
शुद्धस्वान्तत्वचक्रायुधजलधिसुतावल्लभत्वात्पितृत्वात्स्वे स्तोत्रे विष्णुरप्रत्युपकृतिविषये स्वान् युनक्तीत्यगायत् ॥ (7-9) ८९
वैकुण्ठे नित्ययोगात् श्रितविवशतयाऽनन्तकीर्त्युज्ज्वलत्वात् शेषेशायित्वरुक्मिण्यभिमतसुरजिद्बाणदोःखण्डनाद्यैः ।
ग्राहग्रस्तेभरक्षाभिरुचितविषये सन्निधानाच्छुचित्वात्स्तोतॄणां दुःखजातं विघटयति हरिस्तीर्थपादोऽभ्यधायि ॥ (7-10) ९०
शाठ्याशङ्कासहिष्णुं प्रशमितजनतागर्हणं स्पष्टरक्षं व्याकुर्वन्तं स्वरक्षाक्रममखिलजनस्नेहितां दर्शयन्तम् ।
स्वीयाक्रन्दच्छिदोक्तं स्मरणसुविशदं विस्मयार्हद्धिमूर्तिं स्तोत्रे युञ्जन्तमाह स्तुतिकृदघहरं सप्तमेऽनिष्टचोरम् ॥ (**शतकं** 7)

॥ अथ अष्टमशतकम् ॥ தேவிமாராவார் திருமகள்.

श्र्याद्यैःपत्न्यादिमत्त्वात् रघुयदुकुलयोरुद्भवात् स्वाश्रितेच्छाधीनेहाविग्रहत्वात् सकलचिदचितामन्तरात्मत्वभूम्ना ।
स्वामित्वास्स्वाश्रितावेध्यखिलगुणतया ज्ञानिनामप्यदुःखस्थानेच्छापादनाद्यैर्हरिरकथि परं दर्शनेच्छोस्सुदृश्यः ॥ (8-1)
तार्क्ष्योद्यद्वाहनत्वात् शुभनयनतया नीलमेघाकृतित्वात् आश्चर्योच्चेष्टितत्वात् दुरवधरतया योगिभिः निर्जरैश्च ।
स्वेषु व्यामुग्धभावात्प्रतिहतिविरहाद्दुर्जनादृश्यभावान्निस्सङ्गानां जनानां सुलभतम इति प्राह नाथः शठारिः ॥ (8-2) ९२
श्रीभूमीनायकत्वात् अरिसुकरतया कल्पसिन्धौ शिशुत्वात् श्रीस्थाने सन्निधानात् सुरहितकरणात् श्रीनिवासत्वयोगात् ।
विक्रान्त्या विष्टपानां विधिदुरधिगमात्स्वेषु सौलभ्यभूम्ना चैकाकी स्वाश्रितानां विहरणसमये श्रीधरः प्रत्यपादि ॥ (8-3)
दुर्दान्तेभेन्द्रभङ्गात् शुभनिलयतया साम्यतश्चेतरेषां स्वायत्तत्वेन भानात् श्रितहृदि सततं देवतद्वेषिसङ्घे ।
मित्रामित्रत्वयोगाज्जगदुदयकृतेः देवतात्मत्वमुख्यैःश्रीमान् वैकुण्ठनाथःश्रितविहितसमग्रस्वभूमाऽन्वभावि ॥ (8-4) ९५

आश्चर्येहान्वितत्वात् शुभमकुटतया स्वामिताब्धौशयित्वात् जीमूतश्यामलत्वात् श्रितसुलभतया पद्मसूर्योपमाङ्गात् ।
सारथ्यात्पाण्डुसूनोः अवनिभरह्नेरन्तरात्मत्वयोगात् जीवापेक्षाप्रतीक्षो भवति तदवने श्रीपतिश्चेत्यभाणि ॥ (8-5) ९६
भातत्वात् श्रीतुलस्या श्रितहृदिशयनात् श्रीद्धवक्षस्कभावात् आश्चर्योपक्रियत्वात्सुरगणभजनाद्रैरिविध्वंसकत्वात् ।
गोविन्दत्वादशेषाभिमतविषयतोऽभीष्टसञ्चितकत्वात् सर्वाकाराद्भुतत्वात्स्वपदवितरणे सज्ज इत्याह कृष्णः ॥ (8-6) ९७
भव्यत्वाद्रक्षकत्वात् त्रिजगदधिककारुण्यतो गोपभावात् नीलाश्माद्रिप्रभत्वात्स्वजनकृतनिजात्मप्रदानप्रसुत्वात् ।
मन्दस्मित्याश्रितत्वाद्धृदि सुकृतिषु चातर्कितानुग्रहत्वात् स्वानां चित्तानपायात्स्वजनहृदि रतो माधवश्चेत्यवोचत् ॥ (8-7)
प्रासाधन्येन भानाद्धृदि च विभुतयाऽलंमहिम्ना परत्वात् माधुर्याद्देहदेह्यादिषु च गततया स्वस्वरूपप्रकाशात् ।
अन्त्यस्मृत्यप्यभावात्स्वपरमपुरुषैकग्रभ्रमध्वंसकत्वात् ज्ञानाज्ञानप्रदत्वात्प्रकटयति हरिःपुंसि दास्यं स्वमूचे ॥ (8-8) ९९
वैलक्षण्यात्स्वमूर्तेः मकुटमुखमहाभूषणैर्भूषितत्वात् स्वार्हानेकायुधत्वात् प्रलयसखितयोज्जीवने कर्षकत्वात् ।
भव्यत्वाद्यैश्च सम्पन्निरवधिकतयाऽऽश्चर्यचेष्टत्वयोगात् निष्ठां दास्ये स्वकीये प्रकटयति हरिश्चेत्यथाज्ञायि तेन ॥ (8-9)
व्यामुग्धत्वात् स्वकीयेष्वमलघनरुचा वामनत्वेन चापद्बन्धुत्वाश्चर्यभावात् अहितनिरसनात् लोकसृष्ट्यादिशक्तेः ।
अब्धौशायित्वयोगाच्छ्रितदुरितहनेश्चातसीपुष्पकान्त्या त्वाकृष्टेस्स्वीयदास्यावधि विशदयतीत्याह नाथः स्वदास्यम् ॥(8-10)
इत्थं सूरिर्दिदृक्षोर्दृशि विषयमयैर्निस्स्पृहैरेव लभ्यं स्वानां विश्लेषभोग्यं श्रितविहितसमग्रत्वमूर्तिं शठारिः ।
स्वापेक्षासव्यपेक्षं स्ववितरणपरं हृद्गतं स्पष्टयन्तं दास्यं स्वं तस्य निष्ठां तदवधिमपि चाप्यष्टमे स्वेष्ववश्यम् ॥ (शतकं 8)

॥ अथ नवमशतकम् ॥ கொண்ட பெண்டிர் மக்களுற்றார்.

आपद्बन्धुत्वकीर्त्या दृढमतिजननात् दैत्यनाशाय भूमौ जातत्वादुत्तरस्यां पुरि मधुरपदालङ्कृतायां दयाब्धेः ।
बन्धोःकृष्णस्य पादाश्रयणमिह विना नोसहायः पुमर्थो रक्षासामर्थ्यहानेर्भवति इति हितं कारिसूनुर्बभाषे ॥ (9-1) १०३
लक्ष्मीसम्बन्धभूम्ना मितधरणितया पद्मनेत्रत्वयोगात् स्थित्याद्यैस्स्वैश्चरित्रैः स्वहृदपहरणात् श्रीगजेन्द्रावनाच्च ।
तार्क्ष्यांसौ चाधिरुह्यारिगणनिरसनाद्देवदुष्प्रापताद्यैः दुष्कर्मोन्मूलनाद्यैःसुचिरकृतदयो माधवश्चेत्यवोचत् ॥ (9-2) १०४
नैकश्रीनामवत्त्वात् जगदुदयसुसंस्थापनाद्यैः हरित्वात् दानात् मोक्षस्य हेयप्रतिभटघटकश्रेणिसम्पत्तिमत्त्वात् ।
प्रह्लादाह्लादकत्वात् वृषगिरिकटके सन्निधानादिकृत्यैःशर्वादेस्स्वाङ्गदानादकथि यदुपतिः शीलरत्नाकरोऽसौ ॥ (9-3)
लक्ष्मीवक्षस्त्वभावात् स्वजनसुलभतापर्वतोद्धारणाद्यैः दुर्ज्ञेयत्वात्सुरादेरखिलपतितया नाकिनां वृद्धभावात् ।
स्वेषां हृद्वासितायाः स्वजनवशतया तत्र चासक्तिभूम्ना स्वस्वामित्वादिबन्धाज्जगदवति हरिश्चेत्यभाणीच्छठारिः ॥ (9-4)
प्राणत्वादद्भुतत्वादपि च सुविदितत्वेन भव्यत्वयोगात् लक्ष्मीवक्षस्त्वभावात् रघुकुलजननात् नीलरत्नाभमूर्त्या ।
कृष्णत्वादब्जदृक्त्वात्परमपतितया चेश्वरं संश्रितानामूचे धीमान् शठारिः स्वगुणगरिमसंस्मारकं सर्वदर्शी ॥ (9-5) १०७
आश्चर्येहान्वितत्वात् अखिलपतितया चान्तरात्मत्वभूम्नाऽशक्ये शक्तत्वभूम्ना जलदतनुतया भव्यताकर्षकत्वात् ।
औदार्यादेर्विशिष्टादपि च भवभृतां रक्षणे तीव्रसंगाद्विसर्तुं नैव शक्यो हरिरिति शठजित्कंसजेतारमाह ॥ (9-6) १०८
रम्यत्वात् श्रीतुलस्या श्रितजनसहितत्वेन पद्माक्षतायाः स्वामित्वात्सत्परञ्ज्योतिरितिकथनतः श्रीधरत्वातिकीर्त्या ।
पुष्पश्यामत्वभूम्ना रथचरणमुखस्वायुधत्वाद्युदन्तैः शौरेर्धीमान् शठारिः घटकमुखसुविस्रम्भणीयत्वमाह ॥ (9-7) १०९

वल्लीमध्यत्वयोगादपि च सुविदितश्रीवचोवाच्यभावात् भूम्याद्यैश्वर्ययोगात् अवतरणदशासाहचर्यात् स्वभर्तुः ।
सन्धातृत्वात्सुबोधप्रददुरितहरत्वात्समासन्नभावात् लक्ष्म्याःश्रीशं शठारिः प्रथयति च सुमज्जानिभावेन नाथम् ।। (9-8)
पद्माक्षत्वप्रसिद्ध्या जगदवनतया भव्यताद्यैश्च सारग्राहित्वात् वेणुनादैः हृषितजनतया स्वाङ्गदानादजादेः ।
श्यामत्वाद्धव्यचोरत्वत उत सरसस्मेरचेष्टत्वभूम्ना नः कूटस्थोऽत्र सिद्ध्यन्मुखसमयतया ख्यापयामास कृष्णम् ।। (9-9)
सर्वश्रैष्ठ्यात् स्वकीयैरपि जगदवनात् अण्डषण्डाधिपत्यात् नीलाया वल्लभत्वात् अमृतवितरणात् भक्तसुस्निग्धभावात् ।
दासानां सत्यभावात् अतिसुजनतयाऽथो जगत्कारणत्वात् श्रीमान् वेलाप्रतीक्षो भवभयहरणे चेत्यभाणीत् शठारिः।।(9-10)
इत्थं सर्वैकबन्धुं चिरकृतकरुणं शीलसिन्धुं पतित्वात् संबन्धाद्रक्षितारं स्वगुणगरिमसंस्मारक प्राह कृष्णम् ।
विस्मर्तुं चाप्यशक्यं वटकमुखसुविस्रम्भणीयं सुमत्या लक्ष्म्या श्लिष्टं स्वसिध्द्युन्मुखसमयमनेहः प्रतीक्षं सुमित्रम् ।। (शतकं 9)

।। अथ दशमशतकम् ।। தாள தாமரை.

दैत्यानां नाशकत्वात् विधृततुलसिकामौलिभावाज्जयित्वात् सर्पाधीशेशयत्वात् निरवधिकपरंज्योतिरुल्लास्यभावात् ।
लोकानां स्रष्टृभावात् दशरथसुतताश्रान्तिहारित्वमुख्यैः आकारैः सद्गतिः स्यात् जलदतनुरुचिश्चेति तेनाभ्यधायि।।(10-1)
ऊचे श्रीकेशवत्वाद्भुतचरितखगाधीशकेतुत्वयोगात् आसन्नत्वात्पतित्वात् अमरपरिषदामादिभूतत्वभूम्ना ।
व्यापारैस्सृष्टिमुख्यैरपि च भुजगशायित्वमुख्यैश्चरित्रैः अध्वक्लेशापहर्ता भवति च भगवानित्यनन्यः शठारिः ।। (10-2) ११५
अम्भोजाक्षत्वकीर्त्या यदुकुलजतया चात्मनश्श्यामलत्वात् गोविन्दत्वात् प्रियोद्यद्वचनपरतया चक्रराजायुधत्वात् ।
श्रीनीलाश्मप्रभत्वादतिसुभगतया गोपनिर्वाहकत्वात् अस्थानस्नेहशङ्कास्पदरस उदितः श्रीपतिः कारिजेन ।। (10-3) ११६
श्रीमद्दामोदरत्वात् अमरपरिषदामप्यगम्यत्वभूम्ना चक्राधीशायुधत्वात् वटदलशयनात् नागराजेशयत्वात् ।
वक्षःस्पर्शोन्मुखत्वात् परमपुरुषतामाधवत्वादियोगात् दुष्प्रापोऽयं भजद्भिः सुगम इति दृढं माधवं सोऽभ्यधत्त ।। (10-4)
नाम्नां सङ्कीर्तनेन स्वपरिवृढतया भावनातोऽनुवेलं संस्मृत्या पुष्पदानाध्ययननिवचनैः स्तोत्रनृत्तादिकृत्यैः ।
धर्मैर्वर्णाश्रमोक्तैः बहुविधभजनप्रक्रियो दीर्घबन्धुः श्रीमान्नारायणश्चेत्यकथयदखिलद्रामिडब्रह्मदर्शी ।। (10-5) ११८
चक्रित्वात् केशवत्वादिभिरपि च तथा श्रीशनारायणत्वात्, स्नेहित्वात्पाण्डवानामभिमततुलसीपूजनीयत्वभावात् ।
अम्भोजाक्षत्वगोविन्दत उत सुयशःश्रीपतित्वादिभावैःश्रीमान् तीव्रोद्यमोऽयं स्वपदवितरणे चेति तेनाभ्यभाषि ।। (10-6)
अत्याश्चर्यस्वभावात् हृदयगततया स्वस्तुतौ प्रेरकत्वात् स्वामित्वात् सर्वभूतान्तरनुगततया स्वस्तुतौ कर्तृभावात् ।
आपद्बन्धुत्वयोगात् बहुविधसविधस्थानवत्त्वेन देवः श्रीमानत्यादरः स्यात्स्वजनपरिकरेष्वित्यथो संजगाद ।। (10-7) १२०
लक्ष्मीकान्तत्वयोगात् विपदि सखितया दिव्यदेशस्थितत्वात् मोक्षोद्योगात्तदर्थं कृतशपथतया सर्वतस्सन्निधानात् ।
दृष्टध्वन्तस्सन्निवासादतिवितरणतःस्वस्वभावप्रकाशात् स्वामित्वात्तुष्यतीत्थं स्वयमनुपधितःश्रीपतिश्चेत्यगायि ।। (10-8)
स्वामित्वात् श्रीशनारायण इति यशसा विक्रमाद्विष्टपानां श्रीमत्वात् चक्रवत्वात् जलनिधिशयनाच्चापि गोविन्दभावात् ।
वैकुण्ठस्वामिभावादपिच निजजनानर्चिराद्याख्यगत्या स्वं लोकं प्रापयेच्छ्रीपतिरिति कथयां श्रीशठारिर्बभूव ।। 10-9) १२२
ब्रह्मेशान्तःप्रवेशात् जलनिधिसुतया सन्निरोद्धव्यभावात् दिव्यश्रीविग्रहत्वात् अखिलतनुतयाऽतृप्तपीयूषभावात् ।
पद्माबन्धुत्वभूम्युद्धरणकरणतः पुण्यपापेशितृत्वात् मुक्तेर्दाताऽनुभाव्यो हरिरिति शठजिद्दर्शयन् मुक्तिमाप ।। 10-10) १२३

एवं स्वानां गतिं व्यध्वजदुरितहरास्थानशङ्काहरागं सुप्रापं भक्तिभाजां बहुविधभजनप्रक्रियं श्रीशठारिः ।
तीव्रोद्योगं स्वदाने स्वजनततुकृतात्यादरं प्राह चान्ते स्वेच्छातुष्टं सुखार्चिर्मुखसरणिमुखं मोक्षदं मुक्तभोग्यम् ॥ (शतकं 10)

॥ निगमनम् ॥

इत्थं सेव्यं सुभोग्यं शुभसुभगतनुं सर्वभोग्यप्रकृष्टे श्रेयस्तद्धेतुभूतं प्रपदनसुलभं स्वाश्रितानिष्टजिष्णुम् ।
भक्तच्छन्दानुरक्तं निरुपधिसुहृदं सत्पदव्यां सहायं श्रीशं प्राह स्वसिद्धेः स्वयमिह करणं स्वप्रबन्धे शठारिः ॥ १२५
आद्ये स्वीयप्रबन्धे शठजिदभिदधे संसृतेर्दुस्सहत्वं द्वैतीयीके स्वरूपाद्यखिलमथ हरेरन्वभूत् स्वष्टदृष्टम् ।
तार्तीयीके स्वकीयां भगवदनुभवे स्फोरयमास तीव्राम् आशां तुर्ये यथेष्टं भगवदनुभवादपि मुक्तिं शठारिः ॥ १२६
श्रीमान् सीमातिलङ्घिस्थिरतरकरुणः सर्ववित् सर्वशक्तिः स्वामी सर्वस्य जन्तोः स्वचरणयुगलस्वीकृतास्माकभारः ।
किं नः कृत्यं स्वहेतोः किमिह न सुलभं का विपत्तिर्भवित्री कस्मान्यस्याद्य वर्ण्या वयमिति विदुषामाह तुङ्गत्वमन्ते ॥ १२७
शास्त्रे देहातिरिक्तात्मनि तदधिपतौ तत्प्रसादाद्युपाये तस्मान्निःश्रेयसाप्तौ तदनचरणतोऽनन्ततापाभिघाते ।
तद्भक्तानां प्रभावे तदुपसदनतः स्वान्तकालुष्यशान्तौ सारं वेद्यं स्ववेदे सकलमकथयत् सानुकम्पः शठारिः ॥ १२८
इत्थं सत्संप्रदायक्रमसमधिगताशेषवर्णार्हवेदश्रद्धाशुद्धाशयानामवटयदनघं कौतुकं वेङ्कटेशः ।
सम्यक्त्वे तस्य साक्षात् शठरिपुरथवा सर्वसाक्षी स साक्षी सावद्यत्वेऽपि सोढुं प्रभवति भजतामप्रकम्प्यानुकम्पः ॥ १२९
शोकः श्लोकत्वमभ्यागत इति वदतः शुद्धबोधार्णवोद्यन्नानाकल्लोलनाथाभुभवरसपरीवाहतः श्राव्यवेदात् ।
वेदान्ताचार्यकश्रीबहुमतबहुविद्वेङ्कटेशोद्धृतेयं रम्या तात्पर्यरत्नावलिरनघगुणा रञ्जनी रङ्गभर्तुः ॥ १३०

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु द्रमिडोपनिषत्तात्पर्यरत्नावलिः समाप्ता ॥ ३० ॥

---

## ॥ द्रमिडोपनिषत्सारः ॥ ३१ ॥

सेवायोग्योऽतिभोग्यश्शुभसुभगतनुस्सर्वभोग्यातिशायी श्रेयस्तद्धेतुदाता प्रपदनसुलभोऽनिष्टविध्वंसशीलः ।
भक्तच्छन्दानुवर्ती निरुपधिकसुहृत्सत्पदव्यां सहायः श्रीमान् सर्वोचितायामुपनिषदि मिषत्येष गाथाशतैर्नः ॥ १
आद्ये पश्यन्नुपायं प्रभुमिह परमप्राप्यभूतं द्वितीये कल्याणोदारमूर्तेर्द्वितयमिदमिति प्रेक्षमाणस्तृतीये ।
ऐश्वर्यादेश्चतुर्थे विषमधुतुलयाऽनन्यभोग्यत्वमिच्छन् षड्भिस्स्वां पञ्चमाद्यैरनितरगतितामाचचक्षे मुनीन्द्रः ॥ २

परं निर्वैषम्यं सुलभमपराधप्रसहनं सुशीलं स्वाराधं सरसभजनं स्वार्जवगुणम् ।
सुसात्म्यस्वानन्दप्रदमनघविश्राणनपरं मुकुन्दं निध्यायन्मुनिरधिजगावाद्यशतके ॥ ३
द्विकाभ्यां व्यष्टाङ्घ्रिर्दुरधिगमनीतिस्थपुटिता यदन्त्या मीमांसा श्रुतिशिखरतत्त्वं व्यवृणुत ।
तदादौ गाथाभिर्मुनिरधिकविंशाभिरिह नः कृती सारग्राहं व्यतरदिह संगृह्य कृपया ॥ ४
परत्वाद्यैरित्थं परिचरणसक्तो गुणगणैः प्रभुं सेवायोग्यं प्रथमशतके वीक्ष्य वरदम् ।
तमेव स्वात्यर्थप्रियमथ च भोक्तुं व्यवसितो वरेण्यत्वं तस्य प्रथमवरणीयं प्रथयति ॥ ५

द्वितीयेऽतिक्लेशक्षणविरहमुत्तुङ्गललितं मिलत्सर्वास्वादं व्यसनशमनं स्वाप्तिमुदितम् ।
स्ववैमुख्यत्रस्तं स्वजनसुहृदं मुक्तिरसदं स्वकैङ्कर्योद्देश्यं सुभगसविधस्थं निरविशत् ॥ ६
उपायत्वैकान्त्यं प्रथममिह सेव्यत्वमुदितं ततश्च प्राप्यत्वौपयिकमतिभोग्यत्वमवदत् ।
द्वयं तत्स्वासाधारणतनुविशिष्टस्य गणयन् तृतीये विश्वेशं शुभसुभगरूपं कथयति ॥ ७
अनीदृक्सौन्दर्यं तनुविहितसर्गादिसुभगं स्वसेवार्थाकारं प्रगुणवपुषं मोहनतनुम् ।
अपश्यल्ल(श्या)ब्धार्चाविभवमतिदास्यावहतनुं सदा दृश्यं स्तुत्याकृतिमघविरुद्धाकृतिमिह ॥ ८
श्रियः कान्तोऽनन्तश्शुभतनुविशिष्टः फलमसौ फलावाप्तेर्हेतुः स्वयमिति च निर्द्धार्य शतकैः ।
इदानीं बुद्धिस्थक्रमत इह युक्त्या मुनिवरः फलत्वं तस्यैव द्रढयति तदन्येषु विमुखः ॥ ९
स्थिरैश्वर्यं तुर्ये सहजबहुभोग्यं निरविशत् मिथःश्लिष्टं क्लेशावहसहिततुल्यं निजजनम् ।
कृतार्थीकुर्वन्तं प्रणयिभिषजं सद्बहुगुणं स्वहेयस्वोपेक्ष्यं स्वमतफलमुच्चैस्स्ववगतम् ॥ १०
उपायत्वं यत्तत्प्रथमशतकेऽभाव्यत विभोरनन्योपायस्तद्द्रढयति परं पञ्चममुखैः ।
निरीहस्तत्रादौ निरवधिकनिर्हेतुकदयासरित्स्रोतःपद्मं शरणयति नाथस्य चरणम् ॥ ११
दयानिघ्नं भक्तैरघविमथनं प्रेमजनकं जगद्रक्षादीक्षं स्मृतिजुषमहम्भावविषयम् ।
शरण्यं दीनानां स्वरसकृतदास्याभ्युपगमं प्रचख्यौ तं प्राप्तं प्रशकनकृतं पञ्चमशते ॥ १२
अनाद्यन्तानन्दस्वरसकरुणाकन्दजनितः प्रणेतुर्व्यापारः प्रपदनविपाकार्हे उदितः ।
तमाचार्योपज्ञं चिरवि(रहि)घटितस्वात्मघटनस्फुरच्छक्ति षष्ठे मुनिरशरणो याति शरणम् ॥ १३
गुरुद्वारोपेयं स्वयमभिमतं वैरिघटकं चरित्रैः कर्षन्तं परविघटनं स्वान्वितहरम् ।
निदानं धृत्यादेर्घटकवशभूतिद्वयमगात् अनर्हद्वैघट्यं त्वविकलशरण्यस्थितिमिह ॥ १४
तदेवं षष्ठान्तं विहितसविशेषप्रपदनः फलालाभात् खिन्नस्त्वरितहृदयस्सप्तमशते ।
अनिष्टोपन्यासप्रभृतिभिरनिष्टप्रशमने स्वतस्सिध्यच्छीलं प्रभुमभिमुखं संमुखयति ॥ १५
सहन् शाठ्याशङ्कामुपशमितगर्हः प्रकटयन् स्वगोप्तृत्वं गुप्तिक्रममखिलजन्तुप्रणयिताम् ।
श्रिताक्रन्दच्छेत्तास्मरणविशदश्चित्रविभवः स्तुतौ युञ्जन् स्तोत्रव्यसनजिददर्शि प्रभुवरः ॥ १६
अथानिष्टान् पुंसां स्वयमुपजिहीर्षन्नपि विभुः तदिच्छां बाह्येषु प्रशमयितुकामः क्रमवशात् ।
निजेच्छासंसिद्धत्रिविधचिदचिद्वस्तुविततिः श्रितेच्छावैचित्रीवश इति वदत्यष्टमशते ॥ १७
दिदृक्षायां दृश्यः प्रभुरगणि निस्सङ्गसुलभः स्वविश्लेषैकान्तः श्रुतविहितपौष्कल्यविभवः ।
अपेक्षासापेक्षस्ववितरणसज्जो हृदि रतः सदास्यं तन्निष्ठां तदवधिमपीह प्रकटयन् ॥ १८
अभीष्टं विश्वस्मिन् विषमफलकांक्षिण्यविषमं प्रयच्छन्तं दृष्ट्वा परमपुरुषार्थैकरसिकः ।
निरस्तान्यापेक्षो निखिलजगदीशस्य नवमे निदानं सिद्धीनां निरुपधिसुहृत्त्वं गणयति ॥ १९
अभाव्येको बन्धुश्चिरकृतदयश्शीलजलधिः स्वसंबन्धात् गोप्ता स्वगुणगरिमस्मारणपरः ।
अशक्यो विस्रष्टुं घटकमुखविस्रम्भविषयान् सुमज्जानिस्सिद्ध्यन्मुखसमय इच्छन्नवसरम् ॥ २०

उदन्तैरित्येवं निरूपधिकसौहार्दपिशुनैरुदन्यामुद्वेलामुपजनितवन्तं निजपदे ।
त्रिवर्गातिक्रान्तस्थिरनगरघण्टापथगतेः सहायीकुर्वाणश्चरमशतके विन्दति मुनिः ॥ २१
गतिं व्यध्वक्लेशच्छिदमपदशङ्कास्पदरसं भजद्भिस्सुप्रापं विविधभजनप्रक्रियमिह ।
फले तीव्रोद्योगं स्वविषयकृतात्यादरमगाद्यदृच्छातुष्टं सत्सरणिमपुनर्जन्मसयुजम् ॥ २२
परं प्राप्यं पश्यन् परिचरणहेतुं विगणयन् परिष्कुर्वन्नाज्ञामनितरशरण्यश्शरणयन् ।
अनिष्टप्रध्वंसप्रभृतिषु निदानं च कथयन् मुहुर्देवं लक्ष्म्या सहितमिह भेजे मुनिवरः ॥ २३
पुरा शोकश्श्लोकोऽभवदिति नयादित्युपनिषन्मुनेः पुण्यश्लोकादजनि वरभक्तेः परिणतिः ।
व्यपोह्य स्वं भावं हरिचरणसन्तानकलिकामविक्षद्योगी यस्तनुमतनुकारुण्यविवशः ॥ २४
सतामित्थं सारं द्रमिडनिगमस्यान्वकथयत् बहूनां विद्यानां बहुमतिपदं वेङ्कटपतिः ।
दिशासौधश्रेणीदृढघटितजैत्रध्वजपटीपरामर्शभ्रश्यत्प्रतिमतनिराबाधनिगमः ॥ २५
मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः के विन्ध्याचलविकटसन्ध्यानटजटापरिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ २६

॥ इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु द्रमिडोपनिषत्सारः समाप्तः ॥

---

# ॥ पादुकासहस्रम् ॥ ३२ ॥

## ॥ प्रस्तावपद्धतिः प्रथमा ॥

सन्तः श्रीरङ्गपृथ्वीशचरणत्राणशेखराः । जयन्ति भुवनत्राणपदपङ्कजरेणवः ॥ १
भरताय परं नमोऽस्तु तस्मै प्रथमोदाहरणाय भक्तिभाजाम् । यदुपज्ञमशेषतः पृथिव्यां प्रथितो राघवपादुकाप्रभावः ॥ २
वर्णस्तोमैर्वकुलसुमनोवासनामुद्वहन्तीमाम्नायानां प्रकृतिमपरां संहितां दृष्टवन्तम् ।
पादे नित्यप्रणिहितधियं पादुके रङ्गभर्तुस्त्वन्नामानं मुनिमिह भजे त्वामहं स्तोतुकामः ॥ ३
दिव्यस्थानात्त्वमिव जगतीं पादुके गाहमाना पादन्यासं प्रथममनघा भारती यत्र चक्रे ।
योगक्षेमं सकलजगतां त्वय्यधीनं स जानन्वाचं दिव्यां दिशतु वसुधाश्रोत्रजन्मा मुनिर्मे ॥ ४
नीचेऽपि हन्त मम मूर्धनि निर्विशेषं तुङ्गेऽपि यन्निविशते निगमोत्तमाङ्गे ।
प्राचेतसप्रभृतिभिः प्रथमोपगीतं स्तोष्यामि रङ्गपतिपादुकयोर्युगं तत् ॥ ५
धत्ते मुकुन्दमणिपादुकयोर्निवेशाद्वल्मीकसंभवगिरा समतां ममोक्तिः ।
गङ्गाप्रवाहपतितस्य कियानिव स्याद्रथ्योदकस्य यमुनासलिलाद्विशेषः ॥ ६
विज्ञापयामि किमपि प्रतिपन्नभीतिः प्रागेव रङ्गपतिविभ्रमपादुके त्वाम् ।
वक्तुं (व्यङ्क्तुं) क्षमाः सदसती विगताभ्यसूयाः सन्तः स्पृशन्तु सदयैर्हृदयैः स्तुतिं ते ॥ ७

अश्रद्दधानमपि नन्वधुना स्वकीये स्तोत्रे नियोजयसि मां मणिपादुके त्वम् ।
देवः प्रमाणमिह रङ्गपतिस्तथात्वे तस्यैव देवि पदपङ्कजयोर्यथा त्वम् ॥ ८
यदाधारं विश्वं गतिरपि च यस्तस्य परमा तमप्येका धत्से (दिशसि च) दिशि वरगतिं तस्य रुचिराम् ।
कथं सा कंसारेर्द्रुहिणहरदुर्बोधमहिमा कवीनां क्षुद्राणां त्वमसि मणिपादु स्तुतिपदम् ॥ ९
श्रुतिप्रज्ञासंपन्महितमहिमानः कति कति स्तुवन्ति त्वां सन्तः श्रुतिकुहरकण्डूहरगिरः ।
अहं त्वल्पस्तद्वद्यदिह बहु जल्पामि तदपि त्वदायत्तं रङ्गक्षितिरमणपादावनि विदुः ॥ १०
यदेष स्तौमि त्वां त्रियुगचरणत्रायिणि ततो महिम्नः का हानिस्तव मम तु संपन्निरवधिः ।
शुना लीढा कामं भवतु सुरसिन्धुर्भगवती तदेषा किंभूता स तु सपदि संतापरहितः ॥ ११
मितप्रेक्षालाभक्षणपरिणमत्पञ्चषपदा मदुक्तिस्त्वय्येषा महितकविसंरम्भविषये ।
न कस्येयं हास्या हरिचरणधात्रि क्षितितले मुहुर्वात्याधूते मुखपवनविष्फूर्जितमिव ॥ १२
निःसंदेहनिजापकर्षविषयोत्कर्षोऽपि हर्षोदयप्रत्यूढक्रमभक्तिवैभवभवद्वैयात्यवाचालितः ।
रङ्गाधीशपदत्रवर्णनकृतारम्भैर्निगुम्भैर्गिरां नर्मास्वादिषु वेङ्कटेश्वरकविर्नासीरमासीदति ॥ १३
रङ्गक्ष्मापतिरत्नपादु भवतीं तुष्टूषतो मे जवाज्जृम्भन्तां भवदीयशिञ्जितसुधासंदोहसंदेहदाः ।
श्लाघाघूर्णितचन्द्रशेखरजटाजङ्घालगङ्गापयस्सासादेशविशृङ्खलप्रसरणोत्सिक्ताः स्वयं सूक्तयः ॥ १४
हिमव(न्नल)दचलसेतुमध्यभाजां भरताभ्यर्चितपादुकावतंसः । अतपोधनधर्मतः कवीनामखिलेष्वस्मि मनोरथेष्वबाह्यः ॥
अनिदंप्रथमस्य शब्दराशेरपदं रङ्गधुरीणपादुके त्वाम् । गतभीतिरभिष्टुवन्विमोहात्परिहासेन विनोदयामि नाथम् ॥ १६
वृत्तिभिर्बहुविधाभिराश्रिता वेङ्कटेश्वरकवेः सरस्वती । अद्य रङ्गपतिरत्नपादुके नर्तकीव भवतीं निषेवताम् ॥ १७
अपारकरुणाम्बुधेस्तव खलु प्रसादादहं विधातुमपि शक्नुयां शतसहस्रिकां संहिताम् ।
तथापि हरिपादुके तव गुणौघलेशस्थितेरुदाहृतिरियं भवेदिति मितापि युक्ता स्तुतिः ॥ १८
अनुकृतनिजनादां सूक्तिमापादयन्ती मनसि वचसि च त्वं सावधाना मम स्याः ।
निशमयति यथासौ निद्रया दूरमुक्तः परिषदि सह लक्ष्म्या पादुके रङ्गनाथः ॥ १९
त्वयि विहिता स्तुतिरेषा पदरक्षिणि भवति रङ्गनाथपदे । तदुपरि कृता सपर्या नमतामिव नाकिनां शिरसि ॥ २०

## ॥ अथ समाख्यापद्धतिः द्वितीया ॥

वन्दे विष्णुपदासक्तं तमृषिं तां च पादुकाम् । यथार्थशठजित्संज्ञा मच्चित्तविजयाद्ययोः ॥ १
द्रमिडोपनिषन्निवेशशून्यानपि लक्ष्मीरमणाय रोचयिष्यन् । ध्रुवमाविशति स्म पादुकात्मा शठकोपः स्वयमेव माननीयः॥२
नियतं मणिपादुके दधानः स मुनिस्ते शठकोप इत्यभिख्याम् । त्वदुपाश्रितपादजातवंशप्रतिपत्त्यै परमाततान रूपम्॥३
मुनिना मणिपादुके त्वया च प्रथिताभ्यां शठकोपसंज्ञयैव । द्वितयं सकलोपजीव्यमासीत्प्रथमेन श्रुतिरन्यतस्तदर्थः ॥ ४
आकर्ण्य कर्णामृतमात्मवन्तो गाथासहस्रं शठकोपसूरेः । मञ्जुप्रणादां मणिपादुके त्वां तदेकनामानमनुस्मरन्ति ॥ ५
यः सप्तपर्वव्यवधानतुङ्गां शेषत्वकाष्ठामभजन्मुरारेः । तस्यापि नामोद्वहनात्त्वयासौ लघूकृतोऽभूच्छठकोपसूरिः ॥ ६

शय्यात्मना मधुरिपोरसि शेषभूता पादाश्रयेण च पुनर्द्विगुणीकृतं तत् ।
भूयोऽपि भागवतशेषतया तदेव व्यक्तुं पदावनि शठारिपदं बिभर्षि ॥ ७
पद्येन देवि शठकोपमुनिस्त्वदासीत्तस्यापि नामवहनान्मणिपादुके त्वम् ।
शेषीबभूव युवयोरपि शेषशायी शेषं त्वशेषमपि शेषपदे स्थितं वः ॥ ८
विन्ध्यस्तम्भाद्विहतगतेर्विष्वगाचान्तसिन्धोः कुम्भीसूनोरन्धुरकवलग्रासिनः स्वैरभाषा ।
नित्यं जाता शठरिपुतनोर्निष्पतन्ती मुखात्ते प्राचीनानां श्रुतिपरिषदां पादुके पूर्वगण्या ॥ ९
शठकोप इति समाख्या तव रङ्गधुरीणपादुके युक्ता । सूते सहस्रमेवं सूक्तीः स्वयमेव यन्मया भवती ॥ १०

## ॥ अथ प्रभावपद्धतिस्तृतीया ॥

वन्दे तद्रङ्गनाथस्य मान्यं पादुकयोर्युगम् । उन्नतानामवनतिर्नतानां यत्र चोन्नतिः ॥ १
निःशेषमम्बरतलं यदि पत्रिका स्यात्सप्तार्णवी यदि समेत्य मषी भवित्री ।
वक्ता सहस्रवदनः पुरुषः स्वयं चेल्लिख्येत रङ्गपतिपादुकयोः प्रभावः ॥ २
वेदोपबृंहणकुतूहलिना निबद्धं विश्वंभराश्रुतिभवेन महर्षिणा यत् ।
व्यासेन यच्च मधुसूदनपादरक्षे द्वे चक्षुषी त्वदनुभावमवेक्षितुं नः ॥ ३
प्रत्यक्षयन्ति परिशुद्धधियो यथावद्रामायणे रघुपुरंदरपादरक्षे ।
शश्वत्प्रपञ्चितमिदंपरयैव वृत्त्या संक्षेपविस्तरदशासु तवानुभावम् ॥ ४
अल्पश्रुतैरपि जनैरनुमीयसे त्वं रङ्गेशपादु नियतं निगमोपगीता ।
सारं तदर्थमुपबृंहयितुं प्रणीतं रामायणं तव महिम्नि यतः प्रमाणम् ॥ ५
तिष्ठन्तु श्रुतयस्ततोऽपि महितं जागर्ति तत्पादुके तत्तादृक्प्रथनाय तावकगुणग्रामाय रामायणम् ।
यस्यासीदरविन्दसंभववधूमञ्जीरशिञ्जारवस्पर्धादुर्धरपादबद्धफणितिर्वल्मीकजन्मा कविः ॥ ६
भक्तिप्रह्वपुरप्रभञ्जनजटावाटीसनीडस्फुरच्चूडारत्नवधवासनापरिमलस्त्याने स्तुमः पादुके ।
रङ्गक्षोणिभृदङ्घ्रिपद्मयुगलीपूर्णप्रपत्तेः फलं निश्चिन्वन्ति विपश्चितः शमधना नित्यं यदुत्तंसनम् ॥ ७
मातर्माधवपादुके तव गुणान्कः स्तोतुमस्तोकधीः कोटीरेषु यदर्पणप्रणयिनां सेवाक्षणे स्वर्गिणाम् ।
अन्योन्यं क्षिपतामहंप्रथमिकासंमर्दकोलाहलं विष्वक्सेनविहारवेत्रलतिकाकम्पश्चिरालुम्पति ॥ ८
योषिद्भूतदृषन्त्यपोढशकटस्थेमानि वैमानिकस्त्रोतस्विन्युपलम्भनानि भसितोदञ्चत्परीक्षिन्ति च ।
दूत्यादिष्वपि दुर्वचानि पदयोः कृत्यानि मत्वेव यद्भक्ते तत्प्रणयं तदेव चरणत्राणं वृणे रङ्गिणः ॥ ९
वन्दे तन्मधुकैटभारिपदयोर्मित्रं पदत्रद्वयं यत्तद्भक्तिभरानतेन शिरसा यत्र कचिद्बिभ्रति ।
द्वित्रब्रह्मविनाडिकावधिपदव्यत्यासशङ्काभरत्रासोत्कम्पदशाविसंस्थुलधृतिस्त्रैविष्टपानां गणः ॥ १०
पद्माकान्तपदान्तरङ्गविभवोद्रिक्तं पदत्रं भजे यद्भक्त्या नमतां त्रिविष्टपसदां चूडापदेष्वर्पितम् ।
नित्यापीतनखेन्दुदीधितिसुधासंदोहमुच्चैर्भ्रमत्यन्तर्नूनममान्तमन्तिकलसच्छेषापटच्छद्मना ॥ ११

तद्विष्णोः परमं पदत्रयुगलं त्रय्यन्तपर्यन्तगं चिन्तातीतविभूतिकं वितरतु श्रेयांसि भूयांसि नः ।
यद्विक्रान्तिदशासमुत्थितपदप्रस्यन्दिपाथस्विनीसख्येनेव सदानतस्य तनुते मौलौ स्थितिं शूलिनः ॥ १२
अम्बुन्यम्बुनिधेरनन्यगतिभिर्मीनैः कियद्भ्रम्यते क्लेशेनापि कियद्व्यलङ्घि रभसोत्तुङ्गैः प्लवङ्गेश्वरैः ।
विज्ञाता कियती पुनः क्षितिभृता मन्थेन गम्भीरता किं तैः केशवपादुकागुणमहाम्भोधेस्तटस्था वयम् ॥ १३

पदकमलरजोभिर्वासिते रङ्गभर्तुः परिचितनिगमान्ते पादुके धारयन्तः ।
अविदितपरिपाकं चन्द्रमुत्तंसयन्ते परिणतभुवनं तत्पद्ममध्यासते वा ॥ १४
सकृदपि (किल मूर्ध्ना)भुवनेऽस्मिञ्शार्ङ्गिणः पादुके त्वां मनुजमनुवहन्तं देहबन्धव्यपाये ।
उपचरति यथार्हं देववर्गस्त्वदीयः स तु नियमितभृत्यो जोषमास्ते कृतान्तः ॥ १५
पदसरसिजमेतत्पादुके रङ्गभर्तुः प्रतिनिधिपदवीं ते गाहते स्वेन भूम्ना ।
तदिदमपरथा चेत्तिष्ठतस्तस्य नित्यं कथमिव विदितार्थास्त्वां भजन्ते महान्तः ॥ १६
श्रुतिशिरसि निगूढं कर्मणां चोदितानां त्वदवधि विनिवेशं नाधिगन्तुं क्षमाणाम् ।
परिहसति मुरारेः पादुके बालिशानां पशुवधपरिशेषान्पण्डितो नामयज्ञान् ॥ १७
जनयितुमलमर्घ्यं दैत्यजित्पादरक्षे नमति महति देवे नाकसिन्धोर्विशीर्णाः ।
मुहुरहिपतिचूडामौलिरत्नाभिघातात्परिणतलघिमानः पाथसामूर्मयस्ते ॥ १८
पदसरसिजयोस्त्वं पादुके रङ्गभर्तुर्मनसि मुनिजनानां मौलिभागे श्रुतीनाम् ।
वचसि च सुकवीनां वर्तसे नित्यमेका तदिदमवगतं ते शाश्वतं वैश्वरूप्यम् ॥ १९
परिसरविनतानां मूर्ध्नि दुर्वर्णपङ्क्तिं परिणमयसि शौरेः पादुके त्वं सुवर्णम् ।
कुहकजनविदूरे सत्पथे लब्धवृत्तेः क्व नु खलु विदितस्ते कोऽप्यसौ धातुवादः ॥ २०
बलिमथनविहाराद्वर्धमानस्य विष्णोरखिलमतिपतद्भिर्विक्रमैरप्यमेयः ।
अवधिमनधिगच्छन्पापराशिर्मदीयः समजनि पदरक्षे सावधिस्त्वन्महिम्ना ॥ २१
तटभुवि यमुनायास्तस्थुषी यन्निवेशाद्वहति निगमशाखावैभवं नीपशाखा ।
पदकमलयुगं तत्पादुके रङ्गभर्तुस्त्वयि भजति विभूतिं पश्य शाखानुशाखाम् ॥ २२
शिरसि विनिहितायां भक्तिनम्रे भवत्यां सपदि तनुभृतस्तामुन्नतिं प्राप्नुवन्ति ।
मधुरिपुपदरक्षे यद्वशेनैव तेषामनितरसुलभं तद्धाम हस्तापचेयम् ॥ २३
सकृदपि भुवनेऽस्मिञ्शार्ङ्गिणः पादुके त्वामुपनिषदनुकल्पैरुत्तमाङ्गैर्दधानाः ।
नरकमिव महान्तो नाकमुल्लङ्घयन्तः परिषदि निविशन्ते प्राक्तनानां गुरूणाम् ॥ २४
शमदमगुणदान्तोदन्तवैदेशिकानां शरणमशरणानां मादृशां माधवस्य ।
पदकमलमिदं ते पादुके रक्ष्यमासीदनुदयनिधनानामागमानां निधानम् ॥ २५
परिचितपदपद्मां पादुके रङ्गिणस्त्वां त्रिभुवनमहनीयां सादरं धारयन्तः ।
निजशिरसि निलीनं देवि मन्दारमाल्यं निगमपरिमलैस्ते वासयन्तीव देवाः ॥ २६

कनकसरिदनूपे कल्पवृक्षस्य भूष्णोः पदकिसलयलग्ना पादुके मञ्जरी त्वम् ।
परिणतिमधुराणां या फलानां सवित्री वहसि निगमवृन्दैः संपदं षट्पदानाम् ॥ २७

परिकलयसि चेन्मां पद्मवासानिषेव्ये पदकमलयुगे त्वं पादुके रङ्गभर्तुः ।
अविदितनिगमानां नूनमस्मादृशानामघटितघटिनी ते शक्तिराविष्कृता स्यात् ॥ २८

श्रुतिशतशिरश्चूडापीडे निपीडयितुं क्षमे दुरितसरितामोघानेतानमोघविसर्पिणः ।
क्रमपरिणमद्वेधःश्रेणीशिखामणिघट्टनामसृणिततले रङ्गक्षोणीभृतो मणिपादुके ॥ २९

जगज्जननरक्षणक्षपणसङ्गिनो रङ्गिणः पवित्रतममाद्रिये भगवतः पदत्रद्वयम् ।
शिवत्वकरणक्षमत्रिदिवसिन्धुसंबन्धिनं प्रधाव्य चरणं निजं प्रणिदधाति यत्र प्रभुः ॥ ३०

यदध्वरभुजां शिरः पदयुगं च रङ्गेशितुर्द्वंद्वं घटयितुं क्षमं भवति शेषशेषित्वतः ।
शिरस्त्रमिदमस्तु मे दुरितसिन्धुमुष्टिंधयं कदध्वविहतिक्षमं किमपि तत्पदत्रद्वयम् ॥ ३१

समुत्क्षिपति चेतसि स्थिरनिवेशिता तावकी मुकुन्दमणिपादुके मुहुरुपासनावासना ।
उदर्कपरिकर्कशानुपरिपर्वणा खर्वितानन्र्थशतगर्भितानमरशम्भलीविभ्रमान् ॥ ३२

विगाहन्ते रङ्गक्षितिपतिपदत्रायिणि सकृद्वहन्तस्त्वामन्तर्विनिहितकुचेलव्यतिकराः ।
मदोद्दामस्तम्बेरमकरटनिर्यन्मदझरीपरीवाहप्रेङ्खद्भ्रमरमुखरामङ्गणभुवम् ॥ ३३

अधिदैवतमापतत्सु कल्पेष्वधिकारं भजतां पितामहानाम् । अभिरक्षतु रङ्गभर्तुरेषा करुणा काचन पादुकामयी नः ॥ ३४

ध्रुवमिन्द्रियनागशृङ्खला वा निरयद्वारनिवारणार्गला वा । अनपायपदाधिरोहिणी वा मम रङ्गेशविहारपादुके त्वम् ॥ ३५

शरणागतसार्थवाहशीलां श्रुतिसीमन्तपदप्रसाधनार्हाम् । अधिरङ्गमुपास्महे मुरारेर्महनीयां तपनीयपादुके त्वाम् ॥ ३६

इह ये भवतीं भजन्ति भक्त्या कृतिनः केशवपादुके नियुक्ताः । कथयाम्ब तिरोहितं तृतीयं नयनं त्रीणि मुखानि वा किमेषाम् ॥

मधुवैरिपरिग्रहेषु नित्यं क्षमया त्वं मणिपादुके समेता । तदपि क्षमसे न किं परेषां त्रिदशाधीश्वरशेखरे निवेशम् ॥ ३८

द्वितयं प्रतियन्ति रङ्गभर्तुः कतिचित्काञ्चनपादुके शरण्यम् । अभयान्वितमग्रिमं करं वा भवतीशेखरितं पदाम्बुजं वा॥ ३९

भरताश्वसनेषु पादशब्दं वसुधाश्रोत्रसमुद्भवो मुनीन्द्रः । पठति त्वयि पादुके ततस्त्वं नियतं रामपदादभिन्नभूमा ॥ ४०

मकुटेषु निवेश्य दिक्पतीनां पदमेव प्रतिपद्य दैत्यहन्तुः । परिरक्षसि पादुके पदं त्वं क नु मिद्येत गरीयसां प्रभावः॥४१

जगतामभिरक्षणे त्रयाणामधिकारं मणिपादुके वहन्त्योः । युवयोः परिकर्मकोटिलग्नं चरणद्वन्द्वमवैमि रङ्गभर्तुः ॥ ४२

पदरक्षिणि वत्सला निकामं रघुवीरस्य पदाम्बुजादपि त्वम् । यदसौ भरतस्त्वयांशवत्त्वान्न पुनस्तादृशमन्वभूद्वियोगम्॥ ४३

अभिगम्य मुकुन्दपादुके त्वामपनीतातपवारणैः शिरोभिः । हरितां पतयो दुरापमन्यैरनघच्छायमवाप्नुवन्ति भोगम् ॥ ४४

अपहाय सितासितानुपायानरविन्देक्षणपादुके महान्तः । त्वदनन्यतया भजन्ति वृत्तिं त्वदसाधारणभोगसाभिलाषाः ॥४५

प्रणमन्ति न वा विधेर्विपाकाद्य इमे रङ्गनरेन्द्रपादुके त्वाम् । उपजातमनुत्तमाङ्गमेषामुभयेषामपि चित्रमुत्तमाङ्गम् ॥ ४६

तव केशवपादुके प्रभावो मम दुष्कर्म च नन्वनन्तसारे । नियमेन तथापि पश्चिमस्य प्रथमेनैव पराभवं प्रतीमः ॥ ४७

अस्त्रभूषणतयैव केवलं विश्वमेतदखिलं बिभर्ति यः । अक्रमेन मणिपादुके त्वया सोऽपि शेखरतयैव धार्यते ॥ ४८

रामपादसहधर्मचारिणीं पादुके निखिलपातकच्छिदम् । त्वामशेषजगतामधीश्वरीं भावयामि भरताधिदेवताम् ॥ ४९

चूडाकपालव्यतिषङ्गदोषं विमोचयिष्यन्निव विष्णुपद्याः । कृतादरः केशवपादरक्षे बिभर्ति बालेन्दुविभूषणस्त्वाम् ॥ ५०
त्वयैव नित्यं मणिपादरक्षे राजन्वती सृष्टिरियं प्रजानाम् । स्त्रीराज्यदोषप्रशमाय नूनं निर्दिश्यसे नाथविशेषणेन ॥ ५१
परस्य पुंसः पदसंनिकर्षे तुल्याधिकारां मणिपादुके त्वाम् । उत्तंसयन्ति स्वयमुत्तमाङ्गैः शेषास्समं शेषगरुत्मदाद्याः ॥ ५२
बिभर्षि नित्यं मणिपादुके त्वं विश्वंभरं धाम निजेन भूम्ना । तवानुभावश्चुलुकीकृतोऽयं भक्तैरजस्रं भवतीं दधानैः ॥५३
मुकुन्दपादाम्बुजधारिणि त्वां मोहादनुत्तंसयतां जनानाम् । मूर्ध्नि स्थिता दुर्लिपयो भवन्ति प्रशस्तवर्णावलयस्तदीयाः॥५४
भूमिः श्रुतीनां भुवनस्य धात्री गुणैरनन्ता विपुला विभूत्या । स्थिरा स्वयं पालयितुं क्षमा नः सर्वंसहा शौरिपदावनि त्वम्॥५५
स्थैर्यं कुलक्षोणिभृतां विधत्से शेषादयस्त्वां शिरसा वहन्ति । पदप्रसूता परमस्य पुंसः पृथ्वीमहिम्ना मणिपादुके त्वम् ॥
दैत्याधिपानां बलिनां किरीटा निक्षेपणं ते यदि नाभ्यनन्दन् । रङ्गेशपादावनि रङ्गधाम्नः सोपानतां प्राप्य वहन्त्यमी त्वाम्॥
शेषो गरुत्मान्मणिपादपीठी त्वं चेति पादावनि विश्वमान्याः । तुल्याधिकारा इह किंतु सन्तस्त्वामेव नित्यं शिरसा वहन्ति॥
परस्य पुंसः परमं पदं तद्बिभर्षि नित्यं मणिपादरक्षे । अन्यादृशां व्योमसदां पदानि त्वय्यायतन्ते यदिदं न चित्रम् ॥
पादौ मुरारेः शरणं प्रजानां तयोस्तदेवासि पदावनि त्वम् । शरण्यतायास्त्वमनन्यरक्षा संदृश्यसे विश्रमभूमिरेका ॥ ६०
अन्येषु पद्मा कमलासनाद्यैरङ्गेषु रङ्गाधिपतेः श्रितेषु । पादावनि त्वामधिगम्य जातं पदं मुरारेरधिदैवतं नः ॥ ६१
क्षणं सरोजेक्षणपादुके यः कृतादरः किंकुरुते भवत्याः । अकिंचनस्यापि भवन्ति शीघ्रं भ्रूकिंकरास्तस्य पुरंदराद्याः ॥ ६२
वहन्ति ये माधवपादुके त्वामूह्यन्त एते दिवि निर्विघाताः । हंसेन नित्यं शरदभ्रभासा कैलासगौरेण ककुद्मता वा ॥६३
रुद्रं श्रितो देवगणः स रुद्रः पद्मासनं सोऽपि च पद्मनाभम् । स त्वामनन्तो न पुनस्त्वमन्यं क एष पादावनि ते प्रभावः॥
परस्य धाम्नः प्रतिपादनार्हां वदन्ति विद्यां मणिपादुके त्वाम् । यतस्त्वयैवाधिगमे प्रजानां दूरीभवत्युत्तरपूर्वमंहः ॥ ६५
धन्या मुकुन्दस्य पदानुषङ्गाद्धनीयता येन समर्चिता त्वम् । वासस्तदीयो मणिपादरक्षे लक्ष्म्यालकामप्यधरीकरोति ॥ ६६
पदेन विष्णोः किमुतेतरेषां विसृज्य सङ्गं य उपासते त्वाम् । करोषि तान्किं त्वमपेतकामान्कालेन पादावनि सत्यकामान् ॥
अभ्यासयोगेन निगृह्यमाणैरन्तर्मुखैरात्मविदो मनोभिः । मातस्त्वया गुप्तपदप्रभावादन्वेषयन्त्यागमिकं निधानम् ॥ ६८
मूर्ध्ना दधानां मणिपादुके त्वामुत्तंसितं वा पुरुषं भवत्या । वदन्ति केचिद्द्वयमामनामस्त्वामेव साक्षादधिदैवतं नः ॥ ३९
मूर्ध्ना सतामधस्तादुपरि च विष्णोः पदेन संघटिताम् । अदवीयसीं विमुक्तेः पदवीमवयन्ति पादुके भवतीम् ॥ ७०

## ॥ अथ समर्पणपद्धतिश्चतुर्थी ॥

भजामः पादुके याभ्यां भरतस्याग्रजस्तदा । प्रायः प्रतिप्रयाणाय प्रास्थानिकमकल्पयत् ॥ १

राज्यं विहाय रघुवंशमहीपतीनां पौरांश्च पादरसिकान्पृथिवीं च रक्ताम् ।
त्वामेव हन्त चरणावनि संप्रयास्यन्नालम्बत प्रथममुत्तरकोसलेन्द्रः ॥ २

प्राप्ते प्रयाणसमये मणिपादरक्षे पौरानवेक्ष्य भवती करुणाप्रलापान् ।
मञ्जुप्रणादमुखरा विनिवर्तनार्थं रामं पदग्रहणपूर्वमयाचतेव ॥ ३

मत्वा तृणाय भरतो मणिपादरक्षे रामेण तां विरहितां रघुराजधानीम् ।
त्वामेव सप्रणयमुज्जयिनीमवन्तीं मेने महोदयमयीं मधुरामयोध्याम् ॥ ४

रामात्मनः प्रतिपदं मणिपादरक्षे विश्वंभरस्य वहनेन परीक्षितां त्वाम् ।
विश्वस्य देवि वहने विनिवेशयिष्यन्विस्रब्ध एव भरतो भवतीं ययाचे ॥ ५
भक्त्या परं भवतु तद्भरतस्य साधोस्त्वत्प्रार्थनं रघुपतौ मणिपादरक्षे ।
केनाशयेन स मुनिः परमार्थदर्शी भद्राय देवि जगतां भवतीमवादीत् ॥ ६
रामे वनं व्रजति पङ्क्तिरथे प्रमुते राज्यापवादचकिते भरते तदानीम् ।
आश्वासयेत्क इव कोसलवासिनस्तान्नोचेत्त्वमपि साहसवृत्तिरासीः ॥ ७
पादावनि प्रभवतो जगतां त्रयाणां रामादपि त्वमधिका नियतं प्रभावात् ।
नो चेत्कथं नु भरतस्य तमेव लिप्सोः प्रत्यायनं परिपणं भवती भवित्री ॥ ८
मन्ये नियुज्य भवतीं मणिपादरक्षे पार्ष्णिग्रहस्य भरतस्य निवारणार्थम् ।
रत्नाकरं सपदि गोष्पदयन्विजिग्ये रामः क्षणेन रजनीचरराजधानीम् ॥ ९
पादावनि प्रभुतरानपराधवर्गान्सोढुं क्षमा त्वमसि मूर्तिमती क्षमैव ।
यत्त्वां विहाय निहताः परिपन्थिनस्ते देवेन दाशरथिना दशकण्ठमुख्याः ॥ १०
वाक्ये गरीयसि पितुर्विहितेऽप्यतृप्तया मातुर्मनोरथमशेषमवन्ध्ययिष्यन् ।
मन्ये तदा रघुपतिर्भरतस्य तेने मातस्त्वयैव मणिमौलिनिवेशलक्ष्मीम् ॥ ११
पादाम्बुजाद्विगलितां परमस्य पुंसस्त्वामादरेण विनिवेश्य जटाकलापे ।
अङ्गीचकार भरतो मणिपादरक्षे गङ्गाधिरूढशिरसो गिरिशस्य कान्तिम् ॥ १२
अविकलमधिकर्तुं रक्षणे सप्तलोक्या रघुपतिचरणेन न्यस्तदिव्यानुभावाम् ।
अभजत भरतस्त्वामञ्जसा पादरक्षे मणिमकुटनिवेशत्यागधन्येन मूर्ध्ना ॥ १३
इयमविकलयोगक्षेमसिद्ध्यै प्रजानामलमिति भरतेन प्रार्थितामादरेण ।
रघुपतिरधिरोहन्नभ्यषिञ्चत्स्वयं त्वां चरणनखमणीनां चन्द्रिकानिर्झरेण ॥ १४
प्रणयिनि पदपद्मे गाढमाश्लिष्यति त्वां विधिसुतकथितं तद्वैभवं ते विदन्तः ।
अनुदिनमृषयस्त्वामर्चयन्त्यग्न्यगारे रघुपतिपदरक्षे रामगिर्याश्रमस्थाः ॥ १५
नियतमधिरुरोह त्वामनावेद्यशक्तिं निजचरणसरोजे शक्तिमाधातुकामः ।
स कथमितरथा त्वां न्यस्य रामो विजह्रे दृषदुपचितभूमौ दण्डकारण्यभागे ॥ १६
रघुपतिपदपद्माद्रत्नपीठे निवेष्टुं भरतशिरसि लग्नां प्रेक्ष्य पादावनि त्वाम् ।
परिणतपुरुषार्थः पौरवर्गः स्वयं ते विधिमभजत सर्वो बन्दिवैतालिकानाम् ॥ १७
अनन्यराजन्यनिवेशनिष्ठां चकार पृथ्वीं चतुरर्णवान्ताम् । भ्रातुर्नियोगाद्भरतः सदा त्वां मूर्ध्ना वहन्मूर्तिमतीमिवाज्ञाम् ॥
यद्धात्रे भरताय रङ्गपतिना रामत्वमातस्थुषा नित्योपास्यनिजाङ्घ्रिनिष्क्रियतया निश्चित्य विश्राणितम् ।
योगक्षेमवहं समस्तजगतां यद्गीयते योगिभिः पादत्राणमिदं मितंपचकथामह्नाय मे निह्नुताम् ॥ १९
भरतस्येव ममापि प्रशमितविश्वापवाददुर्जाता । शेषेव शिरसि नित्यं विहरतु रघुवीरपादुके भवती ॥ २०

## ॥ अथ प्रतिप्रस्थानपद्धतिः पञ्चमी ॥

प्रशस्ते रामपादाभ्यां पादुके पर्युपास्महे । आनृशंस्यं ययोरासीदाश्रितेष्वनवग्रहम् ॥ १

भृशातुरसहोदरप्रणयखण्डनस्वैरिणा पदेन किमनेन मे वनमिहावनादिच्छता ।
इतीव परिहाय तन्निववृते स्वयं यत्पुरा पदत्रमिदमाद्रिये धृतजगत्त्रयं रङ्गिणः ॥ २

दशवदनविनाशं वाञ्छतो यस्य चक्रे दशरथमनवोक्ति दण्डकारण्ययात्रा ।
स च भरतविमर्दे सत्यसन्धस्त्वयाऽऽसीद्रघुपतिपदरक्षे राजधानीं प्रयान्त्या ॥ ३

अभ्युपेतविनिवृत्तिसाहसा देवि रङ्गपतिरत्नपादुके । अत्यशेत भवती महीयसा पारतन्त्र्यविभवेन मैथिलीम् ॥ ४

अव्याहतां रघुपतेर्वहतः प्रतिज्ञामंसाधिरोहणरसे विहते धरण्याः ।
प्रादान्निवृत्त्य भवती मणिपादरक्षे स्पर्शं पदेन विगतव्यवधानखेदम् ॥ ५

मन्त्राभिषेकविरहाद्भजता विशुद्धिं संस्कारवर्जनवशादभिसंस्कृतेन ।
मूर्ध्ना निनाय भरतो मणिपादुके त्वां रामाज्ञया विनिहितामिव राज्यलक्ष्मीम् ॥ ६

रक्षार्थमस्य जगतो मणिपादरक्षे रामस्य पादकमलं समये त्यजन्त्योः ।
किं दुष्करं तव विभूतिपरिग्रहो वा किं वा विदेहदुहितुः कृपणा दशा सा ॥ ७

सीतासखस्य सहसा चरणारविन्दाद्भक्त्या नते कृतपदा भरतोत्तमाङ्गे ।
आरुह्य नागमभितो भवती वितेने मायूरचामरभरं मणिरश्मिजालैः ॥ ८

मूर्ध्ना मुकुन्दपदरक्षिणि बिभ्रतस्त्वामाविर्मदस्य रघुवीरमदावलस्य ।
आमोदिभिस्सपदि दानजलप्रवाहैर्लेभे चिराद्वसुमती रुचिरं विलेपम् ॥ ९

आशाः प्रसाधयितुमम्ब तदा भवत्यां दैवादकाण्डशरदीव समुत्थितायाम् ।
स्तोकावशेषसलिलाः सहसा बभूवुः साकेतयौवतविलोचनवारिवाहाः ॥ १०

अन्तेवसन्नचरमस्य कवेः स योगी वन्यान्प्रगृह्य विविधानुपदाविशेषान् ।
आतस्थुषीं रघुकुलोचितमौपवाह्यं प्रत्युज्जगाम भवतीं भरतोपनीताम् ॥ ११

मातस्त्वदागमनमङ्गलदर्शिनीनां साकेतपक्ष्मलदृशां चटुलाक्षिभृङ्गैः ।
वातायनानि सहसा शतपत्रितानि जातानि तत्र वदनैर्मणिपादरक्षे ॥ १२

साकेतसीम्नि भवती मणिपादरक्षे माङ्गल्यलाजनिकरैरवकीर्यमाणा ।
कीर्त्याः स्वयंवरपतेर्भरतस्य काले वैवाहिकी जननि वह्निशिखेव रेजे ॥ १३

छत्रेन्दुमण्डलवती मणिपादुके त्वं व्याधूतचामरकलापशरप्रसूना ।
सद्यो बभूविथ समग्रविकासहेतुः साकेतपौरवनितानयनोत्पलानाम् ॥ १४

प्रैक्षन्त वक्त्रैर्मणिपादरक्षे शत्रुंजयं शैलमिवाधिरूढाम् । रामाभिधानप्रतिपन्नहर्षैरुत्तानितैरुत्तरकोसलानाम् ॥ १५

द्रष्टुं तदा राघवपादरक्षे सीतामिव त्वां विनिवर्तमानाम् । आसन्नयोध्यापुरसुन्दरीणामौत्सुक्यलोलानि विलोचनानि ॥ १६

आस्थाय तत्र स्फुटबिन्दुनादं स्तम्बेरमं तादृशसंनिवेशम् । अदर्शयस्त्वं पुरमध्यभागे पादावनि त्वत्प्रणवाश्रयत्वम् ॥ १७

दशग्रीवस्तम्बेरमदलनदुर्दान्तहृदये विहारस्वाच्छन्द्याद्विशति रघुसिंहे वनभुवम् ।
स्ववात्सल्यक्रोडीकृतभरतशावेव भवती निराबाधां पादावनि न विजहौ कोसलगुहाम् ॥ १८
कैकेयीवरदानदुर्दिननिरालोकस्य लोकस्य यत्त्राणार्थं भरतेन भव्यमनसा साकेतमानीयत ।
रामत्यागसहैरसह्यविरहं रङ्गक्षितीन्द्रस्य तत्पादत्राणमनन्यतन्त्रफणिनेरार्यीडमीडीमहि ॥ १९
समुपस्थिते प्रदोषे सहसा विनिवृत्य चित्रकूटवनात् । अभजत्पुनर्जनपदं वत्सं धेनुरिव पादुके भवती ॥ २०

## ॥ अथ अधिकारपरिग्रहपद्धतिः षष्ठी ॥

अधीष्टे पादुका सा मे यस्याः साकेतवासिभिः । अन्वयव्यतिरेकाभ्यामन्वमीयत वैभवम् ॥ १
मोचितस्थिरचरानयत्नतः कोसलाञ्जनपदानुपास्महे । येषु कांश्चन बभूव वत्सरान्दैवतं दनुजवैरिपादुका ॥ २
साम्राज्यसंपदिव दासजनोचिता त्वं रामेण सत्यवचसा भरताय दत्ता ।
स त्वां निवेश्य चरणावनि भद्रपीठे पृथ्वीं बुभोज बुभुजे च यशोविभूतिम् ॥ ३
भोगाननन्यमनसां मणिपादुके त्वं पुष्णासि हन्त भजतामनुषङ्गसिद्धान् ।
तेनैव नूनमभवद्भरतस्य साधोरप्रार्थितं तदिह राज्यमवर्जनीयम् ॥ ४
रामप्रयाणजनितं व्यपनीय शोकं रत्नासने स्थितिमती मणिपादरक्षे ।
पृथ्वीं निजेन यशसा विहितोत्तरीयामेकातपत्रतिलकां भवती वितेने ॥ ५
रामाज्ञया परवती परिगृह्य राज्यं रत्नासनं रघुकुलोचितमाश्रयन्ती ।
शुद्धां पदावनि पुनर्भवती वितेने स्वातन्त्र्यलेशकलुषां भरतस्य कीर्तिम् ॥ ६
पौलस्त्यवीरवदनस्तवकावसानात्पुष्पाणि दण्डकवनेष्वपचेतुमिच्छोः ।
रक्षाधुरं धृतवती मणिपादुके त्वं रामस्य मैथिलसुतासहिते प्रचारे ॥ ७
पादावनि प्रचलचामरवृन्दमध्ये भद्रासनास्तरगता भवती विरेजे ।
आकीर्णदिव्यसलिले कटके सुमेरोरम्भोजिनीव कलहायितहंसयूथा ॥ ८
मान्ये रघूद्वहपदे मणिपादुके त्वां विन्यस्य विग्रहवतीमिव राज्यलक्ष्मीम् ।
आलोलमक्षवलयी भरतो जटावानालम्ब्य चामरमनन्यमनाः सिषेवे ॥ ९
प्राप्ते दिवं दशरथे भरते विलक्षे पर्याकुलेषु परमुत्तरकोसलेषु ।
त्वं चेदुपेक्षितवती क इवाभविष्यद्गोपायितुं गुहसखस्य विभोः पदं तत् ॥ १०
भ्रातुर्यदम्ब विरहाद्भरते विषण्णे दाक्षिण्यमाश्रितवती मणिपादुके त्वम् ।
आसीदशेषजगतां श्रवणामृतं तद्वाचालकाहलसहं बिरुदं तदा ते ॥ ११
राज्यं तदा दशरथादनु रामतः प्राग्विश्राणया चरणरक्षिणि वीतशोकम् ।
तुल्याधिकारभजनेन बभूव धन्यो वंशस्त्वयाम्ब मनुवंशमहीपतीनाम् ॥ १२
वर्षाणि तानि वृषलो न तपांसि तेपे बालो न कश्चिदपि मृत्युवशं जगाम ।
राज्ये तवाम्ब रघुपुङ्गवपादरक्षे नैवापरं प्रतिविधेयमभूत्प्रसक्तम् ॥ १३

विश्वं त्वदाश्रितपदाम्बुजसंभवायां यस्यां प्रतिष्ठितमिदं मणिपादरक्षे ।
आसीदनन्यशरणा समये यथावत्सापि त्वया वसुमती विहितप्रतिष्ठा ॥ १४

प्रायेण रामविरहव्यथिता तदानीमुत्सङ्गमाश्रितवती तव राज्यलक्ष्मीः ।
तामेव देवि ननु जीवयितुं जलार्द्रामङ्गीचकार भवती भरतोपनीताम् ॥ १५

वीरव्रतप्रणयिनि प्रथमे रघूणां प्राप्ते चिराय भरते व्रतमासिधारम् ।
त्यक्त्वा पदावनि तदा विविधान्विहारानैकासिकाव्रतमपूर्वमवर्तयस्त्वम् ॥ १६

काकुत्स्थपादविरहप्रतिपन्नमौनां निष्पन्दतामुपगतां मणिपादरक्षे ।
आश्वासयन्निव मुहुर्भरतस्तदानीं शीतैरवीजयत चामरमारुतैस्त्वाम् ॥ १७

यत्र क्वचिद्विहरतोऽपि पदारविन्दं रक्ष्यं मया रघुपतेरिति भावयन्त्या ।
निःशेषमेव सहसा मणिपादरक्षे निष्कण्टकं जगदिदं विदधे भवत्या ॥ १८

रामं त्वया विरहितं भरतं च तेन त्रातुं पदावनि तदा यदभूत्प्रतीतम् ।
रामानुजस्य तव चाम्ब जगत्समस्तं जागर्ति तेन खलु जागरणव्रतेन ॥ १९

अन्तःपुरे परिजनैः समयोपयातैरभ्यर्चिता भवसि या विनयोपपन्नैः ।
सा कोसलेश्वरपदावनि भूपतीनां संघट्टनं मकुटपङ्क्तिभिरन्वभूस्त्वम् ॥ २०

प्राप्याधिकारमुचितं भुवनस्य गुप्त्यै भद्रासनं भरतवन्दितमाश्रयन्त्या ।
मध्येऽवतीर्णमिव माधवपादरक्षे मातस्त्वयापि मनुवंशमहीपतीनाम् ॥ २१

राजासने रघुकुलोद्वहपादरक्षे नीराजनं समभवत्समयोचितं ते ।
श्लाघावशेन बहुशः परिघूर्णिताभिः सामन्तमौलिमणिमङ्गलदीपिकाभिः ॥ २२

पृथ्वीपतीनां युगपत्किरीटाः प्रत्यर्थिनां प्राणितुमर्थिनां च । प्रापुस्तदा राघवपादरक्षे त्वदीयमास्थानिकभद्रपीठम् ॥ २३
प्रणम्य रङ्गेश्वरपादरक्षे दूरोपनीतैरुपदाविशेषैः । सभाजयन्ति स्म तदा सभायामुच्चैस्तरामुत्तरकोसलास्त्वाम् ॥ २४
अपावृतद्वारमयन्त्रिताश्वं रङ्गेशपादावनि पूर्वमासीत् । त्वया यदृच्छासुखसुप्तपान्थं रामे वनस्थेऽपि पदं रघूणाम् ॥ २५
अनन्यभक्तिर्मणिपादुके त्वामभ्यर्चयन्दाशरथिर्द्वितीयः । विकल्प्यमानः प्रथमेन कीर्त्या वन्द्यः स्वयं व्योमसदां बभूव ॥
अरण्ययोग्यं पदमस्पृशन्ती रामस्य राजार्हपदे निविष्टा । आस्थाननित्यासिकया निरास्थः स्वर्गौकसां स्वैरगतेर्विघातम् ॥
राजासने चेद्भवती निषण्णा रङ्गेशपादावनि तत्र चित्रम् । यत्राधिरूढाः क्रमशः पुरा त्वामुत्तंसयन्ते रघुसार्वभौमाः ॥
भद्रासनं चेत्परिवृत्तमासीद्देवि क्षणं दक्षिणतो मुखं ते । कथं भवेत्काञ्चनपादरक्षे रामस्य रक्षोमृगयाविहारः ॥ २९
यावत्त्वया राघवपादरक्षे जिगीषिता राक्षसराजधानी । मालेव तावल्लुलिता मदान्धैरुद्यानशाखामृगयूथपैस्ते ॥ ३०
महीक्षितां राघवपादरक्षे भद्रासनस्थां भवतीं स्पृशन्तः । पूर्वं तथात्वे नियतेऽपि भूयः कल्याणतामानशिरे किरीटाः ॥
अनिच्छतः पाण्डुरमातपत्रं पित्रा वितीर्णं मणिपादरक्षे । आसीत्त्वदर्थं विधृतेन तेन छाया समग्रा भरतस्य मौलौ ॥ ३२
पादुके रघुपतौ यदृच्छया प्रस्थिते वनविहारकौतुकात् । आधिराज्यमधिगम्यते युवामक्षतं वसुमतीमरक्षतम् ॥ ३३
रघुवीरपदानुषङ्गमात्रात्परिबर्हेषु निवेशिता यदि त्वम् । अधिकारदिने कथं पुनस्ते परिवारास्तव पादुके बभूवुः ॥ ३४

पुरुषार्थचतुष्टयार्थिनीनां परिषत्ते महिता वसिष्ठमुख्यैः । क्रयविक्रयपत्तनं प्रजानामभवत्काञ्चनपादुके तदानीम् ॥ ३५
मनुजत्वतिरोहितेन शक्ये वपुषैकेन विरोधिनां निरासे । अभजद्भरतादिभेदमीशः स्वयमाराधयितुं पदावनि त्वाम् ॥ ३६
मगधाङ्गकलिङ्गवङ्गमुख्यान्विमताग्रन्ग्रगवेषिणः ससैन्यान् । रघुपुङ्गवपादुके विजिग्ये भरतः शासनमुद्वहन्भवत्याः ॥ ३७

अनितरवहनीयं मन्त्रिमुख्यैर्यदा तत्त्वयि विनिहितमासीत्सूर्यवंशाधिराज्यम् ।
रघुपतिपदरक्षे रत्नपीठे तदानीं श्रियमिव ददृशुस्त्वां सादरं लोकपालाः ॥ ३८

परिहृतदण्डकाध्वगमनं पदरक्षणि तत्परिणतविश्वसंपदुदयं युवयोर्द्वितयम् ।
रघुपति(रत्न)भद्रपीठमधिरुह्य तदा विदधे व्यपगतवैरिभूपनिलयं वसुधावलयम् ॥ ३९

प्राप्तोदया तदानीं किमपि तमस्तन्निराकरोद्भवती । तनुरिव मनुकुलजनुषां प्रसवित्री रत्नपादुके सवितुः ॥ ४०

## ॥ अथ अभिषेकपद्धतिः सप्तमी ॥

पाहि नः पादुके यस्या विधास्यन्नभिषेचनम् । आभिषेचनिकं भाण्डं चक्रे रामः प्रदक्षिणम् ॥ १
राघवस्य चरणौ पदावनि प्रेक्षितुं त्वदभिषेकमीषतुः । आभिषेचनिकभाण्डसंनिधौ यत्प्रदक्षिणगतिः शनैर्ययौ ॥ २
मूर्धाभिषिक्तैर्नियमेन वाह्यौ विचिन्त्य नूनं रघुनाथपादौ । रत्नासनस्थां मणिपादुके त्वां रामानुजन्मा भरतोऽभ्यषिञ्चत् ॥
भ्रातुर्नियोगेऽप्यनिवर्तमानं राज्याभिषेकं च परित्यजन्तम् । रामानुजौ तौ ननु पारतन्त्र्यादुभावुभाभ्यां भवती जिगाय ॥
निवेश्य रङ्गेश्वरपादरक्षे भद्रासने सादरमभ्यषिञ्चत् । वशी वसिष्ठो मनुवंशजानां महोक्षितां वंशपुरोहितस्त्वाम् ॥ ५
कृताभिषेका भवती यथावद्रङ्गेशपादावनि रत्नपीठे । गङ्गानिपातस्नपितां सुमेरोरधित्यकाभूमिमधश्चकार ॥ ६
वसिष्ठमुख्यैर्विहिताभिषेकां राज्यासने रामनिवेशयोग्ये । तुष्टाव रङ्गेश्वरपादरक्षे प्राचेतसस्त्वां प्रथमः कवीनाम् ॥ ७
रक्षोवधार्थं मणिपादरक्षे रामात्मनो रङ्गपतेः प्रवासे । रक्षोपकाराद्भवती वितेने राजन्वतीं कोसलराजधानीम् ॥ ८
प्राप्ताभिषेका मणिपादरक्षे प्रतापमुग्रं प्रतिपद्यमाना । शशास पृथ्वीं भवती यथावत्साकेतसिंहासनसार्वभौमी ॥ ९
दशाननादीन्मणिपादरक्षे जिगीषतो दाशरथेर्वियोगात् । जातोपतापा त्वयि संप्रयुक्तैस्तीर्थोदकैरुच्छ्वसिता धरित्री ॥ १०

अध्यासितं मनुमुखैः क्रमशो नरेन्द्रैरारोप्य देवि भवतीं तपनीयपीठम् ।
राज्याभिषेकमनघं मणिपादरक्षे रामोचितं तव वशं भरतो वितेने ॥ ११

स्नेहेन देवि भवतीं विषयेऽभिषिञ्चन्द्भिः सप्तसंख्यभुवनोदरदोषरस्त्वाम् ।
जातं रघूद्वहदिवाकरविप्रयोगादन्धंतमिस्रमहरद्भरतः प्रजानाम् ॥ १२

हस्तापचेयपुरुषार्थफलप्रसूतेर्मूलं पदावनि मुकुन्दमहीरुहस्त्वम् ।
छायाविशेषमदिशद्यदसौ प्रजानामावर्जितैस्त्वयि शुभैरभिषेकतोयैः ॥ १३

अह्नाय रामविरहात्परिखिन्नवृत्तेराश्वासनाय भवती मणिपादरक्षे ।
तीर्थाभिषेकमपदिश्य वसुंधरायाश्चक्रे तदा समुचितं शिशिरोपचारम् ॥ १४

मालिन्यमाश्रितवती मणिपादरक्षे पङ्केन केकयसुताकलहोत्थितेन ।
शुद्धिं परामधिजगाम वसुंधरेयं त्वत्तः क्षणान्निपतितैरभिषेकतोयैः ॥ १५

आवर्जितं मुनिगणेन जगद्विभूत्यै तोयं पदावनि तदा त्वयि मन्त्रपूतम् ।
मूलावसेकसलिलं निगमद्रुमाणां शापोदकं च समभूत्क्षणदाचराणाम् ॥ १६

विप्रोषिते रघुपतौ भवती यथार्हं मान्ये पदे स्थितिमती मनुवंशजानाम् ।
आत्मन्यथर्वनिपुणैः प्रहितैः प्रजानामश्रूण्यपास्यदभिषेकजलप्रवाहैः ॥ १७

प्रायो विशोषितरसा पतिविप्रयोगात्पर्याकुलीकृतसमुद्रपयोधरा गौः ।
अम्ब त्वदीयमभिषेकपयः पिबन्ती धेनुर्बभूव जगतां धनधान्यदोग्ध्री ॥ १८

वृत्ते यथावदभिषेकविधौ बभासे पश्चात्तवाम्ब भरतेन धृतः किरीटः ।
आकस्मिकः स्वकुलविप्लवशान्तिहर्षात्प्राप्तस्त्विषामिव पतिर्मणिपादुके त्वाम् ॥ १९

मनुवंशपुरोहितेन मन्त्रैरभिमन्त्र्य त्वयि पादुके प्रयुक्तम् । अभिषेकजलं क्षणेन राज्ञां शमयामास समुत्थितान्प्रतापान् ॥

पादपादुपहृता रघूद्वहादालवालमिव पीठमाश्रिता । अभ्यषेचि भवती तपोधनैः पारिजातलतिकेव पादुके ॥ २१

अलघुभिरभिषेकव्यापृतैरम्बुभिस्ते दिनकरकुलदैन्यं पादुके क्षालयिष्यन् ।
स खलु कमलयोनेः सूनुराधत्त मन्त्रेष्वधिकनियमयोगां शक्तिमाथर्वणेषु ॥ २२

दिनकरकुलजानां देवि पृथ्वीपतीनां निरुपधिमधिकारं प्राप्नुवत्यां भवत्याम् ।
अजनिषत समस्ताः पादुके तावकीनस्नपनसलिलयोगान्निम्नगास्तुङ्गभद्राः ॥ २३

तव विधिवदुपात्ते सार्वभौमाभिषेके भरतसमयविद्भिः पादुके मन्त्रिमुख्यैः ।
त्वदवधि निजकर्मस्थायिनीनां प्रजानां प्रथमयुगविशेषाः प्रादुरासन्विचित्राः ॥ २४

अवसितरिपुशब्दानन्वभूस्त्वं तदानीं रघुपतिपदरक्षे लब्धराज्याभिषेका ।
चलितभुजलतानां चामरग्राहिणीनां मणिवलयनिनादैर्मेदुरान्मन्त्रघोषान् ॥ २५

समुचितमभिषेकं पादुके प्राप्नुवत्यां त्वयि विनिपतितानां देवि तीर्थोदकानाम् ।
ध्वनिरनुगतमन्त्रः सीदतां कोसलानां शमयितुमलमासीत्संकुलानार्तनादान् ॥ २६

दिविषदनुविधेयं देवि राज्याभिषेकं भरत इव यदि त्वं पादुके नान्वमंस्थाः ।
कथमिव रघुवीरः कल्पयेदल्पयत्नस्त्रिचतुरशरपातैस्तादृशं देवकार्यम् ॥ २७

कतिचन पदपद्मस्पर्शसौख्यं त्यजन्ती व्रतमतुलमधास्त्वं वत्सरान्सावधाना ।
रघुपतिपदरक्षे राक्षसैस्त्रासितानां रणरणकविमुक्तं येन राज्यं सुराणाम् ॥ २८

अथर्वोपज्ञं ते विधिवदभिषेकं विदधतां वसिष्ठादीनामप्युपचितचमत्कारभरया ।
त्वदास्थान्या रङ्गक्षितिरमणपादावनि तदा लघीयस्यो जाता रघुपरिषदाहोपुरुषिकाः ॥ २९

अभिषेचयतु स रामः पदेन वा स्पृशतु पादुके भवतीम् । अविशेषितमहिमा त्वं क्व वा विशेषः क्षमासमेतानाम् ॥ ३०

## ॥ अथ निर्यातनापद्धतिरष्टमी ॥

अभिषेकोत्सवात्तस्माद्यस्या निर्यातनोत्सवः । अत्यरिच्यत तां वन्दे भव्यां भरतदेवताम् ॥ १

उपास्य वर्षाणि चतुर्दश त्वामुत्तारिकामुत्तरकोसलस्थाः । सनन्दनाद्यैरपि दुर्विगाहं सांतानिकं लोकमवापुरग्र्यम् ॥ २

पादावनि प्रत्ययितो हनूमान्सीतामिव त्वां चिरविप्रयुक्ताम् । प्रणम्य पौलस्त्यरिपोरुदन्तं विज्ञापयामास विनीतवेषः ॥ ३

तवाभिषेकान्मणिपादरक्षे मूले निषेकादिव वृद्धियोग्यात् । जहुस्तदैव त्रिदशाङ्गनानां प्रम्लानतां पत्रलताङ्कुराणि ॥ ४

सर्वतस्त्वदभिषेकवासरे सम्यगुद्धृतसमस्तकण्टके । राघवस्य विपिनेषु पादुके यत्र कामगमता व्यवस्थिता ॥ ५

किं चतुर्दशभिरेव वत्सरैर्नित्यमेव मणिपादुके युवाम् । पादयोस्त्रिभुवनाधिराजयोर्यौवराज्यमधिगच्छतं स्वयम् ॥ ६

रामस्य राक्षसवधे त्वरितस्य काले पादावनि प्रकटयन्निव पार्ष्णिगुप्तिम् ।
आचित्रकूटमधिगम्य शशंस वार्तामव्याहतस्त्वदभिषेकमृदङ्गनादः ॥ ७

भद्राणि देवि जगतां प्रतिपादयिष्यन्प्रागेव येन भवतीं भरतोऽभ्यषिञ्चत् ।
मन्ये कपीश्वरविभीषणयोर्यथावत्संतन्यते स तत एव किलाभिषेकः ॥ ८

संमिद्यमानतमसासरयूपनीतैः संवर्द्धितस्तव शुभैरभिषेकतोयैः ।
मन्ये बभूव जलधिर्मणिपादरक्षे रामास्त्रपावकशिखाभिरशोषणीयः ॥ ९

पादावनि त्वदभिषेचनमङ्गलार्थं भेरीशतं भृशमताड्यत यत्प्रतीतैः ।
आकर्ण्य तस्य सहसा तुमुलं निनादं लङ्काकवाटनयनानि निमीलितानि ॥ १०

तापोद्गमस्त्वदभिषेकजलप्रवाहैरुत्सारितस्त्वरितमुत्तरकोसलेभ्यः ।
लेभे चिराय रघुपुङ्गवपादरक्षे लङ्कावरोधसुदृशां हृदयेषु वासम् ॥ ११

आवर्जितं विधिविदा मणिपादरक्षे पद्मासनप्रियसुतेन पुरोहितेन ।
आसीन्निदानमभिषेकजलं त्वदीयं नक्तंचरप्रणयिनीनयनोदकानाम् ॥ १२

देवि त्वया स्नपनसंवदि संश्रितायां दग्धे पुरे दशमुखस्य वलीमुखेन ।
आसीत्ततःप्रभृति विश्वजनप्रतीतमद्भ्योऽग्निरित्यवितथं वचनं मुनीनाम् ॥ १३

आयोध्यकैस्त्वदभिषेकसमिद्धहर्षैराध्मापिताः श्रुतिसुखं ननु ते तदानीम् ।
रामस्य राक्षसशिरोलवनेऽप्यशाम्यन् येषां ध्वनिर्विजयशङ्खवो बभूव ॥ १४

प्रथयितुमभिषेकं पादुके तावकीनं दुरितशमनदक्षे दुन्दुभौ ताड्यमाने ।
सपदि परिगृहीतं साध्वसं देवि नूनं दशवदनवधूनां दक्षिणैर्नेत्रकोशैः ॥ १५

रघुपतिपदरक्षे रत्नपीठे यदा त्वामखिलभुवनमान्यामभ्यषिञ्चद्वसिष्ठः ।
दशमुखमहिषीभिर्देवि बाष्पायिताभिः स्तनयुगमभिषेक्तुं तत्क्षणादन्वमंस्थाः ॥ १६

रामास्त्राणि निमित्तमात्रमिह ते लब्धाभिषेका स्वयं रक्षस्तक्षपयांचकार भवती भद्रासनस्थायिनी ।
यद्दोष्णामतिवेलदर्पदवथुज्वालोष्मलानां तदा निष्पिष्टैः कलधौतशैलशिखरे कर्पूरचूर्णायितम् ॥ १७

श्रुत्वैवं हनुमन्मुखाद्रघुपतेः प्रत्यागतिं तत्क्षणादासीदङ्घ्रतानुवर्तनवशादारूढकुम्भस्थलाम् ।
कालोचिद्रकदुष्णदानमदिरामाद्यद्द्विरेफध्वनिश्लाघाचाटुभिरस्तुतेव भवतीं शत्रुंजयः कुञ्जरः ॥ १८

प्रत्यागतस्य भवतीमवलोक्य भर्तुः पादारविन्दसविधे भरतोपनीताम् ।
पूर्वाभिषेकविभवाभ्युचितां सपर्यां मध्ये सतामकृत मैथिलराजकन्या ॥ १९

संप्रेक्ष्य मैथिलसुता मणिपादरक्षे प्रत्युद्गतस्य भवतीं भरतस्य मौलौ ।
निर्दिश्य सा निभृतमञ्जलिना पुरस्तात् तारादिकाः प्रियसखीरशिषत्प्रणन्तुम् ॥ २०
तुल्येऽपि देवि रघुवीरपदाश्रयत्वे पूर्वाभिषेकमधिगम्य गरीयसी त्वम् ।
तेनैव खल्वभजतां मणिपादरक्षे रक्षःप्लवंगमपती भवतीं स्वमूर्ध्ना ॥ २१
निर्वृत्तराक्षसचमूमृगयाविहारो रङ्गेश्वरः स खलु राघववंशगोप्ता ।
वंशक्रमादुपनतं पदमादधानो मान्यं पुनस्त्वयि पदं निदधे स्वकीयम् ॥ २२
तत्तादृशोश्चरणयोः प्रणिपत्य भर्तुः पौरास्त्वया विधृतयोः प्रतिपन्नसत्त्वाः ।
प्राप्ताभिषेकविभवामपि पादुके त्वामानन्दबाष्पसलिलैः पुनरभ्यषिञ्चन् ॥ २३
मातस्त्वयैव समये विषमेऽपि सम्यग्राजन्वतीं वसुमतीमवलोक्य रामः ।
संजीवनाय भरतस्य समग्रभक्तेः सत्यप्रतिश्रवतयैव चकार राज्यम् ॥ २४
पादावनि प्रतिगतस्य पुरीमयोध्यां पौलस्त्यहन्तुरभिषेकजलार्द्रमूर्तेः ।
अंसे यथार्हमधिवास्य निजैर्यशोभिः कस्तूरिकेव निहिता वसुधा त्वयैव ॥ २५
यासौ चतुर्दशसमाः पतिविप्रयुक्ता विश्वंभरा भगवती विधृता भवत्या ।
विन्यस्य तां रघुपतेर्भुजशैलशृङ्गे भूयोऽपि तेन सहितां भवतीं बभार ॥ २६
निस्तीर्णदुःखजलधेरनघस्य देवि त्वत्संप्रयुक्तरघुनाथपदान्वयेन ।
सद्यः सनन्दनमुखैरपि दुर्निरीक्ष्या साम्राज्यसंपदपरा भरतस्य जज्ञे ॥ २७
निर्गत्य देवि भरताञ्जलिपद्ममध्याद्भूयः समागतवती पुरुषोत्तमेन ।
पद्मेव भद्रमखिलं मणिपादरक्षे प्रादुश्चकार भवती जगतां त्रयाणाम् ॥ २८
रघुपतिमधिरोप्य स्वोचिते रत्नपीठे प्रगुणमभजथास्त्वं पादुके पादपीठम् ।
तदपि बहुमतिस्ते तादृशी नित्यमासीत्क्वनु खलु महितानां कल्प्यते तारतम्यम् ॥ २९
अनुवृत्तराममावः शङ्के निर्विष्टचक्रवर्तिपदाम् । अधुनापि रङ्गनाथः सचमत्कारं पदेन भजति त्वाम् ॥ ३०

## ॥ अथ वन्दिवैतालिकपद्धतिः नवमी ॥

नमस्ते पादुके पुंसां संसारार्णवसेतवे । यदारोहस्य वेदान्ता वन्दिवैतालिकाः स्वयम् ॥ १
उचितमुपचरिष्यन्रङ्गनाथ प्रभाते विधिशिवसनकाद्यान्बाह्यकक्षानिरुद्धान् ।
चरणकमलसेवासौख्यसाम्राज्यभाजां प्रथमविहितभागां पादुकामाद्रियेथाः ॥ २
पद्माजुष्टं भजतु चरणं पादुका लब्धवारा प्रत्यासन्नास्तव परिजनाः प्रातरास्थानयोग्याः ।
अर्धोन्मेषादधिकसुभगामर्धनिद्रानुषङ्गां नाभीपद्मे तव नयनयोर्नाथ पश्यन्तु शोभाम् ॥ ३
उपनमति मुहूर्ते शेषसिद्धान्तसिद्धं तदिह चरणरक्षा रङ्गनाथ त्वयैषा ।
मृदुपदमधिरूढा मञ्जुभिः शिञ्जितैः स्वैरुपदिशतु जनानामुत्सवारम्भवार्ताम् ॥ ४

रङ्गाधीश मरुद्गणस्य मकुटादाम्नायवृन्दस्य वा प्रत्यानीय समर्पिता विधिमुखैर्वारक्रमादागतैः ।
वाहारोहणसंभृतं श्रमभरं सम्यग्विनेतुं क्षमा लीलासंचरणप्रिया स्पृशतु ते पादाम्बुजं पादुका ॥ ५

वृत्तं क्रमेण बहुधा नियुतं विधीनामर्धं द्वितीयमिदमङ्कुरितं तवाह्नः ।
नीलासखीभिरुपनीय निवेश्यमाना मङ्क्तुं प्रभो त्वरयते मणिपादुका त्वाम् ॥ ६

दिव्याप्सरोभिरुपदर्शितदीपवर्गे रङ्गाधिराज सुभगे रजनीमुखेऽस्मिन् ।
संरक्षिणी चरणयोः सविलासवृत्तिर्नीराजनासनमसौ नयतु स्वयं त्वाम् ॥ ७

आसनादुचितमासनान्तरं रङ्गनाथ यदि गन्तुमीहसे । संनतेन विधिना समर्पितां सप्रसादमधिरोह पादुकाम् ॥ ८

परिजनवनिताभिः प्रेषितः प्राञ्जलिस्त्वां प्रणमति मदनोऽयं देव शुद्धान्तदासः ।
फणिपतिशयनीयं प्रापयित्री सलीलं पदकमलमियं ते पादुका पर्युपास्ताम् ॥ ९

इति निगमवन्दिवचसा समये समये गृहीतसङ्केतः । अभिसरति रङ्गनाथः प्रतिपदभोगाय पादुके भवतीम् ॥ १०

[आहत्य श्लोकसंख्या—[२५०] 250

## ॥ अथ शृङ्गारपद्धतिः दशमी ॥ १० ॥

शौरेः शृङ्गारचेष्टानां प्रसूतिं पादुकां भजे । यामेव भुङ्क्ते शुद्धान्तात्पूर्वं पश्चादपि प्रभुः ॥ १

प्रणतत्रिदशेन्द्रमौलिमालामकरन्दार्द्रपरागपङ्क्तिलेन । अनुलिम्पति पादुके स्वयं त्वामनुरूपेण पदेन रङ्गनाथः ॥ २

अवदातहिमांशुकानुषक्तं पदरक्षे त्वयि रङ्गिणः कदाचित् । किमपि स्थितमद्वितीयमाल्यं विरलावस्थितमौक्तिकं स्मरामि ॥

असहायगृहीतरङ्गनाथमवरोधाङ्गणसीम्नि पादुके त्वाम् । सुदृशः स्वयमर्चयन्ति दूरादवतंसोत्पलवासितैरपाङ्गैः ॥ ४

निर्विश्यमानमपि नूतनसंनिवेशं कैवल्यकल्पितविभूषणकायकान्तिम् ।
कालेषु निर्विशसि रङ्गयुवानमेका शृङ्गारनित्यरसिकं मणिपादरक्षे ॥ ५

निद्रायितस्य कमितुर्मणिपादुके त्वं पर्यङ्किकापरिसरं प्रतिपद्यमाना ।
श्वासानिलप्रचलितेन भजस्यभीक्ष्णं नाभीसरोजरसजा नवमङ्गरागम् ॥ ६

शयितवति रजन्यां पादुके रङ्गबन्धौ चरणकमलपार्श्वे सादरं वर्तसे त्वम् ।
फणिपतिशयनीयादुत्थितस्य प्रभाते प्रथमनयनपातं पावनं प्राप्तुकामा ॥ ७

चरणकमलसङ्गाद्रङ्गनाथस्य नित्यं निगमपरिमलं त्वं पादुके निर्वमन्ती ।
नियतमतिशयाना वर्तसे सावरोधं हृदयमधिवसन्तीं मालिकां वैजयन्तीम् ॥ ८

उपनिषदबलाभिर्नित्यमुत्तंसनीयं किमपि जलधिकन्याहस्तसंवाहनार्हम् ।
तव तु चरणरक्षे देवि लीलारविन्दं चरणसरसिजं तच्चारु चाणूरहन्तुः ॥ ९

अखिलान्तःपुरवारेष्वनेकवारं पदावनि स्वैरम् । अनुभवति रङ्गनाथो विहारविक्रान्तिसहचरीं भवतीम् ॥ [२६०] १०

## ॥ अथ संचारपद्धतिः एकादशी ॥ ११ ॥

अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् । इति सीताऽपि यद्वृत्तिमियेष प्रणमामि ताम् ॥ १

शरदःशतमम्ब पादुके स्यां समयाहूतपितामहस्तुतानि । मणिमण्डपिकासु रङ्गभर्तुस्त्वदधीनानि गतागतानि पश्यन् ॥ २

त्वदधीनपरिक्रमो मुकुन्दस्तदधीनस्तव पादुके विहारः । इतरेतरपारतन्त्र्यमित्थं युवयोः सिद्धमनन्यतन्त्रभूम्नोः ॥ ३
रजसा तमसा च दुष्टसत्त्वे गहने चेतसि मामके मुकुन्दः । उचितं मृगयाविहारमिच्छन्भवतीमादृत पादुके पदाभ्याम् ॥
क्षमया जगतामपि त्रयाणामवने देवि पदावनि त्वयैव । अभिगम्यतमोऽपि संश्रितानामभिगन्ता भवति स्वयं मुकुन्दः ॥
शिरसा भवतीं दधाति कश्चिद्विधृतः कोऽपि पदस्पृशा भवत्या । उभयोर्मधुवैरिपादरक्षे त्वदधीनां गतिमामनन्ति सन्तः ॥
स्पृशतः शिरसा पदेन च त्वां गतिमुद्दिश्य मुकुन्दपादुके द्वौ । अवरोहति पश्चिमः पदात्स्वादधिरोहत्यनघस्तदेव पूर्वः ॥
समयेष्वपदिश्य जैत्रयात्रां विविधान्तःपुरवागुराव्यतीतः । नियतं मणिपादुके भवत्या रमते वर्त्मनि रङ्गसार्वभौमः ॥ ८
निजसंहननप्रसक्तलास्यं चरति त्वामधिरुह्य रङ्गनाथः । पदरक्षिणि पावनत्वमास्तां रसिकास्वादमतः परं न विद्मः ॥ ९
पदयोरनयोः परस्य पुंसस्तदनुग्राह्यविहारपद्धतेर्वा । शिरसो मणिपादुके श्रुतीनां मनसो वा मम भूषणं त्वमेका ॥ १०
कृपया मधुवैरिपादरक्षे कठिने चेतसि मामके विहर्तुम् । मकुटेषु दिवौकसां विधत्ते भवती स्वविसंस्थुलेषु योग्याम् ॥
चरणद्वयमर्भकस्य शौरेः शरदम्भोरुहचातुरीधुरीणम् । शकटासुरताडनेऽपि गुप्तं तव शक्त्या किल पादुके तदासीत् ॥
उत्तस्थुषो रङ्गशयस्य शेषादास्थानसिंहासनमारुरुक्षोः । मध्येनिशान्तं मणिपादुके त्वां लीलापदन्यासलखीं प्रपद्ये ॥ १३
प्राप्ताधिकाराः पतयः प्रजानामुत्तंसितामुत्तमपादुके त्वाम् । रङ्गेशितुः स्वैरविहारकाले संयोजयन्त्यङ्घ्रिसरोजयुग्मे ॥ १४
त्वयाऽनुबद्धां मणिपादरक्षे लीलागतिं रङ्गशयस्य पुंसः । निशामयन्तो न पुनर्भजन्ते संसारकान्तारगतागतानि ॥ १५
व्यूहानुपूर्वीरुचिरान्विहारान्पदक्रमेण प्रतिपद्यमाना । बिभर्षि नित्यं मणिपादुके त्वं मुरद्विषो मूर्तिरिव त्रिलोकीम् ॥ १६
पदेषु मन्देषु महत्स्वपि त्वं नीरन्ध्रसंश्लेषवती मुरारेः । प्रत्यायनार्थं किल पादुके नस्स्वाभाविकं दर्शयसि प्रभावम् ॥ १७
कृपाविशेषात्क्षमया समेतां प्रवर्तमानां जगतो विभूत्यै । अवैमि नित्यं मणिपादुके त्वामाकस्मिकीं रङ्गपतेः प्रसत्तिम् ॥ १८
उपागतानामुपतापशान्त्यै सुखावगाहां गतिमुद्वहन्तीम् । पश्यामि शौरेः पदवाहिनीं त्वां निम्नेषु तुङ्गेषु च निर्विशेषाम् ॥
सह प्रयाता सततं प्रयाणे प्राप्तासने संश्रितपादपीठा । अलङ्घनीया सहजेन भूम्ना छायेव शौरेर्मणिपादुके त्वम् ॥ २०
पदस्पृशा रङ्गपतिर्भवत्या विचक्रमे विश्वमिदं क्षणेन । तदस्य मन्ये मणिपादरक्षे त्वयैव विख्यातमुरुक्रमत्वम् ॥ २१
संचारयन्ती पदमन्वतिष्ठः सहायकृत्यं मणिपादरक्षे । मातस्त्वमेका मनुवंशगोप्तुर्गोपायतो गौतमधर्मदारान् ॥ २२

त्वत्तस्त्रिविष्टपचरानसपत्नयिष्यन्नारुह्य तार्क्ष्यमवरुह्य च तत्क्षणेन ।
शुद्धान्तभूमिषु पुनर्मणिपादरक्षे विश्राम्यति त्वयि विहारवशेन शौरिः ॥ २३

विक्रम्य भूमिमखिलां बलिना प्रदिष्टां देवे पदावनि दिवं परिमातुकामे ।
आसीदतो दिनकरस्य करोपतापात्संरक्षितुं पदसरोजमुपर्यभूस्त्वम् ॥ २४

त्वत्सङ्गमान्ननु सकृद्विधिसंप्रयुक्ता शुद्धिं परामधिजगाम शिवत्वहेतुम् ।
रङ्गाधिराजपदरक्षिणि कीदृशी सा गङ्गा बभूव भवदीयगतागतेन ॥ २५

वृद्धिं गवां जनयितुं भजता विहारान्कृष्णेन रङ्गरसिकेन कृताश्रयायाः ।
संचारतस्तव तदा मणिपादरक्षे बृन्दावनं सपदि नन्दनतुल्यमासीत् ॥ २६

मातस्त्रयीमयतया चरणप्रमाणे द्वे विक्रमेषु विविधेषु सहायभूते ।
नाथस्य साधुपरिरक्षणकर्मणि त्वं दुष्कृद्विनाशनदशासु विहङ्गराजः ॥ २७

पादावनि क्वचन विक्रमणे भुजानां पञ्चायुधीकररुहैर्भजते विकल्पम् ।
नित्यं त्वमेव नियता पदयोर्मुरारेस्तेनासि नूनमविकल्पसमाधियोग्या ॥ २८

अक्षेत्रविद्भिरधिगन्तुमशक्यवृत्तिर्मातस्त्वया निरवधिर्निधिरप्रमेयः ।
रथ्यान्तरेषु चरणावनि रङ्गसङ्गी वात्सल्यनिघ्नमनसा जनसात्कृतोऽसौ ॥ २९

संपद्यते समुचितं क्रममाश्रयन्त्या सद्वर्त्मना भगवतोऽपि गतिर्भवत्या ।
ईष्टे पदावनि पुनः क इवेतरेषां व्यावर्तनस्य विषमादपथप्रचारात् ॥ [२९०] ३०

रङ्गेश्वरेण सह लास्यविशेषभाजो लीलोचितेषु तव रत्नशिलातलेषु ।
मध्ये स्थितानि कतिचिन्मणिपादरक्षे सभ्यान्विशेषमनुयोक्तुमिति प्रतीमः ॥ ३१

नित्यं पदावनि निवेश्य पदं भवत्यां निष्पन्दकल्पपरिमेयपरिच्छदानि ।
शृङ्गारशीतलतराणि भवन्ति काले रङ्गेश्वरस्य ललितानि गतागतानि ॥ ३२

भोगार्चनानि कृतिभिः परिकल्पितानि प्रीत्यैव रङ्गनृपतिः प्रतिपद्यमानः ।
पश्यत्सु नित्यमितरेषु परिच्छदेषु प्रत्यासन्नं भजति काञ्चनपादुके त्वाम् ॥ ३३

अन्तस्तृतीयनयनैः स्वयमुत्तमाङ्गैराविर्भविष्यदतिरिक्तमुखाम्बुजैर्वा ।
न्यस्यन्ति रङ्गरसिकस्य विहारकाले वारक्रमेण कृतिनो मणिपादुके त्वाम् ॥ ३४

रङ्गेश्वरे समधिरूढविहङ्गराजे मातङ्गराजविधृतां मणिपादुके त्वाम् ।
अन्वासते विधृतचारुसितातपत्राः स्वर्गौकसस्सुभगचामरलोलहस्ताः ॥ ३५

विष्णोः पदं गतिवशादपरित्यजन्तीं लोकेषु नित्यविषमेषु समप्रचाराम् ।
अन्वेतुमर्हति धृतामखिलैः सुरेन्द्रैर्गङ्गा कथं नु गरुडध्वजपादुके त्वाम् ॥ ३६

भिक्षामपेक्ष्य दनुजेन्द्रगृहं प्रयातुर्गुप्त्यै गवां विहरतो वहतश्च दूत्यम् ।
तत्तादृशानि चरणावनि रङ्गभर्तुस्त्वत्सङ्गमेन सुभगानि विचेष्टितानि ॥ ३७

निर्व्यज्यमाननवतालल्यप्रथिम्ना निर्यन्त्रणेन निजसंचरणक्रमेण ।
मृद्नासि रङ्गनृपतेर्मणिपादुके त्वं दुःखात्मकान्प्रणमतां दुरितप्ररोहान् ॥ ३८

नित्यं य एव जगतो मणिपादरक्षे सत्तास्थितिप्रयतनेषु परं निदानम् ।
सोऽपि स्वतन्त्रचरितस्त्वदधीनवृत्तिः का वा कथा तदितरेषु मितंपचेषु ॥ ३९

निर्विष्टनागशयनेन परेण पुंसा न्यस्ते पदे त्वयि पदावनि लोकहेतोः ।
स्वर्गौकसां त्वदनुधावनतत्पराणां सद्यः पदानि विपदामपदं भवन्ति ॥ [३००] ४०

शरदुपगमकाले संत्यजन्योगनिद्रां शरणमुपगतानां त्राणहेतोः प्रयास्यन् ।
जलधिदुहितुरङ्कान्मन्दमादाय देवि त्वयि खलु निदधाति स्वं पदं रङ्गनाथः ॥ ४१

स्पृशसि पदसरोजं पादुके निर्विघातं प्रविशसि च समस्तां देवि शुद्धान्तकक्ष्याम् ।
अपरमपि मुरारेः पूर्वमाभीरकन्यास्वभिसरणविधानामग्रिमा साक्षिणी त्वम् ॥ ४२

प्रतिभवनमनन्ये पादुके त्वत्प्रभावाद्विविधवपुषि देवे विभ्रमद्यूतकाले ।
अभिलषितसपत्नीगेहयात्राविघातं ग्लहयति रहसि त्वां षोडशस्त्रीसहस्रम् ॥ ४३
तटभुवि यमुनायाश्छन्नवृत्तौ मुकुन्दे मुहुरधिगमहेतोर्मुह्यतां यौवतानाम् ।
शमयितुमलमासीच्छङ्खचक्रादिचिह्ना प्रतिपदविचिकित्सां पादुके पद्धतिस्ते ॥ ४४
अधिगतबहुशाखान्मञ्जुवाचः शुकादीन्सरसिजनिलयायाः प्रीतये संग्रहीतुम् ।
प्रकटितगुणजालं पादुके रङ्गबन्धोरुपनिषदटवीषु क्रीडितं त्वत्सनाथम् ॥ ४५
मुनिपरिषदि गीतं गौतमीरक्षणं ते मुहुरनुकलयन्तो मञ्जुवाचः शकुन्ताः ।
उषसि निजकुलायादुत्थिता दण्डकेषु स्वयमपि पदरक्षे स्वैरमाम्रेडयन्ति ॥ ४६
यमनियमविशुद्धैर्यं न पश्यन्ति चित्तैः श्रुतिषु चुलुकमात्रे दृश्यते यस्य भूमा ।
सुलभनिखिलभावं मांसदृष्टेर्जनस्य स्वयमुपहरसि त्वं पादुके तं पुमांसम् ॥ ४७
निधिमिव निरपायं त्वामनादृत्य मोहादहमिव मम दोषं भावयन् क्षुद्रमर्थम् ।
मयि सति करुणायाः पूर्णपात्रे त्वया किं परमुपगमनीयः पादुके रङ्गनाथः ॥ ४८
कमपि कनकसिन्धोस्सैकते संचरन्तं कलशजलधिकन्यामेदिनीदत्तहस्तम् ।
अनिशमनुभवेयं पादुके त्वय्यधीनं सुचरितपरिपाकं सूरिभिः सेवनीयम् ॥ ४९
परिसरमुपयाता पादुके पश्य मातः करणविलयखेदात्कान्दिशीके विवेके ।
पुरुषमुपनयन्ती पुण्डरीकाक्षमग्रे पुनरुदरनिवासक्लेशविच्छेददं नः ॥ [३१०] ५०
सा मे भूयात्सपदि भवती पादुके तापशान्त्यै यामारूढो दिवमिव शुभैः सेव्यमानो मरुद्भिः ।
सौदामन्या सह कमलया सह्यजावृद्धिहेतुः काले काले चरति करुणावर्षुकः कृष्णमेघः ॥ ५१
सत्याल्लोकात्सकलमहितात्स्थानतो वा रघूणां शङ्के मातः समधिकगुणं सैकतं सह्यजायाः ।
पूर्वंपूर्वं चिरपरिचितं पादुके यत्त्यजन्त्या नीतो नाथस्तदिदमितरन्नीयते न त्वयाऽसौ ॥ ५२
अग्रे देवि त्वयि सुमनसामग्रिमैरन्तरङ्गैर्विन्यस्तायां विनयगरिमावर्जितादुत्तमाङ्गात् ।
दत्ते पादं दरमुकुलितं त्वत्प्रभावातिशङ्की देवः श्रीमान्दनुजमथनो जैत्रयात्रास्वनन्यः ॥ ५३
पौरोदन्तान्परिकलयितुं पादुके संचरिष्णोर्व्यक्ताव्यक्ता वशिकविशिखावर्तिनी रङ्गभर्तुः ।
वेलातीतः श्रुतिपरिमलैर्व्यक्तिमभ्येति काल्ये विन्यासैस्ते विबुधपरिषन्मौलिविन्यासदृश्यैः ॥ ५४
आसंस्काराद्द्विजपरिषदा नित्यमभ्यस्यमाना श्रेयोहेतुः शिरसि जगतः स्थायिनी स्वेन भूम्ना ।
रङ्गाधीशे स्वयमुदयिनि क्षेप्तुमन्धं तमिस्रं गायत्रीव त्रिचतुरपदा गण्यसे पादुके त्वम् ॥ ५५
भवतीं परस्य पुरुषस्य रङ्गिणो महिमानमेव मणिपादु मन्महे ।
कथमन्यथा स्वमहिमप्रतिष्ठितः प्रतितिष्ठति त्वयि पदात्पदं प्रभुः ॥ ५६
तिथिरष्टमी यदवतारवैभवात्प्रथमा तिथिस्त्रिजगतामजायत ।
मणिपादुके तमुपनीय वीथिकास्वतिथीकरोषि तदनन्यचक्षुषाम् ॥ ५७

अपारप्रख्यातेरशरणशरण्यत्वयशसा ननु त्वं रङ्गेन्दोश्चरणकमलस्यापि शरणम् ।
यया लभ्यः पङ्गुप्रभृतिभिरसौ रङ्गनगरप्रतोलीपर्यन्ते निधिरनघवाचां निरवधिः ॥ ५८

तत्तद्वासगृहाङ्गणप्रणयिनः श्रीरङ्गश्रृङ्गारिणो वाल्लभ्यादविभक्तमन्थरगतिस्त्वं मे गतिः पादुके ।
लीलापङ्कजहल्लकोत्पलगलन्माध्वीकसेकोत्थिता यत्रामोदविकल्पना विवृणुते शुद्धान्तवारक्रमम् ॥ ५९

संभवतु पादरक्षे सत्यनुपर्णादिरौपवाह्यगणः । यात्रासु रङ्गभर्तुः प्रथमपरिस्पन्दकारणं भवती ॥ [३२०] ६०

## ॥ अथ पुष्पपद्धतिः द्वादशी ॥ १२ ॥

शौरेः संचारकालेषु पुष्पवृष्टिर्दिवश्च्युता । पर्यवस्यति यत्रैव प्रपद्ये तां पदावनीम् ॥ १

दैवतं मम जगत्त्रयार्चिता दिव्यदम्पतिविहारपादुका । पाणिपादकमलार्पणात्तयोर्या भजत्यनुदिनं सभाजनम् ॥ २

तव रङ्गराजमणिपादु नतो विहितार्हणः सुरसरित्पयसा । अवतंसचन्द्रकलया गिरिशो नवकेतकीदलमिवार्पयति ॥ ३

कुसुमेषु समर्पितेषु भक्तैस्त्वयि रङ्गेशपदावनि प्रतीमः । शठकोपमुनेस्त्वदेकनाम्नः सुभगं यत्सुरभित्वमस्य नित्यम् ॥ ४

पदे परस्मिन्भुवने विधातुः पुण्यैः प्रसूनैः पुलिने सरय्वाः । मध्ये च पादावनि सह्यसिन्धोरासीच्चतुःस्थानमिवार्चनं ते ॥ ५

तवैव रङ्गेश्वरपादरक्षे सौभाग्यमव्याहतमाप्तुकामाः । सुरद्रुमाणां प्रसवैः सुजातैरभ्यर्चयन्त्यप्सरसो मुहुस्त्वाम् ॥ ६

निवेशितां रङ्गपतेः पदाब्जे मन्ये सपर्यां मणिपादरक्षे । त्वदर्पणादापतितामपश्यद्ब्राण्डीवधन्वा गिरिशोत्तमाङ्गे ॥ ७

पत्राणि रङ्गनृपतेर्मणिपादरक्षे द्वित्राण्यपि त्वयि समर्प्य विभूतिकामाः ।
पर्यायलब्धपुरुहूतपदाः शचीनां पत्राङ्कुराणि विलिखन्ति पयोधरेषु ॥ ८

निर्वर्तयन्ति तव ये निचितानि पुष्पैर्वैहारिकाण्युपवनानि वसुंधरायाम् ।
कालेन ते कमललोचनपादरक्षे क्रीडन्ति नन्दनवने कृतिनः पुमांसः ॥ ९

अर्चन्ति ये मधुभिदो मणिपादरक्षे भावात्मकैरपि परं भवतीं प्रसूनैः ।
मन्दारदामसुभगैर्मकुटैरजस्रं वृन्दारकाः सुरभयन्ति पदं तदीयम् ॥ [३३०] १०

अस्पृष्टदोषपरिमर्शमलङ्घ्यमन्यैर्हस्तापचेयमखिलं पुरुषार्थवर्गम् ।
चित्रं जनार्दनपदावनि साधकानां त्वय्यर्पिताः सुमनसः सहसा फलन्ति ॥ ११

वन्दारुभिः सुरगणैस्त्वयि संप्रयुक्ता माला विभाति मधुसूदनपादरक्षे ।
विक्रान्तविष्णुपदसंश्रयबद्धसख्या भागीरथीव परिरम्भणकाङ्क्षिणी ते ॥ १२

ये नाम रङ्गनृपतेर्मणिपादुके त्वामभ्यर्चयन्ति कमलैरधिकर्तुकामाः ।
आरोपयत्यवहिता नियतिः क्रमात्तान्कल्पान्तरीयकमलासनपत्रिकासु ॥ १३

त्वय्यर्पितानि मनुजैर्मणिपादरक्षे दूर्वाङ्कुराणि सुलभान्यथ वा तुलस्यः ।
साराधिकाः सपदि रङ्गनरेन्द्रशक्त्या संसारनागदमनौषधयो भवन्ति ॥ १४

आराध्य नूनमसुरार्दनपादुके त्वामामुष्मिकाय विभवाय सहस्रपत्रैः ।
मन्वन्तरेषु परिवर्तिषु देवि मर्त्याः पर्यायतः परिणमन्ति सहस्रनेत्राः ॥ १५

धन्यैस्त्वयि त्रिदशरक्षकपादरक्षे पुष्पाणि काञ्चनमयानि समर्पितानि ।
विस्रंसिना विनमतो गिरिशोत्तमाङ्गादारग्वधेन मिलितान्यपृथग्भवन्ति ॥ १६

विश्वोपसर्गशमनं त्वयि मन्यमानैर्वैमानिकैः प्रणिहितं मणिपादरक्षे ।
पद्मासहायपदपद्मनखार्चिषस्ते पुष्पोपहारविभवं पुनरुक्तयन्ति ॥ १७

नाकौकसां शमयितुं परिपन्थिवर्गान्नाथे पदं त्वयि निवेशयितुं प्रवृत्ते ।
त्वत्संश्रितां विजहतस्तुलसीं वमन्ति प्रस्थानकाहलरवान्प्रथमं द्विरेफाः ॥ १८

रङ्गेशपादपरिभोगसुजातगन्धां संप्राप्य देवि भवतीं सह दिव्यपुष्पैः ।
नित्योपदर्शितरसं न किलाद्रियन्ते नाभीसरोजमपि नन्दनचञ्चरीकाः ॥ १९

प्रागेव काञ्चनपदावनि पुष्पवर्षात्संवर्तिते शमितदैत्यभयैः सुरेन्द्रैः ।
पद्मेक्षणस्य पदपद्मनिवेशलाभे पुष्पाभिषेकमुचितं प्रतिपद्यसे त्वम् ॥ [३४०] २०

दिशि दिशि मुनिपत्न्यो दण्डकारण्यभागे न जहति बहुमानान्नूनमद्यापि मूलम् ।
रघुपतिपदरक्षे त्वत्परिष्कारहेतोरपचितकुसुमानामाश्रमानोकहानाम् ॥ २१

घटयसि परिपूर्णान्कृष्णमेघप्रचारे कृतिभिरुपहितैस्त्वं केतकीगर्भपत्रैः ।
वरतनुपरिणामाद्वामतः श्यामलानां प्रणतिसमयलग्नान्पादुके मौलिचन्द्रान् ॥ २२

परिचरणनियुक्तैः पादुके रङ्गभर्तुः पवनतनयमुख्यैरर्पितां त्वत्समीपे ।
विनतविधिमुखेभ्यो निर्विशेषां द्विरेफाः कथमपि विभजन्ते काञ्चनीं पद्मपङ्क्तिम् ॥ २३

विधिशिवपुरुहूतस्पर्शितैर्दिव्यपुष्पैस्त्वयि सह निपतन्तस्तत्तदुद्यानभृङ्गाः ।
मधुरिपुपदरक्षे मञ्जुभिः स्वैर्निनादैरविदितपरमार्थान्नूनमध्यापयन्ति ॥ २४

प्रशमयति जनानां संज्वरं रङ्गभर्तुः परिसरचलितानां पादुके चामराणाम् ।
अनुदिनमुपयातैरुत्थितं दिव्यपुष्पैर्निगमपरिमलं ते निर्विशन्गन्धवाहः ॥ २५

अखिलभुवनरक्षानाटिकां दर्शयिष्यन्ननिमिषतरुपुष्पैरर्चिते रङ्गमध्ये ।
अभिनयमनुरूपं शिक्षयत्यात्मना त्वां प्रथमविहितलास्यः पादुके रङ्गनाथः ॥ २६

अगलितनिजरागां देवि विष्णोः पदं तत् त्रिभुवनमहनीयां प्राप्य संध्यामिव त्वाम् ।
भवति विबुधमुक्तैः स्पष्टतारानुषङ्गं परिसरपतितैस्ते पारिजातप्रसूनैः ॥ २७

व्यञ्जन्त्येते विभवमनघं रञ्जयन्तः श्रुतीर्नः प्राध्वं रङ्गक्षितिपतिपदं पादुके धारयन्त्याः ।
नादैरन्तर्निहितनिगमैर्नन्दनोद्यानभृङ्गा दिव्यैः पुष्पैः स्नपितवपुषो देवि सौस्नातिकास्ते ॥ २८

किं पुष्पैस्तुलसीदलैरपि कृतं दूर्वाऽपि दूरे स्थिता त्वत्पूजासु मुकुन्दपादु कृपया त्वं कामधेनुः सताम् ।
प्रत्यग्राहृतदर्भपल्लवलवग्रासाभिलाषोन्मुखी धेनुस्तिष्ठतु सा वसिष्ठभवनद्वारोपकण्ठस्थले ॥ २९

चूडारग्वधरजसा चूर्णस्नपनं विधाय ते पूर्वम् । रङ्गेशपादुके त्वामभिषिञ्चति मौलिगङ्गया शम्भुः॥ [३५०] ३०

## ॥ अथ परागपद्धतिस्त्रयोदशी ॥ १३ ॥

पान्तु वः पद्मनाभस्य पादुकाकेलिपांसवः । अहल्यादेहनिर्माणपर्यायपरमाणवः ॥ १

तव संचरणाद्रजो विधूतं यदिदं रङ्गनरेन्द्रपादरक्षे । अलमेतदनाविलानि कर्तुं कतकक्षोद इवाशु मानसानि ॥ २

पुनरुक्तपितामहानुभावाः पुरुषाः केचिदमी पुनन्ति विश्वम् । मधुवैरिपदारविन्दबन्धोरपरागास्तव पादुके परागैः ॥ ३

अभियुक्तजनो निजार्भकाणां बहुशो रङ्गनरेन्द्रपादरक्षे । अवलेपपिशाचमोचनार्थं रजसा लिम्पति तावकेन देहान् ॥ ४

शिरसा परिगृह्य लोकपालास्तव रङ्गेश्वरपादुके रजांसि । विषमेषु बलेषु दानवानां व्यपनीतान्यशिरस्त्रमाविशन्ति ॥ ५

कृतिनः शिरसा समुद्वहन्तः कतिचित्केशवपादुके रजस्ते । रजसस्तमसोऽपि दूरभूतं परिपश्यन्ति विशुद्धमेव सत्त्वम् ॥

अधिकं पदमाश्रितोऽपि वेधाः प्रयतो रङ्गधुरीणपादरक्षे । अभिवाञ्छति सङ्गमं परागैरभिजातैस्तव देवि नाभिजातः ॥ ७

शुद्धसत्त्ववपुषैव भवत्या पादुके विरजसौ हरिपादौ । अस्तु किं पुनरिदं रजसा ते शुद्धसत्त्वमयता मनुजानाम् ॥ ८

तद्रजस्तव तनोति पादुके मानसान्यकठिनानि देहिनाम् । प्रस्तरस्य पदवीगतस्य यद्याचकार मुनिधर्मदारताम् ॥ ९

रङ्गेशयस्य पुरुषस्य जगद्विभूत्यै रथ्यापरिक्रमविधौ मणिपादरक्षे ।
सीमन्तदेशमनवद्यसरस्वतीनां सिन्दूरयन्ति भवतीचलिताः परागाः ॥ [३६०] १०

मान्येन रङ्गनृपतेर्मणिपादरक्षे चूडापदानि रजसा तव भूषयन्तः ।
कालक्रमेण भजतां कमलासनत्वं नाभीसरोजरजसां निवसन्ति मध्ये ॥ ११

मातर्मुकुन्दचरणावनि तावकीनाश्चिन्तावशीकरणचूर्णविशेषकल्पाः ।
संचारपांसुकणिकाः शिरसा वहन्तो विश्वं पुनन्ति पदपद्मपरागलेशैः ॥ १२

आयोजितान्यमलधीभिरनन्यलभ्ये पादावनि श्रुतिवधूपटवासकल्पे ।
त्वत्संचरप्रचलितानि रजांसि शौरेः प्रख्यापयन्ति पदपद्मपरागशोभाम् ॥ १३

मूर्धानमम्ब मुरभिन्मणिपादरक्षे येषां कदाऽपि रजसा भवती पुनाति ।
त्वामेव ते सुकृतिनः स्नपयन्ति काले मन्दारदामरजसा मकुटच्युतेन ॥ १४

रथ्याविहाररजसा परिधूसराङ्गी रङ्गेश्वरस्य ललितेषु महोत्सवेषु ।
प्रस्फोटयत्यवनतो मणिपादुके त्वां गौरीपतिः स्वयमिभाजिनपल्लवेन ॥ १५

नेदीयसां निजपरागनिवेशपूर्वं स्पृष्ट्वा शिरांसि भवती भवरोगभाजाम् ।
गाढं निपीड्य गरुडध्वजपादरक्षे मानग्रहं शमयतीव परैरसाध्यम् ॥ १६

आपातवल्लवतनोरकुमारयूनः पादावनि प्रविशतो यमुनानिकुञ्जान् ।
आसीदनङ्गसमरात्पुरतः प्रवृत्तः सेनापराग इव ते पदवीपरागः ॥ १७

गङ्गापगातटलतागृहमाश्रयन्त्याः पादावनि प्रचलितं पदवीरजस्ते ।
प्रायेण पावनतमं प्रणतस्य शम्भोरुद्धूलनं किमपि नूतनमातनोति ॥ १८

अन्ते तदा त्वमविलम्बितमानयन्ती रङ्गाब्जजङ्गशयनं मणिपादरक्षे ।
कामं निवर्तयितुमर्हसि संज्वरं मे कर्पूरचूर्णपटलैरिव धूलिभिस्ते ॥ १९

रङ्गेशपादसहधर्मचरि त्वदीयान्मौलौ निवेश्य महितान्पदवीपरागान् ।
सन्तस्त्रिवर्गपदवीमतिलङ्घयन्तो मौलौ पदं विदधते विबुधेश्वराणाम् ॥ [३७०] २०

मातस्तदा माधवपादरक्षे त्वयि प्रसक्तं त्वरयोपयान्त्याम् । परामृशेयं पदवीपरागं प्राणैः प्रयाणाय समुज्जिहानैः ॥ २१

तथागता राघवपादरक्षे संपश्यमानेषु तपोधनेषु । आसीदहल्या तव पांसुलेशैरपांसुलानां स्वयमग्रगण्या ॥ २२

पश्यामि पद्मेक्षणपादरक्षे भवाम्बुधिं पातुमिव प्रवृत्तान् । भक्तोपयानत्वरया भवत्या पर्यस्यमानान्पदवीपरागान् ॥ २३

पद्मायुधी भूषणमेव शौरेर्यतस्तवैते मणिपादरक्षे । वितन्वते व्याप्तदिशः परागाः शान्तोदयाञ्शत्रुचमूपरागान् ॥ २४

परिणतिमकठोरां प्राप्तया यत्प्रभावादलभत शिलया स्वान्गौतमो धर्मदारान् ।
पुनरुपजनिशङ्कावारकं पादुके तत्प्रशमयति रजस्ते रागयोगं प्रजानाम् ॥ २५

रजनिविगमकाले रामगाथां पठन्तः कुशिकतनयमुख्याः पादुके भावयन्ते ।
उपलशकलसक्तैस्त्वत्परागैरकाण्डे जनितमुनिकलत्रान्दण्डकारण्यभागान् ॥ २६

शुभसरणिरजोभिः शोभयन्ती धरित्रीं परिणतिरमणीयान्प्रक्षरन्ती पुमर्थान् ।
भवसि भुवनवन्द्या पादुके रङ्गभर्तुः शरणमुपगतानां शाश्वती कामधेनुः ॥ २७

पवनतरलितस्ते पादुके रङ्गभर्तुर्विहरणसमयेषु व्याप्तविश्वः परागः ।
विषमविषयवर्त्मव्याकुलानामजस्रं व्यपनयति जनानां वासनारेणुजालम् ॥ २८

निष्प्रत्यूहमुपासिषीमहि मुहुर्निःशेषदोषच्छिदो नित्यं रङ्गधुरंधरस्य निगमस्तोमार्चिते पादुके ।
धत्ते मूर्धभिरादिपद्मजनिता तत्तादृशी संततिर्यत्संचारपवित्रितक्षितिरजःपङ्क्तिं चतुष्पञ्चषैः ॥ २९

रजसा परोरजस्तत्र खलु न लङ्घयेत भगवतोऽपि पदम् । किमुत हृदयं मदीयं भवती यदि नाम पादुके न स्यात् ॥ ३०

## ॥ अथ नादपद्धतिश्चतुर्दशी ॥ १४ ॥

श्रुतीनां भूषणानां ते शङ्के रङ्गेन्द्रपादुके । मिथः संघर्षसंजातं रजः किमपि शिञ्जितम् ॥ १

मुरभिन्मणिपादुके भवत्याः स्तुतिमाकर्णयतां मया निबद्धाम् । अवधीरयसीव मञ्जुनादैरचमत्कारवचांसि दुर्जनानाम् ॥ २

विहितेष्वभिवादनेषु वेदैर्गमनोदीरितगर्भरत्ननादा । मधुरं मधुवैरिपादरक्षे भवती प्रत्यभिवादनं विधत्ते ॥ ३

स्वदते किमिहैव रङ्गनाथो मयि तिष्ठन्यदि वा पदे परस्मिन् । इति पृच्छसि देवि नूनमस्मान्मधुरैस्त्वं मणिपादुके निनादैः ॥

अवरोधगतस्य रङ्गभर्तुर्गतिषु व्यञ्जितगर्भरत्ननादा । प्रतिसंलपसीव पादुके त्वं कमलानूपुरमञ्जुशिञ्जितानाम् ॥ ५

मुरभिच्चरणारविन्दरूपं महितानन्दमवाप्य पूरुषार्थम् । अनघैर्मणिपादुके निनादैरहमन्नाद इतीव गायसि त्वम् ॥ ६

मधुवैरिपदाम्बुजं भजन्ती मणिपादावनि मञ्जुशिञ्जितेन । पठसीव मुहुः स्वयं प्रजानामपरोपप्लवरिष्टशान्तिमन्त्रम् ॥ ७

श्रुतिभिः परमं पदं मुरारेरनिदंकारमनेवमित्युपात्तम् । इदमित्थमिति ब्रवीषि नूनं मणिपादावनि मञ्जुभिः प्रणादैः ॥ ८

मुनयः प्रणिधानसंनिरुद्धे हृदि रङ्गेश्वररत्नपादुके त्वाम् । विनिवेश्य विभावयन्त्यनन्याः प्रणवस्य प्रणिधिं तव प्रणादम् ॥

मधुरं मणिपादुके प्रवृत्ते भवती रङ्गपतेर्विहारकाले । अभयार्थनया समभ्युपेता न विसंवादयतीव मञ्जुनादैः ॥ [३९०] १०

श्रवसोर्मम पारणां दिशन्ती मणिपादावनि मञ्जुलैः प्रणादैः । रमया क्षमया च दत्तहस्तं समये रङ्गधुरीणमानयेथाः ॥ ११

अनुयाति नित्यममृतात्मिकां कलां तव रङ्गचन्द्रमणिपादु झंकृतम् ।
श्रवसा सुखेन परिभुज्य यत्क्षणादजरामरत्वमुपयान्ति साधवः ॥ १२
परुषैरजस्रमसतामनर्थकैः परिवादपैशुनविकत्थनादिभिः ।
मधुकैटभारिमणिपादुके मम श्रुतिदुष्कृतानि विनिवारय स्वनैः ॥ १३
पादुके परिजनस्य दूरतः सूचयन्ति खलु तावकाः स्वनाः । लीलया भुजगतल्पमुज्झतः श्रीमतस्त्रिचतुराण्यदक्रमान् ॥ १४
देवि दैत्यदमनाय सत्वरं प्रस्थितस्य मणिपादुके प्रभोः । विश्वमङ्गलविशेषसूचकं शाकुनं भवति तावकं रुतम् ॥ १५
दातुमर्हसि तदा मम श्रुतौ देवि रङ्गपतिरत्नपादुके । विह्वलस्य भवदीयशिञ्जितं स्वादु कर्णरसनारसायनम् ॥ १६
अहमुपरि समस्तदेवतानामुपरि ममैष विभाति वासुदेवः । तदिह परतरं न किंचिदस्मादिति वदसीव पदावनि प्रणादैः ॥
अवनतविबुधेन्द्रमौलिमाला मधुमदशिक्षितमन्थरप्रयाता । प्रथयसि परिरब्धशौरिपादा मणिकलहैर्न वियातजल्पितानि ॥
आस्थानेषु त्रिदशमहितान्वर्तयित्वा विहारान् स्थानेस्थाने निजपरिजनं वारयित्वा यथार्हम् ।
वासागारं स्वयमुपसरन्पादुके मञ्जुनादामापर्यङ्कान्न खलु भवतीं रङ्गनाथो जहाति ॥ १९
अन्तर्न्यस्तैर्मणिभिरुदितं पादुके रङ्गबन्धौ मन्दंमन्दं निहितचरणे मञ्जुलं ते निनादम् ।
पश्यन्त्यादिक्रमपरिणतेः प्राक्तनीं तां परायां मन्ये मित्रावरुणविषयादुच्चरन्तीमवस्थाम् ॥ [४००] २०
प्रख्यातानां परिषदि सतां कारयित्वा प्रतिज्ञां प्रायेण त्वां प्रथितविभवां वर्णयन्ती मया त्वम् ।
पादन्यासक्रममनुगुणं प्राप्य रङ्गाधिराजात्त्वद्यारम्भान्गणयसि परं पादुके स्वैर्निनादैः ॥ २१
विष्णोरस्मिन्पदसरसिजे वृत्तिभेदैर्विचित्रैरैदंपर्यं निगमवचसामैककण्ठ्येन सिद्धम् ।
इत्थं पुंसामनिपुणधियां पादुके त्वं तदेव स्पृष्ट्वा सत्यं वदसि नियतं मञ्जुना शिञ्जितेन ॥ २२
आम्नायैस्त्वामनितरपरैः स्तोतुमभ्युद्यतानां मध्ये भक्त्या मधुविजयिनः पादुके मोहभाजाम् ।
शिक्षातत्त्वस्खलितवचसां शिक्षयस्येव पुंसां मात्रादीनि स्वयमनुपदं मञ्जुभिः स्वैर्निनादैः ॥ २३
लक्ष्मीकान्तं कमपि तरुणं रथ्यया निष्पतन्तं रागाद्द्रष्टुं त्वरितमनसां राजधानीवधूनाम् ।
प्रत्यादेशं भजति मधुरैः पादुके शिञ्जितैस्ते चेतोहारी कुसुमधनुषः शिञ्जिनीमञ्जुनादः ॥ २४
रङ्गाधीशे सह कमलया सादरं यायजूकैः सारं दिव्यं सवनहविषां भोक्तुमाहूयमाने ।
नेदीयोभिर्निगमवचसां नित्यमंहःप्रतीपैः प्रत्यालापं दिशति भवती पादुके शिञ्जितैः स्वैः ॥ २५
उपास्य नूनं मणिपादुके त्वां रङ्गेशपादाम्बुजराजहंसीम् । पत्युः प्रजानामलभन्त पूर्वं मञ्जु स्वनं वाहनराजहंसाः ॥ २६
अनादिमायारजनीवशेन प्रस्वापभाजां प्रतिबोधनार्हाम् । पश्यामि नित्योदितवासरस्य प्रभातनान्दीमिव पादुके त्वाम् ॥
श्रृणोतु रङ्गाधिपतिः प्रजानामार्तध्वनिं कापि समुज्जिहानम् । इतीव मत्वा मणिपादुके त्वं मन्दप्रचारैर्मृदुशिञ्जितासि ॥
अन्ते ममार्तिं शमयिष्यतस्तामग्रेसराण्यापततो मुरारेः । श्रमोपपन्नः श्रृणुयां भवत्याः शीतानि पादावनि शिञ्जितानि ॥
स्वादूनि रङ्गेश्वरपादरक्षे श्रोत्रैः पिबन्तस्तव शिञ्जितानि । पचन्त्यविद्योपचितानशेषानन्तर्गतानात्मविदः कषायान् ॥ [४१०]
अवैमि रङ्गाधिपतेः सकाशादवेक्षमाणेषु जनेषु रक्षाम् । उदारनादां मणिपादुके त्वामोमित्यनुज्ञाक्षरमुद्गिरन्तीम् ॥ ३१
मधुद्विषः स्वैरविहार हे(तुर्मे) तून्मञ्जुस्वनाञ्शिक्षयसीव मातः । पर्यन्तभाजोर्मणिपादरक्षे पद्माधरण्योर्मणिनूपुराणि ॥ ३२

प्रास्थानिकेषु समयेषु समागतेषु प्राप्ता पदं परिचितं द्विजपुंगवेन ।
पुण्यासि रङ्गनृपतेर्मणिपादुके त्वं पुण्याहघोषमिव गर्भमणिप्रणादैः ॥ ३३
आतिध्वनेरुचितमुत्तरमन्तकाले कर्णेषु मञ्जुनिनदेन करिष्यसीति ।
वासं भजन्ति कृतिनो मणिपादरक्षे पुण्येषु देवि पुलिनेषु मरुद्वृधायाः ॥ ३४
दूत्ये बलेर्विमथने शकटस्य भङ्गे यात्रोत्सवेषु च विभोः प्रतिपन्नसख्या ।
वीरायितानि बिरुदोपहितानि नूनं मञ्जुस्वनैः प्रथयसे मणिपादुके त्वम् ॥ ३५
स्तोतुं प्रवृत्तमपि मां निगमस्तुतां त्वां व्यासज्यमानकरणं विषयेष्वजस्रम् ।
अन्तर्मणिध्वनिभिरच्युतपादुके त्वं संबोधयस्यनुकलं सहजानुकम्पा ॥ ३६
देवस्य दानवरिपोर्मणिपादरक्षे प्रस्थानमङ्गलविधौ प्रतिपन्ननादाम् ।
माभैष्ट साधव इति स्वयमालपन्तीं जाने जगत्त्रितयरक्षणदीक्षितां त्वाम् ॥ ३७
स्वच्छन्दविभ्रमगतौ मणिपादुके त्वं पादारविन्दमधिगम्य परस्य पुंसः ।
जातस्वना प्रतिपदं जपसीव सूक्तं विद्रावणं किमपि वैरिवरूथिनीनाम् ॥ ३८
रक्षार्थमाश्रितजनस्य समुज्जिहाने रङ्गेश्वरे शरदि शेषभुजङ्गतल्पात् ।
नादास्तव श्रुतिसुखा मणिपादरक्षे प्रस्थानशङ्खनिनदात्प्रथमे भवन्ति ॥ ३९
नित्यं पदाम्बुरुहयोरिह गोपिकां त्वां गोपीजनप्रियतमो मणिपादरक्षे ।
संपन्नघोषविभवां गतिभिर्निजाभिः प्रीत्येव न त्यजति रङ्गसमाश्रितोऽपि ॥ [४२०] ४०
प्रायः पदावनि विभोः प्रणतार्तिहन्तुः प्रस्थानमङ्गलविधौ प्रथमोद्यतानि ।
त्वच्छिञ्जितानि सपदि स्वयमारभन्ते कालोचितान्कनककाहलशङ्खनादान् ॥ ४१
आम्रेडितश्रुतिगणैर्निनदैर्मणीनामाम्नायवेद्यमनुभावमभङ्गुरं ते ।
उद्गास्यतां नियतमिच्छसि सामगानां तानप्रदानमिव शौरिपदावनि त्वम् ॥ ४२
रथ्यासु रङ्गनृपतेर्मणिपादरक्षे त्वद्गर्भरत्नजनितो मधुरः प्रणादः ।
संदर्शनोत्सुकधियां पुरसुन्दरीणां संपद्यते श्रवणमोहनमन्त्रघोषः ॥ ४३
आकस्मिकेषु समयेष्वपवार्य भृत्यानन्तःपुरं विशति रङ्गपतौ सलीलम् ।
व्यामोहनेन भवती सुदृशामधीते मञ्जुस्वनेन मदनोपनिषद्रहस्यम् ॥ ४४
यात्राविहारसमयेषु समुत्थितं ते रङ्गाधिपस्य चरणावनि मञ्जु नादम् ।
पर्याकुलेन्द्रियमृगग्रहणाय पुंसां संमोहनं शबरगीतमिव प्रतीमः ॥ ४५
प्रायेण सह्यदुहितुर्नदराजकन्या जामातुरागमनसूचनमीहमाना ।
मञ्जुप्रणादसुभगैर्मणिपादुके त्वामन्तर्युतामकृत यौतकरत्नखण्डैः ॥ ४६
नित्यं विहारसमये निगमानुयातैर्विक्षेपताण्डवितगर्भमणिप्रसूतैः ।
नादैः स्वयं नरकमर्दनपादरक्षे नादावसाननिलयं वदसीव नाथम् ॥ ४७

साधारणेषु युवयोर्मणिपादरक्षे देवस्य दानवरिपोस्त्रिषु विक्रमेषु ।
अद्यापि शिञ्जितमिषादनुवर्तमानं न्यूनाधिकत्वविषयं कलहं प्रतीमः ॥ ४८
प्रायः पदावनि विभोः प्रणयापराधे मानग्रहं शमयितुं महिषीजनानाम् ।
उच्चारयन्ति निनदैस्तव गर्भरत्नान्युद्धातमक्षरमुपाश्रयभारतीनाम् ॥ ४९
अन्तश्चरेषु पवनेषु जितेष्वभिज्ञाः प्रत्यङ्मुखीं परिणमय्य मनःप्रवृत्तिम् ।
आस्वादयन्ति सरसं मणिपादरक्षे नादावसानसमये भवतीनिनादम् ॥ [४३०] ५०
दाक्षिण्यमत्र नियतं नियता सुधासिन्धिरित्युद्गतो नियतमच्युतपादरक्षे ।
प्रत्येकसंश्रितपदस्तुतये भवत्योः संघर्षवाद इव मध्यमणिप्रणादः ॥ ५१
संचारकेलिकलहायितगर्भरत्ना सांसिद्धिकं सकलजन्तुषु सार्वभौमम् ।
रक्षार्थिनां प्रथयसीव पदावनि त्वं रङ्गेश्वरस्य निरवग्रहमानृशंस्यम् ॥ ५२
प्रातुं परं पुरिशयं पुरुषं मुनीनामभ्यस्यतामनुदिनं प्रणवं त्रिमात्रम् ।
श्रीरङ्गराजचरणावनि शिञ्जितं ते शङ्के समुन्नयनसामविशेषघोषम् ॥ ५३
नित्यं समाहितधियामुपदर्शयन्ती नागेशयं किमपि धाम निजोर्ध्वभागे ।
हृत्कर्णिकामनुगता मणिपादुके त्वं मञ्जुस्वना स्फुरसि वाग्भ्रमरी परेव ॥ ५४
मानेषु दानवरिपोर्मणिपादरक्षे त्वामाश्रितेषु निगमेष्ववधारितेषु ।
मञ्जुस्वनैर्वदसि मैवमितीव मातर्वेलां लिलङ्घयिषतो मनुजान्निरोद्धुम् ॥ ५५
क्रन्दत्सु कातरतया करणव्यपाये रङ्गोपशल्यशयितेषु जनेष्वलक्ष्यम् ।
आसीदसि त्वरितमस्खलितानुकम्पा मातेव मञ्जुनिनदा मणिपादुके त्वम् ॥ ५६
भास्वत्सुवर्णवपुषा मणिपादरक्षे पद्मासहायपदपद्मविभूषणानाम् ।
मञ्जीरशिञ्जितविकल्पितमञ्जुनादा मञ्जूषिकेव भवती निगमान्तवाचाम् ॥ ५७
रङ्गेशपादकमलात् त्वदधीनवृत्तेरन्येषु केषुचिदलक्ष्यमनन्यवेद्यम् ।
आम्नायगूढमबहिर्मणिभिः क्वणद्भिर्नेदीयसां प्रथयसीव निजानुभावम् ॥ ५८
कालोपपन्नकरणात्ययनिर्विचेष्टे जातश्रमे मयि जनार्दनपादरक्षे ।
आश्वासनाय पुरतः प्रसरन्तु मातर्वार्ताहरास्तव रवाः शमितार्तयो मे ॥ ५९
संरक्षणाय समये जगतां त्रयाणां यात्रासु रङ्गनृपतेरुपतस्थुषीषु ।
संपत्स्यते श्रुतिसुखैर्मणिपादरक्षे माङ्गल्यसूक्तिरनघा तव मञ्जुनादैः ॥ [४४०] ६०
गर्भोपलैर्गमनवेगवशाद्विलोलैर्वाचालिता मधुभिदो मणि(पादरक्षे) पादुके त्वम् ।
प्रस्तौषि भावितधियां पथि देवयाने प्रस्थानमङ्गलमृदङ्गविशेषघोषम् ॥ ६१
पर्यङ्कमाश्रितवतो मणिपादुके त्वं पादं विहाय परिकल्पितमौनमुद्रा ।
श्रोतुं प्रभोरवसरं दिशसीव मातर्नाभीसरोजशयितार्भकसामगीतिम् ॥ ६२

भोगाय देवि भवती मणिपादरक्षे पद्मासहायमधिरोप्य भुजङ्गतल्पे ।
विश्वस्य गुप्तिमधिकृत्य विहारहीना वाचंयमा किमपि चिन्तयतीव कार्यम् ॥ ६३
नित्यप्रबोधसुभगे पुरुषे परस्मिन्निद्रामुपेयुषि तदेकविहारशीला ।
मञ्जुस्वनं विजहती मणिपादुके त्वं संवेशमिच्छसि परं चरणान्तिकस्था ॥ ६४
लास्यं विहाय किमपि स्थितमाश्रयन्ती रङ्गेश्वरेण सहिता मणिमण्डपेषु ।
मञ्जुस्वनेषु विरतेष्वपि विश्वमेतन्मौनेन हन्त भवती मुखरीकरोति ॥ ६५
विस्मापितेव भवती मणिपादरक्षे वैरोचनेर्वितरणेन तथाविधेन ।
एतावताऽलमिति देवि गृहीतपादा नाथं त्रिविक्रममवारयतेव नादैः ॥ ६६
सामानि रङ्गनृपतिः सरसं च गीतं लीलागतेषु विनिवारयति स्वतन्त्रः ।
श्रोतुं तव श्रुतिसुखानि विशेषवेदी मञ्जूनि काञ्चनपदावनि शिञ्जितानि ॥ ६७
तत्त्वादर्शी प्रथयता रुचिरां स्वरेखां वर्णाधिकेन मधुसूदनपादरक्षे ।
पश्यन्ति चित्तनिकषे विनिवेश्य सन्तो मञ्जुस्वनेन तव नैगमिकं सुवर्णम् ॥ ६८
मुग्धस्य हन्त भवतीं स्तुवतो ममैतान्याकर्ण्य नूनमयथायथजल्पितानि ।
इत्थं वद त्वमिति शिक्षयितुं प्रणादान्मञ्जूनुदीरयसि माधवपादुके त्वम् ॥ ६९
आदौ सहस्रमिति यत्सहसा मयोक्तं तुष्टूषता निरवधिं महिमार्णवं ते ।
आम्रेडयस्यथ किमेतदमृष्यमाणा मञ्जुस्वनेन मधुजिन्मणि(पादरक्षे) पादुके त्वम् ॥ [४५०] ७०
परिमितपरिवर्हे पादुके संचरिष्णौ त्वयि विनिहितपादे लीलया रङ्गनाथे ।
नियमयति विपञ्चीं नित्यमेकान्तसेवी निशमयितुमुदारान्नारदस्ते निनादान् ॥ ७१
विहरति विशिखायां रङ्गनाथे सलीलं गमनवशविलोलैर्गर्भिरत्नैः क्वणन्त्याः ।
मणिवलयनिनादैर्मञ्जुलैस्ते दिशन्ति प्रतिवचनमुदारं पादुके पौरनार्यः ॥ ७२
अनुकृतसवनीयस्तोत्रशस्त्रां निनादैरनुगतनिगमां त्वामास्थितो रङ्गनाथः ।
अनितरविबुधार्हं हव्यमास्वादयिष्यन्दिशति चरणरक्षे यज्ञवाटं द्विजानाम् ॥ ७३
चरणकमलमेतद्रङ्गनाथस्य नित्यं शरणमिति जनानां दर्शयन्ती यथावत् ।
प्रतिपदमपि हृद्यं पादुके स्वादुभावादनुवदति परं ते नादमाम्नायपङ्क्तिः ॥ ७४
रहितभुजगतल्पे त्वत्सनाथे प्रजानां प्रतिभयशमनाय प्रस्थिते रङ्गनाथे ।
प्रथममुदयमानः पादुके तूर्यघोषात्प्रतिफलति निनादः पाञ्चजन्ये त्वदीयः ॥ ७५
वकुलधरतनुस्त्वं संहितां यामपश्यः श्रुतिपरिषदि तस्याः सौरभं योजयन्ति ।
हरिचरणसरोजामोदसंमोदितायाः प्रतिपदरमणीयाः पादुके ते निनादाः ॥ ७६
दनुतनयनिहन्तुर्जैत्रयात्रानुकूले शरदुपगमकाले सह्यजामापतन्ति ।
श्रुतिमधुरमुदारं शिक्षितुं ते निनादं परिहृतनिजवासाः पादुके राजहंसाः ॥ ७७

विहरणसमयेषु प्रत्यहं रङ्गभर्तुश्चरणनखमयूखैः सोत्तरीया विशुद्धैः ।
परिणमयसि नादं पादुके गर्भरत्नैर्दमयितुमिव शिष्यान्दीर्घिकाराजहंसान् ॥ ७८
परिषदि विरतायां पादुके रङ्गभर्तुः परिजनमपवार्य प्रस्थितस्यावरोधान् ।
मणिनिकरसमुद्यन्मञ्जुनादापदेशादभिलपसि यथार्हं नूनमालोकशब्दम् ॥ ७९
गुरुजननियतं तद्गोपिकानां सहस्रं दिनकरतनयायाः सैकते दिव्यगोपः ।
वशमनयदयत्नाद्वंशनादानुयातैस्तव खलु पदरक्षे तादृशैर्मञ्जुनादैः ॥ [४६०] ८०
निजपदविनिवेशान्निर्विशेषप्रचारान्परिणमयति भक्तान् रङ्गनाथो यथा माम् ।
इति विहरणकाले मञ्जुशिञ्जाविशेषैर्हितमुपदिशसीव प्राणिनां पादुके त्वम् ॥ ८१
अयमयमिति तैस्तैः कल्पितानध्वभेदान्प्रतिपदमवलोक्य प्राणिनां व्याकुलानाम् ।
चटुलमणिकलापैः शौरिपादावनि त्वं मुखरयसि विहारैर्मुक्तिघण्टापथाग्र्यम् ॥ ८२
पदकमलमुदारं दर्शयन्ती मुरारेः कलमधुरनिनादा गर्भरत्नैर्विलोलैः ।
विषमविषयतृष्णाव्याकुलानि प्रजानामभिमुखयसि नूनं पादुके मानसानि ॥ ८३
मधुरिपुपदरक्षे मन्दबुद्धौ मयि त्वामनवधिमहिमानं त्वत्प्रसादात्स्तुवाने ।
मणिनिकरसमुत्थैर्मञ्जुनादैः कवीनामुपरमयसि तांस्तान्नूनमुत्सेकवादान् ॥ ८४
शरणमुपगते त्वां शार्ङ्गिणः पादरक्षे सकृदिति विधिसिद्धं त्यक्तुकामे विमोहात् ।
प्रचलितमणिजालव्यञ्जितैः शिञ्जितैः स्वैरलमलमिति नूनं वारयस्यादरेण ॥ ८५
विकलकरणवृत्तौ विह्वलाङ्गे विलक्षं विलपति मयि मोहाद्बिभ्रती शौरिपादम् ।
परिसरमधिगन्तुं पश्य पादावनि त्वं प्रतिभयमखिलं मे भर्त्सयन्ती निनादैः ॥ ८६
करणविगमकाले कालहुंकारशङ्की द्रुतपदमुपगच्छन्दत्तहस्तः प्रियाभ्याम् ।
परिणमयतु कर्णे रङ्गनाथः स्वयं नः प्रणवमिव भवत्याः पादुके मञ्जुनादम् ॥ ८७
कमलवनसखीं तां कौमुदीमुद्वहन्तं सविधमुपनयन्ती तादृशं रङ्गचन्द्रम् ।
प्रलयदिनसमुत्थान्पादुके मामकीनान्प्रशमय परितापाञ्शीतलैः शिञ्जितैः स्वैः ॥ ८८
प्रशमयतु भयं नः पश्चिमश्वासकाले रहसि विहरणं ते रङ्गनाथेन सार्धम् ।
नियतमनुविधत्ते पादुके यन्निनादो निखिलभुवनरक्षाघोषणाघोषलीलाम् ॥ ८९
त्रिकविनिहितहस्तं चिन्तयित्वा कृतान्तं गतवति हृदि मोहं गच्छता जीवितेन ।
परिकलयतु बोधं पादुके शिञ्जितं ते त्वरयितुमिव सज्जं त्वद्विधेयं मुकुन्दम् ॥ [४७०] ९०
उपघ्नं संवित्तेरुपनिषदुपोद्घातवचनं तव श्रावंश्रावं श्रुतिसुभगमन्तर्मणिरवम् ।
विजृम्भन्ते नूनं मधुमथनपादावनि मम द्रवीभूतद्राक्षामधुरिमधुरीणाः फणितयः ॥ ९१
विलासैः क्रीणन्तो निखिलजनचेतांसि विविधा विहारास्ते रङ्गक्षितिरमणपादावनि मुहुः ।
विगाहन्तामन्तर्मम विलुठदन्तर्मणिशिलाखलात्कारव्याजक्षरदमृतधाराधमनयः ॥ ९२

श्रुतिश्रेणीस्थेयश्रुतिसुभगशिञ्जामुखरितां भजेम त्वां पद्मारमणचरणत्रायिणि परम् ।
न मुद्रानिद्राणद्रविणकणविश्राणनदशाविशालाहंकारं कमपि घनहुंकारपरुषम् ॥ ९३
तवैतच्छ्रीरङ्गक्षितिपतिपदत्रायिणि नृणां भवत्यागश्चिन्तारणरणकभङ्गाय रणितम् ।
शरीरं स्वं भावं प्रथयति यदाकर्णनवशान्न नः कर्णे भावी यममहिषघण्टाघणघणः ॥ ९४
परित्रस्ताः पुण्यद्रवपतनवेगात्प्रथमतः क्षरद्भिः श्रीरङ्गक्षितिरमणपादावनि तदा ।
विदामासुर्देवा बलिमथनसंरम्भमनघैः प्रणादैस्ते सद्यः पदकमलविक्रान्तिपिशुनैः ॥ ९५
स्वेषु स्वेषु पदेषु किं नियमयस्यष्टौ दिशामीश्वरान्स्वैरालापकथाः प्रवर्तयसि किं त्रय्या सहासीनया ।
रङ्गेशस्य समस्तलोकमहितं प्राप्ता पदाम्भोरुहं मा भैषीरिति मामुदीरयसि वा मञ्जुस्वनैः पादुके ॥ ९६
रङ्गे देवि रथाङ्गपाणिचरणस्वच्छन्दलीलासखि स्तोकस्पन्दितरम्यविभ्रमगतिप्रस्तावकं तावकम् ।
कालोपागतकालकिंकरचमूहुंकारपारम्परीदुर्वारप्रतिवावदूकमनघं श्रोष्यामि शिञ्जारवम् ॥ ९७
त्वच्छिञ्जारवशर्करारससदास्वादात्सतामुन्मदा मातर्माधवपादुके बहुविदां प्रायः श्रुतिर्मुह्यति ।
सारासारसकृद्विमर्शनपरिम्लानाक्षरग्रन्थिभिर्ग्रन्थैस्त्वामिह वर्णयाम्यहमतस्त्रासत्रपावर्जितः ॥ ९८
तवाम्ब किल खेलतां गतिवशेन गर्भाश्मनां रमारमणपादुके किमपि मञ्जुभिः शिञ्जितैः ।
पदस्तुतिविधायिभिस्त्वदनुभावसिद्धान्तिभिः सयूथ्यकलहायितं श्रुतिशतं समापद्यते ॥ ९९
क्षिपति मणिपादरक्षे नादैर्नूनं समाश्रितत्राणे । रङ्गेश्वरस्य भवती रक्षापेक्षाप्रतीक्षणविलम्बम् ॥ [४८०] १००

## ॥ अथ रत्नसामान्यपद्धतिः ॥ १५ ॥

उदर्चिषस्ते रङ्गेन्द्रपादावनि बहिर्मणीन् । अन्तर्मणिरवं श्रुत्वा मन्ये रोमाञ्चिताकृतीन् ॥ १
विधेहि शौरेर्मणिपादुके त्वं विपद्यमाने मयि रश्मिजालैः । आसीदतामन्तककिंकराणां वित्रासनान्वेत्रलताविशेषान् ॥ २
मुकुन्दपादावनि मध्यनाड्या मूर्धन्यया निष्पततो मुमुक्षोः । आब्रह्मलोकादवलम्बनार्थं रत्नानि ते रश्मिगणं सृजन्ति ॥ ३
असूर्यभेद्यां रजनीं प्रजानामालोकमात्रेण निवारयन्ती । अमोघवृत्तिर्मणिपादरक्षे मुरद्विषो मूर्तिमती दया त्वम् ॥ ४
रङ्गेशपादावनि तावकानां रत्नोपलानां द्युतयः स्फुरन्ति । श्रेयःफलानां श्रुतिवल्लरीणामुपघ्नशाखा इव निर्व्यपायाः ॥ ५
कस्यापि पुंसः कनकापगायाः पुण्ये सलीलं पुलिने शयालोः । समीपवृत्तिर्मणिपादुके त्वं संवाहयन्तीव पदं करैः स्वैः ॥
दिदृक्षमाणस्य परं निधानं स्नेहान्विते योगदशाविशेषे । संवित्प्रदीपं मणिपादरक्षे संधुक्षयन्तीव मरीचयस्ते ॥ ७
समाधिभाजां तनुते त्वदीया रङ्गेशपादावनि रत्नपङ्क्तिः । स्थानं प्रयातुं तमसः परं तत्प्रदीपकृत्यं प्रभया महत्या ॥ ८
बध्नासि रङ्गेश्वरपादरक्षे मन्ये यथार्हं मणिरश्मिजालैः । सेवानतानां त्रिदशेश्वराणां शेषापटीं शेखरसंनि(कृ)विष्टाम् ॥ ९
भजन्ति रङ्गेश्वरपादरक्षे प्रकल्पयन्तो विविधान्पुमर्थान् । उदर्चिषश्चिन्तयतां जनानां चिन्तामणित्वं मणयस्त्वदीयाः ॥ १०
नाथस्य दत्ते नदराजकन्या पातुं शुभान्पादनखेन्दुरश्मीन् । मणिप्रभाभिः प्रतिपन्नपक्षां लीलाचकोरीमिव पादुके त्वाम् ॥
जनस्य रङ्गेश्वरपादुके त्वं जातानुकम्पा जनयस्ययत्नात् । आकृष्य दूरान्मणिरश्मिजालैरनन्यलक्ष्याणि विलोचनानि ॥ १२
रङ्गेशपादावनि तावकीनैः स्पृष्टाः कदाचिन्मणिरश्मिपाशैः । कालस्य घोरं न भजन्ति भूयः कारागृहान्तेषु कशाभिघातम् ॥
रत्नानि रङ्गेश्वरपादरक्षे त्वदाश्रितान्यप्रतिघैर्मयूखैः । आसेदुषीणां श्रुतिसुन्दरीणां वितन्वते वर्णनिचोललक्ष्मीम् ॥ १४

निद्रारसप्रणयिनो मणिपादरक्षे रङ्गेश्वरस्य सविधं प्रतिपद्यमाना ।
शय्याफणीन्द्रमभितो भवतो विधत्ते रत्नांशुभिर्यवनिकामिव दर्शनीयाम् ॥ १५
सद्यस्त्वदुद्ग्रहदशानमिताकृतीनां स्रस्तांशुकं निजरुचा मणिपादुके त्वम् ।
पद्मासहायपरिवारविलासिनीनां पट्टांशुकैरिव पयोधरमावृणोषि ॥ १६
देवस्य रङ्गवसतेः पुरतः प्रवृत्तैरुद्धूतविश्वतिमिरां मणिरश्मिजालैः ।
मन्ये मदीयहृदयायतनप्रवेशमाङ्गल्यदीपकणिकां मणिपादुके त्वाम् ॥ १७
आकीर्णरत्ननिकरां मणिपादुके त्वां रङ्गेश्वरस्य ललितां विपणिं प्रतीमः ।
यत्संश्रयेण भवति स्थिरभक्तिमूल्यं कैवल्यमत्र जगतां क्रयविक्रयार्हम् ॥ १८
व्यङ्क्तुं क्षमं भगवतो जगदीश्वरत्वं वज्राङ्कुशध्वजसरोरुहचक्रचिह्नम् ।
आश्लिष्य निर्भररुचिं मणिपादुके त्वामासीदनाभरणसुन्दरमङ्घ्रिपद्मम् ॥ १९
रत्नप्रभापटलचक्रमनोहरा त्वं पद्मारुणं पदमिदं त्वयि रङ्गभर्तुः ।
मन्ये तदेतदुभयं मणिपादरक्षे चक्राब्जमण्डलमकिंचनरक्षणार्थम् ॥ [५००] २०
त्रासात्स्वयं प्रणमतां दनुजेश्वराणां सङ्घेऽवलग्नशिरसामपि मौलिरत्नैः ।
आयोजयत्यनुकूलं मणिपादुके त्वां सैरन्ध्रिकेव मुरवैरिकृपाणधारा ॥ २१
आस्कन्दनानि विबुधेन्द्रशिखामणीनां त्वामाश्रितान्यसुरसूदनपादरक्षे ।
रत्नानि ते स्तुतिसुवर्णपरीक्षणार्थे नूनं भजन्ति निकषोपलतां कवीनाम् ॥ २२
पादावनि प्रणयिनां प्रतिपादितार्थां क्रीडासरोजमिव शौरिपदं (वह) भजन्तीम् ।
प्रत्युप्तरत्ननिकरप्रतिपन्नशोभां पश्यामि रोहणगिरेरधिदेवतां त्वाम् ॥ २३
यामेव रत्नकिरणैर्मणिपादरक्षे चूडापदे तनुभृतां भवती विधत्ते ।
शक्रादिदैवतशिखामणिरज्यमानैस्तामेव ते प्रकटयन्ति पदैरभिख्याम् ॥ २४
रत्नाङ्कुरैरविरला मणिपादरक्षे पाकोन्मुखैः परिगता पुरुषार्थसस्यैः ।
देवेन रङ्गपतिना जगतां विभूत्यै केदारिकेव कृपया परिकल्पिता त्वम् ॥ २५
निर्धूतमोहतिमिरास्तव रत्नदीपैर्निर्विश्यमानविभवं नदराजपुत्र्या ।
प्रत्यक्षयन्ति निगमान्तनिगूढमर्थं पादावनि त्वयि निवेशितभावबन्धाः ॥ २६
रत्नोपलप्रकरसंभव एष दूराद्रङ्गाधिराजचरणावनि तावकीनः ।
आर्द्रापराधपरिखिन्नधियां प्रजानामाश्वासनार्थ इव भाति करप्रसारः ॥ २७
व्यामुह्यतो विषयिबालमृगान्मदीयान्संसारघर्मजनितासु मरीचिकासु ।
पादावनि प्रगुणरत्नमयूखजालैराकृष्य विश्रमय केशवकान्तिसिन्धौ ॥ २८
अन्तर्निधाय मुनिभिः परिरक्ष्यमाणामात्मीयरश्मिगुणितां मणिपादरक्षे ।
रङ्गेशपादकमलप्रतिपन्नमुद्रां नीवीमवैमि भवतीं निगमान्तवाचाम् ॥ २९

रामस्य रङ्गवसतेश्चरणानुषङ्गात्काष्ठां गतां भुवनपावनतां दधाना ।
पादावनि प्रचुररत्नशिलानिबद्धा संसारसंतरणसेतुरसि प्रजानाम् ॥ [५१०] ३०

दिविषन्मकुटेषु संचरन्त्याः प्रचुरस्ते मणिपादुके प्रकाशः । दिवि रङ्गपतेर्महोत्सवार्थं वितता वन्दनमालिकेव भाति ॥ ३१

प्रभवन्ति दवीयसां स्वभावात्तव रत्नानि मुकुन्दपादरक्षे । अयसामिव हन्त लोहकान्ताः कठिनानां मनसां विकर्षणाय ॥

परिपश्यति देवि रङ्गनाथे रहसि त्वं सविधे निविश्य लक्ष्म्याः । परिपुष्यसि रत्नधामभिः स्वैरनसूयेव मनोज्ञमङ्गरागम् ॥

तव रत्नकरार्पितं नवीनं परिगृह्य स्थिरमंशुकं मनोज्ञम् । जरदंशुकवत्सुखेन देहं कृतिनः केशवपादुके त्यजन्ति ॥ ३४

अभितो मणिपादुके निबद्धैः कृतसंस्कारविशेषमात्मरत्नैः । कुरुते भवतो पदं मुरारेः कठिनेऽस्मिन्हृदि मे निवेशयोग्यम् ॥

निजरत्नकराञ्चलैर्मदीयानपराधानवधूय दत्तसाम्या । रमया सहितस्य रङ्गभर्तुः पदयोरर्पय पादुके स्वयं माम् ॥ ३६

रश्मिजालपरिवेषबन्धुरा रङ्गभूमिपतिरत्नपादुके । विश्वलोचनविहङ्गहारिणी वागुरेव वितता विराजसे ॥ ३७

मानसाम्बुजविकासहेतुभिः सेविता मणिगणैः प्रभाकरैः । पादुके वहसि सद्भिराश्रितां देवि विष्णुपदसंपदं नवाम् ॥ ३८

अधिशयितफणीश्वरस्य शौरेः स्वयमधिरूढपदोपधानपार्श्वा । मणिवलयजुषा करेण मन्दं स्पृशसि पदावनि पादयोर्युगं तत् ॥

भवत्यन्ते त्वां प्रणतस्य जन्तोस्तदोकोऽग्रज्वलनं त्वत्प्रकाशैः । यतो नाड्या मध्यमया विनिर्यन्गतिं विन्देत्केशवपादरक्षे ॥

अशिथिलपरिणद्धा रश्मिजालैर्मणीनां दुरधिगमतमं नः पारमारोपयन्ती । [५२०]
कमलनयनमाद्यं कर्णधारं दधाना भवसि भवपयोधेः पादुके पोतपात्री ॥ ४१

मणिकिरणगणैस्ते कल्पिते गुल्मभेदे मृगयुरिव कुरङ्गीं त्वां पुरस्कृत्य भव्याम् ।
हरति चरणरक्षे भक्तिपाशावरुद्धं हृदयहरिणयूथं प्राणिनां रङ्गनाथः ॥ ४२

परिचितपदमूला पादुके रङ्गिणस्त्वं प्रभवति भुजमध्ये कौस्तुभोऽयं तथापि ।
भवति भृशमधस्तात्तेजसा भव्यभूम्ना शलभितदुरितानां तावकानां मणीनाम् ॥ ४३

कल्पश्रेणीदिनपरिणतौ जन्तुजाले प्रसुप्ते विष्वग्व्याप्ते जगति तमसा पादुके तादृशेन ।
स्त्यानालोकैस्तव मणिगणैर्वासगेहप्रदीपाः संपद्यन्ते सह कमलया जागरूकस्य यूनः ॥ ४४

श्रीरङ्गेन्दोश्चरणकमलद्वन्द्वसेवावलेपादारूढायां त्वयि मखभुजामानतान्मौलिभागान् ।
तेषां चूडामणिभिरनघैस्तावकानां मणीनां केशाकेशि प्रभवति मिथस्त्रासलेशोज्झितानाम् ॥ ४५

त्वद्रत्नोपलरश्मिपञ्जरतनुत्राणं स्थिरं बिभ्रतो मातर्माधवपादुके न तु पुनर्हस्तैः स्पृशन्त्याकुलैः ।
दूरोत्सिक्तदुराढ्यजिह्मगविलद्वाःपालकोपानलज्वालामित्रकठोरवेत्रलतिकादत्तार्धचन्द्रं वपुः ॥ ४६

संवर्तोदितसूर्यकोटिसदृशीं रङ्गेशपादावनि प्रस्तौषि प्रतियत्नरत्ननिकरज्योतिश्छटामुद्भटाम् ।
तन्मन्ये तदनन्यसूरिपरिषन्मध्ये निवेशाय नस्तादृग्वासरसेऽपि भेत्तुमचिरादस्माकमन्धं तमः ॥ ४७

सलीलं विन्यस्य त्वयि चरणरक्षे निजपदं यदृच्छानिष्क्रान्ते विहरति हरौ रङ्गरसिके ।
दिशासौधानष्टौ जनयसि तदा निर्भरमिलन्मणिच्छायामायाघनघटितकेतुव्यतिकरान् ॥ ४८

महार्घैराश्लिष्टा मणिभिरवधूतद्युमणिभिः कथंचित्क्षेत्रज्ञैरधिगतपदामम्ब भवतीम् ।
मुकुन्देन त्रातुं पदकमलमूले विनिहितां निराबाधां मन्ये निधिमनघवाचां निरवधिम् ॥ ४९

तापत्रयं निरुन्धे पचति कषायान्विशोषयति पङ्कम् । तेजस्त्रितयमिदं ते शङ्के रङ्गेन्द्रपादुके तेजः ॥ [५३०] ५०

## ॥ बहुरत्नपद्धतिः षोडशी ॥ १६ ॥

मुखबाहूरुपादेभ्यो वर्णान्सृष्टवतः प्रभोः । प्रपद्ये पादुकां रत्नैर्व्यक्तवर्णव्यवस्थितिम् ॥ १

मणिभिः सितरक्तपीतकृष्णैर्भवती काञ्चनपादुके विचित्रा । युगभेदविकल्पितं मुरारेर्युगपद्दर्शयतीव वर्णभेदम् ॥ २

नवरत्नविचित्रिता मुरारेः पदयोस्त्वं मणिपादुके विभासि । नवखण्डवती वसुन्धरेव प्रणयाज्जन्मभुवं समाश्रयन्ती ॥

सहसा विनिवेद्य सापराधांस्त्वदधीनस्वपदे मुकुन्दपादे । अरुणोपलसक्तमौक्तिकश्रीः स्मयमानेव विभासि पादुके त्वम् ॥

बहुरत्नसमुद्भवं मयूखं तव मन्ये मणिपादुके मुरारेः । चरणोपगतं मयूरपिञ्छं मकुटारोहणसाहसं प्रमार्ष्टुम् ॥ ५

प्रभया हरिनीलमौक्तिकानां विकसन्त्या दिशसीव पादुके त्वम् ।
मधुभिच्चरणारविन्दलक्ष्म्याः स्रजमिन्दीवरपुण्डरीकवद्धाम् ॥ ६

तव माधवपादुके मणीनां प्रभया देवि सितासितारुणानाम् । वहते गिरिशस्य मौलिगङ्गा कुमुदेन्दीवरपद्मकाननानि ॥

पृथग्विधानां द्युतिभिर्मणीनां त्वां पादुके लोहितशुक्लकृष्णाम् । विहारहेतोरिह रङ्गभर्तुः पादानुषक्तां प्रकृतिं प्रतीमः ॥

तमालनीलद्युतिमिन्द्रनीलैर्मुक्तानुविद्धां मणिपादुके त्वाम् । अवैमि रङ्गेश्वरकान्तिसिन्धोर्वेलामविश्रान्तगतागतार्हाम् ॥ ९

अवैमि रङ्गेश्वरपादुकाभ्यामकालकाल्यं विभवं विधातुम् । वज्रेन्द्रनीलव्यपदेशदृश्यं वन्दीकृतं नूनमहस्त्रियामम् ॥(५४०)

पदस्य गोप्त्री भवती मुरारेर्मणिस्पृशा मौक्तिकरत्नभासा । अन्तर्दृशं साञ्जनया मुनीनामनक्ति कर्पूरशलाकयेव ॥ ११

मुक्तामयूखप्रकरैः सुभद्रा कृष्णा महेन्द्रोपलरश्मिजालैः । मान्या मुरारेर्मणिपादुके त्वं विहारयुक्ता विजयं वृणोषि ॥ १२

विचित्रवर्णां मणिपादुके त्वां छन्दोमयीं सामनिवद्धगीतिम् । मुनीन्द्रजुष्टां द्विपदां मुरारेः प्रत्यायिकां कांचिदवैमि प्रतीमः॥

प्रसेदुषी गोत्रभिदः प्रणामैः पुष्णासि रङ्गेश्वरपादुके त्वम् । मणिप्रभासंवलनापदेशात्प्रायस्तदर्हाणि शरासनानि ॥ १४

शोणाश्मनां तव हरिन्मणिरश्मिभिन्नं बालातपं वलिविमर्दनपादरक्षे ।
श्यामीकृतं शुकशकुन्तगणप्रवेशाच्छङ्के सतां किमपि शालिवनं विपक्वम् ॥ १५

संभिद्यमानमणिमौक्तिकविद्रुमश्रीः सैरन्ध्रिकेव भवती मणिपादरक्षे ।
प्रस्तौति रङ्गनृपतेश्चरणारविन्दे कस्तूरिकाघुसृणचन्दनपङ्कचर्चाम् ॥ १६

आतन्वतीमसुरमर्दनपादरक्षे शुद्धान्तपक्ष्मलदृशां मदनेन्द्रजालम् ।
वैहारिकीं विविधरत्नमयूखलक्ष्यान्मन्ये समुद्वहसि मोहनपिञ्छिकां त्वम् ॥ १७

रत्नैर्व्यवस्थितसितासितशोणवर्णैरालोकवद्भिरजहच्छ्रुतिसंनिकर्षैः ।
द्रष्टुं मुकुन्दचरणावनिमेषदृश्यौ संदृश्यसे जननि संभृतनेत्रपङ्क्तिः ॥ १८

गारुत्मतान्तरितमौक्तिकपङ्क्तिलक्ष्याद्दूर्वामधूकरचितं दुरितोपशान्त्यै ।
मातः स्वयं वहसि मुग्धधियां प्रजानां मङ्गल्यमाल्यमिव माधवपादुके त्वम् ॥ १९

रङ्गाधिराजपदरक्षिणि राजते ते वज्रोपसङ्घटितमौक्तिकविद्रुमश्रीः ।
सक्ता चिरं मनसि संयमिनां निवासात्सूर्येन्दुवह्निमयमण्डलवासनेव ॥ (५५०) २०

आसक्तवासवशिलाशकलास्त्वदीयाः पद्मासहायपदरक्षिणि पद्मरागाः ।
प्रत्यक्षयन्ति कमपि भ्रमराभिलीनं पादारविन्दमकरन्दरसप्रवाहम् ॥ २१

अन्तःपुराणि समयेष्वभिगन्तुमेका रङ्गेशितुर्व्रजसीव पदावनि त्वम् ।
मुक्तांशुजालमिलनाद्रुचिरैः प्रवालैर्बिम्बाधरं स्मितविशेषयुतं प्रियाणाम् ॥ २२
रङ्गेश्वरस्य मृगयोश्चरणावसक्तां रक्षःकपीन्द्रमकुटेषु निवेशयोग्याम् ।
मन्ये पदावनि निबद्धविचित्ररत्नां मायामृगस्य रचितामिव चर्मणा त्वाम् ॥ २३
बध्नासि रङ्गपतिविभ्रमपादुके त्वं मायाकिरातमकुटेन च बर्हमालाम् ।
आकृष्टवासवधनुःशकलैर्मणीनामन्योन्यसङ्घटितकर्बुरितैर्मयूखैः ॥ २४
अन्योन्यबन्धुरहरिन्मणिपद्मरागा रङ्गेश्वरस्य चरणावनि राजसे त्वम् ।
आत्मोपमानविभवाच्चरितार्थयन्ती शैलात्मजागिरिशयोरिव मूर्तिमेकाम् ॥ २५
तापत्रयप्रशमनाय समाश्रितानां संदर्शितारुणसितासितरत्नपङ्क्तिः ।
पुष्णासि रङ्गनृपतेर्मणिपादुके त्वं प्रायः सरोजकुमुदोत्पलकाननानि ॥ २६
देहद्युतिं प्रकटयन्ति महेन्द्रनीलाः शौरेः पदाम्बुजरुचिं तव पद्मरागाः ।
अन्योन्यलब्धपरभागतया त्वमीषामाभाति कान्तिरपरा मणिपादरक्षे ॥ २७
आकीर्णमौक्तिकहरिन्मणिपद्मरागामम्भोजलोचनपदावनि भावये त्वाम् ।
तत्पादविश्रमजुषां श्रुतिसुन्दरीणां वर्णोपधानमिव मौलिनिवेशयोग्यम् ॥ २८
आसन्नवासवशिलारुचिरास्त्वदीयाः पद्मेक्षणस्य पदरक्षिणि पद्मरागाः ।
संभावयन्ति समये क्वचिदुष्णभानोः सद्यःप्रसूतयमुनासुभगामवस्थाम् ॥ २९
मुक्तेन्द्रनीलमणिभिर्विहिते भवत्याः पङ्क्ती दृढे परमपूरुषपादरक्षे ।
मन्ये समाश्रितजनस्य तवानुभावादुन्मोचिते सुकृतदुष्कृतशृङ्खले द्वे ॥ (५६०) ३०
उद्गीर्णगाढतमसो हरिनीलभङ्गास्ताराविशेषरुचिराणि च मौक्तिकानि ।
त्वत्सङ्गमात्सरसिजेक्षणपादरक्षे संयोजयन्ति निशया भवमौलिचन्द्रम् ॥ ३१
विष्णोः पदेन घटिता मणिपादुके त्वं व्यक्तेन्द्रनीलरुचिरुज्ज्वलमौक्तिकश्रीः ।
कालेषु दीव्यसि मरुद्भिरुदीर्यमाणा कादम्बिनीव परितः स्फुटवारिबिन्दुः ॥ ३२
भासा स्वया भगवतो मणिपादरक्षे मुक्ता[न्वि]श्चिता मरकतोपलपद्धतिस्ते ।
नित्यावगाहनसहं सकलस्य जन्तोर्गङ्गा[न्वि]श्चितं जनयतीव समुद्रमन्यम् ॥ ३३
सूर्यात्मजा हरिशिलामणिपङ्क्तिलक्ष्यात्त्वां नित्यमाश्रितवती मणिपादरक्षे ।
आदौ जनार्दनपदे क्षणमात्रलब्धामासन्नमौक्तिकरुचा हसतीव गङ्गाम् ॥ ३४
पर्यन्तसंघटितभासुरपद्मरागाः पद्मोदरभ्रमरकान्तिमुषस्त्वदीयाः ।
त्वत्संश्रयेण चरणावनि शक्रनीलाः पीताम्बरेण पुरुषेण तुलां लभन्ते ॥ ३५
शङ्के पदावनि सदा परिचिन्वतो त्वं रङ्गेशितुश्चरणपङ्कजसौकुमार्यम् ।
अग्रे महोभिररुणोपलमौक्तिकानां प्राज्यां विनिक्षिपसि पल्लवपुष्पपङ्क्तिम् ॥ ३६

निर्गच्छता चरणरक्षिणि नीयमाना रङ्गेश्वरेण भवती रणदीक्षितेन ।
सूते सुरारिसुभटीनयनाम्बुजानां ज्यौत्स्नीं निशामिव सितासितरत्नभासा ॥ ३७
मरकतहरिताङ्गी मेदुरा पद्मरागैरभिनवजलबिन्दुव्यक्तमुक्ताफलश्रीः ।
कलयसि पदरक्षे कृष्णमेघप्रचारात्कनकसरिदनूपे शाद्वलं सेन्द्रगोपम् ॥ ३८
विरचितसुरसिन्धोर्विष्णुपादारविन्दात्समधिकमनुभावं पादुके दर्शयन्ती ।
वलभिदुपलमुक्तापद्मरागप्रकाशैः परिणमयसि नूनं प्रातशोणं प्रयागम् ॥ ३९
विविधमणिमयूखैर्व्यक्तपक्षां विचित्रैर्जलनिधिदुहितुस्त्वां वेद्मि लीलाचकोरीम् ।
अनिशमविकलानां पादुके रङ्गभर्तुश्चरणनखमणीनां चन्द्रिकामापिबन्तीम् ॥ (५७०) ४०
चरणकमलसेवासङ्गिनां रङ्गभर्तुर्विनयगरिमभाजां वर्जितैरातपत्रैः ।
पुनरपि पदरक्षे पुष्यसि त्वं सुराणां बहुविधमणिकान्त्या बर्हिपिञ्छातपत्रम् ॥ ४१
मरकतरुचिपत्रा मौक्तिकस्मेरपुष्पा स्फुटकिसलयशोभा भासुरैः पद्मरागैः ।
फलमखिलमुदारा रङ्गनाथस्य पादे कलयति भवती नः कल्पवल्लीव काचित् ॥ ४२
बहुमणिरुचिराङ्गीं रङ्गनाथस्य पादान्निजशिरसि गिरीशो निक्षिपन्पादुके त्वाम् ।
स्मरति ललितमन्तर्लालनीयं भवान्यास्तरलवनकलापं षण्मुखस्यौपवाह्यम् ॥ ४३
विविधमणिसमुत्थैर्व्यक्तमापादयन्ती दिवसरजनिसंध्यायौगपद्यं मयूखैः ।
उपनिषदुपगीतां पादुके रङ्गिणस्त्वामघटितघटनार्हां शक्तिमालोचयामः ॥ ४४
सकलमिदमवन्ध्ये शासने स्थापयन्ती सुरमथनपदस्था मौक्तिकादिप्रकारा ।
प्रकटयसि विशुद्धश्यामरक्तादिरूपान् फलपरिणतिभेदान्प्राणिनां पादुके त्वम् ॥ ४५
प्रदिशति मुदमक्ष्णोः पादुके देहभाजां शतमखमणिपङ्क्तिः शार्ङ्गिणस्तुल्यवर्णा ।
परिसरनिहितैस्ते पद्मरागप्रदीपैर्घनतरपरिणद्धा कज्जलश्यामिकेव ॥ ४६
कलयाऽपि हानिरहितेषु सदा तव मौक्तिकेषु परितः प्रथते ।
उपरज्यमानहरिणाङ्कतुला हरिपादुके हरिशिलामहसा ॥ ४७
मरकतपत्रला रुचिरविद्रुमपल्लविता पृथुतरमौक्तिकस्तबकिता निगमैः सुरभिः ।
उपवनदेवतेव चरणावनि रङ्गपतेरभिलषतो विहारमधिगम्य पदं स्पृशसि ॥ ४८
सदोत्तुङ्गे रङ्गक्षितिरमणपादप्रणयिनि त्वदालोके तत्तन्मणिकिरणसंभेदकलुषे ।
प्रतिस्रोतोवृत्त्या प्रथितरुचिभेदं न सहते नवाम्भःस्वाच्छन्द्यं नमदमरकोटीरमकरः ॥ ४९
जनयसि पदावनि त्वं मुक्ताशोणमणिशक्रनीलरुचा । नखरुचिसंततिरुचिरां नन्दकनिस्त्रिंशसंपदं शौरेः ॥ (५८०) ५०

## ॥ पद्मरागपद्धतिः सप्तदशी ॥ १७ ॥

प्रपद्ये रङ्गनाथस्य पादुकां पद्मरागिणीम् । पदैकनियतां तस्य पद्मवासामिवापराम् ॥ १
अतिवाङ्मनसं विचिन्त्य शौरेः पदरक्षे पदपद्मसौकुमार्यम् । परिपुष्यसि पद्मरागभासा पदवीमाहितपल्लवामिव त्वम् ॥ २

पदपल्लवसङ्गिभिः प्रदीप्तैरधिकोल्लासिभिरम्ब पद्मरागैः । अनले शयनं क्वचिन्मुरारेरविसंवादयसीव पादुके त्वम् ॥ ३

विवृणोति रङ्गपतिरत्नपादुके त्वयि पद्मरागमणिपद्धतिः शुभा । निबिडोरुसंघटनपीडनक्षरन्मधुकैटभक्षतजपङ्कवासनाम् ॥ ४

प्रतियन्ति रङ्गपतिपादुके जनास्तव पद्मरागमणिरश्मिसंततिम् ।
अभिजग्मुषां त्वदनुभावखण्डिताघसंचयाद्विगलितामसृक्छटाम् ॥ ५

पश्यन्ति रङ्गेश्वरपादुके त्वां पौराङ्गनास्पर्शितरागबन्धाम् । शृङ्गारयोनेर्ज्वलनस्य दीप्तैरङ्गारजालैरिव पद्मरागैः ॥ ६

अवैमि दोषापगमस्य हेतुं तमोपहां संभृतपद्मरागाम् । अशेषवन्द्यां मणिपादुके त्वां रङ्गेशसूर्योदयपूर्वसन्ध्याम् ॥ ७

अवाप्य पादावनि रङ्गभर्तुः पदाम्बुजे पल्लवसंस्तराभाम् । त्वत्पद्मरागद्युतयो भजन्ते कालानलत्वं कलुषाम्बुधेर्नः ॥ ८

निसर्गसिद्धं मणिपादरक्षे देवस्य रङ्गावसथप्रियस्य । बालार्कवर्णाः पदपद्मरागं त्वत्पद्मरागाः पुनरुक्तयन्ति ॥ ९

पदेन विश्वं मणिपादरक्षे पत्न्या समं पालयतो मुरारेः । यशःपयोधौ परिकल्पयन्ति प्रवालशोभां तव पद्मरागाः ॥ ५९०

अर्चिष्मती काञ्चनपादरक्षे प्रस्तौति ते पाटलरत्नपङ्क्तिः । रेखारथाङ्गस्य महःप्रपञ्चं रङ्गेशपादाम्बुजमध्यभाजम् ॥ ११

त्वयैव पादावनि शोणरत्नैर्बालातपं नूनमुदीरयन्त्या । पद्मापतेः पादतलप्ररूढं रेखाम्बुजं नित्यमभूदनिद्रम् ॥ १२

नित्यं निजालोकपथं गतानां श्रेयो दिशन्तीं श्रितपद्मरागाम् । महीयसीं माधवपादरक्षे मन्यामहे मङ्गलदेवतां त्वाम् ॥ १३

देवस्य रङ्गरसिकस्य विहारहेतोरात्मानमङ्घ्रिकमले विनिवेद्य पूर्वम् ।
प्रायो निवेदयसि शोणमणिप्रकाशैः प्रत्यूषपद्मकलिकां पदरक्षिणि त्वम् ॥ १४

प्रत्यग्मयस्य हविषः प्रणवेन देवि प्रक्षेपणाय परमार्थविदां मुनीनाम् ।
प्राज्यां मुकुन्दचरणावनि पद्मरागैः पर्यायपावकशिखां भवतीं प्रतीमः ॥ १५

संपद्यते तव पदावनि पद्मरागैः प्रस्थानमाङ्गलिकहोमहुताशनश्रीः ।
क्षीराहुतिर्भवति यत्र विकल्पगङ्गा रङ्गेश्वरस्य रुचिरा नखरश्मिधारा ॥ १६

आमुञ्चतामरुणयावकपङ्कलक्ष्मीं शोणाश्मनां तव पदावनि कान्तियोगात् ।
पद्मासहायपदपद्मनखाः श्रयन्ते सन्ध्यानुरञ्जितसुधाकरबिम्बशोभाम् ॥ १७

स्थाने तवाच्युतपदावनि पद्मरागास्तेजोमयाः प्रशमयन्ति तमो मदीयम् ।
चित्रं तदेतदिह यज्जनयन्ति नित्यं रागात्मकेन महसा रजसो निवृत्तिम् ॥ १८

पद्माकरान्तरविकासिनि रङ्गभर्तुः पीत्वा पदावनि मधूनि पदारविन्दे ।
शोणोपलद्युतिमयीं सुभगप्रचारां मन्ये बिभर्षि महतीं मदरागशोभाम् ॥ १९

पादावनि प्रसृमरस्य कलेर्युगस्य प्रायेण संप्रति निवारयितुं प्रवेशम् ।
श्रीरङ्गसीम्नि तव शोणमणिप्रसूतः प्राकारमग्निमयमारभते प्रकाशः ॥ (६००) २०

लीलागृहान्तरविहारिणि रङ्गनाथे लाक्षारसैररुणरत्नमयूखलक्ष्यैः ।
प्रायेण रञ्जयति पादसरोजयुग्मं सैरन्ध्रिकेव भवती मणिपादरक्षे ॥ २१

रङ्गेशितुर्विहरतो मणिपादरक्षे रथ्यान्तरे सुमनसः परिकीर्यमाणाः ।
त्वत्पद्मरागकिरणच्छुरणाद्भजन्ते सन्ध्यातपान्तरिततारकपङ्क्तिलक्ष्मीम् ॥ २२

रङ्गाधिराजपदरक्षिणि बिभ्रतस्त्वां गङ्गातरङ्गविमले गिरिशस्य मौलौ ।
संवर्धयन्ति महसा तव पद्मरागाः शैलात्मजाचरणयावकपङ्कलक्ष्मीम् ॥ २३
शरणमुपगतानां शर्वरीं मोहरूपां शमयितुमुदयस्थान्मन्महे बालसूर्यान् ।
पदसरसिजयोगाद्रङ्गनाथस्य भूयः परिणमदरुणिम्नः पादुके पद्मरागान् ॥ २४
हरिपदरुचिराणां पादुके तावकानामरुणमणिगणानां नूनमर्धेन्दुमौलिः ।
प्रणतिसमयलग्नां वासनामेव धत्ते कलमकणिशकान्तिस्पर्धिनीभिर्जटाभिः ॥ २५
प्रतिविहरणमेते पादुके रङ्गभर्तुः पदकमलसगन्धाः पद्मरागास्त्वदीयाः ।
तरुणतपनमैत्रीमुद्वहद्भिर्मयूखैः स्थलकमलविभूतिं स्थापयन्त्यव्यवस्थाम् ॥ २६
अयमनितरभोगान् रञ्जयन्वीतरागांस्तरुणमणिगणानां तावकानां प्रकाशः ।
मधुरिपुपदरक्षे मङ्क्षु जाज्वल्यमानः शलभयति जनानां शाश्वतं पापराशिम् ॥ २७
प्रचुरनिगमगन्धाः पादुके रङ्गभर्तुः पदकमलसमृद्धिं प्रत्यहं भावयन्तः ।
दधति शकलयन्तो गाढमन्तस्तमिस्रं समुचिततरुणत्वं तावकाः पद्मरागाः ॥ २८
लाक्षालक्ष्मीमधररुचके रङ्गिणः पादरक्षे वक्त्राम्भोजे मदपरिणतिं पद्मरागद्युतिस्ते ।
कर्णोपान्ते किसलयरुचिं देवि सेवानतानां सीमन्ते च त्रिदशसुदृशां सौति सिन्दूरशोभाम् ॥ २९
अरुणमणयस्त्वैते हरिपदरागेण लब्धमहिमानः । गमयन्ति चरणरक्षे द्युमणिगणं ज्योतिरिङ्गणताम् ॥ (६१०) ३०

## ॥ मुक्तापद्धतिः अष्टादशी ॥ १८ ॥

बद्धानां यत्र नित्यानां मुक्तानामीश्वरस्य च । प्रत्यक्षं शेषशेषित्वं सा मे सिध्यतु पादुका ॥ १
तव रङ्गधुरीणपादरक्षे विमला मौक्तिकपद्धतिर्विभाति । सुहृदि त्वयि साधितापवर्गैः समये संक्रमितेव साधुकृत्या ॥ २
शरणागतसस्यमालिनीयं तव मुक्तामणिरश्मिनिर्झरौघैः । ननु रङ्गधुरीणपादरक्षे जगती नित्यमदैवमातृकाऽभूत् ॥ ३
अधिविष्णुपदं परिस्फुरन्ती नवमुक्तामणिनिर्मलप्रकाशा । परिपुष्यसि मङ्गलानि पुंसां प्रतिपच्चन्द्रकलेव पादुके त्वम् ॥ ४
निहिता नवमौक्तिकावलिस्त्वामभितः काञ्चनपादुके मुरारेः । नखचन्द्रमसां पदाश्रितानां प्रतिमाचन्द्रपरम्परेव भाति ॥ ५
समतामुपैति वपुषाऽपि सदा भवदीयमौक्तिकमहश्छुरिता । हरिपादुके हरिपदोद्भवया कनकापगासुरपुरापगया ॥ ६
तव रङ्गचन्द्रतपनीयपादुके विमला समुद्वहति मौक्तिकावलिः । चरणारविन्दनखचन्द्रमण्डलप्रणयोपयातनवतारकारुचिम् ॥
चन्द्रचूडमकुटेन लालिता चारुमौक्तिकमयूखपाण्डरा । रङ्गनाथपदपद्मसङ्गिनी लक्ष्यसे सुरधुनीव पादुके ॥ ८
ये भजन्ति भवतीं तवैव ते मौक्तिकद्युतिविकल्पगङ्गया । वर्धयन्ति मधुवैरिपादुके मौलिचन्द्रशकलस्य चन्द्रिकाम् ॥ ९
मुक्तामयूखैर्नियतं त्वदीयैरापूरयिष्यन्नवतंसचन्द्रम् । बिभर्ति रङ्गेश्वरपादरक्षे देवो महान्दर्शितसन्नतिस्त्वाम् ॥ (६२०) १०
परिष्कृता मौक्तिकरश्मिजालैः पदस्य गोप्त्री भवती मुरारेः । भवत्यनेकोर्मिसमाकुलानां पुंसां तमःसागरपोतपात्री ॥ ११
रङ्गेशपादप्रतिपन्नभोगां रत्नानुविद्धैर्महितां शिरोभिः । मुक्तावदातां मणिपादुके त्वां मूर्तिं भुजङ्गाधिपतेः प्रतीमः ॥ १२
मुकुन्दपादावनि मौक्तिकैस्ते ज्योत्स्नामयं विश्वमिदं दिवाऽपि । वैमानिकानां न भजन्ति येन व्याकोचतामञ्जलिपद्मकोशाः ॥
समाश्रितानामनघां विशुद्धिं त्रासव्यपायं च वितन्वती त्वम् । सायुज्यमापादयसि स्वकीयैर्मुक्ताफलैर्माधवपादुके नः ॥

अवैमि पादावनि मौक्तिकानां कीर्णामुदग्रैः किरणप्ररोहैः । यात्रोत्सवार्थं विहितां मुरारेरभङ्गुरामङ्कुरपालिकां त्वाम् ॥ १५

शिवत्वहेतुं सकलस्य जन्तोः स्रोतोविशेषैः सुभगामसंख्यैः । मुक्तामयूखैः सुरसिन्धुमन्यां पुष्णासि रङ्गेश्वरपादुके त्वम् ॥

रङ्गेशयानस्य पदावनि त्वां लावण्यसिन्धोः सविधे निषण्णाम् ।
परिस्फुरन्मौक्तिकजालदृश्यां प्रसूतिभिन्नां प्रतियन्ति शुक्तिम् ॥ १७

अवैमि रङ्गेश्वरपादरक्षे मुक्ताफलानि त्वयि निस्तुलानि । तेनैव कल्पान्तरतारकाणामुप्तानि बीजानि जगद्विधात्रा ॥ १८

विक्रम्यमाणमभवत्क्षणमन्तरिक्षं मायाविना भगवता मणिपादरक्षे ।
व्योमापगा विपुलबुद्बुददर्शनीयैर्मुक्ताफलैस्तव शुभैः पुनरुक्ततारम् ॥ १९

लक्ष्मीविहाररसिकेन पदावनि त्वं रक्षाविधौ भगवता जगतो नियुक्ता ।
सत्त्वं तदर्हमिव दर्शयसि प्रभूतं मुक्तामयूखनिकरेण विसृत्वरेण ॥ (६३०) २०

पादार्पणेन भवतीं प्रतिपाद्यमाने श्रीरङ्गचन्द्रमसि संभृतमौक्तिकश्रीः ।
अङ्गीकरोषि चरणावनि कान्तिमग्र्यामुद्विद्यमानकुमुदेव कुमुद्वती त्वम् ॥ २१

त्रय्यन्तहर्म्यतलवर्णसुधायितेन ज्योत्स्नाविकल्पितरुचा मणिपादुके त्वम् ।
मुक्तामयी मुरभिदङ्घ्रिसरोजभाजां वर्णेन ते शमयसीव सतामवर्णम् ॥ २२

वैकुण्ठपादनखवासनयेव नित्यं पादावनि प्रसुवते तव मौक्तिकानि ।
अच्छिन्नतापशमनाय समाश्रितानामालोकमण्डलमिषादमृतप्रवाहम् ॥ २३

रामानुवृत्तिजटिले भरतस्य मौलौ रङ्गाधिराजपदपङ्कजरक्षिणि त्वम् ।
एकातपत्रितजगत्त्रितयाद्वितीयं मुक्तांशुभिः कृतवती नवमातपत्रम् ॥ २४

पादावनि स्फुटमयूखमधुप्रवाहा मुग्धा परिस्फुरति मौक्तिकपद्धतिस्ते ।
रूढस्य रङ्गपतिपादसरोजमध्ये रेखात्मनः सुरतरोरिव पुष्पपङ्क्तिः ॥ २५

आम्रेडितैः पदनखेन्दुरुचा मनोज्ञैर्मुक्तांशुभिर्मुरभिदो मणिपादुके त्वम् ।
स्वाभाविकीं सकलजन्तुषु सार्वभौमीं प्रायः प्रसक्तिममलां प्रकटीकरोषि ॥ २६

निःसीमपङ्कमलिनं हृदयं मदीयं नाथस्य रङ्गवसतेरधिरोढुमिच्छोः ।
मातस्तवैव सहसा मणिपादरक्षे मुक्तांशवः स्फटिकसौधतुलां नयन्ति ॥ २७

श्यामा तनुर्भगवतः प्रतिपन्नतारा त्वं चन्द्रिकाविमलमौक्तिकदर्शनीया ।
स्थाने तदेतदुभयं मणिपादरक्षे बोधं क्षणान्नयति बुद्धिकुमुद्वतीं नः ॥ २८

उद्गाढपङ्कशमनैर्मणिपादरक्षे मुक्तांशुभिर्मुरभिदो नखरश्मिभिन्नैः ।
चूडापदेषु निहिता त्रिदशेश्वराणां तीर्थोदकैः स्नपयसीव पदार्थिनस्तान् ॥ २९

रङ्गेशपादनखचन्द्रसुधानुलेपं संप्राप्य सिद्धगुलिका इव तावकीनाः ।
संसारसंज्वरजुषां मणिपादरक्षे संजीवनाय जगतां प्रभवन्ति मुक्ताः ॥ (६४०) ३०

भावोत्तरैरधिगता भरतप्रधानैः प्रत्युतमौक्तिकमिषेण विकीर्णपुष्पा ।

रङ्गेश्वरस्य नियतं त्वयि लास्यभाजो रङ्गस्थलीव ललिता मणिपादुके त्वम् ॥ ३१

मन्ये मुकुन्दचरणावनि मौलिदेशे विन्यस्य देवि भवतीं विनतस्य शंभोः ।
आपादयन्त्यधिकृताः प्रतिपन्नतारं चूडातुषारकिरणं तव मौक्तिकौघैः ॥ ३२

पद्मापतेर्विहरतः प्रियमाचरन्ती मुक्तामयूखनिवहैः पुरतो विकीर्णैः ।
कन्दानि काञ्चनपदावनि पद्मिनीनां मन्ये विनिक्षिपसि मन्दिरदीर्घिकासु ॥ ३३

आशास्य नूनमनघां मणिपादरक्षे चन्द्रस्य वारिधिसुतासहजस्य वृद्धिम् ।
धात्रीं मुकुन्दपदयोरनपायिनीं त्वां ज्योत्स्ना समाश्रयति मौक्तिकपङ्क्तिलक्ष्यात् ॥ ३४

ये नाम केऽपि भवतीं विनयावनम्रैरुत्तंसयन्ति कृतिनः क्षणमुत्तमाङ्गैः ।
इच्छन्ति रङ्गनृपतेर्मणिपादरक्षे त्वन्मौक्तिकौघनियतामिह ते विशुद्धिम् ॥ ३५

अनुदिनललितानामङ्गुलीपल्लवानां जनितमुकुलशोभैर्देवि मुक्ताफलैस्त्वम् ।
प्रकटयसि जनानां पादुके रङ्गभर्तुः पदसरसिजरेखापाञ्चजन्यप्रसूतिम् ॥ ३६

बलिविमथनवेलाव्यापिनस्तस्य विष्णोः पदसरसिजमाध्वी पावनी देवि नूनम् ।
जननसमयलग्नां जाह्नवी तावकानां वहति चरणरक्षे वासनां मौक्तिकानाम् ॥ ३७

मधुरिपुपदमित्रैर्वैरमिन्दोः सरोजैः शमयितुमिव ताराः सेवमानाश्चिरं त्वाम् ।
प्रचुरकिरणपूराः पादुके संश्रितानां कलिकलुषमशेषं क्षालयन्तीव मुक्ताः ॥ ३८

मुकुलितपरितापं प्राणिनां मौक्तिकैः स्वैरमृतमिव दुहानामाद्रिये पादुके त्वाम् ।
विषधरफणपङ्क्तिर्यत्प्रभावेन मन्ये ललितनटनयोग्यं रङ्गमासीन्मुरारेः ॥ ३९

सकृदपि विनतानां त्रासमुन्मूलयन्तीं त्रिभुवनमहनीयां त्वामुपाश्रित्य नूनम् ।
न जहति निजकान्तिं पादुके रङ्गभर्तुश्चरणनखमणीनां सन्निधौ मौक्तिकानि ॥ (६५०) ४०

भुवनमिदमशेषं बिभ्रतो रङ्गभर्तुः पदकमलमिदं ते पादुके धारयन्त्याः ।
चिरविहरणखेदात्संभृतानां भजन्ति श्रमजलकणिकानां संपदं मौक्तिकानि ॥ ४१

प्रकटितयशसां ते पादुके रङ्गभर्तुर्द्विगुणितनखचन्द्रज्योतिषां मौक्तिकानाम् ।
करणविलयवेलाकातरस्यास्य जन्तोः शमयति परितापं शाश्वती चन्द्रिकेयम् ॥ ४२

दिव्यं धाम स्थिरमभियतां देवि मुक्तामणीनां मध्ये कश्चिद्भवति मधुजित्पादुके तावकानाम् ।
न्यस्तो नित्यं निजगुणगणव्यक्तिहेतोर्भवत्यामात्मज्योतिःशमिततमसां योगिनामन्तरात्मा ॥ ४३

शुद्धे नित्यं स्थिरपरिणतां देवि विष्णोः पदे त्वामास्थानीं तामभितविभवां पादुके तर्कयामि ।
आलोकैः स्वैर्भुवनमखिलं दीपवद्व्याप्य कामं मुक्ताः शुद्धिं यदुपसदनाद्बिभ्रति त्रासहीनाः ॥ ४४

प्राप्ता शौरेश्चरणकमलं पादुके भक्तिभाजां प्रत्यादेष्टुं किमपि वृजिनं प्रापिता मौलिभागम् ।
देवेन त्वं दशशतदृशा दन्तिराजस्य धत्से मूर्ध्नि न्यस्ता मुखपटरुचिं मौक्तिकानां प्रभाभिः ॥ ४५

तव हरिपादुके पृथुलमौक्तिकरत्नभुवः प्रचलदमर्त्यसिन्धुलहरीसहधर्मचराः ।

पदमजरामरं विदधते कथमम्ब सतां प्रणतसुरेन्द्रमौलिपलितंकरणाः किरणाः ॥ ४६

कपर्दे कस्यापि क्षितिधरपदत्रायिणि तथा मुहुर्गङ्गामन्यां क्षरति तव मुक्तामणिमहः ।

मुधारम्भः कुम्भस्थलमनुकलं सिञ्चति यथा निरालम्बो लम्बोदरकलभशुण्डालचुलकः ॥ ४७

मुकुन्दपदरक्षिणि प्रगुणदीप्तयस्तावकाः क्षरन्त्यमृतनिर्झरं कमपि मौक्तिकग्रन्थयः ।

मनागपि मनीषिणो यदनुषङ्गिणस्तत्क्षणाज्जरामरणदन्तुरं जहति हन्त तापत्रयम् ॥ ४८

देवः श्रीपदलाक्षया तिलकितस्तिष्ठत्युपर्येव ते गौरीपादसरोजयावकधनी मूले समालक्ष्यते ।

इत्थं जल्पति दुर्मदान्मुरभिदः शुद्धान्तचेटीजने प्रायस्त्वं मणिपादुके प्रहसिता मुक्तामयूखच्छलात् ॥ ४९

रङ्गेशचरणरक्षा सा मे विदधातु शाश्वतीं शुद्धिम् । यन्मौक्तिकप्रभाभिः श्वेतद्वीपमिव सह्यजाद्वीपम् ॥ (६६०) ५०

## ॥ मरकतपद्धतिः एकोनविंशी ॥ १९ ॥

वन्दे गारुत्मतीं वृत्त्या मणिस्तोमैश्च पादुकाम् । यया नित्यं तुलस्येव हरितत्त्वं प्रकाश्यते ॥ १

सविलासगतेषु रङ्गभर्तुस्त्वदधीनेषु बहिष्कृतो गरुत्मान् । अधिगच्छति निर्वृतिं कथंचिन्निजरत्नैस्त्वयि पादुके निविष्टैः ॥

समये मणिपादुके मुरारेर्मुहुरन्तःपुरमुग्धचेटिकास्ते । हरितान् हरिदश्मनां मयूखांस्तुलसीपल्लवशङ्कया क्षिपन्ति ॥ ३

हरितः सहसा हरिन्मणीनां प्रभया रङ्गनरेन्द्रपादरक्षे । तुलसीदलसंपदं दधाति त्वयि भक्तैर्निहितः प्रसूनराशिः ॥ ४

प्रसादयन्ती मणिपादुके त्वं विक्षेपयोगेन विहारवेलाम् । हरिन्मनोज्ञा हरिकान्तिसिन्धोः संदृश्यसे शैवलमञ्जरीव ॥ ५

बध्नासि रङ्गेश्वरपादरक्षे हरिन्मणीनां प्रभया स्फुरन्त्या । चूडापदेषु श्रुतिसुन्दरीणां माङ्गल्यदूर्वाङ्कुरमाल्यपङ्क्तिम् ॥ ६

अच्छेद्यरश्मिनियतैर्घटिता हरिद्भिः सद्वर्त्मना गतिमती मणिपादरक्षे ।

संदृश्यसे सवितृमण्डलमध्यभाजो रङ्गेश्वरस्य रथसंपदिवापरा त्वम् ॥ ७

श्यामायमाननिगमान्तवनोपकण्ठाः स्थाने पदावनि हरिन्मणयस्त्वदीयाः ।

पर्यन्तशाद्वलवतीं प्रथयन्ति नित्यं नारायणस्य रुचिरां नखरश्मिगङ्गाम् ॥ ८

उद्दिश्य कामपि गतिं मणिपादरक्षे रङ्गेश्वरस्य चरणे विनिवेशितात्मा ।

प्रायो हरिन्मणिरुचा दृढभक्तिबन्धा प्रादुष्करोति भवती तुलसीवनानि ॥ ९

सेवार्थमागतवतां त्रिदशेश्वराणां चूडामणिप्रकरशालिषु मौलिषु त्वम् ।

संवर्तयस्यसुरमर्दनपादरक्षे स्वेनाश्मगर्भमहसा शुकपङ्क्तिशोभाम् ॥ (६७०) १०

दरपरिणतपूर्वा वल्लरीर्निर्विशेषैर्मरकतशकलानां मांसलैरंशुजालैः ।

पशुपतिविधृता त्वं तस्य पाणौ निषण्णं मधुरिपुपदरक्षे वञ्चयस्येणशावम् ॥ ११

हरिचरणसरोजन्यासयोग्यं भवत्याः प्रगुणमभिलषन्त्यो वर्णलाभं तुलस्यः ।

प्रतिदिनमुपहारैः पादुके तावकानां मरकतशकलानामाश्रयन्ते मयूखान् ॥ १२

हरितमणिमयूखैरञ्चिताध्यात्मगन्धैर्दिशसि चरणरक्षे जातकौतूहला त्वम् ।

दनुजमथनलीलादारिकाणामुदारां दमनकदलपङ्क्तिं देवि मौलौ श्रुतीनाम् ॥ १३

अधिगतबहुशाखैरश्मगर्भप्रसूतैर्मधुरिपुपदरक्षे मेचकैरंशुजालैः ।
अनितरशरणानां नूनमारण्यकानां किमपि जनयसि त्वं कीचकारण्यदुर्गम् ॥ १४
प्रचुरनिगमशाखां पादुके रङ्गिणस्त्वां चरणनखमयूखैश्चारुपुष्पानुबन्धाम् ।
मरकतदलरम्यां मन्महे संचरन्तीं कनकसरिदनूपे काञ्चिदुद्यानलक्ष्मीम् ॥ १५
नखकिरणनिकायैर्नित्यमाविर्मृणाले महितरसविशेषे मेचकैरंशुभिस्ते ।
परिकलयसि रम्यां पादुके रङ्गभर्तुः पदकमलसमीपे पद्मिनीपत्रपङ्क्तिम् ॥ १६
अनिमिषयुवतीनामार्तनादोपशान्त्यै त्वयि विनिहितपादे लीलया रङ्गनाथे ।
दधति चरणरक्षे दैत्यसौधानि नूनं मरकतरुचिभिस्ते मङ्क्षु दूर्वाङ्कुराणि ॥ १७
विपुलतममहोभिर्वीतदोषानुषङ्गं विलसदुपरिनैल्यं देवि विष्णोः पदं तत् ।
पृथुमरकतदृश्यां प्राप्य पादावनि त्वां प्रकटयति समन्तात् संप्रयोगं हरिद्भिः ॥ १८
पद्माभूम्योः प्रणयसरणिर्यत्र पर्यायहीना यत्संसर्गादनवचरिताः पादुके कामचाराः ।
तारासक्तं तमिह तरुणं प्रीणयन्ते जरत्यो नित्यश्यामास्तव मरकतैर्नूनमाम्नायवाचः ॥ १९
स्थलकमलिनीव काचिच्चरणावनि भासि कमलवासिन्याः । यन्मरकतदलमध्ये यः कश्चिदसौ समीक्ष्यते शौरिः ॥ (६८०)

## ॥ इन्द्रनीलपद्धतिः विंशी ॥ २० ॥

हरिणा हरिनीलैश्च प्रतियत्नवतीं सदा । अयत्नलभ्यनिर्वाणामाश्रये मणिपादुकाम् ॥ १
हरिरत्नमरीचयस्तवैते नवनीलीरसनिर्विशेषवर्णाः । श्रुतिमूर्धनि शौरिपादरक्षे पलितानुद्भवभेषजं भवन्ति ॥ २
अलकैरिव बिम्बितैः श्रुतीनां हरिनीलैः सृजसि त्वमुन्मयूखैः । कमलादयितस्य पादरक्षे करुणोदन्वति शैवलप्ररोहान् ॥
अनघैर्हरिनीलपद्धतीनां प्रथमानैर्मणिपादुके मयूखैः । अधरीकुरुषे रथाङ्गपाणेरमितानूर्ध्वमवस्थितस्य कान्तिम् ॥ ४
चरणावनि भाति सह्यकन्या हरिनीलद्युतिभिस्तवानुविद्धा । वसुदेवसुतस्य रङ्गवृत्तेर्यमुनेव स्वयमागता समीपम् ॥ ५
अवधीरितदेवतान्तराणामनघैस्त्वं मणिपादुके मयूखैः । हरिनीलसमुद्भवैर्विधत्से हरिसारूप्यमयत्नतो जनानाम् ॥ ६
नेत्रेषु पुंसां तव पादरक्षे नीलाश्मभासा निहिताञ्जनेषु । श्रिया समं संश्रितरङ्गकोशो निधिः स्वयं व्यक्तिमुपैति नित्यम् ॥
अभङ्गुरामच्युतपादरक्षे मान्यां महानीलरुचिं त्वदीयाम् । निःश्रेयसद्वारकवाटिकायाः शङ्के समुत्पाटनकुञ्चिकां नः ॥ ८
जीवयत्यमृतवर्षिणी प्रजास्तावकी दनुजवैरिपादुके । घोरसंसरणघर्मनाशिनी कालिकेव हरिनीलपद्धतिः ॥ ९
शतमखोपलभङ्गमनोहरा विहरसे मुरमर्दनपादुके । मणिकिरीटगणेषु दिवौकसां मधुकरीव मनोरमपङ्क्तिषु ॥ (६९०)
अन्विच्छतां किमपि तत्त्वमनन्यदृश्यं सम्यक्प्रकाशजननी धृतकृष्णरूपा ।
पादावनि स्फुरसि वासवरत्नरम्या मध्ये समाधिनयनस्य कनीनिकेव ॥ ११
मातः सलीलमधिगम्य विहारवेलां कान्तिं समुद्वहसि काञ्चनपादुके त्वम् ।
लक्ष्मीकटाक्षरुचिरैर्हरिनीलरत्नैर्लावण्यसिन्धुपृषतैरिव रङ्गधाम्नः ॥ १२
क्लप्तावकु[गु]ण्ठनविधिर्मणिपादरक्षे नीलांशुकैर्बलमिदश्मसमुद्भवैस्ते ।
संगच्छते मुनिजनस्य मतिः समाधौ रात्रौ समस्तजगतां रमणेन लक्ष्म्याः ॥ १३

द्रष्टुं कदाचन पदावनि नैव जन्तुः शक्नोति शाश्वतनिधिं निहितं गुहायाम् ।
कृष्णानुरूपहरिनीलविशेषदृश्या सिद्धाञ्जनं त्वमसि यस्य न देवि दृष्टेः ॥ १४
प्रत्येमि रङ्गनृपतेर्मणिपादुके त्वां कृष्णान्तरङ्गरुचिभिर्हरिनीलरत्नैः ।
विश्वापराधसहनाय पदं तदीयं विश्वंभरां भगवतीं समये भजन्तीम् ॥ १५
मत्वा मषीं परिमितां भवती तदन्यां वैकुण्ठपादरसिके मणिपादुके स्वान् ।
अङ्क्ते स्वयं किरणलेपिभिरिन्द्रनीलैराशातटेषु ललितानपदानवर्णान् ॥ १६
वलमथनमणीनां धामभिस्तावकानां मधुरिपुपदरक्षे वासरैरव्यपेता ।
अभिसरणपराणां वल्लवीनां तदाऽऽसीच्छमितगुरुभयार्तिः शर्वरी काचिदन्या ॥ १७
शतमखमणिभङ्गैरुन्मयूखैर्दिशन्ती शरणमुपगतानां रङ्गनाथेन साम्यम् ।
प्रथयसि जगति त्वं पादुके हैतुकानामुपनिषदुपगीतां तत्क्रतुन्यायवार्ताम् ॥ १८
परिचरति विधौ त्वां पादुके रङ्गभर्तुः पदसरसिजभृङ्गैर्भासुरैरिन्द्रनीलैः ।
प्रकटितयमुनौघा भक्तिनम्रस्य शंभोः परिणमयसि चूडाविष्णुपद्याः प्रयागम् ॥ १९
पदकिसलयसङ्गात्पादुके पत्रलश्रीर्नखमणिभिरुदारैर्नित्यनिष्पन्नपुष्पा ।
शतमखमणिनीला शौरिलावण्यसिन्धोर्निबिडतमतमाला काऽपि वेलावनी त्वम् ॥ (७००) २०
त्वयि विनिहितमेतत्केऽपि पश्यन्ति मन्दाः शतमखमणिजालं शार्ङ्गिणः पादरक्षे ।
वयमिदमिह विद्मः प्राणिनां भावुकानां हृदयगृहगुहाभ्यः पीतमन्धंतमिस्रम् ॥ २१
क्लृप्तश्यामा मणिभिरसितैः कृष्णपक्षेण जुष्टा श्रेयः पुंसां जनयसि गतिं दक्षिणामुद्वहन्ती ।
तेनास्माकं प्रथयसि परं पादुके तत्त्वविद्भिर्मौलौ दृष्टां निगमवचसां मुक्तिकालव्यवस्थाम् ॥ २२
सद्भिर्जुष्टा समुदितविधुर्जैत्रयात्राविनोदेष्वातन्वाना रजनिमनघामिन्द्रनीलांशुजालैः ।
चित्रं ख्याता कुमुदवनतः पादुके पुष्यसि त्वं व्याकोचत्वं विबुधवनितावक्त्रपङ्केरुहाणाम् ॥ २३
नित्यं लक्ष्मीनयनरुचिरैः शोभिता शक्रनीलैः सालग्रामक्षितिरिव शुभैः शार्ङ्गिणो रूपभेदैः ।
साकेतादेः समधिकगुणां संपदं दर्शयन्ती मुक्तिक्षेत्रं मुनिभिरखिलैर्गीयसे पादुके त्वम् ॥ २४
पादन्यासप्रियसहचरीं पादुके वासगेहात् त्वामारुह्य त्रिचतुरपदं निर्गते रङ्गनाथे ।
अन्तःस्निग्धैरसुरमहिलावेणिविक्षेपमित्रैः श्यामच्छायं भवति भवनं शक्रनीलांशुभिस्ते ॥ २५
या ते बाह्याङ्कणमभियतः पादुके रङ्गभर्तुः संचारेषु स्फुरति विततिः शक्रनीलप्रभायाः ।
विष्वक्सेनप्रभृतिभिरसौ गृह्यते वेत्रहस्तैर्भ्रूविक्षेपस्तव दिविषदां नूनमाह्वानहेतुः ॥ २६
अक्ष्णोरञ्जनकल्पना यवनिका लास्यप्रसूतेर्गतेश्छिद्रङ्गायमुना मुकुन्दजलधेर्वेलातमालाटवी ।
कान्ताकुन्तलसंततिः श्रुतिवधूकस्तूरिकालंक्रिया नित्यं रत्नपदावनि स्फुरति ते नीला मणिश्रेणिका ॥ २७
निरन्तरपुरंदरोपलभुवं द्युतिं तावकीमवैमि मणिपादुके सरणिसङ्गिनीं रङ्गिणः ।
तदीयनवयौवनद्विरदमल्लगण्डस्थलीगलन्मदझलंझलाबहुलकज्जलश्यामिकाम् ॥ २८

प्रतीमस्त्वां पादावनि भगवतो रङ्गवसतेर्धनीभूतामित्थं पदकमलमाध्वीपरिणतिम् ।
स्फुरन्तः पर्यन्ते मदगरिमनिष्पन्दमधुपप्रसक्तिं यत्रैते विदधति महानीलमणयः ॥ २९
नमतां निजेन्द्रनीलप्रभवेन मुकुन्दपादुके भवती । तमसा निरस्यति तमः कण्टकमिव कण्टकेनेव ॥ (७१०)

## ॥ बिम्बप्रतिबिम्बपद्धतिः एकविंशी ॥ २१ ॥

शौरेः शुद्धान्तनारीणां विहारमणिदर्पणम् । प्रसत्तेरिव संस्थानं पदत्राणमुपास्महे ॥ १
कमलापतिपादुके कदाचिद्विहगेन्द्रस्त्वयि बिम्बितो विभाति । सविलासगतेऽपि रङ्गभर्तुर्निजमात्मानमिवोपयातुकामः ॥ २
मणिपङ्क्तिषु ते दिशामधीशाः प्रतिबिम्बानि निजानि वीक्षमाणाः ।
अभियन्ति मुकुन्दपादुके त्वामधिकारान्तरसृष्टिशङ्कयेव ॥ ३
मणिमौलिशतेन बिम्बितेन प्रणतानां परितः सुरासुराणाम् । सुरभिन्मणिपादुके महिम्ना युगपत्तेषु समर्पितेव भासि ॥ ४
उपनीतमुपायनं सुरेन्द्रैः प्रतिबिम्बच्छलतस्त्वयि प्रविष्टम् । स्वयमेव किल प्रसादभूम्ना प्रतिगृह्णासि मुकुन्दपादुके त्वम् ॥
रङ्गेश्वरस्य नवपल्लवलोभनीयौ पादौ कथं नु कठिना स्वयमुद्वहेयम् ।
इत्याकलय्य नियतं मणिपादुके त्वं पद्मास्तरं वहसि तत्प्रतिबिम्बलक्षात् ॥ ६
पादार्पणात्प्रथमतो हरिदश्मरम्ये मध्ये तव प्रतिफलन्मणिपादरक्षे ।
मन्ये निदर्शयति रङ्गपतिर्युगान्ते न्यग्रोधपत्रशयितं निजमेव रूपम् ॥ ७
यात्रावसानमधिगच्छति रङ्गनाथे विश्राणयस्यनुपदं मणिपादुके त्वम् ।
प्रायः प्रयाणसमये प्रतिबिम्बितानां तीर्थावगाहमपरं त्रिदशेश्वराणाम् ॥ ८
उच्चावचेषु तव रत्नगणेषु मातर्वेधाः प्रयाणसमये प्रतिबिम्बिताङ्गः ।
आशङ्कते मधुभिदो मणिपादुके त्वामागामिकल्पकमलासनपङ्क्तिगर्भाम् ॥ ९
आलोलरश्मिनियतां मणिपादुके त्वामारुह्य संचरति रङ्गपतौ सलीलम् ।
अन्तःपुरेषु युगपत्सुदृशो भजन्ते दोलाधिरोहणरसं त्वयि बिम्बिताङ्ग्यः ॥ (७२०) १०
कालेषु राघवपदावनि भक्तिनम्रः कार्याणि देवि भरतो विनिवेदयंस्ते ।
त्वद्रत्नबिम्बिततयाऽपि मुहुः स्वकीयां राजासनस्थितिमवेक्ष्य भृशं ललज्जे ॥ ११
प्रत्यागते विजयिनि प्रथमे रघूणां विन्यस्यति त्वयि पदं मणिपादरक्षे ।
रत्नौघबिम्बितनिशाचरवानरां त्वां पूर्वक्षणस्थमिव पुष्पकमन्वपश्यन् ॥ १२
वैयाकुलीं शमयितुं जगतो वहन्त्या रक्षाधुरां रघुधुरंधरपादरक्षे ।
प्राज्यं यशः प्रचुरचामरबिम्बलक्ष्यात्प्रायस्त्वया कवलितं प्रतिभूपतीनाम् ॥ १३
प्रतिदिशमुपयाते देवि यात्रोत्सवार्थं त्वयि विहरणकाले बिम्बिते जीवलोके ।
वहसि मणिगणैस्त्वं पादुके रङ्गभर्तुः कवलितसकलार्थां कांचिदन्यामवस्थाम् ॥ १४
भगवति गरुडस्थे वाहनस्थाः सुरेन्द्रास्त्वयि विनिहितपादे भूमिमेवाश्रयन्ति ।
तदपि चरणरक्षे रत्नजाले त्वदीये प्रतिफलितनिजाङ्गास्तुल्यवाहा भवन्ति ॥ १५

स्वच्छाकारां सुरयुवतयः स्वप्रतिच्छन्दलक्ष्याद्वाहन्ते त्वां प्रणतिसमये पादुके साभिमानाः ।
स्त्रीरत्नानां परिभवविधौ सृष्टिमात्रेण दक्षां नीचैःकर्तुं नरसखमुनेरूर्वशीमूरुजाताम् ॥ १६
स्वेच्छाकेलिप्रियसहचरीं स्वच्छरत्नाभिरामां स्थानेस्थाने निहितचरणो निर्विशन् रङ्गनाथः ।
संचारान्ते सह कमलया शेषशय्याधिरूढस्त्यक्त्वाऽपि त्वां त्यजति न पुनः स्वप्रतिच्छन्दलक्ष्यात् ॥ १७
त्वामेवैकामधिगतवतः केलिसंचारकाले पार्श्वे स्थित्वा विनिहितदृशोः पादुकेऽनन्यलक्ष्यम् ।
त्वद्रत्नेषु प्रतिफलितयोर्नित्यलक्ष्यप्रसादा पद्माभूम्योर्दिशति भवती पादसेवां मुरारेः ॥ १८
एकामेकः किल निरविशत्पादुके द्वारकायां क्रीडायोगी कृतबहुतनुः षोडशस्त्रीसहस्रे ।
शुद्धे देवि त्वदुपनिहिते बिम्बितो रत्नजाले भुङ्क्ते नित्यं स खलु भवतीं भूमिकानां सहस्रैः ॥ १९
हरिपदनखेषु भवती प्रतिफलति तवैतदपि च रत्नेषु । उचिता मिथः पदावनि बिम्बप्रतिबिम्बता युवयोः ॥ (७३०)

## ॥ काञ्चनपद्धतिः द्वाविंशी ॥ २२ ॥

कल्याणप्रकृतिं वन्दे भजन्तीं काञ्चनश्रियम् । पदार्हां पादुकां शौरेः पद एव निवेशिताम् ॥ १
मधुजित्तनुकान्तितस्कराणां जलदानामभयं विधातुकामा । चपलेव तदङ्घ्रिमाश्रयन्ती भवती काञ्चनपादुके विभाति ॥ २
निकषीकृतरम्यकृष्णरत्ना भवती काञ्चनसंपदं व्यनक्ति । परिपुष्यति पादुके यदीक्षा सहसा नः समलोष्टकाञ्चनत्वम् ॥
सुरभिर्निगमैः समग्रकामा कनकोत्कर्षवती पदावनि त्वम् । दिशसि प्रतिपन्नमाधवश्रीरनिशोच्छ्रिद्रमशोकवैभवं नः ॥ ४
सति वर्णगुणे सुवर्णजातेर्जगति ख्यातमसौरभादवर्णम् । श्रुतिसौरभशालिना स्वहेम्ना भवती शौरिपदावनि व्युदस्थात् ॥
प्रतिपन्नमयूरकण्ठधाम्ना परिशुद्धेन पदावनि स्वकेन । कमलास्तनभूषणोचितं तद्भवती रत्नमलंकरोति हेम्ना ॥ ६
कान्त्या परं पुरुषमाप्रणखात्सुवर्णं कर्तुं क्षमा त्वमसि काञ्चनपादरक्षे ।
अन्यादृशीं दिशसि या विनतस्य दूरादारग्वधस्तबकसम्पदमिन्दुमौलेः ॥ ७
चन्द्राकृतिः कथमकल्पयथास्तदानीं वैमानिकप्रणयिनीवदनाम्बुजानाम् ।
विक्रान्तिकालविततेन निजेन धाम्ना बालातपं बलिविमर्दनपादुके त्वम् ॥ ८
लेभे तदाप्रभृति नूनमियं भवत्याः कान्त्या कवेरतनया कनकापगात्वम् ।
यावन्मुकुन्दपदहेमपदावनि त्वं पुण्यं विभूषितवती पुलिनं तदीयम् ॥ ९
चित्रं सरोजनिलयासहितस्य शौरेर्वासोचितानि चरणावनि संविधित्सोः ।
सद्यो विकासमुपयान्ति समाधिभाजां चन्द्रातपेन तव मानसपङ्कजानि ॥ (७४०) १०
त्वय्येव पादमधिरोप्य नवं प्रवाहं नाथे पदावनि निशामयितुं प्रवृत्ते ।
आत्मीयकाञ्चनरुचा भवती विधत्ते हेमारविन्दभरितामिव हेमसिन्धुम् ॥ ११
विहरति पुलिनेषु त्वत्सखे रङ्गनाथे कनकसरिदियं ते पादुके हेमधाम्ना ।
वहति सलिलकेलीस्रस्तचोलावरोधस्तनकलशहरिद्रापङ्कपिङ्गामवस्थाम् ॥ १२
सुरभिनिगमगन्धा सौम्यपद्माकरस्था कनककमलिनीव प्रेक्ष्यसे पादुके त्वम् ।
भ्रमर इव सदा त्वां प्राप्तनानाविहारः शतमखमणिनीलः सेवते शार्ङ्गधन्वा ॥ १३

कनकरुचिरवर्णा पादुके सह्यसिन्धुः श्रियमिव महनीयां सिन्धुराजस्य पत्नी ।
स्वयमिह सविधस्था सौम्यजामातृयुक्तामुपचरति रसेन त्वामपत्याभिमानात् ॥ १४
अनुकूलमुपजीव्या दृश्यसे निर्जराणां त्रिपुरमथनमौलौ शेखरत्वं दधाना ।
प्रतिपदमधिगम्य प्रातश्शृङ्गाऽसि शौरेस्तदपि चरणरक्षे पूर्णचन्द्राकृतिस्त्वम् ॥ १५
कनकमपि तृणं ये मन्वते वीतरागास्तृणमपि कनकं ते जानते त्वत्प्रकाशैः ।
मधुरिपुपदरक्षे यत्त्वदर्थोपनीतान् परिणमयसि हैमान् देवि दूर्वाङ्कुरादीन् ॥ १६
विशुद्धिमधिगच्छति ज्वलनसंगमात्काञ्चनं विदन्ति च जगन्ति तत्र खलु तद्विपर्यस्यति ।
कथं कनकपादुके कमललोचने साक्षिणि त्वयैव परिशुद्धता हुतभुजोऽपि जायते ॥ १७
तारासङ्गप्रथितविभवां चारुजाम्बूनदाभां त्वामारूढस्त्रिदशमहितां पादुके रङ्गनाथः ।
संचारिण्यां सुरशिखरिणस्तस्थुषा मेखलायां धत्ते मत्तद्विरदपतिना साम्यकक्ष्यां समीक्ष्याम् ॥ १८
कनकरुचिरा काव्याख्याता शनैश्चरणोचिता श्रितगुरुबुधा भास्वद्रूपा द्विजाधिपसेविता ।
विहितविभवा नित्यं विष्णोः पदे मणिपादुके त्वमसि महती विश्वेषां नः शुभा ग्रहमण्डली ॥ १९
प्रज्वलितपञ्चहेतिर्हिरण्मयीं त्वां हिरण्यविलयार्हैः । आवहतु जातवेदाः श्रियमिव नः पादुके नित्यम् ॥ (७५०) २०

## ॥ शेषपद्धतिः त्रयोविंशी ॥ २३ ॥

सृष्टां भूमावनन्तेन नित्यं शेषसमाधिना । अहं संभावयामि त्वामात्मानमिव पादुके ॥ १
पद्माभोगात्पादुके रङ्गभर्तुः पादस्पर्शाद्भोगमन्यं प्रपित्सोः । शेषस्यैकां भूमिकामब्रवीत्त्वामाचार्याणामग्रणीर्यामुनेयः ॥ २
शेषत्वमम्ब यदि संश्रयति प्रकामं त्वद्भूमिकां समधिगम्य भुजङ्गराजः ।
त्वामेव भक्तिविनतैर्वहतां शिरोभिः काष्ठां गतं तदिह केशवपादरक्षे ॥ ३
मा भूदियं मयि निषण्णपदस्य नित्यं विश्वंभरस्य वहनाद्व्यथितेति मत्वा ।
धत्से बलाभ्यधिकया मणिपादुके त्वं शेषात्मना वसुमतीं निजयैव मूर्त्या ॥ ४
तत्तादृशा निजबलेन निरूढकीर्तिः शेषस्तवैव परिणामविशेष एषः ।
रामेण सत्यवचसा यदनन्यवाह्यां वोढुं पुरा वसुमतीं भवती नियुक्ता ॥ ५
शेषत्वसीमनियतां मणिपादरक्षे त्वामागमाः कुलवधूमिव वालपुत्राः ।
त्वद्रूपभेदशयितस्य परस्य पुंसः पादोपधानशयितामुपधानयन्ति ॥ ६
भरतशिरसि लग्नां पादुके दूरतस्त्वां स्वतनुमपि ववन्दे लक्ष्मणः शेषभूतः ।
किमिदमिह विचित्रं नित्ययुक्तः सिषेवे दशरथतनयः सन् रङ्गनाथः स्वमेव ॥ ७
भूयोभूयः स्तिमितचलिते यस्य सङ्कल्पसिन्धौ ब्रह्मेशानप्रभृतय इमे बुद्बुदत्वं भजन्ति ।
तस्यानादेर्युगपरिणतौ योगनिद्रानुरूपं क्रीडातल्पं किमपि तनुते पादुके भूमिकाऽन्या ॥ ८
अहीनात्मा रङ्गक्षितिरमणपादावनि सदा सतामित्थं त्राणात्प्रथितनिजसत्रत्वविभवा ।
अविद्यायामिन्याः स्पृशसि पुनरेकाहपदवीं क्रतूनामाराध्या क्रतुरपि च सर्वस्त्वमसि नः ॥ ९

बहुसुखभोगसमेतैर्निर्मुक्ततया विशुद्धिमापन्नैः । शेषात्मिका पदावनि निषेव्यसे शेषभूतैस्त्वम् ॥ (७६०) १०

## ॥ द्वन्द्वपद्धतिः चतुर्विंशी ॥ २४ ॥

प्रपद्ये पादुकारूपं प्रणवस्य कलाद्वयम् । ओतं मितमिदं यस्मिन्ननन्तस्यापि तत्पदम् ॥ १

मणिपादुकयोर्युगं मुरारेर्मम नित्यं विदधातु मङ्गलानि । अधिकृत्य चराचरस्य रक्षामनुकम्पाक्षमयोरिवावतारः ॥ २

चरणौ मणिपादुके मुरारेः प्रणतान्पालयितुं प्रपद्यमानम् । विपदामिह दैवमानुषीणां प्रतिकारं युवयोर्द्वयं प्रतीमः ॥ ३

मुरभिन्मणिपादुके भवत्योर्विहितो नूनमसौ मिथो विभागः । भजतामपरस्परप्रियाणामविरोधाय सुरासुरेश्वराणाम् ॥ ४

अहितोन्मथनाय संश्रितानामलमालोकवशेन शब्दतो वा । करयोश्च रथाङ्गपाञ्चजन्यौ मधुहन्तुः पदयोश्च पादुके ये ॥

अवधीरितसाधुपद्धतीनामलसानां मधुवैरिपादुके द्वे । इतरेतरसाहचर्यमित्थं प्रतिपन्ने इव दैवपौरुषे नः ॥ ६

पार्श्वयोः सरसिजावसुन्धरे पादयोश्च मणिपादुके युवाम् । संनिकर्षथ न चेन्मधुद्विषः किं करिष्यति कृतागसां गणः ॥

पादुके भवभयप्रतीपयोर्भावयामि युवयोः समागमम् । सक्तयोर्दनुजवैरिणः पदे विद्ययोरिव परावरात्मनोः ॥ ८

रङ्गसीमनि रथाङ्गलक्ष्मणश्चिन्तयामि तपनीयपादुके । शापदोषशमनाय तत्पदे चक्रवाकमिथुनं कृतास्पदम् ॥ ९

मानयामि जगतस्तमोपहे माधवस्य मणिपादुके युवाम् । दक्षिणोत्तरगतिक्रमोचिते पद्धती इव मयूखमालिनः ॥ (७७०)

रङ्गनाथपदयोरलंक्रिया राजते कनकपादुकाद्वयी । तद्विभूतियुगलीव तादृशी छन्दतः समविभागमाश्रिता ॥ ११

साक्षात्पदं मधुभिदः प्रतिपादयन्त्यौ मानोपपत्तिनियते मणिपादुके द्वे ।
अन्योन्यसंगतिवशादुपपन्नचर्यामाज्ञां श्रुतिस्मृतिमयीमवधारयामि ॥ १२

विश्वोपकारमधिकृत्य विहारकालेष्वन्योन्यतः प्रथममेव परिस्फुरन्त्योः ।
दृष्टान्तयन्ति युवयोर्मणिपादरक्षे दिव्यं तदेव मिथुनं दिविषन्निषेव्यम् ॥ १३

द्वावेव यत्र चरणौ परमस्य पुंसस्तत्र द्विधा स्थितवती मणिपादुके त्वम् ।
यत्रैव दर्शयति देवि सहस्रपात्त्वं तत्रापि नूनमसि दर्शिततावदात्मा ॥ १४

पर्यायतो गतिवशान्मणिपादरक्षे पूर्वापरत्वनियमं व्यतिवर्तयन्त्यौ ।
मन्ये युवां महति विष्णुपदे स्फुरन्त्यौ सन्ध्ये समस्तजगतामभिवन्दनीये ॥ १५

अश्रान्तसंचरणयोर्निजसंप्रयोगादम्लानतां चरणपङ्कजयोर्दिशन्त्यौ ।
मान्ये युवां रघुपतेर्मणिपादरक्षे विद्ये बलामतिबलां च विचिन्तयामि ॥ १६

अन्तर्मोहादविदितवतामात्मतत्त्वं यथावत्पद्यामित्थं परिचितवतां पादुके पापलोक्याम् ।
नित्यं भक्तेरनुगुणतया नाथ पादं भजन्त्यौ निष्ठे साक्षात्स्वयमिह युवां ज्ञानकर्मात्मिके नः ॥ १७

न्यस्तं विष्णोः पदमिह महत्त्वेन भूम्ना वहन्त्योराम्नायाख्यामविहतगतिं वर्तयन्त्योर्निजाज्ञाम् ।
आसन्नानां प्रणयपदवीमात्मना पूरयन्त्योर्द्वैराज्यश्रीर्भवति जगतामैकराज्ये भवत्योः ॥ १८

अप्राप्तानामुपजनयथः संपदां प्राप्तिमेवं संप्राप्तानां स्वयमिह पुनः पालनार्थं यतेथे ।
साक्षाद्रङ्गक्षितिपतिपदं पादुके साधयन्त्यौ योगक्षेमौ सुचरितवशान्मूर्तिमन्तौ युवां नः ॥ १९

बद्धहरिपादयुगलं युगलं तपनीयपादुके युवयोः । मोचयति संश्रितानां पुण्यापुण्यमयशृङ्खलायुगलम् ॥ (७८०) २०

## ॥ संनिवेशपद्धतिः पञ्चविंशी ॥ २५ ॥

अणोरणीयसीं विष्णोर्महतोऽपि महीयसीम् । प्रपद्ये पादुकां नित्यं तत्पदेनैव संमिताम् ॥ १

प्रतितिष्ठति पादसंमितायां त्वयि नित्यं मणिपादुके मुकुन्दः । इतरे तु परिच्छदास्त एते विभवव्यञ्जनहेतवो भवन्ति ॥

तव रङ्गनरेन्द्रपादरक्षे प्रकृतिः सत्यपि भक्तिपारतन्त्र्यात् । भवतीं वहतीव पन्नगेन्द्रः प्रथितस्वस्तिकलक्षणैः शिरोभिः ॥

परस्य पुंसः पदसंनिवेशान् प्रयुञ्जते भावितपञ्चरात्राः । अवप्रतीपानपदिश्य पुण्ड्रानङ्गेषु रङ्गेशयपादुके त्वाम् ॥ ४

विमृश्य रङ्गेन्द्रपतिंवरायाः श्रुतेः स्थितां मूर्धनि पादुके त्वाम् ।

बध्नन्ति वृद्धाः समये वधूनां त्वन्मुद्रितान्याभरणानि मौलौ ॥ ५

वहन्ति रङ्गेश्वरपादरक्षे दीर्घायुषं दर्शितभक्तिबन्धाः । आशाधिपानामवरोधनार्यस्त्वन्मुद्रिकां मङ्गलहेमसूत्रैः ॥ ६

व्यूहक्रमेण प्रथितारमग्रे संदर्शयन्तीं मणिपादुके त्वाम् । पातुं त्रिलोकीं पदपद्मभाजं सौदर्शनीं शक्तिमवैमि शौरेः ॥ ७

बद्धासिका कनकपङ्कजकर्णिकायां मध्ये कृशा मुररिपोर्मणिपादुके त्वम् ।

संदृश्यसे सरसिजासनया गृहीतं रूपान्तरं किमपि रङ्गविहारयोग्यम् ॥ ८

मानोचितस्य मदधीनजनस्य नित्यं माभूदतः कृपणतेति विचिन्तयन्त्या ।

वन्दीकृतं ध्रुवमवैमि वलग्नदेशे कार्श्यं त्वया कमललोचनपादरक्षे ॥ ९

मध्ये कृशामुभयतः प्रतिपन्नवृद्धिं मन्ये समीक्ष्य भवतीं मणिपादरक्षे ।

नित्यं मुकुन्दपदसंगमविप्रयोगौ निश्चिन्वते कृतधियः सुखदुःखकाष्ठाम् ॥ (७९०) १०

रङ्गेशितुश्चरणपङ्कजयोर्भजन्तीं रक्षाप्रसाधनविकल्पसहामवस्थाम् ।

मान्याकृतिर्निविशसे मणिपादरक्षे मध्ये परिच्छदविभूषणवर्गयोस्त्वम् ॥ ११

अङ्गान्तरेषु निहितान्यखिलानि कामं पर्यायकल्पनसहानि विभूषणानि ।

नित्यं मुकुन्दपदपद्मतलानुरूपं नैपथ्यमम्ब भवती नयनाभिरामम् ॥ १२

ये नाम भक्तिनियतैस्तव संनिवेशं निर्विश्य नेत्रयुगलैर्न भजन्ति तृप्तिम् ।

कालक्रमेण कमलेक्षणपादरक्षे प्रायेण ते परिणमन्ति सहस्रनेत्राः ॥ १३

पदमप्रमाणमिति वादिनां मतं मधुजित्पदे महति मासभूदिति ।

व्युदपादि तस्य चरणावनि त्वया निगमात्मनस्तव समप्रमाणता ॥ १४

अप्रभूतमभवज्जगत्त्रयं यस्य मातुमुदितस्य पादुके । अप्रमेयममितस्य तत्पदं नित्यमेव ननु संमितं त्वया ॥ १५

आलवालमिव भाति पादुके पादपस्य भवती मधुद्विषः । यत्समीपविनतस्य शूलिनः सारिणी भवति मौलिनिम्नगा ॥

मोदमानमुनिवृन्दषट्पदा भाति मुक्तिमकरन्दवर्षिणी । काऽपि रङ्गनृपतेः पदाम्बुजे कर्णिका कनकपादुकामयी ॥ १७

युगपदनुविधास्यन् यौवतं तुल्यरागं यदुपतिरधिचक्रे यावतो रूपभेदान् ।

तदिदमतिविकल्पं बिभ्रती संनिवेशं तव खलु पदरक्षे तावती मूर्तिरासीत् ॥ १८

तत्तद्वृत्तेरनुगुणतया वामनीं व्यापिनीं वा प्राप्ते रङ्गप्रथितविभवे भूमिकां सूत्रधारे ।

मन्ये विश्वस्थितिमयमहानाटिकां नेतुकामा नानासंस्था भवति भवती पादुके नर्तकीव ॥ १९

मानं परं समाने प्रत्यक्षेणागमेनापि । हरिचरणस्य तवापि तु वैषम्यं रक्ष्यरक्षकत्वाभ्याम् ॥ (८००) २०

## ॥ यन्त्रिकापद्धतिः षड्विंशी ॥ २६ ॥

उदग्रयन्त्रिकां वन्दे पादुकां यन्निवेशनात् । उपर्यपि पदं विष्णोः प्रत्यादिष्टप्रसाधनम् ॥ १
प्रसभं प्रतिरुद्ध्य कण्टकादीन् भवती शौरिपदाम्बुजादधस्तात् । चरणावनि धारयत्यमुष्मिन्नुचितच्छायमुपर्यपि प्रतीकम् ॥
मुरभिन्मणिपादुके त्वदीयामनवामङ्गुलियन्त्रिकामवैमि । स्वयमुन्नमितां प्रदेशिनीं ते परमं दैवतमेकमित्यृचन्तीम् ॥
स्वदते मणिपादुके त्वदीया पदशाखायुगयन्त्रिका विचित्रा । परमं पुरुषं प्रकाशयन्ती प्रणवस्येव परेयमर्धमात्रा ॥
अनुयातमनोरथा मुरारेर्भवती केलिरथश्रियं दधाति । चरणावनि यन्त्रिका तवैषा तनुते कूबरसंपदं पुरस्तात् ॥
शङ्के भवत्याः सुभगं प्रतीकं रङ्गेशपादाङ्गुलिसंग्रहार्थम् । त्राणाय पादावनि विष्टपानामाज्ञाकरीमङ्गुलिमुद्रिकां ते ॥
अलंकृतं कर्णिकयोपरिष्टादुदग्रनालं तव यन्त्रिकांशम् । पद्मापतेः पादसरोजलक्ष्म्याः प्रत्येमि पादावनि केलिपद्मम् ॥

उपरि विनिहितस्य केशवाङ्घ्रेरुपरि पदावनि यन्त्रिकात्मिका त्वम् ।
इति तव महिमा लघूकरोति प्रणतसुरेश्वरशेखराधिरोहम् ॥
नित्यं पदावनि निबद्धकिरीटशोभं पद्मालयापरिचितं पदमुद्वहन्त्याः ।
अङ्गीकरोति रुचिमङ्गुलियन्त्रिका ते साम्राज्यसंपदनुरूपमिवातपत्रम् ॥

प्रथमा कलेव भवती चरणावनि भाति रङ्गचन्द्रमसः । शृङ्गोन्नतिरिव यत्र श्रियं विभावयति यन्त्रिकायोगः ॥ (८१०) १

## ॥ रेखापद्धतिः सप्तविंशी ॥ २७ ॥

सूचयन्तीं स्वरेखाभिरनालेख्यसरस्वतीम् । अलेखनीयसौन्दर्यामाश्रये शौरिपादुकाम् ॥
मणिमौलिनिघर्षणात् सुराणां वहसे काञ्चनपादुके विचित्रम् । कमलापतिपादपद्मयोगादपरं लक्षणमाधिराज्यसारम् ॥
अभितो मणिपादुके स्फुरन्त्यास्तव रेखाविततेस्तथाविधायाः । सुरवैरिपदारविन्दरूढैरनुकल्पायितमाधिराज्यचिह्नैः ॥
रेखया विनमतां दिवौकसां मौलिरत्नमकरीमुखोत्थया । पादुके वहसि नूनमद्भुतं शौरिपादपरिभोगलक्षणम् ॥

त्रिदशमकुटरत्नोल्लेखरेखापदेशात्परिणमयसि पुंसां पादुके मूर्ध्नि लग्ना ।
नरकमथनसेवासंपदं साधयित्री नियतिविलिखितानां निष्कृतिं दुर्लिपीनाम् ॥
पदकमलतलान्तः संश्रितान्यातपत्रध्वजसरसिजमुख्यान्यैश्वरीलक्षणानि ।
अवगमयसि शौरेः पादुके मादृशानामुपरि परिणतैः स्वैर्देवि रेखाविशेषैः ॥
स्नाता पदावनि चिरं परिभुज्य मुक्ता पादेन रङ्गनृपतेः शुभलक्षणेन ।
रेखान्तरैर्नवनवैरुपशोभसे त्वं संस्कारचन्दनविलेपनपङ्कलग्नैः ॥
भक्त्या मुहुः प्रणमतां त्रिदशेश्वराणां कोटीरकोटिकषणादुपजायमानैः ।
आभाति शौरिचरणादधिकानुभावा रेखाशतैस्तव पदावनि काऽपि रेखा ॥
पादावनि प्रतिपदं परमस्य पुंसः पादारविन्दपरिभोगविशेषयोग्या ।
स्वाभाविकान्सुभगभक्तिविशेषदृश्यान् रेखात्मकान्वहसि पत्रलताविशेषान् ॥

रेखापदेशतस्त्वं प्रशमयितुं प्रलयविप्लवाशङ्काम् । वहसि मधुजित्पदावनि मन्ये निगमस्य मातृकालेख्यम् ॥ ८२०

## ॥ सुभाषितपद्धतिः अष्टात्रिंशी ॥ २८ ॥

कलासु काष्ठामातिष्ठन् भूम्ना संबन्धिनामपि । पादुका रङ्गधुर्यस्य भरताराध्यतां गता ॥ १

सन्तः स्वदेशपरदेशविभागशून्यं हन्त स्ववृत्तिमनघां न परित्यजन्ति ।
राज्ये वने च रघुपुङ्गवपादरक्षा नैजं जहौ न खलु कण्टकशोधनं तत् ॥ २

ब्रह्मास्त्रतामधिजगाम तृणं प्रयुक्तं पुण्यं शरव्यमभवत् पयसां निधिर्वा ।
पृथ्वीं शशास परिमुक्तपदं पदत्रं किं वा न किं भवति केलिविधौ विभूनाम् ॥ ३

अन्येषु सत्स्वपि नरेन्द्रसुतेषु दैवात्कृष्टः पदादधिकरोति पदं पदार्हः ।
प्रायो निदर्शयति तत्प्रथमो रघूणां तत्पादयोः प्रतिनिधी मणिपादुके वा ॥ ४

चरणमनघवृत्तेः कस्यचित्प्राप्य नित्यं सकलभुवनगुप्त्यै सत्पथे वर्तते यः ।
नरपतिबहुमानं पादुकेवाधिगच्छन् स भवति समयेषु प्रेक्षितज्ञैरुपास्यः ॥ ५

रामे राज्यं पितुरभिमतं संमतं च प्रजानां माता वव्रे तदिह भरते सत्यवादी ददौ च ।
चिन्तातीतः समजनि तदा पादुकाग्र्याभिषेको दुर्विज्ञानस्वहृदयमहो दैवमत्र प्रमाणम् ॥ ६

नातिक्रामेच्चरणवहनात्पादुका पादपीठं यद्वाऽऽसन्नं परमिह सदा भाति राजासनस्य ।
पूर्वत्रैव प्रणिहितमभूद्धन्त रामेण राज्यं शङ्के भर्तुर्बहुमतिपदं विक्रमे साहचर्यम् ॥ ७

प्रतिपदचपलाऽपि पादुका रघुपतिना स्वपदे निवेशिता । समजनि निभृतस्थितिस्तदा भवति गुणः श्रियमभ्युपेयुषाम् ॥

गतिहेतुरभूत्कचित्पदे स्थितिहेतुर्मणिपादुका कचित् । नहि वस्तुषु शक्तिनिश्चयो नियतिः केवलमीश्वरेच्छया ॥ ९

अधरीकृतोऽपि महता तमेव सेवेत सादरं भूष्णुः । अलभत समये रामात्पादाक्रान्ताऽपि पादुका राज्यम् ॥ (८३०)

## ॥ प्रकीर्णपद्धतिः एकोनत्रिंशी ॥ २९ ॥

विधौ प्रवृत्ते यद्द्रव्यं गुणसंस्कारनामभिः । श्रेयःसाधनमाम्नातं तत्पदत्रं तथाऽस्तु मे ॥ १

मधुरस्मितरम्यमौक्तिकश्रीर्विशसि व्यञ्जितमञ्जुलप्रणादा । सह रङ्गनृपेण वासगेहं तनुमध्या मणिपादुके त्वमेका ॥ २

शुभशब्दविशेषसंश्रिताभिर्भवती शौरिपदावनि क्रियाभिः । अनुतिष्ठति नूनमाश्रितानामखिलोपद्रवशान्तिकं नवीनम् ॥ ३

मणिभिर्मधुवैरिपादरक्षे भवती विक्रमणे प्रवर्धमाना । युगपद्भवतां युगान्तकाले दिवि लक्ष्मीं विदधे दिवाकराणाम् ॥ ४

मञ्जुस्वनां मणिमयूखकलापिनीं त्वां दृष्ट्वा कपर्दसविधे विनिवेश्यमानाम् ।
गूढीभवन्ति गरुडध्वजपादरक्षे फूत्कारवन्ति पुरवैरिविभूषणानि ॥ ५

मध्ये परिस्फुरितनिर्मलचन्द्रतारा प्रान्तेषु रत्ननिकरेण विचित्रवर्णा ।
पुष्णासि रङ्गनृपतेर्मणिपादुके त्वं चक्षुर्वशीकरणयन्त्रविशेषशङ्काम् ॥ ६

पादेन रङ्गनृपतेः परिमृज्यमाना मुक्ताफलप्रकटितश्रमवारिबिन्दुः ।
उत्कण्टका मणिमयूखशतैरुदग्रैः सीत्कारिणीव चरणावनि शिञ्जितैस्त्वम् ॥ ७

दूरप्रसारितकरा निनदैर्मणीनामायाति दैत्यरिपुरित्यसकृद्ब्रुवाणा ।
दैत्येश्वरानभिमुखाञ्जनितानुकम्पा मन्ये निवारयसि माधवपादुके त्वम् ॥ ८
अच्छेद्यरश्मिनियतक्रमरत्नधुर्या निष्कम्पकूबरनिभं दधती प्रतीकम् ।
क्रीडागतेषु मधुजित्पदपद्मलक्ष्म्याः कर्णीरथस्त्वमसि काञ्चनपादरक्षे ॥ ९
मञ्जुस्वना मरकतोपलमेचकाङ्गी शोणाश्मतुण्डरुचिरा मणिपादुके त्वम् ।
पद्माविहाररसिकस्य परस्य यूनः पर्यायतां भजसि पञ्जरशारिकाणाम् ॥ (८४०) १०
शोणोपलैश्चरणरक्षिणि संश्रितेषु छायात्मना मरकतेषु तवावगाढः ।
अन्वेति शौरिरभितः फलपङ्क्तिशोभिन्यात्मानमेव शयितं वटपत्रमध्ये ॥ ११
स्फीतं पदावनि तव स्नपनार्द्रमूर्तेरासागरं ततमभून्मणिरश्मिजालम् ।
लीलोचितं रघुसुतस्य शरव्यमासन् यातूनि यस्य वलयेन विवेष्टितानि ॥ १२
रत्नांशुभिस्तव तदा मणिपादरक्षे संरज्यमानवपुषां रजनीमुखेषु ।
आकस्मिकागतमदर्शि महौषधित्वं साकेतपत्तनसमीपरुहां द्रुमाणाम् । १३
रामे वनं दशरथे च दिवं प्रयाते निर्धूतविश्वतिमिरा सहसा बभूव ।
भूयिष्ठरत्नकिरणा भवती रघूणां भूयः प्रतापतपनोदयपूर्वसंध्या ॥ १४
प्रीतेन देवि विभुना प्रतिपादनीयां पादावनि प्रतिपदोदितमञ्जुनादाम् ।
विद्यां विदुर्भगवतः प्रतिपादनार्हां पारायणागमपयोनिधिपारगास्त्वाम् ॥ १५
मुक्तांशुकेसरवती स्थिरवज्रदंष्ट्रा प्रह्लादसम्पदनुरूपहिरण्यभेदा ।
मूर्तिः श्रियो भवसि माधवपादरक्षे नाथस्य नूनमुचिता नरसिंहमूर्तेः ॥ १६
संभावयन्ति कवयश्चतुरप्रचारां मञ्जुस्वनां महितमौक्तिकपत्रलाङ्गीम् ।
स्वाधीनसर्वभुवनां मणिपादुके त्वां रङ्गाधिराजपदपङ्कजराजहंसीम् ॥ १७
मुक्तामयूखरुचिरां मणिपादरक्षे मञ्जुस्वनां मणिभिराहितवर्णवर्गाम् ।
मन्ये मुकुन्दपदपद्ममधुव्रतीनामन्यामकृत्रिमगिरामधिदेवतां त्वाम् ॥ १८
आसाद्य केकयसुतावरदानमूलं कालं प्रदोषमनिरीक्ष्य रमासहायम् ।
मञ्जुप्रणादरहिता मणिपादरक्षे मौनव्रतं किमपि नूनमवर्तयस्त्वम् ॥ १९
वैडूर्यरम्यसलिला महिता मरुद्भिश्छायावती मरकतोपलरश्मिजालैः ।
अश्रान्तमोहपदवीपथिकस्य जन्तोर्विश्रान्तिभूमिरिव शौरिपदावनि त्वम् ॥ (८५०) २०
आद्यो रघुक्षितिभुजामभिषेकदीप्तैराप्यायितस्तव पदावनि रश्मिजालैः ।
मन्दीचकार तपनो व्यपनीतभीतिर्मन्दोदरीवदनचन्द्रमसो मयूखान् ॥ २१
मान्या समस्तजगतां मणिभङ्गनीला पादे निसर्गघटिता मणिपादुके त्वम् ।
अन्तःपुरेषु ललितानि गतागतानि छायेव रङ्गनृपतेरनुवर्तसे त्वम् ॥ २२

रङ्गाधिराजपदपङ्कजमाश्रयन्ती हैमी स्वयं परिगता हरिनीलरत्नैः ।
संभाव्यसे सुकृतिभिर्मणिपादुके त्वं सामान्यमूर्तिरिव सिन्धुसुताधरण्योः ॥ २३

अभ्यर्चिता सुमनसां निवहैरजस्रं मुक्तारुणोपलनखाङ्गुलिपल्लवश्रीः ।
श्रेयस्करीं मुरभिदश्चरणद्वयीव कान्तिं समाश्रयसि काञ्चनपादुके त्वम् ॥ २४

निर्मृष्टगात्ररुचिरा मणिपादुके त्वं स्नाताऽनुलेपसुरभिर्नवमाल्यचित्रा ।
प्राप्ते विहारसमये भजसे मुरारेः पादारविन्दपरिभोगमनन्यलभ्यम् ॥ २५

नादे पदावनि तथा तव संनिवेशे निर्वेशनक्रममसह्यमपाचिकीर्षुः ।
यैरेव लोचनशतैरभिवीक्षते त्वां तैरेव पन्नगपतिः श्रुतिमान् बभूव ॥ २६

पादावनि स्फुटमयूखसहस्रदृश्या विष्णोः पदेन भवती विहितप्रचारा ।
त्वद्भक्तियन्त्रितजनप्रथमस्य शंभोर्वैकर्तनीमनुकरोति विहारमूर्तिम् ॥ २७

राज्ये वनेऽपि रघुवीरपदोचितायाः संस्मृत्य गौतमवधूपरिरक्षणं ते ।
मन्ये समाहितधियो मणिपादुके त्वां मूर्ध्ना भजन्त्यनुदिनं मुनिधर्मदाराः ॥ २८

त्वामाश्रितो मणिमयूखसहस्रदृश्यां त्वच्छिञ्जितेन सह रङ्गपतिः समुद्यन् ।
आशङ्क्यते सुमतिभिर्मणिपादरक्षे विद्यासखः सवितृमण्डलमध्यवर्ती ॥ २९

रत्नाश्रितैर्हरिपदं मणिपादुके त्वं स्पृष्ट्वा करैः श्रुतिरसायनमञ्जुनादा ।
तत्त्वं तदेतदिति बोधयसीव सम्यक् वेदान्प्रतारितवतो विविधान्कुदृष्टीन् ॥ (८६०) ३०

आनन्दसूः प्रणयिनामनघप्रसादा रङ्गाधिराजपदरक्षिणि रत्नभासा ।
न्यस्ते मुहुर्निजभरे स्थिरतां भजन्त्या वर्णांशुकं वितरसीव वसुन्धरायाः ॥ ३१

त्वं चित्रभानुरसि रत्नविशेषयोगाद्धाम्ना निजेन परिपुष्यसि पावकत्वम् ।
स्वेनैव शौरिचरणावनि चन्द्ररूपा तेजस्त्रयीव मिलिताऽसि तमोपहा नः ॥ ३२

प्रौढप्रवालरुचिरा भुवनैकवन्द्या रङ्गाधिराजचरणावनि रम्यचन्द्रा ।
संभिन्नमौक्तिकरुचिः सततं प्रजानां तापात्ययं दिशसि तारकितेव सन्ध्या ॥ ३३

रङ्गेश्वरस्य पुरतो मणिपादुके त्वं रत्नांशुभिर्विकिरसि स्फुटभक्तिवन्द्या ।
पादौ विहारयितुमद्भुतसौकुमार्यौ प्रायः सरोजकुमुदोत्पलपत्रपङ्क्तिम् ॥ ३४

आसन्नवृत्तिरवरोधगृहेषु शौरेरापादयस्यनुपदं वरवर्णिनीनाम् ।
आलग्नरत्नकिरणा मणिपादुके त्वं मञ्जुस्वना मदनबाणनिवर्षशङ्काम् ॥ ३५

पर्याप्तमौक्तिकनखा स्फुटपद्मरागा रेखाविशेषरुचिरा ललितप्रचारा ।
रङ्गाधिराजपदयोर्मणिपादुके त्वं सायुज्यमाश्रितवतीव समस्तवन्द्या ॥ ३६

प्राप्ताभिषेका मणिपादुके त्वं प्रदीप्तरत्ना रघुराजधान्याः । प्रदक्षिणप्रक्रमणादकार्षीः प्राकारमाग्नेयमिव प्रभाभिः ॥ ३७

रत्नासने राघवपादरक्षे प्रदीप्यमानास्तव पद्मरागाः । प्रायो नरेन्द्रान्भरतस्य जेतुः प्रतापवह्नेरभवन्प्ररोहाः ॥ ३८

शुभप्रणादा भवती श्रुतीनां कण्ठेषु वैकुण्ठपतिंवराणाम् । बध्नासि नूनं मणिपादरक्षे माङ्गल्यसूत्रं मणिरश्मिजालैः ॥ ३९
विचित्रवर्णा श्रुतिरम्यशब्दा निषेव्यसे नाकसदां शिरोभिः । मधुद्विषस्त्वम्मणिपादरक्षे श्रेयस्करी शासनपत्रिकेव ॥ (८७०)
स्थिरा स्वभावान्मणिपादुके त्वं सर्वंसहा स्वादुफलप्रसूतिः । पृथ्वीव पद्भ्यां परमस्य पुंसः संसृज्यसे देवि विभज्यसे च ॥
पश्यन्ति रङ्गेश्वरपादरक्षे पूजासु ते संहितपुष्पजालाम् । मृगीदृशो वासवरत्नरेखां सचित्रपुङ्खामिव मन्मथज्याम् ॥ ४२
करैरुदग्रैः स्फुरतां मणीनां मञ्जुस्वना माधवपादुके त्वम् । अनूपदेशे कनकापगायाः कलेः प्रवेशं प्रतिषेधसीव ॥ ४३
आक्रान्तवेदिर्भवती तदानीमदर्शि मुक्तान्वितशोणरत्ना । करग्रहार्थं भरतेन भूम्याः लाजोत्करैर्वह्निशिखेव कीर्णा ॥ ४४
पत्रला मणिगणैर्हिरण्मयी भासि रङ्गपतिरत्नपादुके । केलिमण्डपगतागतोचिता भूमिकेव गरुडेन कल्पिता ॥ ४५
उन्नतं बलिविरोधिनस्तदा पादुके पदसरोजमाश्रिता । मौक्तिकस्तबकमध्यसंमितं व्योमषट्पदतुलामलम्भयः ॥ ४६
कोमलाङ्गुलिनिवेशयन्त्रिका न्यस्तमौक्तिकमयूखदन्तुरा । मङ्गलानि वमसीव देहिनां रङ्गराजमणिपादुके स्वयम् ॥ ४७
पङ्कजासहचरस्य रङ्गिणः पादुके निजपदादनन्तरम् । न्यस्यतस्त्वयि जगन्ति जायते नागभोगशयनं निरङ्कुशम् ॥ ४८
साधयन्ति मधुवैरिपादुके साधवः स्थिरमुपायमन्तिमम् । त्वत्प्रवृत्तिविनिवर्तनोचितस्वप्रवृत्तिविनिवर्तनान्वितम् ॥ ४९
नन्दसूनुपदपद्ममिन्दिरापाणिपल्लवनिपीडनासहम् । पादुके तव बलेन पर्यभूदूष्मलासुरगमौलिशर्कराम् ॥ (८८०) ५०

मणिनिकरसमुत्थैः सर्ववर्णा मयूखैः प्रकटितशुभनादा पादुके रङ्गभर्तुः ।
निखिलनिगमसूतेर्ब्रह्मणस्तत्सनाथामवगमयसि हृद्यामर्धमात्रां चतुर्थीम् ॥ ५१

श्रुतिविषयगुणा त्वं पादुके दैत्यहन्तुः सततगतिमनोज्ञा स्वेन धाम्ना ज्वलन्ती ।
जनितभुवनवृद्धिर्दृश्यसे स्थैर्ययुक्ता विधृतनिखिलभूता वैजयन्तीव माला ॥ ५२

रघुपतिपदसङ्गाद्राज्यखेदं त्यजन्ती पुनरपि भवती स्वान् दर्शयन्ती विहारान् ।
अभिसमधित वृद्धिं हर्षकोलाहलानां जनपदजनितानां ज्यायसा शिञ्जितेन ॥ ५३

हरिचरणमुपघ्नं पादुके संश्रितायामधिगतबहुशाखं वैभवं दर्शयन्त्याम् ।
अभजत विधिहस्तन्यस्तधर्मद्रवायां त्वयि मुकुलसमृद्धिं मौक्तिकश्रीस्तदानीम् ॥ ५४

कनकरुचिरकान्तिः कल्पिताशोकभारा कृतपदकमलश्रीः क्रीडता माधवेन ।
दिशिदिशि सुमनोभिर्दर्शनीयानुभावा सुरभिसमयलक्ष्मीं पादुके पुष्यसि त्वम् ॥ ५५

प्रणिहितपदपद्मा पादुके रङ्गभर्तुः शुभतरगतिहेतुश्चारुमुक्ताप्रवाला ।
स्थिरपरिणतरागां शुद्धबोधानुबद्धां स्वजनयसि मुनीनां त्वन्मयीं चित्तवृत्तिम् ॥ ५६

विरचितनवभागा रत्नभेदैर्विचित्रैर्विविधवितरेखा व्यक्तसीमाविभागा ।
हरिचरणसरोजं प्रेप्सतामर्चनीयं प्रथयसि नवनाभं मण्डलं पादुके त्वम् ॥ ५७

परिणतगुणजाला पङ्क्तिभिर्मौक्तिकानां बहुविधमणिरश्मिग्रन्थबन्धाभिरामा ।
रघुपतिपदरक्षे राजवाह्यस्य कुम्भे कलितरुचिरभूस्त्वं काऽपि नक्षत्रमाला ॥ ५८

चरितनिखिलवृत्तिश्चारुपद्मासनस्था गुणनिबिडितमुक्तापङ्क्तिबद्धाक्षमाला ।
सविधमधिवसन्ती पादुके रङ्गभर्तुश्चरणकमलमन्तर्बिम्बितं ध्यायसीव ॥ ५९

अनुपधि परिरक्षन्नेकपुत्राभिमानाद्भुवनमिदमशेषं पादुके रङ्गनाथः ।
निजपदनिहितायां देवि तिष्ठन्व्रजन्वा त्वयि निहितभरोऽभूत् किं पुनः स्वापमृच्छन् ॥ (८९०) ६०

त्वरितमुपगतानां श्रीमतो रङ्गभर्तुस्त्वदुपहितपदस्य स्वैरयात्रोत्सवेषु ।
मुखरयति दिगन्तान्मुद्यतां त्वत्प्रशस्तौ विहितकुसुमवृष्टिर्व्योवबोधी सुराणाम् ॥ ६१

मनसि नियमयुक्ते वर्तमाना मुनीनां प्रतिपदमुपयान्ती भावनीयक्रमत्वम् ।
श्रुतिरिव निजशब्दैः पादुके रङ्गभर्तुः पदमनितरगम्यं व्यङ्क्तुमर्हा त्वमेव ॥ ६२

अविकलनिजचन्द्रालोकसंदर्शनीया प्रतिकलमुपभोग्या पादुके रङ्गभर्तुः ।
मुकुलयितुमशेषं मौक्तिकज्योत्स्नया नः प्रभवसि तिमिरौघं पौर्णमासीनिशेव ॥ ६३

हंसश्रेणीपरिचितगतिर्हारिणी कल्मषाणां मौलौ शम्भोः स्थितिमधिगता मुग्धचन्द्रानुबद्धा ।
राज्ञामेका रघुकुलभुवां सम्यगुत्तारिका त्वं काले तस्मिन्क्षितिमधिगता पादुके जाह्नवीव ॥ ६४

स्वच्छाकारां श्रुतिसुरभितां स्वादुभावोपपन्नां मार्गेमार्गे महितविभवां पादुके तीर्थभेदैः ।
शीतस्पर्शां श्रमविनयिनीं गाहते मन्दमन्दं क्रीडालोलः कमलनिलयादत्तहस्तो युवा त्वाम् ॥ ६५

अभ्यस्यन्त्योः क्रममनुपमं रङ्गभर्तुर्विहारे स्थानेस्थाने स्वरपरिणतिं लम्भितस्तत्तदर्हाम् ।
पर्यायेण प्रहितपदयोः पादुके श्रुत्युदारः शिञ्जानादः स्फुरति युवयोः शृङ्खलाबन्धरम्यः ॥ ६६

आसन्नानां दिवसमपुनर्नक्तमापादयन्ती स्फीतालोका मणिभिरभितः प्राणिनामस्तदोषा ।
प्रह्वैर्जुष्टा विबुधनिवहैः पादुके रङ्गभर्तुः पादाम्भोजे दिशति भवती पूर्वसन्ध्येव कान्तिम् ॥ ६७

रम्यालोका ललितगमना पद्मरागाधरोष्ठी मध्ये क्षामा मणिवलयिनी मौक्तिकव्यक्तहासा ।
श्यामा नित्यं हरितमणिभिः शार्ङ्गिणः पादरक्षे मन्ये धातुर्भवसि महिलानिर्मितौ मातृका त्वम् ॥ ६८

स्थित्वा पूर्वं क्वचन भवती भद्रपीठस्य मध्ये रत्नोद्यत्किरणनिकरा रङ्गिणः पादरक्षे ।
व्याकीर्णानां नृपतिविरहाद्देवि वर्णाश्रमाणां नूनं सीमाविभजनसहं निर्ममे सूत्रपातम् ॥ ६९

मातर्मञ्जुस्वनपरिणतप्रार्थनावाक्यपूर्वं निक्षिप्तायां त्वयि चरणयोः पादुके रङ्गभर्तुः ।
त्वय्यायत्तं किमपि कुशलं जानतीनां प्रजानां पर्याप्तं तन्न खलु न भवत्यात्मनिक्षेपकृत्यम् ॥ (९००) ७०

नित्यं रङ्गक्षितिपतिपदन्यासधन्यात्मनस्ते शिञ्जानादं श्रवणमधुरं पादुके दीर्घयन्तः ।
काले तस्मिन्करणविगमक्लेशजातं विहन्युः संतापं नस्तरुणतुलसीगन्धिनो गन्धवाहाः ॥ ७१

संसाराध्वश्रमपरिणतं संश्रितानां जनानां तापं सद्यः शमयितुमलं शार्ङ्गिणः पादुके त्वम् ।
चन्द्रापीडे प्रणमति नवां चन्द्रिकामापिबद्भिर्धारानिर्यत्सलिलकणिकाशीकरैश्चन्द्रकान्तैः ॥ ७२

वज्रोपेतां वलभिदुपलश्यामलां मञ्जुघोषां मुक्तासारां मधुरचपलां वीक्ष्य विष्णोः पदे त्वाम् ।
हर्षोत्कर्षादुपरि चलयन्पादुके चन्द्रकान्तं धत्ते नित्यं धृतघनरुचिस्ताण्डवं नीलकण्ठः ॥ ७३

श्रीरङ्गेन्दोश्चरणकमलं तादृशं धारयन्ती कालेकाले सह कमलया क्लृप्तयात्रोत्सवश्रीः ।
गत्वागत्वा स्वयमनुगृहद्वारमुन्निद्रनादा पौरान्नित्यं किमपि कुशलं पादुके पृच्छसीव ॥ ७४

चतुरविहारिणीं रुचिरपक्षरुचिं भवतीं मनसिजसायकासनगुणोचितमञ्जुरवाम् ।
अनुपदमाद्रियेमहि महेन्द्रशिलामहितां हरिचरणारविन्दमकरन्दमधुव्रतिकाम् ॥ ७५
कनकरुचा जटासुरगमौलिमणीन् मणिभिस्त्रिदिवतरङ्गिणीं तरलमौक्तिकदीधितिभिः ।
कुटिलतया क्वचिच्छशिकलामधरीकुरुषे मुररिपुपादुके पुरभिदः शिरसा विधृता ॥ ७६
काले तल्पभुजङ्गमस्य भजतः काष्ठां गतां शेषतां मूर्तिं कामपि वेद्मि रङ्गनृपतेश्चित्रां पदत्रद्वयीम् ।
सेवानम्रसुरासुरेन्द्रमकुटीशेषापटीसङ्गमे मुक्ताचन्द्रिकयेव या प्रथयते निर्मोकयोगं पुनः ॥ ७७
चन्द्रापीडशिखण्डचन्द्रशिखरच्योतत्सुधानिर्झरस्तोकाश्लिष्टसुरेन्द्रशेखररजःस्त्यानां स्तुमः पादुकाम् ।
ब्रह्मस्तम्भविभक्तसीमविविधक्षेत्रज्ञसर्गस्थितिध्वंसानुग्रहनिग्रहप्रणयिनी या सा क्रिया रङ्गिणः ॥ ७८
लक्ष्मीनूपुरशिञ्जितेन गुणितं नादं तवाकर्णयन्नाजिघ्रन्निगमान्तगन्धतुलसीदामोत्थितं सौरभम् ।
काले कुत्रचिदागतं करुणया सार्धं त्वया चाग्रतः पश्येयं मणिपादुके परतरं पद्मेक्षणं दैवतम् ॥ ७९
वहति क्षितिव्यवहितां सोऽपि त्वां गतिषु पादुके रङ्गी । कमठपतिभुजगपरिवृढकरिवरकुलशिखरिभूमिकाभेदैः ॥ (९१०)

## ॥ चित्रपद्धतिस्त्रिंशी ॥ ३० ॥

### ॥ वर्णावृत्तेरनुप्रासः ॥

प्रतिष्ठां सर्वचित्राणां प्रपद्ये मणिपादुकाम् । विचित्रजगदाधारो विष्णुर्यत्र प्रतिष्ठितः ॥ १

### ॥ अपशब्दाभासः ॥

शृणु ते पादुके चित्रं चित्राभिर्मणिभिर्विभोः । युगक्रमभुवो वर्णान्युगपद्वहसे स्वयम् ॥ २

### ॥ गोमूत्रिकाबन्धः ॥

सुरासुरार्चिता धन्या तुङ्गमङ्गलपालिका । चराचराश्रिता मान्या रङ्गपुङ्गवपादुका ॥ ३

### ॥ गूढचतुर्थम् ॥

पद्मेव मङ्गलसरित्पारं संसारसंततेः । दुरितक्षेपिका भूयात्पादुका रङ्गभूपतेः ॥ ४

### ॥ निरोष्ठ्यम् ॥

अनन्यशरणः सीदन्ननन्तक्लेशसागरे । शरणं चरणत्राणं रङ्गनाथस्य संश्रये ॥ ५

### ॥ क्रियावञ्चनम् ॥

प्रतिभायाः परं तत्त्वं बिभ्रती पद्मलोचनम् । पश्चिमायामवस्थायां पादुके मुह्यतो मम ॥ ६

### ॥ प्रहेलिकाभेदः ॥

यामः श्रयति याऽम् धत्ते यैन यात्याय याऽच्च या । याऽस्य मानाय यै वान्या सा मामवतु पादुका ॥ ७

### ॥ पादावृत्तियमकम् ॥

चर्या नः शौरिपादु त्वं प्रायश्चित्तेष्वनुत्तमा । निवेश्यसे ततः सद्भिः प्रायश्चित्तेष्वनुत्तमा ॥ ८

### ॥ पादानुलोमप्रतिलोमयमकम् ॥

रामपादगता भासा सा भाताऽगदपामरा । कादुपानच्च कासह्या ह्यास काञ्चनपादुका ॥ ९

॥ अपुनरुक्तव्यञ्जनम् ॥

बाढाघालीझाटतुच्छे गाथाभानाय फुल्लखे । समाधौ शठजिच्चूडां वृणोषि हरिपादुके ॥ (९२०) १०

॥ मुरजबन्धः ॥

सा भूपा रामपारस्था विभूपास्तिसपारता । तारपा सकृपा दुष्टिपूरपा रामपादुका ॥ ११

॥ अनतिरिक्तपदपदार्थानुलोमप्रतिलोमयमकम् ॥

कारिका न न यात्राया या गेयात्यस्य भानुभा । पादपा हह सिद्धाऽसि यज्ञाय मम साऽञ्जसा ॥ १२

॥ शरबन्धः ॥

सराघवा श्रुतौ दृष्टा पादुका सनृपासना । सलाघवा गतौ श्लिष्टा स्वादुर्मे सदुपासना ॥ १३

॥ गरुडगतिचक्रबन्धः ॥

काव्यायास्थित मावर्गव्याजयातगमार्गिका । कामदा जगतः स्थित्यै रङ्गपुङ्गवपादुका ॥ १४

॥ द्विशृङ्गाटकचक्रबन्धः ॥

सुरकार्यकरी देवी रङ्गधुर्यस्य [सु] पादुका । कामदा कलितादेशा चरन्ती साधुवर्त्मसु ॥ १५

॥ द्विचतुष्कचक्रबन्धः ॥

भरताराधितां तारां वन्दे राघवपादुकाम् । भवतापाधितान्तानां वन्द्यां राजीवमेदुराम् ॥ १६

॥ चतुररचक्रबन्धः, अष्टदलपद्मम् , चतुर्दलगर्भद्वादशदलपद्मं च ॥

कादुपास्यसदालोका कालोदाहृतदामका । कामदाऽध्वरिरंसाका कासा रङ्गेशपादुका ॥ १७

॥ सकर्णिकषोडशदलपद्मम् ॥

पापाकूपारपालीपा त्रिपादीपादपादपा । कृपारूपा जपालापा स्वापा माऽपान्नृपाधिपा ॥ १८

॥ चतुरङ्गतुरङ्गपदबन्धः ॥

स्थिरागसां सदाऽऽराध्या विहताकततामता । सत्पादुके सरासा मा रङ्गराजपदं नय ॥ १९

॥ पूर्वस्मिन् तुरङ्गपदक्रमेण उद्धार्यश्लोकः ॥

स्थिता समयराजत्पाऽऽगतरा मोदके गवि । दुरंहसां सन्नतादा साध्यातापकराऽसरा ॥ (५९०) २०

॥ अर्धभ्रमकयमकम् ॥

लोकताराकामचारा कविराजदुरावचा । तारा गते पादराऽऽम राजते रामपादुका ॥ २१

॥ सर्वतोभद्रः ॥

जयामपाऽपामयाऽजयामहे दुदुहे मया । महेशकाकाशहेमपादुकाऽममकादुपा ॥ २२

॥ द्व्यक्षरविषयकसर्वतोभद्रः ॥

पापादपापादपापाऽपादपाददपादपा । दपादपापादपादपादपा ददपादपा ॥ २३

॥ त्र्यक्षरः ॥

कोपोद्दीपकपापेऽपि कृपापाकोपपादिका । पूदपादोदकापादोद्दीपिका काऽपि पादुका ॥ २४

॥ एकाक्षरः ॥

ततातत्ताऽतितत्तेता तातततीतेतितातितुत् । ततत्तत्ताततिततता ततेतातेततातुता ॥ २५

॥ सर्वविषयसमुच्चयः—महायमकम् ॥

यायायाऽऽयायायायायायायायायायायायायाया । यायायायायायायायाया या या या या या या या या ॥ २६

॥ पादचतुष्टयभागावृत्तियमकम् ॥

रघुपतिचरणावनी तथा विरचितसञ्चरणा वनीपथे । कृतपरिचरणा वनीपकैर्निगममुखैश्च रणावनी गता ॥ २७

॥ पादभागचतुरावृत्तियमकम् ॥

दत्तकेलिं जगत्कल्पनानाटिकारङ्गिणाऽरङ्गिणा रङ्गिणारङ्गिणा ।

तादृशे गाधिपुत्राध्वरे त्वां विनाऽपादु का पादुका पादुकापादुका ॥ २८

॥ अष्टदलपद्मम्—सङ्करश्च ॥

पादपापादपापादपापादपा पादपा पादपापादपाऽपादपा । पादपापादपापादपापादपापादपापादपापाऽऽदपापादापा ॥ २९

॥ कविनामाङ्कितमष्टदलपद्मम् ॥

साकेतत्राणवेलाजनिततनिजप्राङ्गणश्रीप्रभासा साभा प्रश्रीरटव्यामियममयमिव्यापदुच्छेदिलासा ।

सालादिच्छेदतिग्माहवरुरुरुवहद्दीकरस्थामरासा सा रामस्याङ्घ्रिमभ्याजतिननतिजस्थूलमुत्राकते सा ॥ (९४०)

॥ कविकाव्यनामाङ्कितं महाचक्रम् ॥

रम्ये वेश्मनि पापराक्षसभिदास्वासत्तधीनायिका नन्तुं कर्मजदुर्मदालसधियां साहन्तनाधीकृता ।

सद्वाटश्रमिकासु तापसतपोविस्रम्भभूयन्त्रिका काचित् स्वैरगमेन केलिसमये कामव्रता पादुका ॥ ३१

॥ चतुरङ्गमष्टारचक्रम् ॥

श्रीसंवेदनकर्मकृद्वसु तव स्यामृद्धधैर्यस्फुटः श्रीपादावनि विस्तृताऽसि सुखिनी त्वं गेययातायना ।

वेदान्तानुभवातिपाति सुतनुः सान्द्रेज्यभावप्रथोऽङ्कस्था चाच्युतदिव्यदास्यसुमतिः प्राणस्थसीताधन ॥ ३२

॥ भिन्नवृत्तानुलोमगोमूत्रिकायां श्लोकौ ॥

कनकपीठनिविष्टतनुस्तदा सुमतिदायिनिजानुभवस्मृता । विधिशिवप्रमुखैरभिवन्दिता विजयते रघुपुङ्गवपादुका ॥ ३३

दीनगोपीजनक्लिष्टभीनुत्सदा रामपादावनि स्वानुभावस्थिता ।

एधि मेऽवश्यमुत्तारभावश्रिता तेजसा तेन धुष्टिं गता पालिका ॥ ३४

॥ भिन्नवृत्तप्रतिलोमगोमूत्रिकायां श्लोकौ ॥

धामनिराकृततामसलोका धातृमुखैर्विनता निजदासैः । पापमशेषमपाकुरुषे मे पादु विभूषितराघवपादा ॥ ३५

कृपानघत्रातसुभूरदुष्टा मेध्या रुचा पारिषदाऽऽम भूपा । पदावनि स्त्यानसुखैर्न तृप्ता कान्त्या समेताऽधिकृतानिरोधा ॥

॥ भिन्नवृत्तानुलोमप्रतिलोमश्लोकौ ॥

सारससौख्यसमेता ख्याता पदपा भुवि स्वाज्ञा । साहसकार्यवनाशा धीरा वसुदा नवन्यासा ॥ ३७

सान्याऽवनदा सुवराऽधीशाना वर्यका सहसा । ज्ञा स्वा विभुपादपताख्याता मे सख्यसौ सरसा ॥ ३८

॥ पादुकायुगलगर्भकर्णिकमष्टदलपद्मम् ॥

तारस्फारतरस्वररसभररा सा पदावनी सारा । धीरस्वैरचरस्थिररघुपुरवासरतिरामसवा ॥ ३९

॥ पादद्वयभागद्व्यावृत्तियमकम् ॥

चरमचरं च नियन्तुश्चरणावनिदंपरेतरा शौरेः । चरमपुरुषार्थचित्रौ चरणावनि दिशसि चत्वरेषु सताम् ॥ (९५०) ४०

## ॥ निर्वेदपद्धतिः एकत्रिंशी ॥ ३१ ॥

प्रपद्ये पादुकां देवीं परविद्यामिव स्वयम् । यामर्पयति दीनानां दयमानो जगद्गुरुः ॥ १

अपि जन्मनि पादुके परस्मिन्ननघैः कर्मभिरीदृशो भवेयम् । य इमे विनयेन रङ्गभर्तुः समये त्वां पदयोः समर्पयन्ति ॥

परिवर्तयिता पितामहादीन् त्वमिवानन्तमसौ वहत्यनेहा । अधुनाऽपि न शौरिपादुके त्वामनघालम्बनमभ्युपैति चित्तम् ॥

कमलाध्युषिते निधौ निरीहे सुलभे तिष्ठति रङ्गकोशमध्ये ।
त्वयि तत्प्रतिलम्भने स्थितायां परमन्विच्छति पादुके मनो मे ॥ ४

यद्यप्यहं तरलधीस्तव न स्मरेयं न स्मर्तुमर्हति कथं भवती स्वयं मे ।
वत्से विहारकुतुकं कलयत्यवस्था का नाम केशवपदावनि वत्सलायाः ॥ ५

मातर्मुकुन्दकरुणामपि निह्नुवानात् किं वा परं किमपि किल्बिषतो मदीयात् ।
गाढं गृहीतचरणागमनापदेशात्तत्प्रेरणप्रणयिनी तव चेन्न लीला ॥ ६

क्षीवाऽसि काञ्चनपदावनि कैटभारेः पादारविन्दमकरन्दनिषेवणेन ।
देवि त्वदन्तिकजुषः कथमन्यथा मे दीनाक्षराणि न शृणोषि दयाधिका त्वम् ॥ ७

मातस्त्वदर्पितभरस्य मुकुन्दपादे भद्रेतराणि यदि नाम भवन्ति भूयः ।
कीर्तिः प्रपन्नपरिरक्षणदीक्षितायाः किं न त्रपेत तव काञ्चनपादरक्षे ॥ ८

दौवारिकद्विरसनप्रबलान्तरायैर्दूये पदावनि दुराढ्यबिलप्रवेशैः ।
तद्रङ्गधामनिरपायधनोत्तरायां त्वय्येव विश्रमय मङ्क्षु मनोरथं मे ॥ ९

व्यामुह्यतां त्रिविधतापमये निदाघे मायाविशेषजनितासु मरीचिकासु ।
संस्पृष्टशौरिचरणा चरणावनि त्वं स्थेया स्वयं भवसि नश्वरसे पुमर्थे ॥ (९६०) १०

अच्छेद्यया विषयवागुरया निबद्धान् दीनान् जनार्दनपदावनि सत्पथस्था ।
प्रायः क्रमेण भवती परिगृह्य मौलौ कालेन मोचयति नः कृपया सनाथा ॥ ११

संवाहिका चरणयोर्मणिपादरक्षे देवस्य रङ्गवसतेर्दयिता ननु त्वम् ।
कस्त्वां निवारयितुमर्हति योजयन्तीं मातः सुतद्गुणगणेषु ममापराधान् ॥ १२

किं वा भविष्यति परं कलुषैकवृत्तेरेतावताऽप्यनुपजातमनेहसा मे ।
एकं तदस्ति यदि पश्यसि पादुके ते पद्मासहायपदपङ्कजभोगसाम्यम् ॥ १३

विविधविषयचिन्तासंततामिश्चिरं मां जनितकलुषमित्थं देवि दुर्वासनाभिः ।
पदसरसिजयोस्त्वं पादुके रङ्गभर्तुः परिमलपरिवाहैः पावनैर्वासयेथाः ॥ १४

शरणमधिगतस्त्वां शार्ङ्गिणः पादरक्षे सकृदपि विनियुक्तं त्वत्सपर्याधिकारे ।
पुनरपि कथमेनं हस्तमुत्तानयेयं धनमदमुदितानां मानवानां समाजे ॥ १५

यदि किमपि समीहे कर्म कर्तुं यथावत्प्रतिपदमुपजातैः प्रत्यवेयां निमित्तैः ।
अवधिरसि यदि त्वं तत्र नैमित्तिकानां शरणमिह न किं मे शौरिपादावनि स्याः ॥ १६

अन्तर्लीनैरघपरिकरैराविला चित्तवृत्तिः शब्दादीनां परवशतया दुर्जयानीन्द्रियाणि ।
विष्णोः पादप्रणयिनि चिरादस्य मे दुःखसिन्धोः पारं प्राप्यं भवति परया विद्यया वा त्वया वा ॥ १७
गोमायूनां मलयपवने तस्कराणां हिमांशौ दुर्वृत्तानां सुचरितमये सत्पथे त्वत्सनाथे ।
तत्त्वज्ञाने तरलमनसां शार्ङ्गिणः पादरक्षे नित्योद्वेगो भवति नियतेरीदृशी दुर्विनीतिः ॥ १८
काले जन्तून्कलुषकरणे क्षिप्रमाकारयन्त्या घोरं नाहं यमपरिषदो घोषमाकर्णयेयम् ।
श्रीमद्रङ्गेश्वरचरणयोरन्तरङ्गैः प्रयुक्तं सेवाह्वानं सपदि शृणुयां पादुकासेवकेति ॥ १९
पाषाणकल्पमन्ते परिचितगौतमपरिग्रहन्यायात् । पतिपदपरिचरणार्हं परिणमय मुकुन्दपादरक्षिणि माम् ॥ (९७०) २०

## ॥ फलपद्धतिः द्वात्रिंशी ॥ ३२ ॥

उपाख्यातां तथात्वेन वसिष्ठाद्यैर्महर्षिभिः । उपायफलयोः काष्ठामुपासे रामपादुकाम् ॥ १
निर्विशेय निरन्तरं प्रतीतस्त्रिदशानां विभवं तृणाय मत्वा । सविधे तव देवि रङ्गभर्तुः पदलीलाकमलं समुद्वहन्त्याः ॥ २
किमहं मणिपादुके त्वया मे सुलभे रङ्गनिधौ श्रिया सनाथे । करणानि पुनः कदर्थयेयं कृपणद्वारदुरासिकादिदुःखैः ॥
सकृदप्यनुभूय रङ्गभर्तुस्त्वदुपश्लेषमनोहरं पदाब्जम् । अपुनर्भवकौतुकं तदैव प्रशमं गच्छति पादुके मुनीनाम् ॥ ४
अपरस्परपातिनाममीषामनिदंपूर्वनिरूढसन्ततीनाम् । भरतव्यसनादनूनसीम्नां दुरितानां मम निष्कृतिस्त्वमासीः ॥ ५
त्वदुपासनसंप्रदायविद्भिः समये सात्त्वतसेविते नियुक्ताः । भरतव्रतिनो भवाम्बुराशिं कतिचित्काञ्चनपादुके तरन्ति ॥ ६
अलमच्युतपादुके यथावद्भवती यच्च पदं त्वदेकधार्यम् । इतरेतरभूषितं तदेतद्वितयं संवननाय चेतसो नः ॥ ७
अनन्यसामान्यतया मुरारेरङ्गेष्ववाप्तेषु किरीटमुख्यैः । पादावनि त्वं निजमेव भागं सर्वात्मसाधारणतामनैषीः ॥ ८
समाश्रितानां मणिपादुके त्वां विपश्चितां विष्णुपदेऽप्यनास्था । कथं पुनस्ते कृतिनो भजेरन्वासादरं वासवराजधान्याम् ॥
विमृश्य रङ्गेश्वरपादरक्षे वारक्रमं नूनमवारणीयम् । पद्माग्रहेऽपि स्पृशती प्रतीता स्थूलेन रूपेण वसुंधरा त्वाम् ॥ (९८०)
अभिरक्षसि त्वमनपायनिधिं मणिपादुके मधुभिदश्चरणम् । अत एव देवि तदनन्यधनाः शिरसा वहन्ति भवतीं कृतिनः ॥
पदयुगमिव पादुके मुरारेर्भवति विभूतिरकण्टका त्वयैव । कथमिव हृदयानि भावुकानां त्वदनुभवादुपजातकण्टकानि ॥
ज्ञानक्रियाभजनसीमविदूरवृत्तेर्वैदेशिकस्य तदवाप्तिकृतां गुणानाम् ।
मौलौ ममासि मधुसूदनपादुके त्वं गङ्गेव हन्त पतिता विधिनैव पङ्गोः ॥ १३
रङ्गेश्वरस्य यदिदं मणिपादरक्षे पादारविन्दयुगलं भवतीसमेतम् ।
पुंसामुपोषितविलोचनपारणार्हं क्षीरं तदेतदिह शर्करया समेतम् ॥ १४
कामादिदोषरहितं तदनन्यकामाः कर्म त्रयोदशविधं परिशीलयन्तः ।
पादावनि त्वदनुषङ्गविशेषदृश्यमेकान्तिनः परिचरन्ति पदं मुरारेः ॥ १५
मौलौ स्थिता मखभुजामथवा श्रुतीनां तद्रङ्गराजचरणावनि वैभवं ते ।
अस्मादृशामपि यदि प्रथितं ततः स्यात्सौलभ्यमम्ब तदिदं तव सार्वभौमम् ॥ १६
स्वप्नेऽपि चेत्त्वमसि मूर्धनि संनिविष्टा नम्रस्य मे नरकमर्दनपादरक्षे ।
स्थाने तदैतदिह देवि यतः समाधौ सन्तो विदुस्तमपि तादृशबुद्धिगम्यम् ॥ १७

बद्धाञ्जलिः परिचरन् नियमेन रङ्गे विश्राणिताच्युतनिधिं मणिपादुके त्वाम् ।
कस्यापि कूणितदृशो धनिनः पुरस्तादुत्तानयेय न कदाऽपि करं विकोशम् ॥ १८

त्वय्यर्पितेन चरणेन सदध्वभाजः पादावनि प्रथितसात्त्विकभावदृश्याः ।
रङ्गेशवद्विदधते मुहुरङ्गहारान् रङ्गे महीयसि नटा इव भावुकास्ते ॥ १९

येन स्थिता शिरसि मे विधिनाऽधुना त्वं तेनैव देवि नियतं मम साम्पराये ।
लक्षीकरिष्यसि पदावनि रङ्गनाथं लक्ष्मीपदाम्बुरुहयावकपङ्कलक्ष्यम् ॥ (९९०) २०

हरिचरणसरोजे भक्तिभाजां जनानामनुकरणविशेषैरात्मनैवोपहास्यम् ।
परिणमय दयार्द्रा पादुके तादृशं मां भरतपरिषदन्तर्वर्तिभिः प्रेक्षणीयम् ॥ २१

दुरितमपनयन्ती दूरतः पादुके त्वं दनुजमथनलीलादेवतामानयन्ती ।
अनितरशरणानामग्रिमस्यास्य जन्तोरवशकरणवृत्तेरग्रतः संनिधेयाः ॥ २२

चरमनिगमगोते सप्ततन्तौ समाप्ते निजसदनसमीपे प्रापयिष्यन् विहारम् ।
ज्वलनमिव भवत्योः सम्यगारोपयेन्मां प्रथमवरणवश्यः पादुके रङ्गनाथः ॥ २३

पुनरुदरनिवासच्छेदनं सह्यसिन्धोः पुलिनमधिवसेयं पुण्यमात्रह्मलाभात् ।
परिणमति शरीरे पादुके यत्र पुंसां त्वमसि निगमगीता शाश्वतं मौलिरत्नम् ॥ २४

बहुविधपुरुषार्थग्रामसीमान्तरेखां हरिचरणसरोजन्यासधन्यामनन्यः ।
भरतसमयसिद्धां पादुके भावयंस्त्वां शतमिह शरदस्ते श्रावयेयं समृद्धिम् ॥ २५

तिलकयसि शिरो मे शौरिपादावनि त्वं भजसि मनसि नित्यं भूमिकां भावनाख्याम् ।
वचसि च विभवैः स्वैर्व्यक्तिमित्थं प्रयाता तदिह परिणतं मे तादृशं भागधेयम् ॥ २६

अजनिषि चिरमादौ हन्त देहेन्द्रियादिस्तदनु तदधिकः सन्नीश्वरोऽहं बभूव ।
अथ भगवत एवाभूवमर्थादिदानीं तव पुनरहमासं पादुके धन्यजन्मा ॥ २७

त्वय्यायत्तौ भगवति शिलाभस्मनोः प्राणदानादास्त्रीबालं प्रथितविभवौ पादपद्मौ मुरारेः ।
तामेवाहं शिरसि निहितामद्य पश्यामि दैवादात्माधारां जननि भवतीमात्मलाभप्रसूतिम् ॥ २८

कथंकारं लक्ष्मीकरकमलयोग्यं निजपदं निदध्याद्रङ्गेशः कुलिशकठिनेऽस्मिन् मनसि नः ।
न चेदेवं मध्ये विशति दयया देवि भवती निजाक्रान्तिक्षुण्णस्मरशरशिखाकण्टकततिः ॥ २९

क्रीडालौल्यं किमपि समये पादुके वर्जयन्ती निर्वेशं स्वं दिशसि भवती नाथयोः श्रीधरण्योः ।
मामप्येवं जनय मधुजित्पादयोरन्तरङ्गं रङ्गं याऽसौ जनयसि गुणैर्भारतीनृत्तरङ्गम् ॥ (१०००) ३०

इति रङ्गधुरीणपादुके त्वं स्तुतिलक्ष्येण सहस्रशो विमृष्टा । सफलं मम जन्म तावदेतद्यदिहाशास्यमतः परं किमेतत् ॥

मातः स्वरूपमिव रङ्गपतेर्निविष्टं वाचामसीमनि पदावनि वैभवं ते ।
मोहादभिष्टुतवतो मम मन्दबुद्धेर्बालस्य साहसमिदं दयया सहेथाः ॥ ३२

ये नाम भक्तिनियताः कवयो मदन्ये मातः स्तुवन्ति मधुसूदनपादुके त्वाम् ।
लप्स्ये गुणांशविनिवेशितमानसानां तेषामहं सबहुमानविलोकितानि ॥ ३३

सङ्कर्षयन्ति हृदयान्यसतां गुणांशे सन्तस्तु सन्तमपि न प्रथयन्ति दोषम् ।
तद्रङ्गनाथचरणावनि ते स्तुतीनामेका परं सदसतोरिह साक्षिणी त्वम् ॥ ३४

इत्थं त्वमेव निजकेलिवशादकार्षीरिक्ष्वाकुनाथपदपङ्कजयोरनन्या ।
स्वीयं पदावनि मया सुमहच्चरित्रं सीतेव देवि सहजेन कवीश्वरेण ॥ ३५

पृथुकवदनशङ्खस्पर्शनी [री] त्या कदाचिच्छिरसि विनिहितायाः स्वेन भूम्ना तवैव ।
स्तुतिरियमुपजाता मन्मुखेनेत्यधीयुः परिचरणपरास्ते पादुकेऽपास्तदोषाः ॥ ३६

यदि स्फीता भक्तिः प्रणयमुखवाणीपरिपणं पदत्राणस्तोत्रं हृदि विभृथ रङ्गक्षितिभृतः ।
निरुन्मादो यद्वा निरवधिसुधानिर्झरमुचो वचोभङ्गीरेता न कथमनुरुन्धे सहृदयः ॥ ३७

जयति यतिराजसूक्तिर्जयति मुकुन्दस्य पादुकायुगली । तदुभयधनास्त्रिवेदीमवन्ध्ययन्तो जयन्ति भुवि सन्तः ॥ १००८

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेङ्कटनाथस्य वेदान्ताचार्यस्य कृतिषु

**॥ पादुकासहस्रं समाप्तम् ॥**

## ॥ समाप्तश्च स्तोत्रावलीविभागः ॥



श्री चतुररचक्रबन्धोयम्। १७-शः श्लोकः।




श्री षोडशदलपद्मबन्धोयम् १८-शः श्लोकः।




श्री

मुरजबन्धः। ११ शः श्लोकः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| सा | भू | पा | स | म | पा | र | स्था |
| वि | भू | पा | स्ति | स | पा | र | ला |
| ना | र | पा | ल | कृ | पा | द | द्धि |
| पू | र | पा | स | म | पा | दु | का |

चतुरङ्गतुरङ्गबन्धोयम्। १९-२०-शौ श्लोकौ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| स्थि १ | रा ३० | ग ९ | सां २० | स ३ | दा २४ | रा ११ | ध्या २६ |
| वि १६ | ह १९ | ता २ | क २९ | त १० | ता २७ | म ४ | ता २३ |
| स ३१ | त्या ८ | दु १७ | के १४ | स २१ | रा ६ | सा २५ | मा १२ |
| रं १८ | ग १५ | रा ३२ | ज ७ | प २८ | द १३ | न्न २२ | य ५ |

श्री

अर्धभ्रमकबन्धः २९-शः श्लोकः।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| लो | क | ता | रा | का | म | चा | रा |
| क | वि | रा | ज | दु | रा | व | चा |
| ता | रा | ग | ते | पा | द | रा | म |
| रा | ज | ते | रा | म | पा | दु | का |
| का | दु | पा | म | रा | ते | ज | रा |
| म | रा | द | पा | ते | ग | रा | ता |
| चा | व | रा | दु | ज | रा | वि | क |
| रा | चा | म | का | रा | ता | क | लो |

षडरचक्रबन्धोयम्　　३१ शः श्लोकः



अष्टदलपद्मबन्धोयम् । ३०-शः श्लोकः।



अष्टारचक्रबन्धोयम्।　　३२ शः श्लोकः



॥ श्रीरस्तु ॥

श्रीमद्विशिष्टाद्वैतसिद्धान्त प्रवर्तनधुरन्धर

कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र

श्रीमन्निगमान्त महादेशिकानुगृहीत दिव्यग्रन्थविभूषिता

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

## काव्यनाटकविभागः ।



श्रीमन्महीशूरमण्डलमण्डन महाराजमानित पादारविन्दयुगलानां

श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीब्रह्मतन्त्रपरकालास्थानाभिषिक्तानां

श्रीलक्ष्मीहयवदनदिव्यपादुकासेवक

श्रीमदभिनवरङ्गनाथ ब्रह्मतन्त्रपरकालमहादेशिकानां

दिव्याज्ञामवतंसयता

श्रीकाञ्ची. प्रतिवादिभयङ्कर अणणङ्गराचार्येण

श्रीवैष्णवदासेन परिष्कृत्य प्राकाश्यत ।

श्रीरस्तु ॥

श्रीमद्वेदान्तदेशिकग्रन्थमालासंपादकस्य

# सविनयं निवेदनम् ।

---

अयि भोः विद्यानुरागिणो विद्वद्वरिष्ठाः! महान्तमिममात्मीयमानन्दातिशयं सादरं सबहुमानं च सहृदयेषु समावेदयामस्सम्प्रति । श्रीमद्वेदान्तदेशिकग्रन्थमालाप्रकाशनात्मके सुमहत्तरे कैङ्कर्ये समुद्यतैरस्माभिः परस्य पुंसः परमकृपया भागवतानां विदुषां विद्यापक्षपातिनामनुग्रहेण च प्रायस्संपूर्णमनोरथैस्संवभूवे—इति । स्तोत्रावलीविभागो वेदान्तविभागः काव्यनाटकविभागो व्याख्यानविभागः संप्रदायविभागश्चेति पञ्चधा विभक्तेषु श्रीमन्निगमान्तदेशिकदिव्यग्रन्थेषु दशोत्तरशतसंख्येषु प्रायः शतं प्रबन्धास्संपन्नमुद्रणास्समभूवन्निति सानन्दमावेदयितुमद्य समुपनतो ह्यवसरः । ये च दश ग्रन्था अवशिष्टमुद्रणास्सन्ति, ते व्याख्यानविभागान्तर्गता इति, तस्यैकस्यैव विभागस्य मुद्रणमधुना सावशेषमित्युक्तं भवति । एतच्च मुद्रणं जवेनैव संपद्यत इति सहृदया विदांकुर्वन्तु ।

अस्मिंश्च ग्रन्थमालाप्रकाशनकैङ्कर्ये महता प्रेम्णा हस्तावलम्बं सुष्टु संदत्तवतां महानुभावानां विषये सुचिरं कृतज्ञोऽयं जनः । तादृशानां महोदाराणामपि नाम्नां प्रकाशनं कृतज्ञतायास्सीमाभूमिरिति तत्प्रकाशनमसकृत्कृतमेव ।

विशिष्य च साञ्जलिबन्धमिदं विज्ञापयामः—श्रीमन्महीशूरनगरमण्डनायमानश्रीमत्परकालमठाधीश्वराणां परमकृपानिधीनामप्रमेयमहागुणमहोदधीनां श्रीमद्वेदमार्गप्रतिष्ठापनाचार्योभयवेदान्तप्रवर्तनधुरन्धराणां श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमदभिनवरङ्गनाथब्रह्मतन्त्रपरकालमहादेशिकसमाख्यया सुप्रसिद्धानां श्रीश्रीस्वामिचरणानाम् अनर्घमनिर्वचनीयमनवग्रहमनुग्रहमेकमेव प्राधान्येन समवलम्ब्य ग्रन्थमालाप्रकाशनकैङ्कर्यमिदमनायासतस्संपादयाम इति । तदेतेषां श्रीस्वामिचरणानां सन्निधौ धन्यवादसमर्पणप्रणालीमजानन्नयं जनः प्रणतिशालिनं मौलिमेव समर्पयन् कथञ्चित् कृतकृत्यो भवतीति सारतमं वचः ।

अस्याश्च ग्रन्थमालायाः परिशोधनादिसर्वकार्यनिर्वहणे आदितो बद्धदीक्षाणामस्मत्प्रियजामातृपादानां विद्वद्वराणाम् अकारक्कनि-श्रीमत्सम्पत्कुमाराचार्याणां, तथा श्रीकैरविणीक्षेत्रनिवासरसिकानां पण्डितमणीनाम्. श्री. उ. वे. अ. मु. श्रीनिवासाचार्याणां च विषये द्राघीयसीं कृतज्ञतां सुमहता बहुमानेन प्रकाशयामः, सततं हृदि वहामश्च ।

अस्य च काव्यनाटकविभागस्य परिशोधने विशेषतः परिश्रममूरीकृत्य सुमहत्साहाय्यमाहितवतां श्रीकुम्भघोणक्षेत्रनिवासिनां अस्मत्प्रियसुहृत्प्रवराणां महामहोपाध्यायाद्यनेकविरुदभूषितानां रायम्पेट्टै—श्रीकृष्णमाचार्यमहाशयानां च विषये सुबहून् धन्यवादान् सादरं समर्पयामः ।

इति,

**श्रीकाञ्ची प्रतिवादिभयङ्कर अण्णङ्गराचार्यः ।**

(ग्रन्थमालायाः प्रधानसंपादकः)

श्रीकुम्भघोणनगरनिवासि महामहोपाध्याय पण्डितराज

## रायम्पेट्टै कृष्णमाचार्यमहाशयानामभिनन्दनपत्रिका ॥

माननीयाः श्रीकाञ्चीप्रतिवादिभयङ्कर अण्णङ्गराचार्यमहाशयाः ! श्रीमद्भिः प्रेषिताः श्रीदेशिकग्रन्थमालायाः सञ्चिकाः सादरेण शिरसा प्रतिगृहीताः । वाचामभूमिः हर्षप्रकर्षः । अन्येषां मनसोऽप्यविषये वाचोऽप्यगोचरे दुर्भरे महत्तम ईदृशे कार्यभरे, सत्यं शपे, श्रीमतो विना नान्यः कोऽप्यवतरितुं धृष्णुयात्, अवतीर्णोऽपि वा नान्तमधिगन्तुमलं भवेत् । प्रशंसावहेषु सत्कृत्येषु, तत्राप्यस्मदीयसत्संप्रदायग्रन्थप्रकाशनकर्मणि श्रीमतामसाधारणमुत्साहम्, तन्निर्वहणधूर्वहताम्, अत्युत्तमं पाण्डित्यप्रकर्षं च जानन् को वा सचेतनः श्रीमद्भ्यो न धारयत्यात्मानम् । महाशयाः ! श्रीमतामनेन सत्कर्मणा नूनमाराधितः पण्डितलोक इति नेयमतिशयोक्तिः । रमणीयानि पत्राणि, कमनीयान्यक्षरमुद्रणानि, निरवद्या परिष्करणप्रणाली । तदेवं बहुधनसाधनीये महत्यस्मिन् कर्मणि प्रवृत्तानां श्रीमताम्—सञ्चिकाग्रहणेन तद्ग्राहणेन मूल्यदानेन तद्दापनेन महाराजपोषकादिपदवीस्वीकरणेन च नितरामुपकरिष्यन्ति विपश्चितो विशिष्य श्रीदेशिकभक्ता इति दृढं विश्वसिति मे हृदयम् । प्रार्थये च तथा भवितुमक्षरास्यान् । यथेदं सुकृतैकसुलभं कार्यं निरन्तरायमचिरादवसास्यति, स्थास्यति च चिराय श्रीमतामन्यादृशधन्यताजन्यं यशः, तथा देवाधिराजो दयतां श्रीमतामिति प्रार्थये ।

इति भवदीयः,

19-9-1940
KUMBAKONAM.

रा. च. वि. कृष्णः ।

तिरुच्चिनाप्पल्लि वावदूकवराणां

## ॥ ए. वि. गोपालाचार्यमहाशयानामभिनन्दनपत्रिका ॥

*Opinion of* **Sriman A. V. Gopalacharyar, M.A., B.L.,** *Advocate, Trichy.*

SRIMAD VEDANTA DESIKA GRANTHAMALA.

We cannot sufficiently praise the colossal service Sri Ubhaya Prativadi Bhayankaram Annangaracharya Swami is rendering to the Sanskrit world in general and specially to the followers of Sri Ramanuja by undertaking the stupendously great task of publishing all the works of Sri Vedanta Desika and pushing on the publication with almost lightning speed. From what all we know of the limitless energy and enthusiasm of this great Swami in the cause of such noble, religious work, we are sure that the publication undertaken will be completed in the shortest possible time. Three big parts have already been issued. The Swami has published in one handy volume the entire works of Sri Ramanuja in Telugu script....It is quite appropriate that the complete achievement of this ambitious task is reserved to Sri Annangarachariar Swami who has dedicated all his time, earnings and resources to the holy cause of the wide spreading of religious knowledge by publications and by direct instruction in the shape of wonderfully attractive lectures and who yields to none in his admiration for Sri Desikar's writings. His beginning the series with Adhikaranasārāvali is very apt as that work was specially written to justify the title of Vedantacharya graciously conferred by Lord Sri Ranganatha.......The cost of the publication undertaken must be very enormous and it behoves the entire Vaishnava world to contribute liberally for the publication and relieve the strain on the Swami, which must necessarily be very heavy.

16—10—1940. (Sd.) A.V. GOPALACHARYA.

The Liberty Press, Madras.

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# श्रीमद्वेदान्तदेशिकग्रन्थमालायां

## काव्यनाटकविभागः

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचितः

# ॥ हंससंदेशः ॥

श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥

## प्रथमाश्वासः

वंशे जातस्सवितुरनघे मानयन् मानुषत्वं देवश्श्रीमान् जनकतनयान्वेषणे जागरूकः ।
प्रत्यायाते पवनतनये निश्चितार्थस्स कामी कल्पाकारां कथमपि निशामाविभातं विषेहे ॥ १ ॥

कल्ये सेनां कपिकुलपतेस्तूर्णमुद्योजयिष्यन् दूरीभावाज्जनकदुहितुर्दूयमानान्तरात्मा ।
क्रीडाखेलं कमलसरसि क्वापि कालोपयातं राकाचन्द्रद्युतिसहचरं राजहंसं ददर्श ॥ २ ॥

तस्मिन् सीतागतिमनुगते तद्दुकूलाङ्कमूर्तौ तन्मञ्जीरप्रतिमनिनदे न्यस्तनिस्पन्ददृष्टिः ।
वीरश्चेतोविलयमगमत्तन्मयात्मा मुहूर्तं शङ्के तीव्रं भवति समये शासनं मीनकेतोः ॥ ३ ॥

लब्धाश्वासः कथमपि तदा लक्ष्मणस्याग्रजन्मा संदेशेन प्रणयमहता मैथिलीं जीवयिष्यन् ।
चक्रे तस्मै सरसिजदलैस्सोपचारां सपर्यां कान्ताश्लेषादधिकसुभगः कामिनां दूतलाभः ॥ ४ ॥

कृत्वा तस्मिन् बहुमतिमसौ भूयसीमाञ्जनेयात् गाढोन्मादः प्रणयपदवीं प्राप वार्तानभिज्ञे ।
विश्लेषेण क्षुभितमनसां मेघशैलद्रुमादौ याच्ञादैन्यं भवति किमुत क्वापि संवेदनार्हे ॥ ५ ॥

वेदोदन्वद्विभजनविदो वंशजं विश्वमूर्तेः आहुस्सिद्धाः कमलवसतेरौपवाह्यं भवन्तम् ।
लब्धं येन प्रगुणगतिना तत्प्रियायास्सकाशात् तत्सावर्ण्यं श्रवणरसनास्वादयोग्या सुधा च ॥ ६ ॥

मध्ये केचिद्वयमिह सखे केवलं मानुषाणां व्यक्तोत्कर्षो महति भुवने व्योमगानां पतिस्त्वम् ।
स्थाने (दौ)दूत्यं तदपि भवतः संश्रितत्राणहेतोः विश्वस्रष्टा विधिरपि यतः सारथित्वेन तस्थौ ॥ ७ ॥

इच्छामात्राज्जगदपरथा संविधातुं क्षमाणाम् इक्ष्वाकूणां प्रकृतिमहतामीदृशीं प्रेक्ष्य वेलाम् ।
लक्ष्यालक्ष्ये जलधिपयसा लब्धसंस्थां त्रिकूटे लङ्कां गन्तुं तव समुचितं राक्षसीं राजधानीम् ॥ ८ ॥

स्थानैर्दिव्यैरुपचितगुणां चन्दनारण्यरम्यां मुक्तासूतिं मलयमरुतां मातरं दक्षिणाशाम् ।
अस्मत्प्रीत्यै जनकतनयाजीवितार्थञ्च गच्छन् एकं रक्षःपदमिति सखे दोषलेशं सहेथाः ॥ ९ ॥

वाचालानामिव जडधियां सत्कवौ दूरयाते कैलासाय त्वयि गतवति क्षीबतामाश्रितानाम् ।
संमोदस्ते पथि परिणमेच्चन्द्रकैरुज्झितानां मेघापाये विपिनशिखिनां वीक्ष्य वाचंयमत्वम् ॥ १० ॥

आरक्तानां नवमधु शनैरापिबन् पद्मिनीनां कालोन्निद्रे कुवलयवने घूर्णमानस्सलीलम् ।
खिन्नो दानैर्विपिनकरिणां सौम्य सेविष्यते त्वाम् आमोदानामहमहमिकामादिशन् गन्धवाहः ॥ ११ ॥

पर्याप्तं ते पवनचलितैरङ्गरागं परागैः स्थाने कुर्युस्समसमुदयाद् बन्धवो बन्धुजीवाः ।
येना(न्वि)न्वेष्यस्यचलतनयापादलाक्षानुषक्तं चूडाचन्द्रं पुरविजयिनः स्वर्णदीफेनपूर्णम् ॥ १२ ॥

सूक्ष्माकारैर्दिनकरकरैः कल्पितान्तश्शलाकाः शारोपान्तारशतमखधनुश्शेषचित्रांशुकेन ।
ऊढाः पश्चादुचितगतिना वायुना राजहंस छत्रायेरन् नभसि भवतः शारदा वारिवाहाः ॥ १३ ॥

द्रक्ष्यस्येवं प्रियसख सुखं लङ्घिताध्वा सखीं ते सीतां क्षेत्रे जनकनृपतेरुत्थितां सीरकृष्टे ।
गोपायन्ती तनुमपि निजां या कथञ्चिन्मदर्थं भूमौ लोके वहति महतीमेकपत्नीसमाख्याम् ॥ १४ ॥

प्रक्षीणां त्वद्विरहसमये जातहर्षामिदानीं प्रत्यायास्यन्ननुनय शनैः पद्मिनीं स्वादुवाचा ।
सा ते तन्वीस्वनसुभगया स्यादितीहाभ्यनुज्ञां मन्ये कुर्यान्मधुकरगिरा मैथिलीसौहृदेन ॥ १५ ॥

सार्धं कान्तैश्शबरसुदृशामद्रिकुञ्जेषु रागात् आसीनानां क्षणमसमये दृश्यचन्द्रोदयश्रीः ।
उड्डीयेथास्सरसिजवनाद्दक्षिणाशानुसारी पश्यन् दूरात्प्रबलगरुतां पक्षिणां दत्तवर्त्मा ॥ १६ ॥

अङ्गीकुर्वन्नमृतरुचिरामुत्पतिष्णोस्सलीलं छायामन्तस्तव मणिमयो माल्यवानेष शैलः ।
शोभां वक्ष्यत्यधिकललितां शोभमानामतीन्दोर्देवस्यादेरुपजनयतो मानसादिन्दुबिम्बम् ॥ १७ ॥

मार्गौ सम्यङ्मम हनुमता वर्णितौ द्वौ तयोस्ते स ह्यासन्नोऽप्यनव(ति)सुभगः पश्चिमो नित्यवर्षः ।
प्राचीने(तु)षु प्रतिजनपदं संहतावद्भुतानां मग्ना दृष्टिः कथमपि सखे मत्कृते ते निवार्या ॥ १८ ॥

श्रुत्वा शब्दं श्रवणसुभगं(मधुरं) तावकं पामरीणां प्रत्यासन्नात्सपदि भवनात् सादरं निर्गतानाम् ।
अभ्रूभङ्गेऽप्यधिकसुभगैर्निश्चिताङ्गैः कटाक्षैः देशानेतान्वनगिरिनदीसंविभक्तान्व्यतीयाः ॥ १९ ॥

इक्षुच्छाये किसलयमयं तल्पमातस्थुषीणां संलापैस्तैर्मुदितमनसां शालिसंरक्षिकाणाम् ।
कर्णाटान्ध्रव्यतिकरवशात्कर्बुरे गीतिभेदे मुह्यन्तीनां मदनकलुषं मौग्ध्यमास्वादयेथाः ॥ २० ॥

विष्णोर्वासादवनिवहनाद्ध्वरत्नैश्शिरोभिः शेषस्साक्षादयमिति जनैस्सम्यगुन्नीयमानः ।
अभ्रैर्युक्तो लघुभिरचिरोन्मुक्तनिर्मोककल्पैः अग्रे भावी तदनु नयने रञ्जयन्नञ्जनाद्रिः ॥ २१ ॥

तत्रारूढैर्महति मनुजैस्स्वर्गिभिश्चावतीर्णैः सत्त्वोन्मेषाद्व्यपगतमिथस्तारतम्यादिभेदैः ।
साधारण्यात्फलपरिणतेस्सङ्घशो बध्यमानां शक्त्या कामं मधुविजयिनस्त्वं च कुर्यास्सपर्याम् ॥ २२ ॥

स्तोकोन्मग्नस्फुरितपुलिनां त्वन्निवासेच्छयेव द्रक्ष्यस्याराक्तनकमुखरां(रीं) दक्षिणामञ्जनाद्रेः ।
आसन्नानां वनविटपिनां वीचिहस्तैः प्रसूनान्यर्चाहेतोरुपहरति या नूनमर्धेन्दुमौलेः ॥ २३ ॥

निर्विश्यैनां निभृतमनभिव्यक्तमञ्जुप्रणादो मन्दाधूतः पुलिनपवनैर्वञ्जुलामोदगर्भैः ।
अव्यासङ्गस्सपदि पदवीं संश्रयान्यैरलङ्घ्यो(ङ्घ्यां) वन्दीकुर्युस्तटवसतयो मा भवन्तं किराताः ॥ २४ ॥

तुण्डीराख्यं तदनु महितं मण्डलं वीक्षमाणः क्षेत्रं यायाः क्षपितदुरितं तत्र सत्यव्रताख्यम् ।
पत्यौ रोषात्सलिलवपुषो यत्र वाग्देवतायाः सेतुर्जज्ञे सकलजगतामेकसेतुस्स देवः ॥ २५ ॥

नानारत्नैरुपचितगुणां नित्यसङ्गीतनादां भूमेर्द्रक्ष्यस्युचितविभवं भूषणं तत्र काञ्चीम् ।
यस्यां नित्यं निहितनयनो हस्तिशैलाधिवासी द्वन्द्वातीतस्स खलु पुरुषो दृश्यते सत्यकामः ॥ २६ ॥

तामासीदन् प्रणम  नगरीं भक्तिनम्रेण मूर्ध्ना जातामादौ कृतयुगमुखे धातुरिच्छावशेन ।
यद्वीथीनां करिगिरिपतेर्वाहवेगावधूतान् धन्या(न्)रेणूंस्त्रिदशपतयो धारयन्त्युत्तमाङ्गैः ॥ २७ ॥

मन्दाधूतात्तदनु महितो निस्सृतश्चूतषण्डात् पार्श्वे तस्याः पशुपतिशिरश्चन्द्रनीहारवाही ।
दूरात्प्राप्तं प्रियसखमिव त्वामुपैष्यत्यवश्यं कम्पापाथःकमलवनिकाकामुको गन्धवाहः ॥ २८ ॥

वर्णस्तोमैरिव परिणता सप्तभेदैर्महौघैः मान्या मध्येनगरमभितस्सेविता देवताभिः ।
स्वच्छस्वादुप्रसरसुभगा स्वामिनी वः कवीनां वेगासंज्ञां वहति महतीं वल्लभा पद्मयोनेः ॥ २९ ॥

तीर्थे पुंसां शमितकलुषे तत्र सारस्वताख्ये स्नात्वा सार्धं मुनिभिरनघैस्सम्यगुल्लासिताङ्गः ।
विश्वं चित्ते विगतरजसि व्यञ्जयन्तीमशेषं वक्ष्यस्यन्तर्बहिरपि परां शुद्धिमक्षेपणीयाम् ॥ ३० ॥

तस्यास्तीरे सरसिजभुवस्सौम्य वैतानवेदिः दिव्यं कुर्वन् द्रमिडविषयं दृश्यते हस्तिशैलः ।
यस्योपान्ते कृतवसतयो यापयित्वा शरीरं वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ ३१ ॥

सञ्चिन्वाना तरुणतुलसीदामभिः स्वामभिख्यां तस्यां वेद्यामनुविदधती श्याम(शीत)लं हव्यवाहम् ।
भोगैश्वर्यप्रियसहचरैः काऽपि लक्ष्मीकटाक्षैः भूयश्श्यामा भुवनजननी देवता सन्निधत्ते ॥ ३२ ॥

लक्ष्मीविद्युल्ललितवपुषं तत्र कारुण्यपूर्णं मा भैषीस्त्वं मरकतशिलामेचकं वीक्ष्य मेघम् ।
शुद्धैर्नित्यं परिचितपदस्त्वादृशैर्देवहंसैः हंसीभूतस्स खलु भवतामन्ववायाग्रजन्मा ॥ ३३ ॥

सारास्वादी सवनहविषां स्वामिनस्ते स देवः शुद्धं चक्षुश्श्रुतिपरिषदां चक्षुषां भागधेयम् ।
अङ्गीकुर्याद्विनतममृतासारसंवादिभिस्त्वाम् आविर्मोदैरभिमतवरस्थूललक्षैः कटाक्षैः ॥ ३४ ॥

मध्वास(सि)क्तं सरसिजमिव स्विन्नमालम्बमानो देव्या हस्तं तदितरकरन्यस्तलीलारविन्दः ।
देवः श्रीमान् स यदि विहरेत् स्वैरमारामभूमौ व्यक्तो वालव्यजनवपुषा वीजयेस्तं त्वमेव ॥ ३५ ॥

जातप्रीतिर्जनपदमथो मध्यमं लङ्घयित्वा दूराल्लक्ष्यक्रमुकनिवहश्यामलान् याहि चोलान् ।
प्रत्युद्गच्छन्मकरवल(न)यस्तंभितैस्सह्यजायाः स्रोतोभेदैर्विविधगतिभिस्संविभक्तावकाशान् ॥ ३६ ॥

सन्ध्यारागं सुरभिरजनीसंभवैरङ्गरागैः केशैर्ज्योत्स्नाकलहि तिमिरं पालिकापीडगर्भैः ।
आबिभ्राणास्सरसिजदृशो हंस डोलाधिरोहादाधास्यन्ते मदकलगिरस्तेषु नेत्रोत्सवं ते ॥ ३७ ॥

पृथ्वीलीलातिलकसुभगं पश्चिमं भागमेषां नाम्ना वर्षं जलचर नदीमातृकं गाहमानः ।
द्रक्ष्यस्यारात् परिमिततया मग्नकैलासदृश्यं श्वेतं शैलं फणिपतिमिव क्ष्मातलादुज्जिहानम् ॥ ३८ ॥

स्फारालोकप्रशमिततमस्सञ्चयं तत्र पुंसां प्रत्यग्रूपं प्रगुणविभवं प्रार्थनीयं बुधानाम् ।
नेदीयांसं कुशलनिवहं नन्तुराधास्यते ते दिव्यं तेजो जलधितनयास्नेहनित्यानुषक्तम् ॥ ३९ ॥

स्निग्धच्छायं तदनु विततं तस्य धामेव नीलं नीलीरक्षानियतललितं काननं संविचीयाः ।
दृष्टे तस्मिन्ननिमिषवधूनित्यनिर्वेशयोग्ये स्वर्गोद्यानश्रियमपि लघुं मंस्यते मानसं ते ॥ ४० ॥

कुर्वन्नानाकुसुमरजसा यत्र चित्रं वितानं पूगारण्ये मृदु विचलयन् पालिकाचामराणि ।
पादन्यासक्षममवकिरन् क्ष्मातलं पुष्पजालैः प्रायो वायुः परिजनविधिं पञ्चबाणस्य धत्ते ॥ ४१ ॥

स्रोतोवेगादथ जनपदं सौम्य सीमन्तयन्ती प्रत्यादेशो विबुधसरितस्स्यन्दते सह्यकन्या ।
कालेकाले परिणतिवशात्पर्वभेदावकीर्णैः पुण्ड्रेक्षूणां पुलिनविशदैर्गद्गदा मौक्तिकौघैः ॥ ४२ ॥

सह्योत्सङ्गात्सपदि मरुता सागरं नीयमानां भद्रालापैर्विहितकुशलां त्वादृशानां द्विजानाम् ।
यामस्कन्नास्सरसकुहलीपल्लपातैर्निशान्ते मन्दस्मेरां मधुपरिमलैर्वासयन्तीव पूगाः ॥ ४३ ॥

तस्मिन्द्रक्ष्यस्यमरमहिलामौलिगन्धैरवन्ध्याम् आतन्वानां व्यपगतरसं मानसे मानसं वः ।
तीर्थैरन्यैरपि परिगतां शुद्धिहेतोस्समन्तात् चन्द्रोल्लासप्रथितयशसस्संपदं पुष्करिण्याः ॥ ४४ ॥

तीरे तस्या विरचितपदं साधुभिस्सेव्यमानं श्रद्धायोगाद्विनमिततनुश्शेषपीठं भजेथाः ।
यस्मिन्नसत्कुलधनतया सौम्य साकेतभाजः स्थानं भा(भ)व्यं मुनिभिरुदितं श्रीमतो रङ्गधाम्नः ॥ ४५ ॥

सत्त्वे दिव्ये स्वयमुदयतस्तस्य धाम्नः प्रसङ्गात् मञ्जूषायां मरकतमिव भ्राजमानं तदन्तः ।
चेतो धावत्युपहितभुजं शेषभोगे शयानं दीर्घापाङ्गं जलधितनयाजीवितं देवमाद्यम् ॥ ४६ ॥

चोराक्रान्तं तदनु विपिनं चोलपाण्ड्यान्तरस्थं झिल्लीनादश्रवणपरुषं शीघ्रमेव व्यतीयाः ।
तीर्णे तस्मिन् प्रकटय सखे शीतलांस्ते निनादान् शब्दायन्ते न खलु कवयः सन्निधौ दुर्जनानाम् ॥ ४७ ॥

स्रस्तापीडं प्रचलदलकं व्यक्तताटङ्करत्नं मुक्ताचूर्णस्फुरिततिलकं वक्त्रमुत्तानयन्त्यः ।
देशे तस्मिन् कुवलयदृशो जातकौतूहलास्त्वां मालादीर्घैर्मधुरविरुतं मानयिष्यन्त्यपाङ्गैः ॥ ४८ ॥

नित्यावासं वृषभमचलं सुन्दराख्यस्य विष्णोः प्रत्यासीदन् सपदि विनमद्भागधेयं नतः स्याः ।
यस्योत्सङ्गे बलिविजयिनस्तस्य मञ्जीरवान्तं पाथो दिव्यं पशुपतिजटास्पर्शशून्यं विभाति ॥ ४९ ॥

ईशादस्त्राण्यधिगतवतां क्षत्रियाणां प्रभावात् कारावासस्मरणचकितैस्सिक्तसस्यान् पयोदैः ।
पश्यन् यायाः परमलक्ष्म्या स्पर्धमानैरजस्रं पुण्यावासैः पुरजनपदैर्मण्डितान्पाण्ड्यदेशान् ॥ ५० ॥

मुक्ताजालैर्जनितपुलिनां शुक्तिसन्तानमुक्तैः तारापूर्णां दिवमिव ततस्ताम्रपर्णीं भजेथाः ।
प्रत्यासत्त्या नियतविशदं पीतसिन्धोर्महर्षेः पानीयं ते परिणमयिता तत्र मुक्तामयत्वम् ॥ ५१ ॥

तस्याः स्वैरं सरसिजमुखास्वादसंप्रीतचेताः शीतीभूतस्तरललहरीबाहुसंश्लेषणेन ।
अध्यासीनः पुलिनमनिलैर्वीजितश्चन्दनाद्रेः श्रान्तिं शान्तिं गमयतु भवान् सागरं लङ्घयिष्यन् ॥ ५२ ॥

सव्यं तस्याः कियदिव गतश्श्यामतालीतमालां त्वत्प्रायाणां तरुणवयसां चेतसो नन्दयित्रीम् ।
वेलामब्धेर्विविधलहरीदत्तमुक्ताभिरामां द्रक्ष्यस्यारात् द्विगुणपुलिनां केतकीनां परागैः ॥ ५३ ॥

स्थित्वा तत्र क्षणमुभयतश्शैलशृङ्गावतीर्णैः स्रोतोभेदैरधिगतगुणं चारुविष्फारघोषैः ।
लक्षीकुर्वन् दशमुखपुरीं सौम्य पत्रप्रकृष्टो वेलाचापं शर इव सखे वेगतस्त्वं व्यतीयाः ॥ ५४ ॥

दावासक्तं वनमिव नभस्सन्ध्ययेवानुविद्धं सिन्दूराङ्कं द्विपमिव हरिं स्वाम्बरेणेव जुष्टम् ।
विद्युद्भिन्नं घनमिव सखे विद्रुमारण्ययोगात् देहेनैकं मिथुनमिव च द्रक्ष्यसि त्वं पयोधिम् ॥ ५५ ॥

असत्पूर्वैस्सुरपतिहृतं द्रष्टुकामैस्तुरङ्गं भित्त्वा क्षोणीमगणितबलैस्सागरो वर्धितात्मा ।
सत्कारार्थं तव यदि गिरीनादिशेद् गुप्तपक्षानश्रान्तोऽपि प्रणयमुचितं नैव बन्धोर्विहन्याः ॥ ५६ ॥

तत्रासीनः क्वचन सरसि स्मेरहेमारविन्दे लब्धास्वादो मधुभिरमितैस्संविनीताध्वखेदः ।
द्रक्ष्यस्यग्रे लघुतरगतिश्शेषमुल्लङ्घ्य सिन्धोः तोयाघातान्मसृणितशिलारम्यवेलं सुवेलम् ॥ ५७ ॥

यस्यासन्ने पयसि जलधेस्त्वत्प्रतिच्छन्दचन्द्राः पक्षच्छेदक्षरितरुधिरस्तोमसन्दर्शनीयाः ।
वीचीप्रा(से)तैर्विषमितरुचो मौक्तिकैस्तारकाभैः सन्ध्यामन्यां नियतमवनौ दर्शयन्ति प्रवालाः ॥ ५८ ॥

यत्रारण्यं वरुणवसतेर्वीचिवेगापनीतैः मुक्तारत्नस्तवकचपलैर्विद्रुमैरुत्प्रवालम् ।
रक्षोभीतैस्स्वयमनिमिषैराहृतस्थापितानां मन्दाराणां मधुपरिमलैर्वासितं मौलिदघ्नैः ॥ ५९ ॥

तस्मिन्दृश्या तदनु भवतश्चारुसौधावदाता लङ्का सिन्धोर्महति पुलिने राजहंसीव लीना ।
त्वामायान्तं पवनतरलैर्या पताकापदेशैः पक्षैरभ्युज्जिगमिषुरिव स्थास्यति श्राव्यनादा ॥ ६० ॥

इति प्रथमाश्वासः ।

---

## द्वितीयाश्वासः

लीलाखेलं ललितगमनाश्चारुनादं सशिञ्जाः भल्लाक्षं त्वां सरशरदशो गौरमापाण्डुरा(ङ्गा)ङ्ग्यः ।
मुग्धालापं मधुरवचसो मानसार्हं मनोज्ञाः यत्रानीतास्सुरयुवतयो रञ्जयेयुस्समक्षम् ॥ १ ॥

उग्रैश्शापैरुपहतिभिया रक्षसा दूरमुक्ताः दग्धुं योग्या हुतवहमपि त्वत्प्रियावर्णशुद्धाः ।
उत्पश्यन्तो जनकतनयातेजसैव स्वरक्षां रोधं यस्यामनुविदधते लोकपालावरोधाः ॥ २ ॥

अध्यासीना बहुमणिमयं तुङ्गशृङ्गं (त्रिकूटं) सुवेलं दिक्पालेषु प्रथितयशसा रक्षसा रक्ष्यमाणा ।
अग्रे मेरोरमरनगरीं या परिष्कारभूम्ना त्वाहूयेव ध्वजपटमयानग्रहस्तान्धुनोति ॥ ३ ॥

काले यस्यां व्यपगतघने त्वद्विहारोचितेऽस्मिन् चन्द्रालोकैर्विलुलितधियां शर्वरीगर्वहासैः ।
स्वर्गस्त्रीणां विरहजनितं बाष्पमुद्वेलयन्त्यः निष्यन्दन्ते सलिलकणिकाश्चन्द्रकान्तस्थलीनाम् ॥ ४ ॥

भासा तादृक्परिणतिजुषा मैथिलीशोकवह्नेः भस्मीभूतां पवनतनयस्नेहिना पावकेन ।
अन्तस्त्रासादवहितधियस्संविधास्यन्त्यवश्यं प्रत्यादिष्टप्रथमरच(नां)नं विश्वकर्मादयस्ताम् ॥ ५ ॥

मध्ये तस्या निशिचरपतेस्सद्म रुद्धान्तरिक्षं युग्मं नेत्रैर्दिवि सुमनसां सेव्यमानं विमानैः ।
कारागारं विबुधसुदृशां वीक्षमाणो विचित्रं शोकप्रीतिव्यतिकरवतीं वक्ष्यसे चित्तवृत्तिम् ॥ ६ ॥

ईषत्कोपाच्चकितपवनामिन्दुसन्दिग्धसूर्यां नित्योदारामृतुभिरखिलैर्निष्कुटे वृक्षवाटीम् ।
सीताशोकज्वलनसहजैस्तत्र दीप्तामशोकैः आपद्येथाः प्रथमलुलितामाञ्जनेयप्रचारैः ॥ ७ ॥

तस्यामन्यैर्वियति विहगैस्सार्धमानन्दनिघ्नैः स्थानेस्थाने निहितनयनो वर्तयन्मण्डलानि ।
द्रक्ष्यस्येकां जनकदुहितुस्सौम्य दुर्जातबन्धुं न्यस्ताकल्पां क्वचन विटपे शिंशुपां सान्द्रशाखाम् ॥ ८ ॥

मूले तस्याः किमपि सवनक्षेत्रसंस्कारजातं यत्र क्वापि स्थितमपि सखे त्रासहीनं महिम्ना ।
काले तस्मिन् कथमपि मया वीर्यशुल्केन लब्धं द्रश्यं तत्ते दिनकरकुलद्योतकं दिव्यरत्नम् ॥ ९ ॥

सा मे दृष्टिः(दिष्टं(दिष्टिः)श्शफरनयना सन्नतभ्रूस्सुकेशी तन्वी तुङ्गस्तनभरनता तप्तजाम्बूनदाभा ।
बाला युष्मत्प्रतिमगमना वेदिमध्या वरा(ङ्गा)ङ्गी शृङ्गाराख्यं निधिमधिगता श्रेयसी देवतेव ॥ १० ॥

सा ते यावन्नयनपदवीं याति मोहालसा वा सन्देशं वा मदुपगतये श्रावयन्ती शकुन्तान् ।
अत्यासन्नप्रियवचनतां सूचयद्भिर्निमित्तैः एतामश्रुस्थगितनयनं वीक्षमाणा दिशं वा ॥ ११ ॥

आकल्पान्वा सविधनिहितानालपन्ती विमोहात् अङ्गस्पर्शो रघुकुलपतेः स्मर्यते वा न वेति ।
ध्यायन्ती वा चिरविरहितानेकशय्याविहारान् तस्या नूनं नियतिजनिता तादृशी कालयात्रा ॥ १२ ॥

शुद्धामिन्दोः श्वपचभवने कौमुदीं विस्फुरन्तीम् आनीतां वा विषतरुवने पारिजातस्य शाखाम् ।
सूक्तिं रम्यां खलपरिसरे सत्कवेः कीर्त्यमानां मन्ये दीनां निशिचरगृहे मैथिलस्यात्मजाताम् ॥ १३ ॥

वर्षाकीर्णामिव कमलिनीं व्याहतार्थामिवोक्तिं पङ्काश्लिष्टामिव बिसलतां पत्यपेतामिवैभीम् ।
मेघच्छन्नामिव शशिकलां विघ्नरुद्धामिवाशां व्याघ्रोपेता(व्याघ्रत्रस्ता)मिव मृगवधूं भूतले ज्यामिवास्ताम् ॥ १४ ॥

स्मृत्वा पूर्वं स्मरशरभये मत्परिष्वङ्गरक्षाम् आश्लिष्यन्तीमलसवलितैरङ्गकैर्मातरं स्वाम् ।
आकल्पेऽपि श्रममधिगतैरङ्गरागेऽपि खिन्नैः अक्षाम्यद्भिस्स्मृतिमपि मुहुस्सौकुमार्यातिरेकात् ॥ १५ ॥

भूयोभूयः करसरसिजे न्यस्य रोमाञ्चिता(ङ्गां)ङ्गीं मौलौ चूडामणिविरहिते निर्विशन्तीं निधाय ।
अन्तस्तापादधिगतरुजोरादरादर्पयन्तीं पर्यायेण स्तनकलशयोरङ्गुलीयं मदीयम् ॥ १६ ॥

अम्बातुल्या सुचरितफलं दिव्यमालेपनं प्रागङ्गेष्वस्याः स्थिरमनुगुणं यद्वितेनेऽनसूया ।
धाराकारैस्स्तनकलशयोरापतद्भिस्समन्तात् सन्तापोष्णैस्तदपि बहुलैरश्रुभिः क्षालयन्तीम् ॥ १७ ॥

अग्राह्यत्वात् विषमयमितं केशहस्तं मया प्रागाविश्राणां तनुपरिमलश्रद्धयेवावकीर्णम् ।
अर्चाहेतोर्भुवि रतिपतेरप्सरोभिर्विमुक्ताम् अन्वग्यातामिव सुरतरोर्मञ्जरीं चञ्चरीकैः ॥ १८ ॥

आनीतं यत्त्वरितमचलादुत्तरीयं प्लवंगैः अस्याकारैस्सदृशमभितस्त्वत्प्रियारूपचिह्नम् ।
बालादित्यद्युतिसहचरं चारु वासो वसानां सन्ध्यारागव्यतिकरवतीं चन्द्रलेखामिवान्याम् ॥ १९ ॥

वक्तुं मार्गं किल वसुमतीं जग्मुषस्तत्पदाब्जात् मञ्जीरस्य त्वदुपमरुचेर्दक्षिणस्यास्य तुल्यम् ।
अङ्कारूढे चरणकमले मत्करेणोपधेयं वामं शाखाशिखरनिहितं वीक्ष्य गाढं विषण्णाम् ॥ २० ॥

अङ्गैर्म्लायत्किसलयसमैरुज्झिताकल्पपुष्पैः गाढाश्लिष्टां वपुषि विमले बिम्बिताभिर्लताभिः ।
सन्तापोष्णश्वसनपरुषच्छायया कि(ञ्च)ञ्चिद्(दी)नां बन्दीभूतां निशिचरगृहे नन्दनस्येव लक्ष्मीम् ॥ २१ ॥

चेतोवृत्तिं शमयति बहिस्सार्वभौमे निरोधे मय्येकस्मिन् प्रणिहितधियं मान्मथेनागमेन ।
अभ्यस्यन्तीमनितरजुषो भावनायाः प्रकर्षात् स्वान्तेनान्तर्विलयमृदुना निर्विकल्पं समाधिम् ॥ २२ ॥

शून्या दृष्टिः श्वसितमधिकं मीलितं वक्त्रपद्मं धाराकारं नयनसलिलं सानुबन्धो विलापः ।
इत्थं दैन्यं किमपि विधिना दुर्निवारेण नीता सा मे सक्ता(सीता) तनुतरतनुस्तप्यते नूनमन्तः ॥ २३ ॥

दृष्ट्वा तस्यास्त्वमपि करुणां तादृशीं तामवस्थां शक्ष्यस्यन्तः स्वयमुपनतं शोकवेगं न सोढुम् ।
क्रव्यादानां दशवदनवत् क्वापि जातावजाता नालम्बन्ते कथमिव दयां निर्मलत्वोपपन्नाः ॥ २४ ॥

नेदीयस्यामधिगतरसो दीर्घिकायां निकामं संवेशेन श्रममपनयन् शर्वरीं यापयेथाः ।
इत्थं निद्रासमयमुचितं वीक्ष्य नक्तंचरीणां प्रत्यूषे त्वं प्रणयमधुरां श्रावयिष्यन् मदुक्तिम् ॥ २५ ॥

शीतैरध्वश्रमविनयनैस्सेवितो गन्धवाहैः सुतस्स्वैरं पुलिनशयने स्वन्तरे चन्द्रपादैः ।
क्रीडागीतैः कमलमुकुले लीयतां षट्पदानां कार्याकाङ्क्षी कलयतु भवान् राजहंस प्रबोधम् ॥ २६ ॥

तामारूढश्चलकिसलयां शिंशुपां स्वैकलक्ष्यो मन्दीकुर्वन्मनसिजधनुर्घोषतीव्रं निनादम् ।
मोहादीषन्मुषितमनसं बोधय प्रेयसीं मे रम्यामादौ रघुजनकयोर्वर्णयन् वंशकीर्तिम् ॥ २७ ॥

पत्युर्देवि प्रणयसचिवं विद्धि दीर्घायुषो मां जीवातुं ते दधतमनघं तस्य सन्देशमन्तः ।
शूराणां यश्शरदुपगमे वीरपत्नीवराणां सम्मानार्हं समयमुचितं सूचयेत्कूजितैः स्वैः ॥ २८ ॥

मत्प्रस्तावप्रवणमथ सा मैथिली मानयेत्त्वां म्लानं शोकाद्वदनकमलं किञ्चिदुन्नम्य भीरुः ।
अन्तस्तोषादमृतलहरीलब्धसब्रह्मचर्यैः अम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गैः ॥ २९ ॥

पश्यन्ती सा रघुपतिवधूस्त्वामशेषावदातं प्रत्याश्वासादधिगतरुचिः प्राक्तनीवेन्दुलेखा ।
मत्संदेशे तदनु सुमुखी सावधाना भवित्री किं न स्त्रीणां जनयति मुदं कान्तवार्तागमोऽपि ॥ ३० ॥

पश्चादेवं कथय भवतीभागधेयेन जीवन् कल्याणीं त्वां कुशलमनघः कोसलेन्द्रोऽनुयुङ्क्ते ।
येषु श्रेयो भवति नियतं तानि सर्वाणि सन्तः लक्ष्म्या देव्यास्तव च भुवने लक्षणान्यामनन्ति ॥ ३१ ॥

यस्या यस्मिन् व्यवधिरभवद्भूषणालेपनादिः नीतामेनां नियतिविभवादन्तरीपं दवीयः ।
प्रत्यासीदन्निव नयनयोर्वर्त्मनि स्थापयित्वा स त्वामेवं वदति कुशली देवि सख्या मुखेन ॥ ३२ ॥

वेलातीतप्रणयविवशं भावमासेदुषोर्नौ भोगारम्भे क्षण इव गता पूर्वमालिङ्गनाद्यैः ।
संप्रत्येषा सुतनु शतशः कल्पनासङ्गमैस्ते चिन्तादीर्घैरपि शकलिता शर्वरी नापयाति ॥ ३३ ॥

उद्गमैस्ते कुचकलशयोरूष्मभिर्निर्जितेन छिद्रं लब्ध्वा विरहसमये तत्क्षणादुन्नतेन ।
कुन्दामोदैस्सुरभितदिशा गन्धवाहेन दैन्यं सम्प्राप्तोऽहं सह सरसिजैस्त्वन्मुखाम्भोजमित्रैः ॥ ३४ ॥

माध्वीदिग्धैर्विरहिवनितास्वादलुब्धैरमोघैः आवृण्वन्तं कुसुमधनुषश्चित्रपुङ्खैर्दिगन्तान् ।
सीतापार्श्वे न भवतु भवानित्यथोचद्वसन्तं रामस्त्रासादनमितधनुर्मौलिना सन्नतेन ॥ ३५ ॥

पार्श्वे लोलैः परभृतकुलै(रवै)र्मुक्तकोलाहलानां मल्लीरेणुस्थगितवपुषां मन्द(न्थ)रं निर्गतानाम् ।
भीतेनाहं भ्रमरपटलीशृङ्खलासङ्कुलानां मार्गे तिष्ठन् मलयमरुतां वारितो लक्ष्मणेन ॥ ३६ ॥

मन्दो वक्ष्ये किमिव जनकं किं नु योगीश्वरो माम् इत्येवं मे सुतनु मनसो वर्तयन्ति स्म खेदम् ।
रक्ताशोके ज्वलति सविधे लाजवर्षाभिरामैः पुष्पौघैस्त्वत्परिणयदशां व्यञ्जयन्तः करञ्जाः ॥ ३७ ॥

चेतो नैव त्यजति चपलाहेमकोणाभिघाताद् धीरोदात्तस्तनितजलदाताण्डवारम्भमिच्छन् ।
वातोन्मुक्तैः कुटजकुसुमैर्वासिते शैलशृङ्गे रक्षःपीडारहितदयिताश्लेषधन्यो मयूरः ॥ ३८ ॥

शैलव्यक्तप्रतिविलपितां सान्द्रतापानुविद्धां तन्वानानां नयनसलिलैर्मातरं ते सबाष्पाम् ।
पश्यन्तीनां प्रबलमदनोन्मादपर्याकुलं मां प्रायो जातं किमपि रुदितं व्योम्नि कादम्बिनीनाम् ॥ ३९ ॥

देहस्पर्शं मलयपवने दृष्टिसंभेदमिन्दौ धामैकत्वं जगति भुवि चाभिन्नपर्यङ्कयोगम् ।
ताराचित्रे वियति वितर्तिं श्रीवितानस्य पश्यन् दूरीभूतां सुतनु विधिना त्वामहं निर्विशामि ॥ ४० ॥

प्राप्तैस्सख्यं तव नयनयोः पद्मकोशैः प्रबुद्धैः सन्नाहं नस्समयनियतं साधु सन्धुक्षयन्ती ।
सेनायोग्यां सरणिमधुना दर्शयन्ती शुभाशा सीते नूनं त्वरयति शरत्त्वत्समीपं निनीषुः ॥ ४१ ॥

तातादेशात्सपदि भरते न्यस्तराज्याभिषेकं या मामेका वनमनुगता राजधानीं विहाय ।
तामेव त्वामुचितशयनां बाहुमध्ये मदीये दूरे कृत्वा(कर्तुः) गुणवति मुहुर्दूयते जीवितं मे ॥ ४२ ॥

सेतुं बद्ध्वा विपुलमचलैस्सायकैर्वा पयोधौ कृत्वा लङ्कां स्रजमिव करे खेलतां वानराणाम् ।
अल्पीयोभिस्सुमुखि दिवसैर्योधयन्यातुधानान् कर्णे शीधुं तव रचयिता लक्ष्मणश्चापघोषैः ॥ ४३ ॥

रक्षो मौलिस्तबकफलवनाद्वैरबन्धे विमुक्ते गत्वा चोर्वीं गगनपदवीसैरिणा पुष्पकेन ।
सिद्धारम्भौ सपदि भवतामाधिराज्याभिषेकात् सम्प्राप्स्यावश्चिरविरहतस्सञ्चितान् देवि भोगान् ॥ ४४ ॥

चित्ते कुर्यात्तदपि भवती यज्जनस्थानयुद्धात् संप्राप्तं मां दशमुखसमान् मा(पा)रयित्वा खरादीन्।
शस्त्राघातं स्तनकलशयोरूष्मणा रोपयद्भिः गाढाश्लेषैरपिहितवती गद्गदा हर्षबाष्पैः ॥ ४५ ॥

शच्याः क्लेशं क्वचन समये तादृशं चिन्तयित्वा स्मृत्वा देवीमचलतनयां विप्रयुक्तां शिवेन।
रक्षात्मानं कथमपि शुभे जीविताल्म्बनं मे पत्युश्छन्दाद्व्यसनमपि हि श्लाघनीयं वधूनाम् ॥ ४६ ॥

अप्येतत्ते मनसि निहितं साह्यमव्याजबन्धो(ः) प्रत्याख्यातुं प्रभवति न खल्वानृशंस्यं त्वदीयम्।
प्रागप्येवं परिणतगुणां नैषधे वीक्ष्य वार्ताम् आर्तत्राणं व्रतमिति विदु(र्हन्त)र्हंस शुद्धात्मनां वः ॥ ४७ ॥

इत्थं हृद्यैर्जनकतनयां जीवयित्वा वचोभिः सख्यं पुष्यन् दिनकरकुले दीव्यमानैर्नरेन्द्रैः।
स्वैरं लोकान्विचर निखिलान् सौम्य लक्ष्म्येव विष्णुः सर्वाकारैस्त्वदनुगुणया सेवितो राजहंस्या ॥ ४८ ॥

सन्दिश्यैवं सह कपिकुलैस्सेतुना लङ्घिताब्धिः पङ्क्तिग्रीवे युधि विनिहते प्राप्य सीतां प्रतीतः।
राज्यं भूयस्स्वयमनुभवन् रक्षितं पादुकाभ्यां रामश्श्रीमानतनुत निजां राजधानीं सनाथाम् ॥ ४९ ॥

विद्याशिल्पप्रगुणमतिना वेङ्कटेशेन क्लृप्तं चिन्ताशाणोल्लिखितमसकृच्छ्रेयसां प्राप्तिहेतुम्।
सीतारामव्यतिकरसखं हंससंदेशरत्नं पश्यन्त्वन्तश्श्रवणमनघं चक्षुरुज्जीव्य सन्तः ॥ ५० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु हंससंदेशः।

---

# ॥ सुभाषितनीवी ॥

## १. अनिपुणपद्धतिः

प्रथमसुजनाय पुंसे मह्यमपि प्रथमदुर्जनाय नमः। सर्वं हतः कृतं यौ सकृदुपकारापकाराभ्याम् ॥ १ ॥
प्रमितिपरिष्कृतिमुद्रा सहृदयहृदये(यैः) समर्पिता कविभिः। भवति सुभाषितनीवी पर(द्रु)गुणचौरैरहार्यार्था ॥
पश्यति परेषु दोषानसतोऽपि जनः सतोऽपि नैव गुणान्। विपरीतमिदं स्वस्मिन्महिमा मोहाञ्जनस्यैषः ॥
दत्त पदःप्रभृति स्वं मुक्त्वा—सत्यानुपक्तधीश्चोरः। पशुवृत्तिगणे तस्मिन्नपि नाम यथोदम-र्हन् ॥ ४ ॥
हरिकरपुष्करहंसं हारमणीनां प्रसूतिमिव लक्ष्म्याः। पिशितेन पाञ्चजन्यं पीतं पश्यन्निषण्ण्यतु(ति) क्रव् ॥ ५ ॥
स्फटिकः स्वभावशुद्धः स एव सन्स(व)हति सर्वमारोपम्। तदपि(भवति) न तत्तत्तन्नास्था तदुपाधिषु वा भवत्यस्या ॥
स्वल्पपरिशेषितजलधेः सविधे सञ्जातडम्बरं जलदम्। प्रहसन्ति पाण्ड्यनद्यः शुक्तिमुखैर्मौक्तिकस्तनैः ॥ ७ ॥
प्रतिपन्नवामदृष्टिः स्तन इव कश्चित्समुन्नतोऽप्यधिकम्। पतनमधिगम्य समये परिहासरसावहो भवति ॥ ८ ॥
बहु विदधत्युपकारान्गुप्त्या दुरितं प्रकाश्य विदधति च। सुहृदि विहिता हितमतिः यत्र प्रत्युपकरोति न तत् ॥
*तान् घ्नन्ति हन्त शान्तं येभ्यः सिध्येयुरसितवर्त्मानः। अगणितनिजप्रण(का)शैः किमाश्रयाशैरनार्यमिह ॥

---

* पाठान्तरम्— एधान् दहन्ति शान्तान्

नवदलपुटे कल्प्या यस्य प्रभोरपि तल्पधीर्निटपरिवृढो यस्याधस्ताच्छ्रमं शमयिष्यति ।
वटविटपिनस्तस्याङ्कुरानतुल्कटपल्लवान्स्थपुटचषकापेक्षी * भिक्षुः प्रतिक्षणमीक्षते ॥ ११ ॥
निरवधिगुणग्रामे रामे निरागमि वागसिस्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।
वरतनुहतिं वालिद्रोहं मनागपसर्पणं परिमितगुणे स्पष्टावद्ये मुदा किमुदासते ॥ १२ ॥

## २. दृप्तपद्धतिः

तदेव गृह्यतां नाम च्छागमण्डूकरासभैः । तिसृणां तावता हन्त मूर्तीनां कि(महो)मिहागतम् ॥ १ ॥
अण्डजाः पुण्डरीकेषु समुद्रेषु जनार्दनाः । नीलकण्ठाश्च शैलेषु निवसन्तु न तेन ते ॥ २ ॥
कामं लिखतु संस्थानं कश्चिद्रूपं च भास्वतः । अभित्तिविहितालम्बमालोकं विलिखेत्कथम् ॥ ३ ॥
अपि सत्पथनिष्ठानामाशाः पूरयतामपि । अगस्त्यवृत्तिर्मेघानां हन्त मालिन्यकारणम् ॥ ४ ॥
अस्तु तावदगस्त्येन जह्नोर्महिमनिह्नवः । का कथा तस्य बालस्य विश्वग्रासेऽप्यतृ(दृ)प्यतः ॥ ५ ॥
दष्टसारङ्गयूथोऽपि दंष्ट्रानखवानपि । मृत्कटकसंस्थोऽपि सारमेयो न सिंहति ॥ ६ ॥
सत्पथं छादयन्निखलमपि व्यालस्तमोमयः । अतीतपर्वा जगतामदृश्यः सहसा भवेत् ॥ ७ ॥
धुर्याणामपि सत्कार्ये(र्ये) गुणशालिभिर्मर्दिनाम् । अनागमविदां युक्तमवनीतेर्निवारणम् ॥ ८ ॥
बलोत्तरेण हरिणा नागमल्लविभेदिना । सृगालः साम्यमाकाङ्क्षन् शौर्याधिक्यं न विन्दति ॥ ९ ॥
सुदर्शनभृता कश्चिदजहत्कीर्तिनिस्तरः । महाग्रान्तपदाकर्षी जलजन्तुर्निगृह्यते ॥ १० ॥
　गतिर्व्योम्नि किं तद्गरुडमभिटङ्केत चटकः पिबन्त्वम्भः क्षारं न खलु कलशीसूनुरलसः ।
　कलः कण्ठे नादः क इव मशकः किन्नरपतेः कथंचित्साधर्म्यं क्षिपति नहि वैधर्म्यनियमम् ॥ ११ ॥
　निमीलयतु लोचने नहि तिरस्कृतो भास्करः श्रवः स्थगयतु स्थिरं परभृतः किमु ध्वाङ्क्षति ।
(१२) स्वयं भ्रमतु वालिशो न खलु वम्भ्रमीति क्षितिः कदर्थयतु मुष्टिभिः कथय किं नभः क्षुभ्यति ॥ १२ ॥

## ३. खलपद्धतिः

परचिन्त्ये(न्तै)कनिरताः पुत्रादिष्वप्यसङ्गिनः । योगिनामनुकुर्वन्ति विशृङ्खलधियः खलाः ॥ १ ॥
आत्मार्थं युक्तवि(चि)तानां नितमण्डलभेदिनाम् । अतिलङ्घितलोकानां न वन्धः केनचित्कचित् ॥ २ ॥
स्नेहः शैत्यं प्रसादश्च कोशपानाश्च जायते । आसन्नपरपीडार्थं निस्त्रिंशस्यासितात्मनः ॥ ३ ॥
जनित्वापि महागोत्रे निम्नगा वक्रचेष्टिताः । वैपरीत्यं वितन्वन्ति समेषु विषमेषु च ॥ ४ ॥
उत्पथा दुर्नदाः (दुर्नताः) केचित् बहुभङ्गभ्रमाविलाः । तटस्थानपि निघ्नन्ति तरसा भिन्नसेतवः ॥ ५ ॥
केनचिद्दानकल्पेन कुलगोत्रविमर्दिना । मदेन बहुधा भिन्नं मातङ्गं मन्यते जनः ॥ ६ ॥
अनेकमुखपापात्मा छद्मसंदर्शिताश्रमः । कर्बुरप्रकृतिः कश्चित्कापेयकलहोचितः ॥ ७ ॥
छलि(न्नि)नं सत्कथानर्हं स्वानोपहतजातिकम् । न निगृह्णाति यः काले सोऽपि सभ्यैर्निगृह्यते ॥ ८ ॥

* पाठान्तरम्— स्थपुटपुटसापेक्षो

निगिरन्तो जगत्प्राणान् उद्गिरन्तो मुखैर्विषम् । दूरतः परिहर्तव्या द्विजिह्वा जिह्मवृत्तयः ॥ ९ ॥
अकिंचित्कारिणां दीनैराकृष्टगुणकर्मणाम् । अवाय गतसत्त्वानां दर्शनस्पर्शनादिकम् ॥ १० ॥

अधिकोन्नतैरपि सुदारुणान्वितैरसकृद्धसत्परगुणाङ्घ्रिपीडितैः ।
विधिसिद्धनैकगुणसस्यसम्पदां विरसस्वभावकठिनैरलं खलैः ॥ ११ ॥

मुक्ताहारनिषेविता अपि न तद्भक्त्यै दिशन्त्यन्तरं बन्धे गाढविमर्दनेऽपि न जहत्यन्योन्यसंपीडनम् ।
(३६) उष्णे शीतलतामुपेत्य शिशिरे प्राप्ते भजन्त्युष्णतां कामान्तःपुरचेटिकाकुचतटीकाठिन्यवन्तः खलाः ॥ ३६ ॥

## ४. दुर्वृत्तपद्धतिः

गुणजालकर्षेऽपि धीवरत्वेऽपि जन्मतः । सर्वतीर्थावगाहेऽपि नीचवृत्तिर्न शाम्यते ॥ १ ॥
द्विजराजाङ्कसंस्थोऽपि सन्मार्गाचा(का)रवानपि । विशुद्धिरहितः कश्चिन्न विन्दत्यकलङ्कताम् ॥ २ ॥
अवक्रान्तरकाधीशः परिपूर्णः(र्ण) प्रियोदयः । प्राचीं दिशमतिक्रम्य पतनं प्रतिपद्यते ॥ ३ ॥
पततां हन्त केषांचिद्भजते मलिनात्मनाम् । विशुद्धवर्णयोगोऽपि विपरीतनिमित्तताम् ॥ ४ ॥
पतनानन्तरं कृच्छ्रात्प्ररूढशुद्धिमानपि । द्विजः संछाद्यते कश्चिदधरेणापि रागिणा ॥ ५ ॥
जोषमेकपदे स्थित्वा सन्निकृष्टान्क्षणाद्ग्रसन् । बहिर्दर्शितसंशुद्धिर्बकोऽप्या(कव्या)हारमर्हति ॥ ६ ॥
द्विजस्य सितपक्षस्य कवेरपि निरस्यते । न हंस इति साजात्यं गतिशब्दितवृत्तिभिः ॥ ७ ॥
अव्यवस्थितवृत्तानामभिन्नश्रुतिचक्षुषाम् । अधर्मार्जितभोगानामाशीरप्यहितोचिता ॥ ८ ॥
दुष्टैरारोपितः कश्चिदनर्थक्रिययान्वितः । असत्कारेण गृह्येत वि(रु)शुद्धाकारवेदिभिः ॥ ९ ॥
तमः स्वभावमलिनं वृत्त्यालोकोज्झिताश्रयम् । दृग्ध्यं मित्रेण राज्ञा च दृष्टदोषान्वयं विदुः ॥ १० ॥
जातिमात्रशरणा बहिष्कृताः केचिदाहतजघन्यवृत्तयः । रोषणा विपरिधाविनो मुधा(दुर्द्वे)षयन्ति जनमुज्झितह्रियः

आलोकावधि यद्वशेन सुगतिं विन्दन्ति भूतान्यमी दृष्टिस्नेहवशेन सा वितनुते वंशे भुजङ्गात्मनाम् ।
(४८) दक्षा भोगिषु केषुचिद्विषमितां दृष्टिं निहन्तुं क्षणात्तानप्याशु विनाशयेत्क्षगरुचिः काचित्खगस्फूर्जथुः(र्जिता)॥

## ५. असेव्यपद्धतिः

कठिनः कुशसूलश्च दुर्लभो दक्षिणेतरः । कश्चित्कल्याण(गा)गोत्रोऽपि मनुष्यैर्नोपजीव्यते ॥ १ ॥
दृष्टपङ्का प्रतिपदं स्यादल्पसरसः स्थितिः। काले घनरसैर्योगेऽप्यसेव्या जीविताथिभिः ॥ २ ॥
स्व(स)तः सत्त्वविहीनानां सत्तयैवापराध्यताम्(तः) । कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ३ ॥
अपि सन्तापशमनाः शुद्धाः सुरभिशीतलाः । भुजङ्गसङ्गाज्जायन्ते भीषणाश्चन्दनद्रुमाः ॥ ४ ॥
नीचानुसरणान्मन्ये निसर्गपरिशुद्धयोः । गतिः कुटिलतां याति गङ्गायमुनयोरपि(रिव) ॥ ५ ॥
मित्रे भवति वैमुख्यं मैत्री दोषाकरेण च । अपि तीर्थप्रसूतानां कैरवाणां रजोभृताम् ॥ ६ ॥
अपि निर्मुक्तभोगेन स्वान्तस्थविषयेक्षया । असद्भावाय जायेत जिह्मगेन सहासिका ॥ ७ ॥

मण्डूकराविणं सर्पं गोमुखं च मृगादनम् । न (अ)सुहृत्त्वेन मन्येत मानयन्तं च वैरिणम् ॥ ८ ॥
घोरास्त्यक्तमिथो वैराः सैकर्ष्यवदुपद्रवे । दण्डेनापि न भज्येरन्यापकु(म)ण्डलिमण्डलाः ॥ ९ ॥
अनाकलितमानुष्याः क्षमासंस्पर्शवर्जिताः । प्रतिबुद्धैर्न सेव्यन्ते पूर्वदेवविरोधिनः ॥ १० ॥

अनित्रे विश्वासः श्वपचकरके सौमिकरसः कपाले गङ्गाम्भः खलपरिषदङ्के सुजनता ।
परिक्षीणाचारे श्रुतमनुपनीते च निगमः स्वतः सिद्धां शुद्धिं त्यजति विपरीतं च फलति ॥ ११ ॥
तरतु विवित्सयाब्धिमधिरोहतु शैलतटीं धमतु च धातुवर्गमधि(भि)गच्छतु शस्त्रमुखम् ।
(६०) तदिदमरुन्तुदं यदुत बह्ववधाय भिया धनमदमेदुरक्षितिभृदङ्गणचङ्क्रमणम् ॥ १२ ॥

## ६. महापुरुषपद्धतिः

सतामेव खपुष्पत्वं ये(ए)षां यत्सदसत्त्वयोः । न जातु तस्य तत्ताभ्यामिति तेषां स विश्वदृक् ॥ १ ॥
सन्नियोगेन शिष्टानां वर्णादीनां स्वसूत्रतः । प्रवृत्तिं च निवृत्तिं च न भिन्द्यात्साधुशब्द(वि)वत् ॥ २ ॥
मुक्तानुगुणवृत्तानां भजतां पावनीं गतिम् । नित्यं विष्णुपदे वृत्तिस्तारकाणां सितात्मनाम् ॥ ३ ॥
धर्मसेतुनिविष्टानामचलानां गरीयसाम् । दक्षिणोत्तरवृत्तीनां दृष्टिः पापनिवर्तिनी ॥ ४ ॥
अनङ्गीकृतकामानामनुमानार्हवर्ष्मणाम् । धृतनिर्मलतीर्थानां भूतिलेपोऽपि (वि)भूषणम् ॥ ५ ॥
अनन्तख्यातिसंपन्नः शुद्धसत्त्वः सुधीवि(सधीव)लः । धत्ते बहुमुखं भोगं श्रुतिदृष्टिस्थिराश्र(श)यः ॥ ६ ॥
अहार्यः सर्वमध्यस्थः काञ्चनद्युतिमुद्वहन् । सत्प्रदक्षिणयोग्यत्वमुपयाति महोन्नतः ॥ ७ ॥
पुण्यगन्धाः सुमनसः प्रबुद्धाः समयागमे । शिरसा परिगृह्यन्ते सादरं त्रिदशैरपि ॥ ८ ॥
अनुकर्तुमपहोतुमतिवर्तितुमीक्षितुम् । अशक्ये तेजसां पत्यौ मिलतानुमतिक्षमा ॥ ९ ॥
आहितुण्डिकदृष्टीनामशेषा भोगिनः पदम् । न संवर्ताग्निसारथ्ये स्थाता यन्मुखमारुतः ॥ १० ॥

गरुत्मति सुपक्षतां गिरिधुरन्धरे धीरताम् उदन्वति गभीरताममृतदीधितौ सौम्यताम् ।
विवस्वति च दीप्ततां विधिरुपाददानश्चिरादनर्घगुणचित्रितं किमपि चित्रमासूत्रयत् ॥ ११ ॥
प्रशस्तिं विन्दन्ति प्रशममनुवद्दिव्यामृत(रस)सरित्प्रलीना(नोद)धन्यानां परिषदि न संपत्तिसरितः ।
(७२) अमित्रोपेक्षेपक्षणविगलदात्मीयपृतनादृढामर्दत्रस्यद्भूमिडमटजङ्घाजवभृतः ॥ १२ ॥

## ७. समचित्तपद्धतिः

पुंसः कस्यचिदास्थाने द्विजेन्द्रः सूरिसेविते । गुणवत्पक्षपातेऽपि मध्ये तिष्ठति मानभृत् ॥ १ ॥
चकोरानादरं देवश्चक्रवाकस्य चादरम् । विवस्वान्नाभिसन्धत्ते विश्वमेतत्प्रकाशयन् ॥ २ ॥
देशकालविशेषेण विषमत्वं समत्ववत् । निशादिवसयोर्दृष्टम् अहोरात्रस्य न क्वचित् ॥ ३ ॥
प्रतिगृह्णति जीमूते प्रत्यर्पयति वा स्वयम् । अपूरणमपां पत्युः पूरणञ्च न लक्ष्यते ॥ ४ ॥
छिद्रं जनयतां नीचैः अच्छिद्रं बिभ्रतामपि । तासहीनास्सुमणयः स्वभावादुपकुर्वते ॥ ५ ॥

अनुज्झितसुहृद्भावः सुहृदां दुर्हृदामपि । सम इत्येव भाव्योऽपि नम इत्यभिभाव्यते ॥ ३ ॥
मरुद्भिः पीड्यमानोऽपि सन्त्यक्तोऽपि दिवानिशम् । विषयस्नेहरहितो रत्नदीपः प्रकाशते ॥ ७ ॥
जनयत्यनिले दावं शमयत्यपि तोयदे । अभिन्नैः स्थीयते पुण्यैराश्रमारण्यपादपैः ॥ ८ ॥
अहार्येण कदाप्यन्यैः अमहार्येण केनचित् । तितिक्षाकवचेनैव सर्वं जयति संवृतः ॥ ९ ॥
अमृतस्यन्दिनं कश्चित् कृष्णमेघं द्विजः स्मरन् । उदन्यया न वेशन्तम् उदन्वन्तञ्च वीक्षते ॥ १० ॥

विदधातु धाम तमसा कृतेन किं यदि वा न वेत्ति न विधिर्न वा वयम् ।
प्रथमोपकारि चरमं यतस्ततः प्रतियोगिनो भवति तस्य सार्थता ॥ ११ ॥

विषयेष्वपि (विभवेष्वपि) दोषगन्धहीनः प्रलयेऽपि स्थितिमक्षयां दधानः ।
(८४) विषमेष्वपि भावयन् समत्वं पुरुषः कोऽपि हृदि स्थितः प्रजानाम् ॥ १२ ॥

## ८. सदाश्रितपद्धतिः

सुवृत्तस्यावदातस्य कलापूर्णस्य सत्पतेः । क्षणलेशग्रहेऽपि स्यात् अतीर्थस्यापि तीर्थता ॥ १ ॥
प्रतिपत्प्राप्तितः प्राग(प्यपातार्हप)प्यापदा सत्पदाश्रितः । राजा तदितरो वाऽपि नोपरागेण गृह्यते ॥ २ ॥
विषमो गुणभेदेन विकारान् जनयन् क्रमात् । समये महता योगात् अहङ्कारः प्रती(ली)यते ॥ ३ ॥
स्वदृष्टिप्रतिघातेऽ(तोऽ)पि स्वच्छे क्वचन शोभनः । तत्र ह्यभिमुखः स्वात्मा झटित्येव प्रकाशते ॥ ४ ॥
शिक्षके हरिताकारो मेरौ नीलतनुर्द्विजः । अपूर्ववर्णवान् भाति सत्यनिष्ठे च कौशिकः ॥ ५ ॥
कलङ्किनि जडे (जले) क्वापि सौरं प्रतिफलन्महः । तमोपहत्वं तनुते समृद्धिं च दिने दिने ॥ ६ ॥
स्वतश्चैतन्यहीन(भिन्न)स्य विषमच्छिद्रभागिनः । कस्यचित्प्रांशुमूलास्स्युः पुरुषार्थप्रवृत्तयः ॥ ७ ॥
महान्तं पुरुषं प्राप्य कश्चित्सत्त्वप्रवर्तकम् । प्रतिबुद्धो जनस्तेन परमं साम्यमश्नुते ॥ ८ ॥
सूत्रं रत्नसमावेशात् चर्म सत्पदसंश्रयात् । तदभेदेन गृह्येत तृणमप्यश्वमन्त्रणात् ॥ ९ ॥
एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् । न तत्त्रिभिरष्टाभिस्सहस्रेणापि कस्य(र्हि)चित् ॥ १० ॥

नद्याः(रथ्या)तोयं त्रिदशसरिता राजनीतिस्सुकीर्त्या काव्यालापस्त्रियुगकथया कायवानात्मबुद्ध्या ।
दारप्रीतिः प्रजननधिया जन्तुहिंसा मखेन प्रज्ञाहीनः परहितविदा सङ्गतश्शुद्धिमेति ॥ ११ ॥

विभुर्बन्धं प्राप्य व्यतनुत विमुक्तिं व्रजभुवां स्वतन्त्रोऽसौ दूत(धूर्त)स्स्वयमजनि सूतश्च भजताम् ।
(९६) प्रतिज्ञां स्वामौज्झत्स्वपदतटिनी(स्नानविधिना)सूनुसमरे महद्योगात्प्रायो वहति महिमानं तदधिकम् ॥१२॥

## ९. नीतिमत्पद्धतिः

विक्रमाक्रान्तभुवने समे षाड्गुण्यशालिनि । भजति स्थिरतां लक्ष्मीः कस्मिंश्चित्पुरुषोत्तमे ॥ १ ॥
(एकया द्वौ विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु । पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥ )
पार्थिवानां पदार्थानां स्वभूत्या चक्रवर्तिनाम् । जन(सूच)यत्यचिराद्भेदं छिद्रेण महतान्वयः ॥ २ ॥

सदसन्तौ विचिन्वानः समवर्ती शमप्रदः । अपि दण्डधरो नित्यं लोकपालः स दक्षिणः ॥ ३ ॥
यमेनोपक्रमे जानन् विश्वाधीशं व्यवस्थितम् । सामादिषु च तत्त्वज्ञः स न कस्मिद्धिमर्हति ॥ ४ ॥
तमिस्राचारिणां रोद्धा विजिताक्षो मरुत्प्रियः । कपिकुल्यैरपि स्थाने भाति वेलातिलङ्घिभिः ॥ ५ ॥
अङ्गयुक्तः कृतास्त्रश्च कुर्वन् सम्यक्पुरोविधिम् । विजानन् सिद्धसाध्यादीन् वैरिणोऽस्त्रै(मन्त्रै)र्न पीड्यते ॥ ६ ॥
कामाधिकरणग्राह्यकु(मू)लादिवलशालिनः । अर्हीनेऽपि नरेन्द्रस्य शक्तयस्सिद्धिहेतवः ॥ ७ ॥
प्रद्युम्नो ह्यनिरुद्धात्मा स्वनाम्ना मानसोदयः । वीरः कश्चिद्धि(जानाति)तन्वीत स्वीप्रायमखिलं जगत् ॥ ८ ॥
प्रयुक्तं मन्त्रिभिः काले भक्तिभेदात्पुरस्कृतम् । साम ज्वलनवक्त्राणामपि संवननं परम् ॥ ९ ॥
विधौ नीत्या लब्धधृतिः विनतानन्दनो द्विजः । नियम्यमानैः स्थानेषु भुजङ्गैरपि भूष्यते ॥ १० ॥

नीतिः परं त्वयि सती परपुष्ट धातुः कण्ठे य ए(थै)ष तव पञ्चममुच्चकार ।
पुत्रीकृतोऽसि बलिपुष्टकुलैर्यतस्त्वं(यथात्वं) दूरीकृतोऽसि किल तैः तत एव काले ॥ ११ ॥

विबुधमहिते मेरावैरावणः करटी मुहुः कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम् ।
भजतु च तटक्रीडां पादैर्विसन्धि तथा (पीडाभिसन्धिरसौ) दृढं न च मलिनता नापि क्षोभः क्षमाभृति संभ्रमः ॥
(१०८) (संभृतः)

## १०. वदान्यपद्धतिः

आभिमुख्यदशामात्रात् आदर्श इव सज्जनः । शीघ्रं रक्तमरक्तञ्च गृह्णाति स्वप्रसादतः ॥ १ ॥
अप्यनावर्जिताः स्वेन फलभारेण(रागेण) सन्नताः । अर्भकैरपि गृह्यन्ते साधुसन्तानशाखिनः ॥ २ ॥
निर्मुक्तभवनक्षेत्राः स्युस्सदागतिनिर्वृताः । प्राप्ते भयविपर्यासे भोगिनः खलु यो(भो)गिनः ॥ ३ ॥
सर्वेषामुत्तरामाशां धनदो यः प्रती(परी)क्षते । सत्यं मनुष्यधर्मैव स तु पुण्यजनेश्वरः ॥ ४ ॥
येषां हिरण्यकशिपुक्षेत्रदानकरः करः । तेषां तिर्यङ्मुखत्वेऽपि पुरुषत्वं न हीयते ॥ ५ ॥
मुख्यदानोदकक्लिन्नकरः ख्यातक्षमाधृतिः । लोकपालाश्रितः कश्चित् अनाशावारणः कथम् ॥ ६ ॥
क्षोभितो विबुधैः कश्चित् गम्भीरमधुराशयः । चन्द्ररत्नगजा(वा)श्वादिसहितां दिशति श्रियम् ॥ ७ ॥
अपुनर्देहि शब्दार्थम्(हैं) अप्रत्युपकृतिक्षमम् । अर्थिनं कुरुते कश्चित् पुनरावृत्तिवर्जितम् ॥ ८ ॥
वदान्यश्च कदर्यश्च गृहीतस्थिरलोभतः । स्वानर्थान् सञ्चिनोत्येव परानर्थैरयोजयन् ॥ ९ ॥
अनिश्शेषितदातव्यं वदान्यमिति वादिनम् । वधूव्रीडाकुलेवार्थी सव्रीडो नोपसर्पति ॥ १० ॥
त्वचं मांसं जीवं यदपि ददुरस्थीनि पृथिवीं श्रियं रत्नाधीशं त्रिदशतरुमैरावतमपि ।
तदेतत्प्रत्येकं मिलितमपि नालं तुलयितुं मनस्कारोपेतां(रा)रोपि स्थिरमधुरकल्योक्तिकणिकाम् ॥ ११ ॥
अनिर्घातं धाराधरम(द)शमनीयं निधिमपाम् अकाठिन्यं चिन्तामणिमजडभूतं सुरतरुम् ।
अभित्त्वोपादाय प्रभुरपशुवृत्तिं च सुरभिं परार्थैकस्वार्थानकृत पुरुषानादिपुरुषः ॥ १२ ॥ (१२०)

## ११. सुकविपद्धतिः

अपङ्किलधियश्शुद्धाः साधुमानसवृत्तयः । वमन्ति श्रुतिजीवातुं ध्वनिं नवरसास्पदम् ॥ १ ॥

महापुरुषलब्धा(बद्धा)त्मा सर्गादिप्रथितोदयः । व(प)श्यावदातया वाचा सेव्यते चतुराननः ॥ २ ॥

विशुद्धवर्णललिता(ललिताकारा) गुणालङ्कारशालिनी । सरसा भारती यस्य स सत्येकः प्रतिष्ठितः ॥ ३ ॥

कुतश्चिदचलस्थानात् प्रयान्ती सागरान्तिकम् । दृश्यादृश्यतनुर्भाति श्रु(कृ)त्यभीष्टा सरस्वती ॥ ४ ॥

प्रभूतोदितमुक्ताभिर्भूयते सूक्तिशुक्तिभिः । सुदृशां कर्णपूराय तादृक्त्वं(शः) फलभेदतः ॥ ५ ॥

प्रतीपमवमृष्टापि स्वाभिमुख्यं(मभिख्यां) न मुञ्चति(ती) । कालिकेव सतां सूक्तिः तादृशश्रु(श्रु)तिनन्दिनी ॥

अपार्थेतरयुक्तानां व्याससङ्ग्रहशालिनाम् (संपदाम्) । अपि गोपालगीतानां निवेशो निगमादिषु ॥ ७ ॥

जला(डा)शयस्य घोषेण जातलौल्यस्य भूयसा । कविशब्दं तिरोधाय कश्चिदर्थो न साध्यते ॥ ८ ॥

सदानवोक्तिमहितः प्रतिरुन्धन् प्रतीपगान् । प्रथितः काव्यनाम्नापि कविरेकः प्रकाश(श्य)ते ॥ ९ ॥

पूर्वकल्पप्रकारेण पुरुषार्थप्रवृत्तया । विचित्रसृष्ट्या विहरन् व्यासः कश्चिन्महाकविः ॥ १० ॥

मतिमन्थजवेन लब्धवर्णा प्रतिपन्ना विबुधैरनन्यभक्तैः । सुकवेरनघाशयस्य सूक्तिः स्वदते दुग्धपयोनिधेस्सुधेव ॥

मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः के विन्ध्याचलविकटसन्ध्यानटजटापरिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ १२ ॥ (१३२)

## १२. परीक्षितपद्धतिः

काकानां कोकिलानां च सीमाभेदः कथं भवेत् । यदि विश्वसृजा साक्षं(साक्षात्) न कृता कर्णशष्कुली ॥

छन्दःप्रत्ययशुद्धात्मा पश्यन् यतिगणस्थितिम् । वर्णादिनियतं वृत्तं नियुङ्क्ते गौरवादिवित् ॥ २ ॥

सुवर्णमपि दुर्वर्णं युक्त्या दर्शयति क्वचित् । व्यनक्ति शुद्धिं सहसा शुचिरेकः स्वतैक्ष्ण्यतः ॥ ३ ॥

स्वच्छस्वादुविशुद्धानां स्रोतसां कलशोदधेः । दोषं केऽपि न मृष्यन्ति दुष्टजिह्वेन कल्पितम् ॥ ४ ॥

स(इ)हैव भुवने जातं सत्त्वसंस्थापन(नं)क्षमम् । गृह्यते किमपि स्वस्थैः अन्यत्किमपि जिह्मगैः ॥ ५ ॥

कलकण्ठकुला(गला)गणा)स्वाद्ये कामस्यास्त्रे निजाङ्कुरे । निम्बवृत्तिभिरुद्दीर्णे न चूतः परितप्यते ॥ ६ ॥

रत्ना(करा)भरणयोग्यानां राजान्तःपुरयोषिताम् । क्रीडाकङ्कणनिर्माणकाचोऽपि ललितायते ॥ ७ ॥

मन्ये किन्नरमुख्यानां मौनं जगति सांप्रतम् । मशककणितं यत्र वीणास्वनविकल्पितम् ॥ ८ ॥

कटूनामपि सार्थत्वात् कामं भवति सङ्ग्रहः । तथापि वृत्तिर्न तथा रसज्ञानुमतिक्षमा ॥ ९ ॥

नाद(मङ्गल)मङ्कणतालानां नागरीनटनोचितम् । श्रुति(कृषि)क्षमेषु ग्रामेषु न मूर्छयति गीति(व)वित् ॥ १० ॥

विधिमन्तरेण विहगेन कुतः पयसोरशिक्ष्यत विवेकविधिः ।
कति वा दिनानि वद पर्यचिनोत् कलशीसुतः कबलयन् जलधिम् ॥ ११ ॥

एकयापि कल्या विशुद्धया योऽपि कोऽपि भजते गिरीशताम् ।
भूयसीरपि कलाः कलङ्किताः प्राप्य कश्चिदपचीयते शनैः ॥ १२ ॥
सैषा सुभाषितानां माला महनीयवर्णवृत्तगुणा । भावुकसङ्ख्यारूढा प्रियपद्धतिभूषिता जयति ॥ १३ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यकृतिषु सुभाषितनीवी ॥

---

# ॥ यादवाभ्युदयकाव्यम् ॥

## १. प्रथमः सर्गः

वन्दे बृन्दावनचरं वल्लवीजनवल्लभम् । जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ १ ॥
यदेकैकगुणप्रान्ते श्रान्ता निगमवन्दिनः । यथावद्वर्णने तस्य किमुतान्ये मितंपचाः ॥ २ ॥
शक्त्या शौरिकथास्वादः स्थाने मन्दधियामपि । अमृतं यदि लभ्येत किं न गृह्येत मानवैः ॥ ३ ॥
वसुधाश्रोत्रजे तस्मिन् व्यासे च हृदयस्थिते । अन्येऽपि कवयः कामं बभूवुरनपत्रपाः ॥ ४ ॥
स कविः कथ्यते स्रष्टा रमते यत्र भारती । रसभावगुणीभूतैरलङ्कारैर्गुणोदयैः ॥ ५ ॥
तदात्वे नूतनं सर्वमायत्यां च पुरातनम् । न दोषायैतदुभयं न गुणाय च कल्पते ॥ ६ ॥
प्रवृत्तामनघे मार्गे प्रमाद्यन्तीमपि क्वचित् । न वाचमवमन्यन्ते नर्तकीमिव भावुकाः ॥ ७ ॥
विहाय तदहं व्रीडां व्यासवेदार्णवामृतम् । वक्ष्ये विबुधजीवातुं वसुदेवसुतोदयम् ॥ ८ ॥
क्रीडातूलिकया स्वस्मिन् कृपारूषितया स्वयम् । एको विश्वमिदं चित्रं विभुः श्रीमानजीजनत् ॥ ९ ॥
जगदाह्लादनो जज्ञे मनसस्तस्य चन्द्रमाः । परिपालयितव्येषु प्रसाद इव मूर्तिमान् ॥ १० ॥
यदपत्यसमुद्भूतः पुण्यकीर्तिः पुरूरवाः । सतामाहितवह्नीनां विहारस्थैर्यतां ययौ ॥ ११ ॥
समवर्धत तद्वंश उपर्युपरि पर्वभिः । यशोमुक्ताफलैर्यस्य दिशो दश विभूषिताः ॥ १२ ॥
बभूव नहुषस्तस्मिन्नैरावत इवाम्बुधौ । यमिन्द्रविगमे देवाः पदे तस्य न्यवीविशन् ॥ १३ ॥
नरेन्द्राः पृथिवीचक्रे नामचिह्नैरलंकृताः । जङ्गमास्तस्य वीरस्य जयस्तम्भा इवाभवन् ॥ १४ ॥
शक्तिरप्रतिघा तस्य शात्रवैरपि तुष्टुवे । यथावत्साधकस्येव यावदर्था सरस्वती ॥ १५ ॥
वीरो रस इवोत्साहान्नहुषादभ्यजायत । ययातिर्नाम येनैन्द्रमर्धासनमधिष्ठितम् ॥ १३ ॥
विशालविपुलोत्तुङ्गे यद्बाहुशिखरान्तरे । आसीद्वीरश्रिया सार्धं भूमिरर्धासने स्थिता ॥ १७ ॥

निदेशं तस्य राजानो न शेकुरतिवर्तितुम् । प्राप्तस्वपरनिर्वाहं प्रमाणमिव वादिनः ॥ १८ ॥
तटाकमिव तापार्तास्तमिन्द्रमिव निर्जराः । भावा इव रसं भव्याः पार्थिवाः पर्युपासत ॥ १९ ॥
यदुर्नाम ततो जज्ञे यत्सन्ततिसमुद्भवैः । समानगणनालेख्ये निस्समानैर्निषद्यते ॥ २० ॥
देहीति वदतां प्रायः प्रसीदन् प्रत्युवाच सः । ललितध्वनिभिर्लक्ष्मीलीलाकमलषट्पदैः ॥ २१ ॥
स च वृत्तविहीनस्य न विद्यां बहुमन्यत । न हि शुद्धेति गृह्येत चतुर्थीचन्द्रचन्द्रिका ॥ २२ ॥
अपुनःप्रार्थनीयस्य प्रार्थिताधिकदायिनः । अर्थिनः प्रथमे तस्य चरमान् पर्यपूरयन् ॥ २३ ॥
शराणां शात्रवाणां च सन्धानेन महौजसः । तस्य निर्भूतलक्षेण द्विः कचिन्नाप्यभूयत ॥ २४ ॥
युक्तदण्डममित्राणां कृतान्तं समवर्तिनम् । दक्षिणं लोकपालं तममन्यन्त दिवौकसः ॥ २५ ॥
यशःप्रसूनसुरभिर्यदुसन्तानपादपः । बभूव विबुधप्रीत्यै बहुशाखः क्षमातले ॥ २६ ॥
वंशे समभवत्तस्य वसुदेवः क्षितीश्वरः । जनकः प्राग्भवे योऽभूद्देवदानवयूथयोः ॥ २७ ॥
आनकानां च दिव्यानां दुन्दुभीनां च निस्वनैः । सह जातं यमाचख्युराख्ययाऽऽनकदुन्दुभिम् ॥ २८ ॥
तेन निर्मलसत्त्वेन विनिवृत्तरजस्तमाः । जगती शान्तमोहेव धर्मोच्छ्वासवती बभौ ॥ २९ ॥
स विष्णुरिव लोकानां तपनस्तेजसामिव । समुद्र इव रत्नानां सतामेकाश्रयोऽभवत् ॥ ३० ॥
प्रख्यातविभवे पत्न्यौ तस्य पूर्वं प्रजापतेः । रोहिणीदेवकीरूपे मनुष्यत्वे बभूवतुः ॥ ३१ ॥
अक्षुद्रगतिशालिन्योस्तयोरन्योन्यसक्तयोः । ऐकरस्यमभूत्पत्या गङ्गायमुनयोरिव ॥ ३२ ॥
स ताभ्यामनुरूपाभ्यां समतुष्यत्समेयिवान् । व्यक्तिहेतुरभूद्येन सपर्यङ्कस्य शार्ङ्गिणः ॥ ३३ ॥
अलिप्सत न साम्राज्यं सोऽर्थकामपराङ्मुखः । यदृच्छागतमैश्वर्यमानृण्यरुचिरन्वभूत् ॥ ३४ ॥
कयाचिदशरीरिण्या वाचा व्यवसितायतिः । देवकीं वसुदेवं च कंसः कारामयोजयत् ॥ ३५ ॥
स (खल्व)कालातिबलः कंसः कालनेमिरनेहसा । सर्वदैतेयसत्त्वानां समाहार इवोदितः ॥ ३६ ॥
एतस्मिन्नन्तरे देवी मेरुमध्यमुपेयुषः । प्रजापतिमुखान् देवान् प्राह सागरमेखला ॥ ३७ ॥
विदितं भवतां देवा विश्वरूपेण विष्णुना । महीयान् धर्मशीलेषु भारो यत्सन्निवेशितः ॥ ३८ ॥
अधर्मनिघ्नैरधुना धर्मसेतुविभेदकैः । असह्यैरद्भुतैस्तुङ्गैः क्रम्ये राक्षसपर्वतैः ॥ ३९ ॥
अत आलोचितजगद्धितैस्सुरगणैस्स्वयम् । न पतामि न भिद्ये च यथाऽहं क्रियतां तथा ॥ ४० ॥
इति ते भूतधारिण्या निसृष्टार्था दिवौकसः । अविदुस्तत्प्रियस्यैव तद्भारहरणं क्षमम् ॥ ४१ ॥
पुरस्कृत्य जगद्धात्रीं मनसोऽपि पुरःसराः । दुग्धोदधिशयं देवं दूरमेत्याभितुष्टुवुः ॥ ४२ ॥
त्रिवेदीमध्यदीपाय त्रिधाम्ने पञ्चहेतये । वरदाय नमस्तुभ्यं बाह्यान्तरहविर्भुजे ॥ ४३ ॥
अनन्याधीनमहिमा स्वाधीनपरवैभवः । दयाधीनविहारस्त्वं प्रणतान् परिपाहि नः ॥ ४४ ॥

स भवान्गुणरत्नौघैर्दीप्यमानो दयाम्बुधिः । तनोति व्यूहविभवैस्तरङ्गैरिव ताण्डवम् ॥ ४५ ॥
त्वदेकव्यञ्जितैरादौ त्वदन्येष्वनिदंपरैः । निगमैरनिगम्यं त्वां कः परिच्छेत्तुमर्हति ॥ ४६ ॥
अमितस्य महिम्नस्ते प्रयातुं पारमिच्छताम् । वितथा वेदपान्थानां यत्रसायंगृहा गतिः ॥ ४७ ॥
नम्यस्य नमतः क्षुद्रान् वरदस्य वरार्थिनः । पुत्रैः पितृमतः क्रीडा कथं ते केन वर्ण्यते ॥ ४८ ॥
नटवद्भूमिकाभेदैर्नाथ दीव्यन् पृथग्विधैः । पुंसामनन्यभावानां पुष्णासि रसमद्भुतम् ॥ ४९ ॥
ब्रह्मादिस्तम्बपर्यन्तविचित्राङ्कुरशालिनाम् । सलिलं कर्मकन्दानां क्रीडैव तव केवलम् ॥ ५० ॥
निराधारनिजस्थेम्नो निरुपाधिकशेषिणः । निरपेक्षनियन्तुस्ते निस्समाभ्यधिका गुणाः ॥ ५१ ॥
अनाविलधियामन्तश्चिन्तामणिरिव स्फुरन् । दिशस्यभिमतं सर्वमतिरस्कार्यदीधितिः ॥ ५२ ॥
संसारमरुकान्तारे परिश्रान्तस्य देहिनः । त्वद्भक्त्यमृतवाहिन्यामादिष्टमवगाहनम् ॥ ५३ ॥
दुरितोदन्वदावर्ते घूर्णमानस्य दुःस्थतः । समग्रगुणसम्पन्नस्तारकस्त्वं प्लवो महान् ॥ ५४ ॥
अपरिच्छिद्यमानस्य देशकालादिभिस्तव । निदर्शनं त्वमेवैकस्त्वदन्यद्व्यतिरेकतः ॥ ५५ ॥
अकर्तुमखिलं कर्तुमन्यथाकर्तुमप्यलम् । सङ्कल्पसचिवः काले शक्तिलेशस्स तावकः ॥ ५६ ॥
यन्मूलमखिलं कार्यं यदमूलमधीयते । लक्ष्यं तदसि योगानां लक्ष्मीकौस्तुभलक्षणम् ॥ ५७ ॥
त्रिवर्गमपवर्गं वा प्रतिलब्धुं प्रयस्यताम् । प्रलयेष्वपि दीर्घायुः प्रतिभूस्त्वदनुग्रहः ॥ ५८ ॥
यदेकमक्षरं ब्रह्म सर्वाम्नायसमन्वितम् । तारकं सर्वजन्तूनां तत् त्वं तव च वाचकम् ॥ ५९ ॥
त्वदालम्बितहस्तानां भवादुन्मज्जतां सताम् । मज्जतः पापजातस्य नास्ति हस्तावलम्बनम् ॥ ६० ॥
अनन्यरक्षाव्रतिनं चातकव्रतचारिणः । भवन्तमवलम्बन्ते निरालम्बनभावनम् ॥ ६१ ॥
अनिदंपूर्वनिद्राणामनस्तमयभानुमान् । आपादयसि पुंसां त्वमपुनस्स्वापजागरम् ॥ ६२ ॥
त्वदेकशरणानां त्वं शरणागतजीवनः । विपदं नः क्षिप क्षिप्रं तमिस्रामिव भास्करः ॥ ६३ ॥
सति सूर्ये समुद्यन्तः प्रतिसूर्या इवासुराः । जगद्बाधाय जायन्ते जहि तान् स्वेन तेजसा ॥ ६४ ॥
स दैत्यहत्यामिच्छद्भिस्सुरैरेवमभिष्टुतः । अनन्यदृश्यस्सहसा दयया दर्शनं ददौ ॥ ६५ ॥
ततस्तं ददृशुर्देवाः शेषपर्यङ्कमास्थितम् । अतिरूढशरन्मेघमन्याद्दृशमिवाम्बुदम् ॥ ६६ ॥
पत्न्या सहनिषेदुष्या पद्मलक्षणलक्ष्यया । स्वेच्छयैव शरीरिण्या सूचितैश्वर्यसंपदम् ॥ ६७ ॥
सुकुमारसुखस्पर्शसुगन्धिभिरलंकृतम् । स्वविग्रहगुणारामप्रसूनैरिव भूषणैः ॥ ६८ ॥
आरञ्जितजगन्नेत्रैरन्योन्यपरिकर्मितैः । अङ्गैरमितसौन्दर्यैरनुकल्पितभूषणम् ॥ ६९ ॥
उत्तेजितजयोत्साहमायुधैरनघोद्यमैः । शौर्यविक्रमशक्त्याद्यैस्सहजैः स्वगुणैरिव ॥ ७० ॥
स्वकान्तिजलधेरन्तस्सिद्धसंहननं स्वतः । महिम्ना जातवैचित्र्यं महानीलमिवोदितम् ॥ ७१ ॥

श्रुतिरूपेण वाहेन शेषकङ्कणशोभिना । स्वाङ्घ्रिसौरभ(लिप्सेन)दिग्धेन दत्तसंग्रामदोहलम् ॥ ७२ ॥
स्ववेत्रस्पन्दनिस्पन्दनेतव्येन निवेदितम् । भक्तिनम्रेण सेनान्या प्रतिशृण्वन्तमिङ्गितैः ॥ ७३ ॥
अनपायं तमादित्यमक्षयं तारकाधिपम् । अपारममृताम्भोधिममन्यन्त दिवौकसः ॥ ७४ ॥
अभयोदारहस्ताग्रमनघस्वागतस्मितम् । अवेक्ष्य विबुधा देवमलभन्त दृशोः फलम् ॥ ७५ ॥
तस्मै विज्ञापयामासुर्विदितार्थाय नाकिनः । निहताशेषदैत्याय निदानं स्वागतेः पुनः ॥ ७६ ॥
त इमे क्षत्रिया भूत्वा क्षोभयन्ति क्षमामिमाम् । तव तेजसि यैर्नाथ दनुजैश्शलभायितम् ॥ ७७ ॥
चतुर्णां पुरुषार्थानां प्रसवो यत्समाश्रयात् । हव्यकव्यप्रसूरेषा दीर्यते दैत्यभारतः ॥ ७८ ॥
जाता निखिलवेदानामुत्तमाङ्गोपधानतः । त्वत्पादकमलादेषा त्वदेकाधीनधारणा ॥ ७९ ॥
यदि न त्वरते नाथ भारव्यपनये भवान् । प्लावयिष्यन्त्युदन्वन्तः पृथिवीं पृथुवीचयः ॥ ८० ॥
करुणाधीनचित्तेन कर्णधारवती त्वया । माऽवसीदतु पृथ्वीयं महती नौरिवाम्भसि ॥ ८१ ॥
रशनारत्नरूपेण पयोधिरशना त्वया । प्रशान्तदनुजक्लेशा परिष्करणमर्हति ॥ ८२ ॥
कंसप्रभृतिभिस्सेयं शल्यैरिव समुद्धृतैः । चिरं भवतु ते पृथ्वी शेषमूर्तेः शिखण्डकः ॥ ८३ ॥
प्रबोधसुभगैः स्मेरैः प्रसन्नैः शीतलैश्च नः । कटाक्षैः प्लावय क्षिप्रं कृपैकोदन्वदूर्मिभिः ॥ ८४ ॥
त्वयि न्यस्तभराणां नस्त्वमेतां क्षन्तुमर्हसि । विदिताशेषवेद्यस्य विज्ञापनविडम्बनाम् ॥ ८५ ॥
इत्थं वदति देवानां समाजे वेधसा सह । ववन्दे पृथिवी देवं विनतत्राणदीक्षितम् ॥ ८६ ॥
तनुमध्या विशालाक्षी तन्वी पीनपयोधरा । मायेव महती तस्य वनितारत्नरूपिणी ॥ ८७ ॥
आबद्धमण्डलैर्भृङ्गैरलकामोदमोहितैः । अयत्नलब्धां बिभ्राणा मायूरच्छत्रसंपदम् ॥ ८८ ॥
प्रियसन्दर्शनानन्दजनितैरश्रुबिन्दुभिः । न्यस्तमौक्तिकनैपथ्यैः परिष्कृतपयोधरा ॥ ८९ ॥
प्रस्फुरन्तं प्रियस्येव परिरम्भाभिलाषिणम् । दक्षिणादितरं बाहुं दक्षिणा बहुमन्यत ॥ ९० ॥
विपदं च जगादैषा विपञ्चीमधुरस्वना । विलक्षस्मितसंभिन्नमौक्तिकाधरविद्रुमा ॥ ९१ ॥
अथ तान् भव्यया वाचा भगवान् प्रत्यभाषत । प्रतिश्रुत्प्राप्तनिर्ह्रादपाञ्चजन्याभिनन्द्यया ॥ ९२ ॥
मा भैषुरसुरानीकाद्भवन्तो मदुपाश्रयाः । मदाज्ञामनवज्ञातुः परिभूत्या न भूयते ॥ ९३ ॥
अवतार्य भुवो भारमवतारो ममामराः । अनादिनिधनं धर्ममक्षतं स्थापयिष्यति ॥ ९४ ॥
यावदिष्टभुजो यावदधिकारमवस्थिताः । परिपाल्यत स्वानि पदानि विगतापदः ॥ ९५ ॥
दमनाद्दनुजेन्द्राणां द्रक्ष्यथ त्रिदशाधिपाः । भूयोऽपि लघुतां प्राप्तां भुवमुल्लाघितामिव । ९६ ॥
दैतेयमृगसङ्घाते मृगयारसभागिभिः । भवद्भिरपि मेदिन्यां भवितव्यं नराधिपैः ॥ ९७ ॥
इति ताननवादेशस्समादिश्य जनार्दनः । अवधीरितदुग्धाब्धिर्मथुरायां मनो दधे ॥ ९८ ॥

आश्वास्य वागमृतवृष्टिभिरादितेयान् दैतेयभारनमितां पृथिवीं च देवीम् ।
प्रादुर्बुभूषुरनघो वसुदेवपत्न्यां पद्मापतिः प्रणिदधे समयं दयायाः ॥ ९९ ॥

साधूनां स्वपदसरोजषट्पदानां धर्मस्य स्थितिमनघां विधातुकामः ।
यद्गर्भं(र्भो) जगदखिलं स एव गर्भो देवक्याः समजनि देवदेववन्द्यः ॥ १०० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये प्रथमः सर्गः ।

## २. द्वितीयः सर्गः

अथागमानामनघेन मूम्ना धर्मस्य पूर्णेन धनागमेन । दिवौकसां दर्शयता विभूतिं देवी बभौ दौहृदलक्षणेन ॥ १ ॥
शृङ्गारवीराद्भुतचित्ररूपं गर्भे त्रिलोकैकनिधिं वहन्त्याः । परावरक्रीडितकर्बुराणि द्वेधाभवन् दौहृदलक्षणानि ॥ २ ॥
अशेषवेदैरधिगम्यभूम्ना सिद्धेन सिद्धैश्च निषेवितेन । अमानुषी नूनमभूदयत्नात्कृष्णेन केनापि रसायनेन ॥ ३ ॥
शतह्रदाबन्धुरया स्वकान्त्या सञ्चारिजाम्बूनदबिम्बकल्पा । त्वय्यन्तसिद्धेन रसायनेन कालेन भेजे कलधौतलक्ष्मीम् ॥४॥
मयूरपिञ्छद्युतिभिर्मयूखैस्तत्कान्तिरन्तर्वसतस्त्रिधाम्नः । श्यामा बहिर्मूलसिता बभासे मङ्गल्यरत्नाङ्कुरपालिकेव ॥ ५ ॥
काले बभासे वसुदेवपत्न्याः कर्पूरलिप्तेव कपोलशोभा । शशिप्रभा सप्तमगर्भकान्तिरच्युतावशिष्टेव शनैरुदीर्णा ॥ ६ ॥
नवेन्दुनिष्यन्दनिभश्चकाशे वर्णः प्रतीकेषु मधुद्रवाङ्ग्याः । अन्तः स्थितेन प्रथमेन पुंसा प्रवर्तितं सत्त्वमिवावदातम् ॥
करम्बिता किञ्चिदिव प्रसृप्तैस्तेजोभिरन्तर्वसतस्त्रिधाम्नः । मरीचिभिः स्वैरभवत्प्रजानां मङ्गल्यरत्नाङ्कुरपालिकेव ॥ ८ ॥
तस्यास्सुधोल्लासजुषः कटाक्षाः संक्षुब्धदुग्धाम्बुधिसौम्यभासः । जगत्त्रयीसौधविलेपनार्हां वितेनिरे वर्णसुधामपूर्वाम् ॥९॥
रक्षाविधौ राक्षसदानवानां कारागृहे कंसनियोगभाजाम् । संपश्यमाना सकृदीक्षिता वा संक्षोभयामास मनांसि सैषा ॥
भुक्ता पुरा येन वसुन्धरा सा स विश्वभोक्ता मम गर्भभूतः । इति ध्रुवं सूचनमाचरन्ती तत्तादृशं नाटितकं ततान ॥
समाधिनुन्नेत्रकुर्पविलानां सन्तोषसस्योदयमेघकान्त्या । चकास तस्याः स्तनचूचुकाभा गर्भत्विषा गाढमिवानुलिप्ता ॥
कस्तूरिकाकाम्यरुचिस्तदीया रम्या बभौ चूचुकरत्नकान्तिः । तद्गर्भसन्दर्शनलोलुपानामन्तर्दृशामञ्जनकल्पनेव ॥ १३ ॥
परावराणां प्रभवस्य पुंसः प्रकाशकत्वं प्रतिपत्स्यमानाम् । अभावयन् भावितचेतसस्तां विद्यानिधिं विश्वपितामहीं च ॥
लिलेख विश्वानि जगन्त्यभिज्ञा लीलाहृते चित्रपटे यथार्हम् । प्रायः प्रजानां पतयः प्रतीता यन्मातृकास्स्वेषु विधिष्वभूवन् ॥
निराशिषां पद्धतिमादधाना नैश्रेयसीं नीतिमुपज्ञयन्ती । पुण्याशया पूर्वयुगप्ररोहमियेष देवी भुवने विधातुम् ॥ १६ ॥
अनाप्तपूर्वं किमपेक्षितं ते किं भुक्तपूर्वेष्वधुनोपदद्याम् । वयस्ययाऽभावविदाऽनुयुक्ता न किञ्चिदित्येव जगाद नाथा ॥
अनादरे देवि सखीजनानां दया न दूयेत कथं तवेति । उपह्वरे संलपिता मनोज्ञैरालोकनैरुत्तरमाचचक्षे ॥ १८ ॥
अशेत सा काममजातनिद्रा मातुं प्रवृत्तेव पदानि चक्रे । अध्यास्त लोकानवधीरयन्ती भद्रासनं भावितपारमेष्ठ्या ॥१९॥

परिक्रमप्रेक्षितभाषिताद्यैरन्यादृशैरात्तविभावनीयैः । मदोपपन्ना मदलालसा वा जितश्रमा वेति जनैश्शशङ्के ॥ २० ॥
शेषे शयानां गरुडेन यान्तीं पद्मे निषण्णामधिरत्नपीठम् । हयाननैराश्रितवन्दिकृत्यां स्वामाकृतिं स्वप्नदृशा ददर्श ॥ २१ ॥
अन्तःस्थितं यस्य विभोरशेषं जगन्निवासं दधती तमन्तः । तदात्मनो विश्वमपश्यदन्तस्तर्कातिगं तादृशमद्भुतं नः ॥
सुरासुराधीश्वरमौलिघाताद्विशीर्णजाम्बूनदवेत्रशृङ्गम् । आलक्ष्यसन्तोषमलक्ष्यमन्यैरनीकनेतारमवैक्षतारात् ॥ २३ ॥
त्रिलोकमाङ्गल्यनिवेशवेद्याः सञ्जीवनीं वाचमुदीरयन्ती । नियोगयोग्याननधप्रसादा नाकौकसां नाममिराजुहाव ॥ २४ ॥
यदृच्छया यादवधर्मपत्नी यामाह धर्मेषु परावरेषु । अदृष्टपूर्वापरयापि वाचा प्रतिश्रुता नूनमभावि तस्याः ॥ २५ ॥
क्रियामुपादित्सत विश्वगुप्त्या कृतापराधेऽपि कृपामकार्षीत् । मुनीन्द्रवृत्त्या मुखरीभवन्ती मुक्तिक्षमां वक्तुमियेष विद्याम् ॥
सतां चतुर्वर्गफलप्रसूतौ नारायणे गर्भगते नताङ्गी । अमङ्कुरामुन्नतिमाश्रयन्ती सर्वस्य साऽदित्सत सर्वमेका ॥ २७ ॥
कृशोदरी तारकयाऽभिनन्द्या केनापि धाम्ना कृतवृद्धियोगा । अतीत्य कार्श्यं क्रमशः प्रपेदे परामभिख्यां तनुरैन्दवीव ॥
निगूढमन्तर्दधता निविष्टं पद्मापरिष्कारमणिं प्रभूतम् । मध्येन काले प्रचितेन तस्या मञ्जूषया रूप्यभुवा बभूवे ॥२९॥
शनैश्शनैस्तामुपचीयमानामन्तस्स्थकृष्णामवलोकयन्तः । दर्शान्तदीप्तामिव चन्द्रलेखां चक्रुश्चकोरायितमात्मनेत्रैः ॥३०॥
मयि स्थिते विश्वगुरौ महीयान् मा भूद्भुवो भार इतीव मत्वा । सखीजनानामवलम्ब्य हस्तान् सञ्चारलीलां शनकैश्चकार ॥
मुकुन्दगर्भा मुकुरेषु देवी नापश्यदात्मानमवाप्तभूषा । नाथत्विषा नन्दकदर्पणेनादिदृक्षतात्मानमदृश्यमन्यैः ॥ ३२ ॥
स्रजः प्रभूता न शशाक वोढुं दूरे कथा रत्नविभूषणानाम् । भविष्यति क्षोणिभरापनोदे प्रत्यायनं प्राथमिकं तदासीत् ॥
दिवौकसो देवकवंशलक्ष्मीं विलोक्य तां लोकनिधानगर्भाम् । विभूतिमग्रेसरवेदवादा व्याचख्युरस्या विविधप्रकाराम् ॥
पतिस्ससत्त्वामपि तत्प्रभावाददुःखशीलां समये भवित्रीम् । सुखैकतानामवलोक्य देवीं स्वसंपदं सूचयतीति मेने ॥३५॥
पितृत्वमासाद्य सुरासुराणां पितामहत्वं प्रतिपत्स्यमानः । अनन्तगर्भामवलोक्य देवीमतुष्यदन्येषु गताभिलाषः ॥ ३६ ॥
तापोपशान्तिं जगतां दिशन्ती सन्ध्याऽपरा साधुजनप्रतीक्ष्या । तामीदृशीं विश्वपितुः प्रसूतिं संवेदयन्तीव समाजगाम ॥
सुवर्णपीताम्बरवासिनी सा स्वधामसंच्छादितसूर्यदीप्तिः । उपासनीया जगतां बभासे मुरद्विषो मूर्तिरिव द्वितीया ॥३८॥
प्रसक्तपातश्चरमाम्बुराशौ रक्तोरुबिम्बो रविरस्तशैलात् । दिनान्तनागेन दृढप्रणुन्नं मनश्शिलाशृङ्गमिवावभासे ॥ ३९ ॥
निमज्जता वारिनिधौ सवित्रा को नाम जायेत करग्रहीता । तदेति संभावनयैव नूनं दूरादुदक्षेपि कराग्रमुच्चैः ॥४०॥
स्फुरत्प्रभाकेसरमर्कबिम्बं ममज्ज सिन्धौ मकरन्दताम्रम् । सन्ध्याकुमार्या गगनाम्बुराशेः क्रीडाहृतं क्षिप्तमिवारविन्दम् ॥
फणामणिप्रेक्ष्यखरांशुबिम्बः सन्ध्यासुपर्णीमवलोक्य भीतः । तापाधिको वासरपन्नगेन्द्रः प्रायेण पातालबिलं विवेश ॥४२॥
प्रदोषरागारुणसूर्यलक्षाद्दिशागजो दृप्त इवातिघोरः । कालोपनीतं मधुना समेतं मन्ये पयोधिः कबलं न्यमुङ्क्त ॥ ४३ ॥
तदा तमः प्रोषितचन्द्रसूर्ये दोषामुखे दूषितसर्वनेत्रम् । वियोगिनां शोकमयस्य वह्नेरागतो धूम इवान्वभावि ॥४४॥
सतारपुष्पा धृतपल्लवश्रीः प्रच्छायनीरन्ध्रतमःप्रताना । विश्वाभिनन्द्या ववृधे तदानीं वैहायसी कापि वसन्तवन्या ॥४५॥
अलक्ष्यत श्यामलमन्तरिक्षं ताराभिरादर्शितमौक्तिकौघम् । निवत्स्यतो विश्वपतेरवन्यां कालेन भृत्येन कृतं वितानम् ॥

अभृङ्गनादप्रतिपन्नमौना निमेषभाजो नियतं वनस्थाः । दूरं गते स्वामिनि पुष्करिण्यस्तत्प्राप्तिलाभाय तपो वितेनुः ॥४७॥
निर्मीलितानां कमलोत्पलानां निष्पन्नसख्यैरिव चक्रवाकैः । विमुक्तभोगैर्विदधे विषण्णैर्विबोधवेलावधिको विलापः ॥४८॥
तमिस्रनीलाम्बरसंवृताङ्गी श्यामा बभौ किञ्चिदतीत्य सन्ध्याम् । प्राचीनशैले समयान्निगूढं समुद्यता चन्द्रमिवाभिसर्तुम् ॥
निशाकरेण प्रतिपन्नसत्त्वा निक्षिप्तदेहेव पयोधितल्पे । जगत्समीक्ष्या जहती च कार्श्यं प्राची दिशा पाण्डरतामयासीत् ॥
तमःप्रसङ्गेन विमुच्यमाना गौरप्रभा गोत्रभिदाऽभिनन्द्या । विधूदयारम्भविशेषदृश्या प्राची दिशाऽभासत देवकीव ॥५१॥
अपत्यलाभं यदुवीरपत्न्या महोदधौ मग्नसमुत्थितेन । तद्वंशमान्येन समीक्ष्य पूर्वं प्राप्तं प्रतीतेन पुरोधसेव ॥ ५२ ॥
क्ष्वेलोपमे सन्तमसे निरस्ते सोमं सुधास्तोममिवोद्वमन्ती । दुग्धोदवेलेव दुदोह लक्ष्मीमाशा मनोज्ञाममरेन्द्रमान्या ॥५३॥
तमस्समाक्रान्तिवशेन पूर्वं जज्ञे निमग्नैरिव भूतधात्र्याम् । ततस्तुषारांशुकरावगूढैरुत्तभ्यमानैरिव शैलशृङ्गैः ॥ ९४ ॥
दिशस्तदानीमवनीधराणां सगैरिकैः पारदपङ्कलेपैः । चकाशिरे चन्द्रमसो मयूखैः पञ्चायुधस्येव शरैः प्रदीप्तैः ॥ ५५ ॥
समुन्नमन्ती कुटिलायतात्मा शशाङ्कलेखोदयदृश्यकोटिः । वियोगिचेतोलवने प्रवीणा कामोद्यता काञ्चनशङ्कुलेव ॥५६ ॥
तमांसि दुर्वारबलस्स कालः प्रायो विलोप्तुं सहसा दिशां च । मनांसि कामश्च मनस्विनीनां प्रायुङ्क्त शैत्याधिकमर्धचन्द्रम् ॥
करेण संकोचितपुष्करेण मदप्रतिच्छन्दकलङ्कभूमा । क्षिप्त्वा तमश्शैवलमुन्ममज्ज मग्नो दिशानाग इवेन्दुरब्धेः ॥९८॥
मदोदयाताम्रकपोलभासा शक्रस्य काष्ठा शशिना चकाशे । उदेयुषा व्यञ्जयितुं त्रिलोकीं नाथस्य सा नाभिरिवाम्बुजेन ॥
समीपतस्सन्तमसाम्बुराशेः बभार शङ्खाकृतिरिन्दुबिम्बः । पित्तोपरागादिव पीतिमानं दोषाविलप्रोषितदृष्टिदत्तात् ॥ ६० ॥
कृशोदरीलोचनकृष्णलक्ष्मा रात्र्याः समिद्धोदयराग इन्दुः । कस्तूरिकाकुङ्कुमचित्रितात्मा कर्पूरविन्यास इवान्वभावि ॥
प्रसादमन्तःकरणस्य दाता प्रत्यक्षयन्विश्वमिदं प्रकाशैः । तमश्च रागं च विधूय चन्द्रः सम्मोदनं सत्त्वमिवोल्ललास ॥
निशाकरो वारिधिनिस्वनानां निष्पादकः कुन्दरुचिश्चकाशे । उदेष्यतश्चक्रभृतो नियोगात् प्रादुर्भवन् प्रागिव पाञ्चजन्यः ॥
मृगेण निष्पन्नमृगाजिनश्रीः स्वपादविक्षेपमितान्तरिक्षः । मुरद्विषो वामनमूर्तिभाजः पर्यायतामन्वगमच्छशाङ्कः ॥ ६४ ॥
जिगाय शङ्खाश्रितशैवलाभश्चारुन्नतेश्चन्द्रमसः कलङ्कः । उदीयमानस्य महोर्मियोगात् सामिच्युतं सागरमूलपङ्कम् ॥६५॥
उदेत्य तुङ्गादुदयाद्रिशृङ्गात् तमोगजानग्रकरेण निघ्नन् । निशाकरस्तन्मदलेपलक्ष्मा सिताभिशुः सिंहदशामयासीत् ॥
निशीथलक्ष्म्या इव पुण्डरीकं निर्वेशसिन्धोरिव फेनचक्रम् । तमन्ववैक्षन्त विलासतन्त्रास्तारामणीनामिव सूतिशुक्तिम् ॥
उदारतारागणबुद्बुदौघश्चन्द्रेण संपन्नसुधाप्रसूतिः । अशेषदृश्यामधिगम्य लक्ष्मीमालोकदुग्धोदधिराबभासे ॥ ६८ ॥
प्रकाशयन् विश्वमिदं यथावच्चन्द्रोदयोद्दीपितसौम्यतारः । आसीन्निशीथो जगतः प्रभूतादन्धस्य दैवादिव दृष्टिलाभः ॥
विशोधिताद्विष्णुपदात्क्षरन्ती विष्वङ्मुखी सागरवृद्धिहेतोः । तमोमयीं सूर्यसुतां निगीर्य ज्योत्स्नानदी शोणमपि व्यमुञ्चत् ॥
प्रियामुखैस्तोयमधु प्रदिष्टं पीत्वा नवं प्रीत इवाम्बुराशिः । समेत्य चन्द्रद्युतिनर्तकीभिस्तरङ्गितं ताण्डवमाततान ॥ ७१ ॥
कलङ्कचित्रीकृतमिन्दुखण्डं तमःसमध्यासितसत्त्वकल्पम् । अशुष्कशैवालमिवावभासे सिद्धापगासैकतमर्धदृश्यम् ॥ ७२ ॥
स्वमध्यसंपन्नविशुद्धधामा श्यामा च सा देवकनन्दनी च । तमः क्षिपन्त्यौ जगतां त्रयाणामन्योन्यसंवादमिवान्वभूताम् ॥

शाखावकाशेषु कृतप्रवेशश्चन्द्रातपैराश्रितचारकल्पैः । हतावशिष्टानि तमांसि हन्तुं स्थानं तदाक्रान्तममृग्यतेव ॥ ७४ ॥
पराकृतध्वान्तनिकायपङ्कैः पर्यासतारागणफेनपुञ्जैः । अशोभत चौरसमायुधस्य यशःप्रवाहैरिव चन्द्रपादैः ॥ ७५ ॥
ददानया दिक्सरितां प्रसादं प्रसक्तहंसागमया स्वकान्त्या । अपाकृतध्वान्तघनप्रवृत्त्या शरत्त्विषा चन्द्रिकया चकाशे ॥
कलावता कामविहारनाट्ये कालोचितं कल्पयतेव नर्म । अमोघमायापलितंकरण्यः प्रायो दिशां दीधितयः प्रयुक्ताः ॥
कदम्बमालाभिरधीतलास्यः कल्याणसंभूतिरभूत्प्रजानाम् । प्रियोदयस्फीतरुचो रजन्याः संतोषनिःश्वासनिभः समीरः ॥
प्रायेण हंसैरवधूतसङ्गा चारुस्मिता संभृतभृङ्गनादा । सर्वोपभोग्ये समये प्रसुप्तं कुमुद्वती कोकनदं जहास ॥ ७९ ॥
कलङ्कलक्षेण समैक्षि काचित् कस्तूरिकापत्रविशेषकान्तिः । सुधांशुबिम्बव्यपदेशदृश्ये मुग्धे रजन्या मुखपुण्डरीके ॥
तलेष्ववेपन्त महीरुहाणां छायास्तदा मारुतकम्पितानाम् । शशाङ्कसिंहेन तमोगजानां लूनाकृतीनामिव गात्रखण्डाः ॥
तमस्तरङ्गानवसादयन्त्या समेयुषी चन्द्रिकया महत्या । सुरस्रवन्त्येव कलिन्दकन्या श्यामा बभौ सान्द्रनवोत्पलश्रीः ॥
स्वविप्रयोगव्यसनान्निपीतं भृङ्गापदेशेन कुमुद्वतीभिः । सुधाभिराप्लाव्य करस्थिताभिः प्रच्यावयामास विषं सुधांशुः ॥
चकाशिरे पत्रकलासमृद्ध्या व्योमोपमे वारिणि कैरवाणि । कलङ्कदृश्यभ्रमराणि काले नाथेन साधर्म्यमुपागतानि ॥८४॥
सरिन्मुखोपाहृतमम्बुराशिः पीत्वेव तोयं मधु जातहर्षः । चकार चन्द्रप्रतियातनानां करग्रहैः कामपि रासलीलाम् ॥
प्रसादभाजोरुभयोरभूतामुभावनिर्धार्यमिथोविशेषौ । नभःस्थले शीतरुचिस्सतारे सकैरवे तत्प्रतिमा च तोये ॥ ८६ ॥
नभस्तुषारांशुमयूखयोगात्तमिस्रया मोक्षमविघ्नये न्द्रते)व । अतृष्णतरतत्त्वविदो निशायामन्तर्मुखं चित्तमिवान्वविन्दत्(त्पयोगात्)
सहोदिता चन्द्रमसा बभासे ज्योत्स्ना पयोधेरुपजातरागा । तदातने संजननेऽपि शौरेः सहायिनी सागरसंभवेव ॥८८॥
प्रवुद्धताराकुमुदाब्धिचन्द्रे निद्राणनिःशेषजने निशीथे । स तादृशो देवपतेः प्रसूतिं पुष्यन्बभौ पुण्यतमो मुहूर्तः ॥
भागेन पूर्वेण तमोमयेन प्रकाशपूर्णेन च पश्चिमेन । तदा निशीथः स सतां प्रसत्त्यै संसारमुक्त्योरिव सन्धिरासीत् ॥
प्रागेव जातेन सितेन धाम्ना मध्योपलक्ष्येण च माधवेन । प्रकामपुण्या वसुदेवपत्न्या सम्पन्नसाम्येव निशा बभासे ॥
सह प्रतिच्छन्दशशाङ्कभेदैः सरस्वतां ताण्डविनस्तरङ्गाः । अवेक्ष्य शौरेरवतारवेलां सन्तोषनिघ्ना इव संप्रणेदुः ॥
अवादितोदीरिततूर्यनादं दिशाभिराम्रेडितदिव्यगीतम् । सतामुपस्थापितसत्त्वलास्यं सङ्गीतमाङ्गल्यमभूत्तदानीम् ॥ ९३ ॥
प्रदीपितैः कंसगृहेषु दीपैस्तापैश्च भावेषु तपोधनानाम् । अलभ्यत क्षिप्रमलब्धभङ्गैरहेतुनिर्वाणदशानुभूतिः ॥ ९४ ॥
अजः स्वजन्मार्हतयाऽनुमेने यामष्टमीं यादवभावमिच्छन् । द्वितीयया भावितयोगनिद्रा साऽभूत्तदानीं प्रथमा तिथीनाम् ॥

अथ सितरुचिलग्ने सिद्धपञ्चग्रहोच्चे व्यजनयदनघानां वैजयन्त्यां जयन्त्याम् ।
निखिलभुवनपद्मक्लेशनिद्रापनुत्त्यै दिनकरमनपायं देवकीपूर्वसन्ध्या ॥ ९६ ॥
अवतरति मुकुन्दे संपदामेककन्दे सुरमितहरिदन्तां स्वादुमाध्वीकदिग्धाम् ।
अभजत वसुदेवस्थानमानन्दनिघ्नैरमरमिथुनहस्तैराहितां पुष्पवृष्टिम् ॥ ९७ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये द्वितीयः सर्गः ।

# ३. तृतीयः सर्गः



अथ जगन्ति बभूवुरनाविलान्यतिमिरा हरितः प्रचकाशिरे । अभजदेव निशा दिवसश्रियं जननभागि(जि)नि देवदिवाकरे ॥

ननृतुरप्सरसो दिवि नन्दिताः किमपि गीतमगीयत किन्न[illegible]ः । श्रुतिसुखैः समतोषयत स्वनैरमरदुन्दुभिरानकदुन्दुभिम् ॥

दशसु तत्र दिशास्वशरीरिणी जय जयेति बभूव सरस्वती । अजितमेकमगोचरयत्स्वयं स्वरसवृत्तिरसावसुरान्तकम् ॥३॥

अनतिवेलसमीरणचोदितैः शिशिरशीकरशीभरिताम्बरैः । जलधरैरभितो दिवि दध्वने सुरगजैरिव सूचितमङ्गलैः ॥ ४ ॥

ववुरथो मरुतस्त्रिदशाङ्गनावदनसौरभसारभृतः शुभाः । मुदितनिर्जरमुक्तसुरद्रुमप्रसववृष्टिमधुद्रवमेदुराः ॥ ५ ॥

मधुरिपोरवतारमहोत्सवे मुमुदिरे मथुरापुरदेवताः । यदभिगन्तरि भक्तजने वरं ददुरशेषमतन्द्रितचेतसः ॥ ६ ॥

अवदधानधियो मुनयस्तदा यदनधीतमधीतवदञ्जसा । निगमजातमशेषमवेक्ष्य तन्निरविशन्निव मुक्तिमयीं दशाम् ॥ ७ ॥

प्रसदनं शरदागमसंभवं नभसि मासि नदीभिरुपाददे । महितयोगविदां मतिभिस्समं श्रुतिभिरप्यनुपप्लवनीतिभिः ॥ ८ ॥

निखिलचेतनमानसनिःसृताः कलुषताः समुदेत्य किल क्षणात् । विविशुरम्भ इव स्वयमापगाः जलनिधेरिव भोजपतेर्मनः ॥

असुरवीरगृहाणि पृथग्विधैरशुभशंसिभिरानशिरे मुहुः । अमरराजपुरेषु जजृम्भिरे शुभनिमित्तशतानि पुनः पुनः ॥१०॥

चरमतश्च ऋणादिव देवकीपतिरमुच्यत शृङ्खलतः स्थिरात् । निखिलबन्धनिवर्तकसन्निधौ विगलनं निगलस्य किमद्भुतम् ॥

उदितमात्मनि देवकसम्भवादनुजभेदनमङ्कगतं दधौ । कमपि काञ्चनभूभृदधित्यका हरिहयोपलशृङ्गमिवाद्भुतम् ॥१२॥

विधृतशङ्खरथाङ्गगदाम्बुजः शबलितः शुभया वनमालया । पितुरसूत मुदं पृथुकस्तदा जलधिडिम्बनिभो जननीधृतः ॥

पितरम(त्म)व्जसुवामनपायिनं प्रियतमाङ्कगतं परिपश्यता । स विभुरानकदुन्दुभिना महानवितथैस्स्वगुणैरभितुष्टुवे ॥१४॥

प्रणिपतामि भवन्तमनन्यधीरखिलकारणमाश्रिततारणम् । अनुगमादनिदंप्रथमा गिरः किमपि यत्पदमेकमधीयते ॥ १५ ॥

विषमकर्मविपाकपरम्पराविवशवृत्तिषु देहिषु दुस्तरम् । करुणया तव देव कटाक्षिताः कतिचिदेव तरन्ति भवार्णवम् ॥

त्वदनुभावमहोदधिशीकरैरवशपातिभिराहितशक्तयः । अवधिभेदवतीमुपभुञ्जते स्वपदसम्पदमब्जभवादयः ॥ १७ ॥

श्रुतिकिरीटशुभाश्रयविग्रहः परमसत्त्वनिधिः प्रतिपद्यसे । जगदनुग्रहमारुतचोदितो विविधरूपतरङ्गविकल्पनाम् ॥ १८ ॥

त्वयि न देव यदायतते न तज्जगति जङ्गममन्यदथापि वा । इति महिम्नि तव [illegible]मिते परं विभजने विविधैस्स्थितमागमैः ॥

अखिललोकपितुस्तव पुत्रतामहमयाचमनन्यमनोरथः । वरद वाञ्छितदानधृतव्रते त्वयि तदेवमयत्नमपच्यत ॥ २० ॥

अवनिभारनिराकरणार्थिनां क्रतुभुजामभिलाषमवन्ध्ययन् । जितरिपूणि बहूनि दयानिधे विहरणानि विधातुमिहार्हसि ॥ २१ ॥

दनुजमोहनदोहलिना त्वया सहजलाञ्छनसंवरणं क्षमम् । तदधुना शमयन्मम साध्वसं यवनिकामधिगच्छ यथेप्सितम् ॥

इति स भीतमवेक्ष्य दयानिधिः स्मितमुखो वसुदेवमभाषत । त्वमसि मे जनकः किमिहान्यथा किमपि तात मुधा कथितं त्वया ॥

इयममर्त्यपितुस्तव गेहिनी दिविषदां जननी मम चानघा । अभिमतं युवयोरनवग्रहं समयभावि मयैव समर्थ्यते ॥२४॥

यदि बिभेषि भजामि मनुष्यतामथ च मां नय नन्दगृहं क्षणात् । दुहितरं च समानय तस्य तां गतभयो भव दूरगते मयि ॥

अथ निशम्य नियोगमभङ्गुरं मधुजितो मधुराक्षरमन्थरम् । हितमिदं प्रतिपद्य तमाददे गुरुतरं क्षमया लघुतां गतम् ॥
श्रुतिसुगन्धितदाननचन्द्रिकामुषितमोहतमा मुनिसंनिभः । अधिजगाम स तन्मयतां क्षणादनिमिषत्वसुत प्रतिसंदधे ॥
तुहिनभानुविवाकरलोचनं निगमनिःश्वसितं स्वसुतस्य तत् । अनुबभूव मुहुर्मुहुरादरादनवमाननमानकदुन्दुभिः ॥ २८ ॥
जिगमिषुः स दिशो दश यादवः सकृदवैक्षत साध्वसविह्वलः । अनघवैभवमर्भकमुद्वहन्नमितगुप्तिनिरुद्धगतौ गृहे ॥२९॥
विजघटे सहसैव कवाटिका व्रजमथ व्रजतो यदुभूभृतः । उपलकल्पमशेरत रक्षकाः सरणिमादिदिशुर्गृहदेवताः ॥ ३० ॥
क्षरदसूनिव यामिकरक्षकान्सुषितमञ्जुगिरः शुकशारिकाः । यदुकुलेन्दुरपश्यदमीलितान् परिजनानपि चित्रगतानिव ॥
उपयतो विशिखां सदनान्तरात्कुवलयाभकुमारतनुत्विषा । शतमखोपलमेचकया द्रुतं शमितसंतमसा हरितो वसुः ॥३२॥
श्रुतिमयो विहगः परितः प्रभुं व्यचरदाशु विधूतनिशाचरः । अनुजगाम च भूधरपन्नगः स्फुटफणामणिदीपगणोद्वहः ॥
दिनकरोपमदीधितिभिस्तदा दनुजदेहविदारणदारुणैः । परिगतः किल पञ्चभिरायुधैर्यदुपतिः प्रजहावसहायताम् ॥ ३४ ॥
प्रगुणमिन्दुनिवेदितपद्धतिर्यदुकुलेन्दुरथो यमुनानदीम् । परमपूरुषमक्षतपौरुषः पतगराज इवाशु वहन्ययौ ॥ ३५ ॥
तनुतरङ्गपृषत्कणशीतलः सुरभिकैरवसौहृदवासितः । अभिसमेतमसेवत मारुतो यमुनया प्रहितो यदुपुङ्गवम् ॥ ३६ ॥
पवनकम्पितपल्लवपाणिका प्रहितपुष्पभरा पदवीमुखे । उपजुहाव किल भ्रमरस्वनैर्यदुपतिं यमुनोपवनस्थली ॥ ३७ ॥
निमिषितासितनीरजलोचना मुकुलिताब्जमुखी सवितुः सुता । ल(क)लितदीनरथाङ्गयुगस्वना कुहकदैन्यमशोचदिव प्रभोः ॥
विकचकैरवतारकिताकृतिं तनुमतीमिव शारदयामिनीम् । त्वरितमम्बुनिधेरभिसारिकां तरितुमैहत सत्यसमीहितः ॥ ३९ ॥
भवति किं नु भविष्यति वा किमित्यनवधारितशौरिविहारया । चकितयेव विरोचनकन्यया विधुतवीचिकरं किल विव्यथे ॥
घनतमःपरिपाकमलीमसैर्गुरुभिरूर्मिगणैरनुपप्लुतः । अतितताार दिनाधिपतेः सुतामनघयोगमना इव संसृतिम् ॥ ४१ ॥
यदुपतेर्यमुना त्वरितं यतः प्रतियतश्च समर्पितपद्धतिः । स्वयममर्त्यमदावलमज्जनी चरणलङ्घ्यजला समजायत ॥ ४२ ॥
अजनि पश्चिमतो भृशमुन्नता रविसुता पुरतः स्खलशेषिता । अधिरुरोह पदं किमसौ हरेः प्रतिययौ यदि वा पितरं गिरिम् ॥
अकृतसेतुमनाकलितप्लवां जननसिन्धुदृढप्लववनुद्वहन् । रविसुतामतिलङ्घ्य रमापतिं सपदि घोषसमीपमुपानयत् ॥ ४४ ॥
अथ कयाचन कारणनिद्रया विवशसुप्तजनं व्रजमाविशत् । धनदपत्तनसम्पदि यत्र सा स्वसुतमग्र्यमसूयत रोहिणी ॥
उपगते वसुदेवसुतेऽन्तिकं नरकवैरिणि नन्दकुटुम्बिनी । अरणिसम्भवपावकसङ्गमादभजताध्वरवेदिरिव श्रियम् ॥४६॥
न्यधित नन्दवधूसविधे सुतं द्रुतमुपादित गोपकुमारिकाम् । अथ निनाय च देवकनन्दनीशयनमानकदुन्दुभिराशु ताम् ॥
अनवबुद्धजनार्दनकन्यकाविनिमयस्त्वथ भोजगणेश्वरः । दृषदि तामभिहन्तुमपातयत्प्रतिजघान च सा चरणेन तम् ॥
नृपतिराशु पदा निहतस्तया निपतितोदितकन्तुकवद्भवन् । दवसमावृतशैलनिभः क्रुधा दरनिमीलितदृष्टिरदृश्यत ॥ ४९ ॥
उदपतद्दिवमुग्रघनस्वना युवतिरूपयुगात्ययशर्वरी । असुरघातिभिरष्टभिरायुधैरलघुभिश्चपलाभिरिवाश्रिता ॥ ५० ॥
अथ च भोजनियन्तुरयन्त्रिता दनुजहन्तुरुदन्तमुदैरिरत् । पटु गभीरमुदारमनाकुलं हितमविस्तरमर्थ्यमविप्लवम् ॥५१॥
अहमशेषसुरासुरमोहनी यवनिका मधुकैटभमर्दिनः । प्रबलशुम्भनिशुम्भनिषूदने प्रणिहिता हतया तव किं मया ॥५२॥

वसति नन्दगृहे विबुधद्विषां दमयिता वसुदेवसमुद्भवः । अयमसौ तव नाशयितेति सा दरमुदीर्य जगाम यथेप्सितम् ॥
मधुहिरण्यनिभो मधुरापतिर्दिनहुताशनदीनदशां गतः । श्वसितजल्पितवेपितहुंकृतैररतिमायतभीतिरसूचयत् ॥ ५४ ॥
जडमतिः स जनार्दनमायया विहसितत्रपया जनितव्यथः । अपकृतं वसुदेवममोचयद्दयितया सह दीनविलापया ॥ ५५ ॥
किमपि चिन्तितमागतमन्यथा किमिदमित्यवशादुपजातया । विषविदूषितयेव मनीषया मुहुरदूयत मोह(घ)विचेष्टितः ॥
अविषये विपदामसुरान्तके पुनरियेष निकारपरम्पराम् । नियतिरेकमुखी दुरतिक्रमा कृतधिया किमुताविलचेतसा ॥
परिबभूव चुकोप विसिस्मिये परिजहास हरिं प्रजगर्ज च । परिणतेन भवान्तरवासनाग्रहगुणेन भजन्भवितव्यताम् ॥
क्वचन धामनि कंसनिवेदिते सभयमानकदुन्दुभिरावसत् । स्मृतिगतेन सुतेन सजीविता दिनशतानि निनाय च देवकी ॥
विगतकन्यकया च यशोदया नियतिसंभृतनिर्भरनिद्रया । चिरसमागतजागरयान्तिके हरिरपत्यमदृश्यत धन्यया ॥ ६० ॥
यदवबुद्धनिराकुलनीतिभिर्मुनिगणैरधुनापि विमृश्यते । तदिदमागममौलिविभूषणं विधिवशादभवद्व्रजभूषणम् ॥ ६१ ॥
अनववत्समनाकुलधेनुकं प्रचुरदुग्धमचोरभयोद्भवम् । व्रजमनामयविश्वजनं विभुः कृतयुगास्पदकल्पमकल्पयत् ॥ ६२ ॥
अजनि गोपगृहेषु मनोरमैरमितकान्तिभिरप्सरसां गणैः । यदनुभूतिरसेन समेप्यतः शरणयादवशैशवयौवने ॥ ६३ ॥
सुरमहीसुरतोषणमादरान्नवमुपादित नन्द उदारधीः । तरलगोपगणागमसंकुलं तनयजन्ममहोत्सवमद्भुतम् ॥ ६४ ॥
अधिचकार वदान्यमणेः श्रियं व्यधित कल्पतरोरनुकल्पताम् । अजनयच्च सुतप्रसवोत्सवे महति मेघविकत्थनमोह ताम् ॥
निधिमनन्तमिव स्वयमुत्थितं निरवधिं निजभागमिवोदितम् । व्रजभुवः प्रतिलभ्य रमापतिं जहसुरैन्द्रमसारतरं पदम् ॥

पुत्रं प्रसूय तपसा पुरुषं पुराणं कालं चिरं विधिशवात्कृतविप्रकर्षौ ।
शङ्काकलङ्कितधियावपि दम्पती तौ तद्वैभवस्मरणशान्तरुजावभूताम् ॥ ६७ ॥

नन्दसद्मनि नवेन्दुसन्निभौ वासमेत्य वसुदेवनन्दनौ । वृद्धिमापतुरनेहसा स्वयं स्वादुभोगजननीं सुपर्वणाम् ॥ ६८ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये तृतीयः सर्गः ।

## ४. चतुर्थः सर्गः

मनीषितं कैतवमानुषस्य श्रुत्वा भयक्रोधपरिप्लुतात्मा । कंसश्चिरं प्राग्भवकालनेमिश्चिन्तार्णवे मग्न इवावतस्थे ॥ १ ॥
स दुर्दमानासुरसत्त्वभेदावेता समाहूय नृशंसचेताः । प्रस्थापयामास परैरधृष्यं नन्दास्पदं नाथविहारगुप्तम् ॥ २ ॥
कदाचिदन्तर्हितपूतनात्मा कंसप्रयुक्ता किल कापि माया । निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिराविवेश ॥ ३ ॥
स्तन्येन कृष्णः सह पूतनायाः प्राणानपौ लुप्तपुनर्भवायाः । यदद्भुतं भावयतां जनानां स्तनधयत्वं न पुनर्बभूव ॥ ४ ॥
निशम्य तस्याः परुषं निनादं रूक्षं यशोदा रुदितं च सूनोः । ससंभ्रमावेगमुपेत्य भीता तमग्रहीद्दुर्ग्रहमागमानाम् ॥५॥
नन्दश्च तीव्रेण भयेन सद्यः समेत्य पश्यन्नवं कुमारम् । तेनैव तस्य त्रिजगन्नियन्तुः प्रायुङ्क्त रक्षां परमार्थवेदी ॥६॥

गोपाश्च सम्भूय गुहोपमाक्षीं स्वघोषनिर्ह्रादितविश्वघोषाम् । गतासुमैक्षन्त निशाचरीं तां भीमाकृतिं भीमरथीनिवान्याम् ॥

परश्वधैस्तत्क्षणशातितैस्तां विच्छिद्य विन्ध्याचलसानुकल्पाम् । अनःप्रवृत्त्या वहिराशु निन्युः क्रव्याद्बलिं प्राज्यमिव क्षिपन्तः ॥

ग्रहादिदोषानपहन्तुकामा गोतुः सतां गोपतयः समेताः । सुवर्णसूत्रग्रथिताभिरामां पञ्चायुधीमाभरणं ववन्धुः ॥ ९ ॥

रम्याणि रत्नानि रथाङ्गपाणेराकल्पतां नूनमवाप्नुवन्ति । तदङ्गसंस्पर्शरसात्मकामं रोमाञ्चितान्यंशुगणैरभूवन् ॥ १० ॥

स शायितः क्षेमविदा जनन्या पर्यङ्किकायां प्ररुदन् कुमारः । चिक्षेप तुङ्गं शकटं पदाभ्यां गाढाभिघातेन गिरीन्द्रसारम् ॥

विदारितस्तस्य पदाग्रयोगाद्विकीर्यमाणो वहुधा पृथिव्याम् । शब्दायमानः शकटाख्यदैत्यः संक्षोभयामास जगन्त्यभीक्ष्णम् ॥

यदृच्छयोत्क्षिप्तपदे कुमारे शैलोपलक्ष्ये शकटे निरस्ते । सरोजगर्भोपमसौकुमार्यं पस्पर्श तत्पादतलं यशोदा ॥ १३ ॥

अथाङ्गणे जानुपदाग्रहस्तैश्चक्रायुधे चङ्क्रमणप्रवृत्ते । प्रायो धरित्री परिषस्वजे तं सापत्नया सान्द्ररजश्छलेन ॥ १४ ॥

निर्व्याजमन्दस्मितदर्शनीयं नीराजितं कुण्डलरत्नभासा । नन्दस्तदानीं न जगाम तृप्तिं मुग्धाक्षरं प्रेक्ष्य मुखं तदीयम् ॥

विश्वानि विश्वाधिकशक्तिरेको नामानि रूपाणि च निर्मिमाणः । नामैकदेशग्रहणेऽपि मातुर्बभूव कृष्णो वहुमानपात्रम् ॥

तरङ्गितानुश्रवगन्धमादौ तस्याद्भुतं संलपितं सखीभिः । वर्णस्वरादिव्यवसायभूम्ना शिक्षाविदां शिक्षणमग्र्यमासीत् ॥

तमीषदुत्थाय निलीनमारात्संप्रेक्ष्यदन्ताङ्कुरचारुहासम् । सनातनीं दृष्टिमनन्यदृष्टिः सानन्दमालोकत नन्दपत्नी ॥१८॥

पदैस्त्रिभिः क्रान्तजगत्त्रयं तं भव्याशया भावितवालभावम् । करेण संगृह्य कराम्बुजाग्रं सञ्चारयामास शनैर्यशोदा ॥

स्खलद्गतिं द्वित्रपदप्रचाराज्जानुक्रमे जातरुचिं कुमारम् । भुग्ने समावेश्य वलग्नभागे स्तन्यं मुदा पाययते स्म धन्या ॥२०॥

क्रमेण भूयोऽपि विहारकाङ्क्षी नन्दस्य दारैरभिनन्द्यमानः । नित्यानुभूतं निगमान्तभृङ्गैर्निजं पदाब्जं निदधे पृथिव्याम् ॥

स सञ्चरन् साधुजनप्रतीपैर्मा भुज्यतां सेयमितीव मत्वा । चक्रादिभिः पादसरोजचिह्नैरामुद्रयामास महीमनन्यैः ॥२२॥

आलम्ब्य मातुः करपल्लवाग्रं शनैः शनैः सञ्चरतो मुरारेः । वभार चित्रामिव पत्त्ररेखां धन्या पदन्यासमयीं धरित्री ॥

अकर्मनिघ्नो भुवनान्यजस्रं संकल्पलेशेन नियम्य दीव्यन् । प्रचारितः प्रस्नुतया जनन्या पदे पदे विश्रममाचकाङ्क्ष ॥

सुरप्रसूनैः सुरभीकृतानामारोहणान्यङ्गणवेदिकानाम् । तमारुरुक्षुं तरलाङ्घ्रिपद्मं धातारमारोहयदाशु धात्री ॥ २५ ॥

तलेषु तस्याङ्गणपादपानां तालानुकूलेषु गतागतेषु । व्रजस्थिताः स्वर्गसदामशृण्वन्दूरोदितान्दुन्दुभितूर्यनादान् ॥ २६ ॥

य एष लोकत्रयसूत्रधारः पर्यायपात्राणि चराचराणि । आनर्तयत्यद्भुतचेष्टितोऽसौ ननर्त खेलं नवनीतकाङ्क्षी ॥२७॥

गृहेषु दध्नो मथनप्रवृत्तौ पृषत्कणैरुत्पतितैः प्रकीर्णः । निदर्शयामास निजामवस्थां प्राचीं सुधाशीकरयोगचित्राम् ।२८॥

त्रस्यन्मुकुन्दो नवनीतचौर्यान्निर्भुग्नगात्रो निभृतं शयानः । निजानि निःशब्ददशां ययाचे बद्धाञ्जलिं वालविभूषणानि ॥

आरण्यकानां प्रभवः फलानामरण्यजातानि फलान्यभीप्सन् । विस्रंसिधान्याञ्जलिना करेण व्याधात्मजां विश्वपतिः सिषेवे ॥

सुजातरेखात्मकशङ्खचक्रं ताम्रोदरं तस्य करारविन्दम् । विलोकयन्त्याः फलविक्र(य)यिण्या विक्रेतुमात्मानमभूद्विमर्शः ॥

अपूरयत्स्वादुफलार्पणेन क्रीडाशिशोर्हस्तपुटं किराती । रत्नैस्तदा कौस्तुभनिर्विशेषैरापूरितं तत्फलभाण्डमासीत् ॥ ३२ ॥

मुहुः प्रवृत्तं नवनीतचौर्ये वत्सान्विमुञ्चन्तमदोहकाले । उलूखले कुत्रचिदात्तपुण्ये बन्धुं सतां बन्धुमियेष माता ॥३३ ॥

आनीतमग्रे निजबन्धनार्थं दामाखिलं संहितमप्यपूर्णम् । निरीक्ष्य निर्विण्णधियो जनन्याः सङ्कोचशस्तथा स बभूव बन्ध्यः ॥
बद्धं तया भावरतां मुकुन्दं तमन्नविच्छेदिनि कर्मबन्धे । तपस्विनी तत्कतुनीतिरावा सव्रीडमारण्यकथासु तस्थौ ॥३५॥
उलूखलन्यथितेन दाम्ना निबद्धमाकाविलोलनेत्रम् । सहासमैक्षन्त जनाः समन्तादालानितं नागमिवानभिज्ञाः ॥३६॥
अनादराकृष्टमुलूखलं तद्यावर्जुनौ शैलनिभौ बभञ्ज । बभूवतुर्ब्रह्मसुतस्य शापान्मुक्तौ मुनेर्यक्षवरौ तदा तौ ॥ ३७ ॥
शापावधिं ब्रह्मसुतेन दत्तं संप्राप्य तौ शौरिसमागमेन । देहेन दिव्येन विदीप्यमानौ स्तुत्वा हरिं धाम समीयतुः स्वम् ॥
अदृष्टपूर्वं भुवि पूजनादेरुदन्तमुत्पातमुदीक्षमाणाः । समेत्य गोपाः सह माधवेन वृन्दावनं सत्वरमभ्यगच्छन् ॥ ३९ ॥
येनौषधीनामधिपं पुरस्तादाह्लादहेतुं जगतामकार्षीत् । तेनैव दध्यौ मनसा वनं तत्कृष्णो गवां क्षेमसमृद्धिमिच्छन् ॥
अनुग्रहाब्धेरिव वीचिभेदैराप्याययामास शुभैरपाङ्गैः । वनं पृथिव्या इव यौवनं तद्गोप्ता सतां गोधनवंशचन्द्रः ॥ ४१ ॥
आसीद्विधेया पृथिवी पशूनां पुण्ड्रेक्षुरम्याणि तृणान्यभूवन् । तस्मिन्नरण्ये तरुभिः प्र(तेने)पेदे कल्पद्रुमाणामनुकल्पभावः ॥
अदृष्टपूर्वैरधिकां विशेषैरालक्ष्य वन्याममरेन्द्रमान्याम् । नन्दोपनन्दप्रमुखैर्ननन्दे नाकाधिरूढैरिव नाथभूम्ना ॥ ४३ ॥
दैत्यैस्तृणावर्तमुखैरयत्नान्मुहुर्निरस्तैर्मुदितो मुकुन्दः । अभुङ्क्त रामेण सहाद्भुतं तत्पुण्यं वनं पुण्यजनेन्द्रमान्यम् ॥४४॥
सपक्षकैलासनिभस्य गोपा बकस्य पक्षानभितो बबन्धुः । वने तदन्यानपि घोरवृत्तीन्क्षेप्तुं प्रवृत्ता इव केतुमालाः ॥४५॥
पुरस्कृतं मङ्गलगीतवाद्यैः पुंसः प्रसत्त्यै जगतां प्रसूतेः । कयाऽपि तत्र स्पृहयाऽन्वतिष्ठन्कात्यायनं किंचन गोपकन्याः ॥
निशात्ययस्नानसमुद्यतानां निक्षिप्तमाभीरकिशोरिकाणाम् । कूलादुपादाय दुकूलजालं कुन्दाधिरूढो मुमुदे मुकुन्दः ॥४७॥
स चैकहस्तप्रणतिं विधूत्वन्क्षौमार्थिनीनां हरिरङ्गनानाम् । अन्योन्यहस्तार्पणसंप्रवृत्तमासां जहासाञ्जलिमप्यपूर्वम् ॥४८॥
स चानचण्डातकमात्रभाजां क्षौमार्थिनीनां स्वयमर्थ्यमानैः । अनन्यहस्तार्पणसंप्रवृत्तैस्तासां जहासाञ्जलिभिस्तदीयैः ॥
प्रस्तुतमुद्घोषयता परत्वं वीरश्रियो विभ्रममण्डनेन । नीलाद्रिनिर्वेशनिधानधाम्ना नाथो बभासे नवयौवनेन ॥ ५० ॥
विहारपर्यङ्कमचारु शौरेः कल्यं वयः कामगृहीतियोग्यम् । मनोभिरास्वाद्यतमं प्रपेदे माधुर्यमिक्षोरिव मध्यभागः ॥५१॥
वंशस्वनो वत्सविहारपांसुः संध्यागमस्तस्य च वन्यवेषः । आयाति कृष्णे व्रजसुन्दरीणामासीच्चतुःस्कन्धमनङ्गसैन्यम् ॥
समाश्रितां विभ्रमसैन्यभेदैः कान्त्या स्वया कल्पितचारुवप्राम् । व्रजस्त्रियः कृष्णमयीं व्यजानन्क्रीडार्गलां क्षेमपुरीमपूर्वाम् ॥
अनुश्रवाणामवतंसभूतं बर्हावतंसेन विभूषयन्ती । अदिव्यया चर्मदृशैव गोपी समाधिभाजाममजत्समाधिम् ॥ ५४ ॥
कलापिनां कल्पितमाल्यभावैः पत्रैस्तदा पत्रलदेहकान्तिम् । अवाप्य संचारितमालभावं छायात्मतां प्रापुरिवास्य गावः ॥
वितन्वता मान्मथमिन्द्रजालं पिञ्छेन तापिञ्छनिभो बभासे । अनेकरत्नप्रभवेन धाम्ना शारात्मना शैल इवैन्द्रनीलः ॥
मुहुः स्पृशन्ती मुमुदे यशोदा मुग्धाङ्गनामोहनवांशिकेन । मनीषिणां माङ्गलिकेन यूना मौलौ धृतां मण्डनबर्हमालाम् ॥
कृतास्पदा कृष्णभुजान्तराले प्रालम्बबर्हावलिराबभासे । विशुद्धहेमद्युतिरब्धिकन्या श्यामायमानेव तदङ्गकान्त्या ॥ ५८ ॥
साचीकृतानि प्रणयत्नपाभ्यां व्यावृत्तराजीवनिभानि शौरिः । सभ्रूविलासानि ददर्श तासां वक्त्राणि वाचालविलोचनानि ॥
निरङ्कुशस्नेहरसानुविद्धान्निस्पन्दमन्दालसनिर्निमेषान् । वंशेन कृष्णः प्रतिसंबभाषे वार्ताहरान्वामदृशां कटाक्षान् ॥

अशिक्षितं तुम्बुरुनारदाद्यैराभीरनाट्यं नवमास्थितेन। जगे सलीलं जगदेकधाम्ना रागाधिना रञ्जयते तेव विश्वम् ॥६१

अपत्नपासैकतमास्थितानां रागोदधौ कृष्णमुखेन्दुनुन्ने। हस्तावलम्बो न बभूव तासामुल्लक्षणानामुत्कलिकाप्लुतानाम् ॥

अयन्त्रितस्वैरगतिः स तासां संभावितानां करपुष्करेण। प्रस्विन्नगण्डः प्रणयी चकाशे मध्ये वशानामिव वारणेन्द्रः ॥

विमोहने वल्लवगेहिनीनां न ब्रह्मचर्यं विभिदे तदीयम्। संपत्स्यते बालकजीवनं तत्सत्येन येनैव सतां समक्षम् ॥६४॥

स्वसम्भवं कृष्णमवेक्षमाणो बन्धुप्रसूतं च बलं व्रजेशः। निसर्गमैत्र्या नियतैकभावौ न्ययुङ्क्त तौ वत्सकुलानि गोतुम् ॥

अनन्यतन्त्रः स्वयमेव देवान्पद्मासनादीन्प्रजनय्य रक्षन्। स रक्षकः सीरभृता सहासीन्नेता गवां नन्दनियोगवर्ती ॥

कथं व्रजेच्छर्करिलान्प्रदेशान् पद्भ्यामसौ पल्लवकोमलाभ्याम्। इति स्तुतस्तन्यरसा यशोदा चिन्तार्णवे न प्लवमन्वविन्दत् ॥

विहारवित्रासितदुष्टसत्त्वौ मृगेन्द्रपोताविव धीरचेष्टौ। बभूवतुः शाश्वतिकेन भूम्ना बालौ युवानाविव तौ बलाढ्यौ ॥

सिन्दूरितौ वत्सपरागजालैः सितासितौ बालगजाविव द्वौ। उदारलीलावुपलक्ष्य गोप्यः सर्वास्तदाऽनन्यवशा बभूवुः ॥

गोपायमाने पुरुषे परस्मिन् गोरूपतां वेदगिरो भजन्त्यः। भव्यैरसेवन्त पदं तदीयं स्तोभप्रतिच्छन्दनिभैः स्वशब्दैः ॥

अवालिशो बालिशवत्प्रजानां प्रख्यापयन्नात्मनि पारतन्त्र्यम्। न्यदर्शयद्विश्वपतिः पशूनां बन्धे च मोक्षे च निजं प्रभुत्वम् ॥

आत्मोपमर्देऽप्यनुमोदमानादात्माधिकं पालयतश्च वत्सान्। गावस्तदानीमनवामविन्दन् वात्सल्यशिक्षामिव वासुदेवात् ॥

योऽसावनन्तप्रमुखैरनन्तैर्निर्विश्यते नित्यमनन्तभूमा। वैमानिकानां प्रथमः स देवो वत्सैरलेलिह्यत वत्सलात्मा ॥ ७३ ॥

महीयसा मण्डितपाणिपद्मं दध्यन्नसारेण मधुप्लुतेन। दृष्ट्वा ननन्दुः क्षुधयान्वितास्तं वत्सानुचर्यासु वयस्यगोपाः ॥

स्वादूनि वन्यानि फलानि तैस्तैः स्निग्धैरुपानीय निदर्शितानि। रामाय पूर्वं प्रतिपाद्य शेषैः स पिप्रिये सादरमुज्यमानैः ॥

ताभ्यां तदा नन्दनिदेशिताभ्यां रक्षावतीं रामजनार्दनाभ्याम्। विशेषभोग्यामभजद्विभूतिं बृन्दावनं व्यापृतधेनुवृन्दम् ॥

अगाधकासारमहीनशष्पमतीक्ष्णसूर्यं तदचण्डवातम्। प्रच्छायनिद्रायितधेनुवत्सं प्रौढे निदाघेऽपि बभूव भोग्यम् ॥७७॥

न व्याधिपीडा न च दैत्यशङ्का नासीद्गवां व्याघ्रभयं च तस्मिन्। स्वबाहुकल्पेन बलेन सार्धं नारायणे रक्षति नन्दलक्ष्मीम् ॥

निरीतयस्ते निरपायवाञ्छा निःश्रेयसादप्यधिकप्रमोदाः। प्रपेदिरेऽपूर्वयुगानुभूतिं गोपास्तदा गोप्तरि वासुदेवे ॥ ७९ ॥

वत्सानुचर्याचतुरस्य काले वंशस्वनैः श्रोत्रसुधां विधातुः। गतागतप्राणदशामविन्दन्गोपीजनास्तस्य गतागतेषु ॥ ८० ॥

आघ्रातवर्त्मानमरण्यभागेष्वारण्यकैराश्रितधेनुभावैः। केनापि तस्यापहृतं किरीटं प्रत्याहरन्प्रैक्षत पत्त्रिनाथः ॥ ८१ ॥

देवस्य दुग्धोदशयस्य दैत्याद्वैरोचनाद्व्यालभुजोपनीतः। कृष्णस्य मौलौ कृतबर्हचूडे न्यस्तः किरीटो निबिडीबभूव ॥८२॥

सनाहितैरग्निषु यायजूकैराधीयमानानि हवींषि भोक्ता। भक्तैकलभ्यो भगवान्कदाचित् पत्नीभिरानीतमभुङ्क्त भोज्यम् ॥

कराम्बुजस्पर्शनिमीलिताक्षानामर्शनैराकलितार्धनिद्रान्। वत्सानन्याभिमुखान्स मेने प्रह्वाकृतीन्भक्तिभरावनम्रान् ॥

रोमन्थफेनाञ्चितसृक्विभागैरस्पन्दनैरर्धनिमीलिताक्षैः। अनादृतस्तन्यरसैर्मुकुन्दः कण्डूयितैर्निर्वृतिमाप वत्सैः ॥ ८५ ॥

सिषेविरे शाद्वलितान्प्रदेशान् कृष्णस्य धाम्ना मणिमेचकेन। वसुंधरायामपि केवलायां व्यापारयन्तो वदनानि वत्साः ॥

नवप्रसूताः स तदा वनान्ते पयस्विनीरप्रतिमानदोहाः। परिश्रमश्रान्तपदानदूरात्प्रत्यागतान्पाययते स्म वत्सान् ॥ ८७ ॥

निविश्य मूलेषु वनद्रुमाणां निद्रायितानां निजतर्णकानाम् । अङ्गानि गाः सादरमालिहन्तीरमंस्त संभाव्यगुणाः स्वमातुः ॥
स नैचिकीः प्रत्यहमातपान्ते प्रत्युक्तघोषा इव वत्सनादैः । मधूनि वंशध्वनिभिः प्रयच्छन्निनाय भूयोऽपि निवासभूमिम् ॥
समाव्रजन्विश्वपतिर्व्रजान्तं गोभिः समं गोपविलासिनीनाम् । उल्लासहेतुः स बभूव दूरादुद्यन्विवस्वानिव पद्मिनीनाम् ॥
निवर्तयन्गोकुलमात्तवंशो मन्दायमाने दिवसे मुकुन्दः । प्रियादृशां पारणया स्वकान्त्या बर्हावृतं व्यातनुतेव विश्वम् ॥
बालं तरुण्यस्तरुणं च बालास्तमन्वरज्यन्त समानभावाः । तदद्भुतं तस्य विलोभनं वा तस्यैव सर्वार्हरसात्मता वा ॥
अवेदिषातां पृथुकौ पितृभ्यां तारुण्यपूर्णौ तरुणीजनेन । वृद्धौ पुरावृत्तविशेषविद्भिः क्लृप्तेन्द्रजालाविव रामकृष्णौ ॥
अथापदानं मदनस्य दातुमादातुमालोकयतां मनांसि । नवं वयो नाथसमं प्रपेदे गुणोत्तरं गोपकुमारिकाभिः ॥ ९४ ॥
अनङ्गसिन्धोरमृतप्रथिम्ना रसस्य दिव्येन रसायनेन । महीयसीं प्रीतिमवाप तासां योगी महान्यौवनसंभवेन ॥ ९५ ॥
विजृम्भमाणस्तनकुड्मलानां व्यक्तोन्मिषद्विभ्रमसौरभाणाम् । मधुव्रतत्वं मधुराकृतीनां लेभे लतानामिव वल्लवीनाम् ॥
अतिप्रसङ्गादवधीरयन्त्या प्राचीनया संयमितो नियत्या । पाञ्चालकन्यामिव पञ्चभुक्तां धर्मः सतीरादृत तादृशीस्ताः ॥
दिशागजानामिव शाक्कराणां शृङ्गाग्रनिर्भिन्नशिलोच्चयानाम् । स तादृशा बाहुबलेन कण्ठान्निपीड्य लेभे पणितेन नीलाम् ॥
करेण दम्भोलिकठोरतुङ्गान् देहान्वृयून्दानवदुर्वृषाणाम् । विमृज्य नूनं विदधे मुकुन्दः प्रियास्तनस्पर्शविहारयोग्याम् ॥
आत्मीयपर्यङ्कभुजङ्गकल्पावश्लेष्यरक्षापरिघौ पृथिव्याः । नीलोपधानीकरणात्स मेने भूयिष्ठधन्यौ भुजपारिजातौ ॥ १०० ॥
रागादिरोगप्रतिकारभूतं रसायनं सर्वदशानुभाव्यम् । आसीदनुध्येयतमं मुनीनां दिव्यस्य पुंसो दयितोपभोगः ॥ १०१ ॥
अनुद्रुता नूनमनङ्गबाणैः सुलोचना लोचनभागधेयम् । प्रत्यग्रहीषुः प्रतिसंनिवृत्तं त्यक्तेतरैरक्षिभिरात्मना च ॥ १०२ ॥
व्रजोपकण्ठे विबुधानुभाव्यो गोपीजनैरात्मगुणावदातैः । समावृतो नन्दसुतश्चकाशे तारागणैरिन्दुरिवान्तरिक्षे ॥ १०३ ॥
हत्वा सयूथं तृणराजषण्डे रामाच्युतौ रासभदैत्यमुग्रम् । अतोषयेतां भृशमात्मभृत्यान् स्वाद्यैः सुधापिण्डनिभैः फलौघैः ॥
कदाचिदासादितगोपवेषः क्रीडाकुले गोपकुमारवृन्दे । स्कन्धेन संगृह्य बलं बलीयान् दैत्यः प्रलम्बो दिवमुत्पपात ॥
पपात भूमौ सहसा स दैत्यस्तन्मुष्टिना ताडितशीर्णमौलिः । महेन्द्रहस्तप्रहितेन पूर्वं वज्रेण निर्भिन्न इवाचलेन्द्रः ॥ १०६
स्ववाससा क्लृप्तकलङ्कलक्ष्मीः कान्त्या दिशश्चन्द्रिकयेव लिम्पन् । रराज रामो दनुजे निरस्ते स्वर्भानुना मुक्त इवोडुराजः ॥
विनैव रामेण विभुः कदाचित् संचारयन् धेनुगणं सवत्सम् । वनश्रिया दूरविलोभिताक्षः कंचिद्ययौ कच्छमदृष्टपूर्वम् ॥
यदृच्छया चारितधेनुचक्रः कूलान्तिके विश्वजनानुकूलः । कलिन्दजां कालियपन्नगस्य क्ष्वेलोद्गमैः कज्जलितां ददर्श ॥
विषाग्निना मुर्मुरितप्रताने वैरोचनीतीरवनावकाशे । अहीन्द्रमास्कन्दितुमध्यरुक्षत्काष्ठाकृतिं कंचन नीपवृक्षम् ॥ ११० ॥
मधुद्रवैरुल्वणहर्षबाष्पा रोमाञ्चिता केसरजालकेन । पत्राङ्कुरैश्छिततनुश्चकाशे कृष्णाश्रिता शुष्ककदम्बशाखा ॥ १११ ॥
निपत्य संक्षिप्तपयोधिकल्पे महाह्रदे मन्दरपोतरम्यः । विषव्यपोहादमृतं विधातुं स्वादूदयं क्षोभयति स सिन्धुम् ॥ ११२
कृताहतिः कृष्णनिपातवेगादानद्धरूपा विततैस्तरङ्गैः । सर्पापसारौषधिसंप्रयुक्ता भेरीव सा भीमतरं ररास ॥ ११३ ॥
प्रसक्तकृष्णद्युतिभिस्तदीयैः पृषत्कणैरुत्पतितैः प्रतूर्णम् । अदृश्यत द्योतितमन्तरिक्षं पीतान्धकारैरिव तारकौघैः ॥ ११४ ॥

उदग्रसंरम्भमुदीक्ष्य भीतास्तार्क्ष्यध्वजं तार्क्ष्यमिवापतन्तम् । प्रपेदिरे सागरमाश्रितौघाः काकोदराः कालियमात्रशेषाः ॥
अथाम्भसः कालियनागमुग्रं व्यात्ताननं मृत्युमिवोज्जिहानम् । भोगेन बध्नन्तमपोह्य शौरिः मद्धीकृतं तत्फणमारुरोह ॥
सद्यो महानीलमयीं मुकुन्दः सपद्मरागामिव पादपीठीम् । क्रामन्फणां कालियपन्नगस्य ग्रस्तोदितो भानुरिवावभासे ॥
फणामणीनां प्रभयोपरक्ते खेलन्बभौ चक्रिणि चक्रपाणिः । प्रदोषसिन्दूरितमम्बुवाहं प्राचेतसो नाग इवोपमृद्नन् ॥
(प्रणेमुषां प्राणभृतामुदीर्णं मनो विनेष्यन्विषमाक्षवक्त्रम् । अकल्पयत्पन्नगमर्दनेन प्रायेण योग्यां पतगेन्द्रवाहः ॥)
तद्भोगवृन्दे युगपन्मुकुन्दश्चारीविशेषेण समैक्षि नृत्यन् । पर्याकुले वीचिगणे पयोधेः संक्रान्तबिम्बो बहुधेव चन्द्रः ॥
तदुत्तमाङ्गं परिकल्प्य रङ्गं तरङ्गनिष्पन्नमृदङ्गनादम् । प्रशस्यमानस्त्रिदशैरकार्षीदव्याहतामारभटीमनन्तः ॥ १२० ॥
एकेन हस्तेन निपीड्य बालं पादेन चैकेन फणामुदग्राम् । हरिस्तदा हन्तुमियेष नागं स एव संसारमिवाश्रितानाम् ॥
स पन्नगीनां प्रणिपातभाजां द्रवीभवन्दीनविलापभेदैः । प्रसादितः प्रादित भर्तृभिक्षां किमस्य नः स्यादपदं दयायाः ॥

लोलापतच्चरणलीलाहतिक्षरितहालाहले निजफणे नृत्यन्तमप्रतिघकल्पं तमप्रतिममत्यन्तचारुवपुषम् ।
देवादिभिः समयसेवादरत्वरितहेवाकवोषमुखरैर्दृष्टाव(दा)धानमथ तुष्टाव शौरिमहिरिष्टावरोधसहितः ॥१२३

हरिचरणसरोजन्यासधन्योत्तमाङ्गः शमितगरुडभीतिः सानुबन्धः स नागः ।
युगविरतिदशायां योगनिद्रानुरूपां शरणमशरणः सन्प्राप शय्यां तदीयाम् ॥ १२४ ॥
विविधमुनिजनोपजीव्यतीर्था विगमितसर्पगणा परेण पुंसा ।
अभजत यमुना विशुद्धिमग्र्यां शमितबहिर्मतसंप्लवा त्रयीव ॥ १२५॥

अवधूतभुजङ्गसङ्गदोषा हरिणा सूर्यसुता पवित्रिता च । अपि तत्पदजन्मनः सपत्न्या बहुमन्तव्यतरा भृशं बभूव ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये चतुर्थः सर्गः ।

---

## ५. पञ्चमः सर्गः

ततः समानीतरसालपाकः संवीजयन्पाटलगन्धवाहैः । निरूढमल्लीविभवो निदाघः सीरायुधं शौरिसखं सिषेवे ॥ १ ॥
अविभ्रतीनां कुचकुम्भकक्ष्यामालिप्तकर्पूरहिमोदकानाम् । स सुभ्रुवां देहगुणेन यूनामासीद्वसन्तादपि माननीयः ॥ २ ॥
विहारयूना भजता स्वयं तद्व्रजाङ्गनाविभ्रमकिङ्करत्वम् । नितान्तधन्याः स्वगुणैरभूवन्निर्विश्यमाना ऋतवः क्रमेण ॥ ३ ॥
कृतावसेका इव कृष्णगीतैर्वनद्रुमा वर्द्धिततुङ्गशृङ्गाः । अयत्नलब्धानि गवां बभूवुः स्थायीनि वर्षातपवारणानि ॥ ४ ॥
बभञ्ज वातः प्रबलो न वृक्षान्न तिग्मरश्मिः सलिलं तताप । ददाह वन्यां न च तत्र दावः संरक्षिता यत्र गवां स देवः ॥
गावो महिष्यश्च गभीरनादाः सञ्चारिताः शार्ङ्गभृता यथार्हम् । कलिन्दकन्यामवगाह्य काले घर्मापदा सम्पदमेव भेजुः ॥

गतेऽपि भूयिष्ठगुणे वसन्ते गोपाः सुखं चारितगोधनास्ते । कलिन्दजानूपसमीपभाजः कालं कठोरातपमत्यनैषुः ॥ ७ ॥
वितेनिरे जङ्गमधामकल्पैरनोभिरध्यासितचत्वराणि । निदाघवर्षानुगुणानि गोपाः स्थानानि गोवत्सगणोचितानि ॥ ८ ॥
अकालकाल्येन परेण पुंसा साम्यं गतानामिव वल्लवीनाम् । सुखाय सर्वे समया बभूवुः स्वैःस्वैरविच्छिन्नगुणैर्विशेषैः ॥
सुधाप्लवस्वैरसखीमभिख्यां वनाश्रिते वर्षति कृष्णमेघे । मध्यंदिनेऽप्याददिरे विहारान् गावः प्रकामं गतघर्मतापाः ॥
तापापहन्तुः स्वपदाश्रितानां तत्तादृशा तस्य समीक्षणेन । न तस्य गोपाध्युषितस्य जज्ञे वनस्य वातातपवह्निपीडा ॥ ११ ॥
प्रसाधिताः पाटलपुष्पजालैः प्रच्छायनिद्राशमितोपतापाः । दिनावसानस्नपनेन शीता गोप्यः प्रियैर्निर्विविशुर्निशीथान् ॥
निदाघतैक्ष्ण्यादिह दुष्टसत्त्वाः क्षोभं गवां कुर्युरतिक्षुधार्ताः । इतीक्षमाणः सहजेन सार्धं व्यधत्त नाथो मृगयाविहारम् ॥
प्रसक्तगङ्गायमुनानुषक्त्या भासा तयोराहितगाढमोहाः । अयत्नलभ्योपगमास्तदासन्व्यालाः क्षणादर्भकवेधयोग्याः ॥ १४ ॥
अनुप्रयातैरिव देवमायामच्छेदनीयैरपि दिग्गजानाम् । वनं तदन्तर्गतसत्त्वजातं पाशैरवारुन्धत वत्सपालाः ॥ १५ ॥
अनन्तलीलोचितभूमिकातैः आवेदितान्वेदवनेचरेन्द्रैः । पथः समास्थाय गृहीतचापा गुप्तस्थितिं गोपसुता वितेनुः ॥ १६ ॥
क्षणादनिर्धार्थ्य निदानभेदं दत्तापहासैर्वनदेवताभिः । मृगायितं तत्र मृगेन्द्रमुख्यैः सिंहायितं गोकुलसारमेयैः ॥ १७ ॥
परिस्फुरत्कृत्रिमसत्त्वजातैः प्रसारितैः श्यामपटैर्वनान्ते । स्वयं तिरोधाय तदर्हशब्दा गोपा मृगान्गूढचराश्चकर्षुः ॥ १८ ॥
शतावरीदामनिबद्धमूर्ध्नः शार्ङ्गध्वनित्रासितसिंहयूथान् । अनीकनाथप्रमुखानकार्षीदग्रेसरान्व्याधतनूननन्तः ॥ १९ ॥
विमुक्तपाशा मधुवैरिभृत्यैर्जिह्वालदुर्दर्शकरालवक्त्राः । निपेतुरन्योन्यविमुक्तरोषाः श्वानो वराहेषु निशातदंष्ट्राः ॥ २० ॥
संभूय गोपाः प्रसभं प्रयुक्तैः सत्त्वानि वन्यानि समग्रसत्त्वाः । गुहामुखाम्रेडिततीव्रघोषैः कोलाहलैराकुलयांबभूवुः ॥
अमृष्यतो मानुषसिंहनादं गिरीन्द्ररोधैरपि दुर्निरोधान् । बभञ्ज दृप्तो बलभद्रसिंहः सिंहान्द्विपेन्द्रानिव दुर्निवारः ॥
गुञ्जाकलापप्रतिनद्धकेशैरागुल्फमालम्बितपिञ्छजालैः । निषङ्गिभिश्चारुपृषत्कचापैर्गुप्तो बभौ गोपसुतैर्मुकुन्दः ॥ २३ ॥
आक्रान्त्यकम्पेषु नगेषु धैर्यं शौर्यक्रमं श्वापदविक्रमेषु । अशिक्षयत्क्षेमविदात्मभृत्यान् विहारगोपो मृगयापदेशात् ॥
आदाय लूनानि मुकुन्दबाणैः शृङ्गाणि शीघ्रं वनकासराणाम् । शार्ङ्गप्रमाणानि शनैरकार्षुस्तैरेव चारूणि धनूंषि बालाः ॥
मनुष्यमांसस्पृहया सरोषं गुहान्तरादुत्पतितुं प्रवृत्तान् । शिलीमुखैः कीलितशैलकण्ठान् कृष्णस्तदा केसरिणश्चकार ॥
नवाहृतैर्नाथ परिष्क्रियार्हां गुञ्जास्रजं गोपकुमारवीराः । विभिन्नवन्यद्विपकुम्भमुक्तैः मुक्ताफलैरन्तरयांबभूवुः ॥ २७ ॥
शराहतानां विपिने मृगाणामार्द्राहृतैश्चर्मभिरात्तहर्षाः । अकल्पयन्नास्तरणानि गोपाः संवेशयोग्यानि सहायिनीनाम् ॥ २८ ॥
अभिन्नपार्श्वेष्ववकाशभेदाद्भिन्नस्थितीन्भीतिमपोह्य वत्सान् । निरस्तसिंहेषु गुहागृहेषु न्यवीविशन्नाथनियोगभाजः ॥ २९ ॥
अयातयामैरचिरप्रतापात्सुमृष्टपाकैरधिशल्यशृङ्गम् । मांसैर्मृगानां मधुनावसिक्तैर्नन्दस्य भृत्या विपिने ननन्दुः ॥ ३० ॥
निवेद्यमानान्वनदेवताभिः संगृह्य वन्यानुपदाविशेषान् । समं सुहृद्भ्यः सहसा विभेजे रामानुरोधेन रमासहायः ॥ ३१ ॥
त्राणं सतां दुष्कृतिनां विनाशं तन्वन्नभीष्टं मृगयाच्छलेन । स्वच्छन्दचर्यानुगुणं गवां तच्चक्रे वनं शान्तमृगावशेषम् ॥
निसर्गकारुण्यतरङ्गवृत्त्या निर्वैरतां नैगमगोपदृष्ट्या । संप्रापिताः प्रापुरिवैकजात्यं केचिद्गवां केसरिदन्तिमुख्याः ॥ ३३ ॥

विधून्वता धूलिकदम्बरेणून्धाराकदम्बाङ्कुरकारणेन । निन्युः श्रमं निर्झरबिन्दुभाजा नभस्वता नन्दसुतानुयाताः ॥ ३४ ॥

अमर्त्यलक्ष्मीश्वरधामभाजोरारामयोरेकमिवावतारम् । प्रशान्तधर्मातिशयं प्रभावाद्बृन्दावनं नन्दसुतो वितेने ॥ ३५ ॥

दिशं समाक्रम्य करैरुदीचीं देवे रवौ दक्षिणतः प्रवृत्ते । निदाघक्लृप्तया निगृहीतदेहां वृष्टिं पुनः स्रष्टुमियेष शौरिः ॥

अथाविरासीदपसारयन्ती तापं गवां चण्डकरप्रसूतम् । विचित्रसस्योदयमेचकाङ्गी मेघाविला माधवयोगवेला ॥ ३७ ॥

महीभृतः संभृततीर्थतोयैरम्भोधरैराचरिताभिषेकाः । प्रयुक्तविद्युद्वलयैः पुनस्तैः प्रायेण नीराजनमन्वभूवन् ॥ ३८ ॥

धौतावदातैः क्रकचच्छदानां पत्रैरविश्रान्तषडङ्घ्रिनादैः । व्यदारयत्पुष्पशरः प्रतूर्णं मानग्रहं मानवतीजनानाम् ॥ ३९ ॥

पयोमुचां सेकवतां स्थलीनां वीरुत्प्ररोहा विविधा बभूवुः । समीक्षितानां मधुसूदनेन श्रद्धादयाद्या इव सद्गुणौघाः ॥

शितेन पञ्चेषुशरेण भिन्नाद्वियोगिनीमानसतो विकीर्णाः । तदैन्द्रकोपत्वमिवाधिजग्मुः शोणाः क्षितौ शोणितबिन्दुभेदाः ॥

मधुद्रुतेरुल्वणदन्तवीणा मेघानिले मेदुरबिन्दुजाले । प्रभूतकम्पाः प्रथयांबभूवुः शीतालुतां कण्टकिनः कदम्बाः ॥ ४२

शतह्रदाशस्त्रविलासदीप्ता धीरस्वनाढ्या धृतचित्रचापा । कनद्बलाकाध्वजपङ्क्तिरासीत्कादम्बिनी कामचमूरपूर्वा ॥ ४३ ॥

मृदङ्गधीरस्तनितो विहायाः सौदामिनीसंभृतचारुलास्यः । बभौ नवानां प्रभवो रसानां रतिप्रियस्येव नटस्य रङ्गः ॥ ४४ ॥

अचिन्तितोपस्थितजीवनानामासेदुषामभ्यधिकां समृद्धिम् । तोयाशयानां परिवाहजन्या स्वगुप्तिरन्योपचयप्रदाऽभूत् ॥ ४५

गुहासु गोवर्धनसंभवासु प्रकामविस्तीर्णसमस्थलीषु । गुणाधिको विश्वसृजा प्रवर्षे वासः समाधीयत वल्लवानाम् ॥४६॥

दरीषु गोप्यः प्रसमीक्ष्य कृष्णं दिशासु जीमूतगणं मयूर्यः । अग्रे पतीनामधिगीतिनादं वितेनिरे चारु विहारलास्यम् ॥

पयोदलक्ष्यग्रहितग्रहस्तां कृष्णः स्वनेत्रे इव चन्द्रसूर्यौ । तिरोदधानां प्रतिरोद्धुमैच्छत्स्वैरी स्वलीलामिव जातलीलाम् ॥

अथाञ्जनस्निग्धनभःप्रकाशाः क्षणत्विषां कल्पितलास्यभङ्गाः । दिशामुखोल्लासनदृष्टदाक्ष्या दीनाम्बुवाहा दिवसा बभूवुः ॥

अलक्ष्यतीव्रातपमन्तरिक्षं सितासितैरम्बुधरैश्चकाशे । विवेकमासादयतामिवादौ चित्तं वितर्कैरनिवर्तमानैः ॥ ५० ॥

विहाय सद्यः कुटजार्जुनादीन् विघ्नावितान् कालविपर्ययेण । पुनर्बबन्धुः प्रणयं द्विरेफाः कोशोपपन्नेषु कुशेशयेषु ॥५१

तरङ्गलोलाम्बुजतालवृन्ताः बर्हातपत्रायितभृङ्गयूथाः । विधूतहंसावलिचामरौघाः नद्यः समातन्वत नाथसेवाम् ॥ ५२ ॥

तापानुबन्धप्रशमाय पुंसां शय्यार्थिना शार्ङ्गभृतोपहूता । पयोदमालाव्यपदेशदृश्या प्रायस्तिरोऽधीयत योगनिद्रा ॥ ५३ ॥

इतस्ततः प्राप्तशरद्विहारं गोपीसखं द्रष्टुमतीव हर्षात् । अशोभि नेत्रैरिव जृम्भमाणैः शीर्णैर्धरित्री शिखिनां कलापैः ॥

चराचरेष्वाहितजीवनानामनुज्झतां सत्पथमम्बुदानाम् । शुचित्वमन्तर्बहिरप्ययत्नादभ्यागतैर्हंसगणैः शशंसे ॥ ५५ ॥

संस्कारभेदैः कलमादिकानां क्रमेण लब्धोपचयस्थितीनाम् । समुन्नतिः सन्नतिहेतुरासीद्धर्मं निजं साधयितुं क्षमाणाम् ॥

विहारगोपस्य गुणान् गृणद्भिः क्षीबाशया गीतपदैरुदारैः । चकासुरासादितभक्तिभेदाः सामोपशाखा इव शालिगोप्यः ॥

विकस्वरेन्द्रायुधबर्हदाम्नः श्यामीकृतं कृष्णघनस्य धाम्ना । शरत्प्रसङ्गेऽपि तदा तदासीद्बृन्दावनं बद्धमयूरलास्यम् ॥५८॥

समग्रवन्यूकरजः समेतं सेरातसीमेचकमन्तरिक्षम् । पीताम्बरेण प्रभुणा तदानीमयत्नसम्भूतमवाप साम्यम् ॥ ५९ ॥

समग्रसप्तच्छदरेणुकीर्णैः स्रोतोभिरुन्नीतमदप्रवाहः । स्वकानने स्वैरजुषां गजानां गोवर्धनो यूथपतिर्बभूव ॥ ६० ॥

अधोमुखैश्च प्रतिबिम्बरूपैरभ्युन्नतैरात्ममिरप्यशंसन् । त्रिविक्रमस्य स्थितमुन्नतं च पदद्वयं पाथसि रक्तपद्माः ॥ ६१ ॥
पङ्कक्षये प्राक्तनवर्तनीनां वक्रेतरा व्यक्तिरभूत्पृथिव्याम् । बहिर्मतप्रत्ययिनां व्यपोहे वेदोदितानामिव सत्क्रियाणाम् ॥६२॥
मदप्रभूतध्वनयो महोक्षा रोधोविभेदोल्वणतुङ्गशृङ्गाः । दर्पस्य देहा इव योगसिद्धा दन्तावलानन्तरयांबभूवुः ॥ ६३ ॥
सरोरुहां रक्तसितासितानां श्रिया बभौ शारदवासरश्रीः । विहारभाजा गुणभेदयोगाद्व्यक्तीकृता विश्वसृजेव माया ॥ ६४
आरक्तकल्हारविलोचनश्रीः क्लान्ता भृशं खेलगतिः स्खलन्ती । उन्नालनालीकमधूपभोगान्मत्तेव मार्ताण्डसुता बभासे ॥
वल्गवल्ग्वोर्मिवलीविभङ्गां काले यथास्थानगृहीतकार्श्याम् । अरंस्त पश्यन्ननघोऽनुरूपां श्यामां सुदृष्टामपि सूर्यकन्याम् ॥
शोणाकृतिं कोकनदैरुदारैरिन्दीवरैराकलितात्मकान्तिम् । सिताम्बुजैः सूचितजाह्नवीतामेकामनेकामिव तामभुङ्क्त ॥ ६७ ॥
कुमुद्वतीं प्रेक्ष्य कलिन्दकन्यां तारापरिष्कारवतीं त्रियामाम् । नभःस्थलीं च स्फुटहंसमालां नाथस्त्रिधाभूतममन्यतैकम् ॥
बन्धूकजालैः परिधानशोभामिन्दीवरैरप्रतिमामभिख्याम् । मुखश्रियं तामरसैर्मुरारेः संभृत्य लेभे शरदानुरूप्यम् ॥ ६९ ॥
पयोधराणां पलितंकरण्या दिवश्च तारुण्यमिवार्पयन्त्या । विचित्रभूम्ना शरदा स्वशक्तिं विख्यापयामास विहारगोपः ॥
कुमुद्वतीकल्पितभृङ्गगीतः संदर्शयन् दर्पणमिन्दुबिम्बम् । सचामरश्चन्द्रिकया सिषेवे तमीश्वरं तत्र शरत्प्रदोषः ॥ ७१ ॥
सरोरुहां रक्तसितासितानां स्थानेषु भृङ्गध्वनिभिः प्रतेने । जिगीषतः पञ्चशरस्य विश्वं तूर्णं प्रवृत्तैरिव तूर्यघोषैः ॥७२॥
निर्मुक्तभोगीन्द्रनिभैः पयोदैर्नभःस्थली व्याततनुर्बभासे । अनङ्गयोग्यैर्हरिनीलभूमिर्धौतप्रकीर्णैरिव चामरौघैः ॥ ७३ ॥
विभाव्य बन्धूकवितानसन्ध्यां कालोचितं कल्पयितुं विहारम् । द्विजैरुपाधावि निसर्गशुद्धैरङ्गीकृतानाविलतीर्थतोयैः ॥७४॥
अनिन्दितां ग्लानिमिवोद्वहन्त्यो वितेनिरे मन्दतरान्प्रचारान् । वर्षानिशीथे दयितेन भुक्ताः श्रान्तिं प्रयाता इव शैवलिन्यः॥
श्रिया समं भावितपद्मभूम्ना घनागमादुल्लसितः पयोधेः । रराज नीले रविरन्तरिक्षे मणीश्वरो माधववक्षसीव ॥ ७६ ॥
अवाप्य सङ्कोचमतीव भूयः कालागमादुन्मिषतो नभस्तः । विभागमापुर्विदिशो दिशश्च प्रजाः प्रसन्नादिव विश्वधाम्नः ॥
समुद्यतस्तिग्मरुचो घनाभ्यैरुत्निद्रतां पूर्वमुपाजगाम । रथाङ्गपाणेरिव सिन्धुजन्मा सरोजिनी चारुसरोजलक्ष्म्या ॥७८॥
उत्सारयञ्जीर्णमिलिन्ध्रजालं प्रायो मदैः पेचकिनां प्रसञ्चन् । चकार सतच्छदरेणुजालैः कालो महीं कामविहारयोग्याम् ॥
कृतोदयाः कृष्णवलाहकेन स्रोतोवहाः स्वैरविहारभाजः । त्रपामिव स्थानगतिप्रतीक्ष्याः स्वाभाविकीं स्वच्छदशामवापुः ॥
सुखावगाह्यैः सुदृशामतुष्यत्स्वादोत्तरैः शौरिरपेतपङ्कैः । प्रसन्नशीतैरनघैः पयोभिः स्वभक्तचित्तैरिव यामुनीयैः ॥ ८१ ॥
अनुल्वणैरन्वहमूर्मिभेदैः संपन्नरेखाः सरितामधोऽधः । श्रियो दधुः पद्मवनावतारे सोपानतां सैकतसन्निवेशाः ॥८२॥
प्रसादभाजा समयेन दत्तास्त्रैलोक्यलक्ष्म्यास्तरलस्वभावाः । पयोधरस्थानगता विरेजुर्हाराः प्रभूता इव हंसमालाः ॥ ८३ ॥
जलातपत्यागसमागमाभ्यां प्राचीमवक्रां प्रकृतिं भजन्त्यः । तदन्वयत्यागवशादवाप्तैः पङ्कैरमुच्यन्त शनैः पदव्यः ॥८४॥
स्थाने विनिद्राः स्खलदम्बुकोशाः प्रायो गतिं पान्थजनस्य रोद्धुम् । अरुंतुदानामुमुचुः परागानास्थानपङ्केषु महापथेषु ॥
पत्रालिलाहतपुष्करान्तैः पद्मालयानूपुरसौम्यनादैः । शुभैरभावि स्वपतस्त्रिधाम्नः प्रत्यूषतूर्यैरिव राजहंसैः ॥ ८६ ॥
कल्हारनिष्पादितकर्णपूरा वितीर्णबन्धूकविशेषकश्रीः । आमुक्तपद्मोत्पलरेणुरासीत्सैरन्ध्रिका कापि शरत्त्रिधाम्नः ॥ ८७ ॥

सरोजकोशान्निपतत: प्रसुप्तान्शालीन्विपाकानतदिङ्गरागान् । शुकांश्च तेष्वापततोऽनुमेने शौरिः समूर्च्छानिव योगतुण्डान् ॥
स्ववेगसंच्छन्नगभीरभावं स्रोतस्विनीनामपहाय तोयम् । कालुष्यमायोधनकालयोगाद्वीराङ्गनानां हृदयं विवेश ॥ ८९ ॥
नवप्ररूढैर्नलिनीपलाशैः शाराणि वेशन्तजलान्यवापुः । स्फुरत्कलङ्कस्य तुषारधाम्नश्छायाभिरन्याभिरिवाविशेषम् ॥ ९० ॥
वर्षीयसीनामपि पद्मिनीनां सौम्येन वर्षान्तरसायनेन । सामोदमन्दस्मितहार्यभृङ्गं युक्तं श्रिया यौवनमाविरासीत् ॥९१॥
शरद्विभूतिं कुमुदावदातां संवीतनीलाम्बरदर्शनीयाम् । अमंस्त निर्धूतघनप्रलम्बां मूर्तिं बलस्येव शुभां मुकुन्दः ॥९२॥
निद्रायितेव प्रथमं पयोदैः प्रशान्तनिद्रेव शरत्प्रसादात् । जगत्त्रयी तद्भूतिर्नीव भेजे जातोद्यमं जागरणे मुकुन्दम् ॥९३
निद्रापदेशेन जगद्विभूतिं विभावयन्नित्यविधूतनिद्रः । प्रबुध्यमानः स विभुः प्रजानां प्रादात्स्वधर्मानुगुणं प्रबोधम् ॥९४॥

अभ्यासङ्गं जलधिशयनादुत्थितस्यात्मधाम्नः पत्युः पुण्यं प्रथमनयनस्पन्दितं प्राप्तुकामा ।
नित्यापूर्वश्रुतिपरिमलं न्यस्तलीलारविन्दा पादाम्भोजं सह वसुधया धारयामास पद्मा ॥ ९५ ॥

अनुचरितविधिज्ञैरादृतां पूर्वपूर्वैर्महदिदमनपायं मङ्गलं मन्यमानाः ।
प्रचितविविधभोग्यां प्रारभन्त प्रतीतां बलमथनसपर्यां बल्लवा नन्दमुख्याः ॥ ९६ ॥

वाहेषु गोषु द्विरदेषु चाग्र्यां तज्जन्यया जीविकयोपपन्नाः । तदर्हसंभारवतीं सपर्यां क्षितापदं क्षेमविदो वितेनुः ॥९७॥

आबालप्रेक्षणीयं प्रणतमनिमिषैरद्भुतानां प्रधानं धूतत्रैलोक्यदोषं ध्वजममरपतेस्तूर्णमुत्थापयन्तः ।
वृष्टीनामर्चनाभिः स्तुतिगुणनिकया गीतनृत्तोपहारैरुद्वेल्लप्रीतिलोला विदधुरविकलैरुत्सवं गोपवृद्धाः ॥ ९८ ॥

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदकाव्ये पञ्चमः सर्गः ।

## ६. षष्ठः सर्गः

शमयता पुरुहूतमहोत्सवं व्रजपतिः सह बल्लवयूथपैः । निभृतमञ्जुगिरा निजसूनुना निजगदे जगदेककुटुम्बिना ॥ १ ॥
विदितवानिव विज्ञपयाम्यहं शृणुत मे शकुनेरिव भाषितम् । पृथुकबुद्धिरहं पृथुचेतसः प्रभवतो भवतो नहि शिक्षये ॥
निगमदृष्टमिदं निखिलेन वः क्वचन विश्वतनौ पुरुषे स्थिते । य इह यामुपजीवति तत्तनुं स हि तया हितया भुवि नाथवान् ॥
अतियजेत निजां यदि देवतामुभयतश्च्यवते जुषतेऽप्यघम् । क्षितिभृतैव सदैवतका वयं वनवतानवता किमिहिद्रुहा ॥
अनवशाद्वलकाननसम्पदा नदनदीह्रदनिर्झरशालिना । बहुपशुः पशुपालकसन्ततिर्महिभृता हि भृता न मरुत्वता ॥ ५ ॥
अचलमर्चत किं विबुधैश्चलैः शुभवनं भवनं च दिवौकसाम् । क्षममनेन वने परिरक्षिते न हरिणा हरिणानपि बाधितुम् ॥६॥
गिरिषु विष्णुविभूतिषु युज्यते निखिलदेवमयीषु च गोषु नः । तदुभयाश्रितवृत्त्युपजीविनां गुरु चिरं रुचिरं च समर्चनम् ॥
अभिमतं गिरयः कृतसत्क्रियाः ददति दर्शितदैवतभूमिकाः । हरितरक्षुमुखैरपि विग्रहैरहितमाहितमानविपर्ययाः ॥ ८ ॥

पशुभिरद्रिचरैरुपकल्पितं व्रजनये जनयेम न विप्लवम् । क्षितिभृदेष समीहितसिद्धये जनमितं न मितंपचतां नयेत् ॥९॥
अपि च साधु गवामभिवर्धनादनृतहानिजया निजयाख्यया । भजति गोपगणैरभिराध्यतां वनमयं नमयन्फलसंपदा ॥१०॥
हरति तापमसावुपसेदुषां महिमवान्हिमवानिव दक्षिणः । वितनुते मणिरश्मिभिरप्यसौ सुरपतेरपतेज इवास्पदम् ॥११॥
प्रदिशता मधुमूलफलानि नः सतरुणा तरुणाद्भुतवीरुधा । उपकृतं गिरिणा तदिहार्ध्यतां रसततं सततं हविराहृतम् ॥
समरुता मरुतापजितामुना नदवता दवतान्तिदवीयसा । श्रमहता महता कृतविश्रमा वयमितो यमितोल्बणशर्कराः ॥
बहुमतो मनुजा दधते धृतिं बहुमतोऽयमनन्यधृतिः सताम् । गिरिशतोन्नतिमानधिकोह्यसौ गिरिशतोषकृतोऽपि महीभृतः ॥
सनगरा नगराजिमतामुना कुहरिणा हरिणा समसम्पदा । सततमाततमानमहीयसी वसुमती सुमतीश्वर धार्यते ॥१९॥
सुरसगन्धविभूतिनिधे हितं परिगृहाण निजे पशुपालने । सुरसगन्धविभूति निधेहि तं हरिमवेत्य गिरिं हविरुत्तमम् ॥
विशुद्धतोयौघपरीतपार्श्वे शुद्धाशयाः श्वेत इवान्तरीपे । निराशिषो नित्यमिहाश्रयन्ते नैःश्रेयसं तात निवृत्तिधर्मम् ॥१७॥
इह वासमही समहीनगुणे स्थिरकुञ्जगृहे जगृहे विबुधैः । अयमानमतां न मतां न तनुं क्षितिभृद्व्रजते भज तेन धृतिम् ॥
तटभूमिरसौ जयति त्रिदिवं पवनागततापवनागतता । इह देवगणैरनिशाध्युषिता युतकोकनदायुतकोकनदा ॥ १९ ॥
प्रकृष्टवंशोदयमाननीयः प्रभूततोयप्रथितानुरूप्याः । प्रवालमुक्तामणिचित्रिताङ्गीः पत्नीरयं प्रापयते पयोधिम् ॥ २० ॥
नन्द नीतिधन सर्वनन्दनी तत्त्वयातमतिभूष तत्त्वया । साधुना क्षितिभृतो रसाधुना सेव्यतामिह गतेन सेव्यताम् ॥
नम्यतेह नियता विभूतये भूतयेश्वरतया विराजते । राजतेदशतटीमहीयसे हीयसे न यदि नाम नम्यते ॥ २२ ॥
अयोगनिद्रस्य हरेरिदानीं मान्ये पदे मानसतः प्रवृत्ताः । त्वदाशयस्वच्छसरित्प्रवाहे हंसैः समं वासमिहाश्रयेम ॥२३॥

निशाकरस्य स्फटिकेष्विहाधिकं सुजातरूपा श्रयतो विभा सिता ।
रविप्रभा च स्पृशतीव सांध्यतां सुजातरूपाश्रयतो विभासिता ॥ २४ ॥

न दन्तिनोऽस्मिन् मुदिता नदन्ति नो वनस्थलीलास्त्विह देवनस्थली ।
व्रजाधिपाधोवततीव्रजाधिपा प्रभाततताम्राश्मगणप्रभातता ॥ २५ ॥

महीयसी गोपगणाश्रिता मही वनैरुपेता फलपुष्पभावनैः ।
रसौघरम्यैरपि निर्झरैरसौ चकास्त्यमुष्मिन्यवसैश्च मेचका ॥ २६ ॥

सदोन्नताय प्रणमत्यमुष्मै सतां कनिष्ठा प्रथमाङ्कनिष्ठा । निशामयास्मिन् सरितश्च रत्नप्रभासमानाः प्रतिभासमानाः ॥२७॥
इह वंशलताविलम्बवालाः प्रियवाला नतकन्धराश्चमर्यः । शबरीकबरीनिरीक्षणेन त्रपमाणा इव निश्चला भवन्ति ॥ २८ ॥
हरिनीलरुचा लसत्तमिस्रो दिवसेऽपि स्फुरदोषधिप्रदीपः । निशि चैष तपोधनाङ्गदीप्तया दिनमोहादविभक्तकोकयुग्मः ॥
व्रजवैरवतीषु वल्लवानां वृष सेनासु सदानवासु देवः । अचलाकृतिराशु नैष गोप्ता वृषसेनासु सदा न वासुदेवः ॥३०
मधुना सविभव सन्तं मदनधनं यं वदन्ति शुभदिवसं तम् । नियतमिहैव वसन्तं निष्कामधियोऽपि निर्विशन्ति वसन्तम् ॥
काननं दधदसौ सदोन्नमत्काञ्चनारककुभं सदक्षकः । मन्दरस्य महता स्ववर्ष्मणा कां च नार ककुभं सदक्षकः ॥३२॥

अनेहसा हानिरुपैति नेह सा न कन्दरस्थस्य दिशत्यकं दरः । अपास्य तां भीतिमसावुपास्यतां सदा नवा भूमिरियं सदानवा ॥

समिन्धतेऽस्मिन्नजहत्समाधिकाः समाधिकातीतधियः स्थिराशया ।
स्थिराशयाश्च व्रतिनः सदारसाः सदारसाघ्येषु तपःस्ववस्थिताः ॥ ३४ ॥

वसत्यमुष्मिन् वनदेवताऽद्भुता विभाति भास्वत्तिलकालिकानना ।
विचित्ररत्ना महती च मेखला विभाति भास्वत्तिलकालिकानना ॥ ३५ ॥

तपस्विनामात्मविदां निवासैः समानभूमावसमानभूमा । इहाटवी काञ्चनकर्णिकारपरागताम्राऽप्यपरागताम्रा ॥ ३६ ॥

सरस्सु जातैर्नलिनैः सुजातैरपां तरङ्गैश्च सुधान्तरङ्गैः । इहासमेऽतिव्रततौ समेति मरुत्तुषारः श्रमरुत्तुषारः ॥ ३७ ॥

यमभिप्लुतमम्बुधरैरभितः सरसा सरसास रसा सरसा । स्थिरधर्म तया गिरिराद्रियते स मया समयासम या समया ॥

प्रणम तमिममचलममरमहितमहितमहितमहित । भजनमलघु विफलमिह न सदयसदय सदय सदय ॥ ३९ ॥

रत्नोपसङ्घटितशृङ्गफणासहस्रः स्फारोदितस्फटिकरश्मिविशुद्धकायः ।
नित्यं वहन्निजबलेन महीमहीनः पुष्यत्यसौ मधुरिपोरपि भोगयोगम् ॥ ४० ॥

मरुद्गणसमाश्रितो मघवरत्ननीलद्युतिर्विभाति वनमाल्या विततनित्यतुङ्गाकृतिः ।
कनत्यभिगतः श्रिया कनकरश्मिपीताम्बरः करोति विधृतिं भुवः कथमसौ न विश्वम्भरः ॥ ४१ ॥

मुहुरवधीरितोऽपि भजतीह युवा गणयन् हितमतिभूरितानवसुधे वनितां तरसा ।
सपदि विहाय मानमियमृच्छति तं प्रति सा हितमति भूरिता नवसुधेव नितान्तरसा ॥ ४२ ॥

इह मरुतो वहन्ति सुरसिन्धुसगन्धसरिद्विकसितहेमकोकनदसौरभसारभृतः ।
मधुकरमौलिदिघ्नमददन्तुरदन्तिघटाकरटकटाहवाहिघनशीकरशीमरिताः ॥ ४३ ॥

मनःप्रियमिह प्रभो मधुरसादरं सादरं विधत्स्व हविरर्पयन्व्रतशुभावनां भावनाम् ।
कुरुष्व च गुरुष्वघक्षपणदक्षिणां दक्षिणां प्रयच्छति तवेप्सितं प्रणयपर्वतः पर्वतः ॥ ४४ ॥

गिरिभजनोदितप्रियविकासमये समये जनितनभः प्रचारजल्पत्रिदशैस्त्रिदशैः ।
सह यदि नः समेति हरिरप्रतिघप्रतिघः प्रतिहतिमेतु दुष्टवधदोहलिना हलिना ॥ ४५ ॥

प्रत्यक्षं गोत्रमासन्नं किमनादृत्य गोधनैः । अदृश्यो गोत्रभित्कश्चिद्दूतः स्वर्गे गवेष्यते ॥ ४६ ॥

अहार्यो विविधैर्भोगैराकर्षन्विबुधानपि । अपरिच्छिन्नमूलोऽसौ ससारः सर्वदुःखकृत् ॥ ४७ ॥

नन्द गोपप्रभो धर्मैर्व्रज वृद्ध्यर्थे सद्गतिम् । भज तामेव बुद्ध्याद्रिं तनु त्राणे रतिं गवाम् ॥ ४८ ॥

नानाफलवनालीके नालीकेद्धामितोदके । तोदके च क्षुधामल धामत्रस्तहितं विदुः ॥ ४९ ॥

सहसा सह सार्धैर्मा तरसेतरसेवनम् । तनु तात नुताद्रञ्जी न गतो न गतोऽर्च्यताम् ॥ ५० ॥

जुषतामिह धीः सूर्यसमा हि तव सुन्दरीम् । रक्षार्थमिह यक्षेण समाहितवसुं दरीम् ॥ ५१ ॥

समाजनं वदाम्येतद्वव्यैः सरसभाजनम् । सभाजनं गिरेरथ्यं स्ववृत्त्युल्लासभाजनम् ॥ ५२ ॥

भवता भवतापघ्ने भाविते भावितेजसा । सुतरा सुतरामस्मिन्सुरश्रीः सुरश्रीश्वर ॥ ५३ ॥

वहुविघ्यः समग्राहि समग्रा हि मतिस्त्वया । अतोऽन्यजनसंदिग्धे न संदिग्धे हिताहिते ॥ ५४ ॥

गोवर्धनप्रकाशिन्या गोवर्धनसमाख्यया । समक्षेऽपि गिरेरस्य समक्षेपि क्षमा स्तुतिः ॥ ५५ ॥

वयं धेनुशतैः सार्धमत्रासंकटकान्वयाः । अन्वभूम निराबाधमत्रासं कटकान्वयाः ॥ ५६ ॥

अनन्तमहिमा सोऽयं समस्तवसुधाधरः । मौलिमण्डनमस्येन्दुः समस्तव सुधाधरः ॥ ५७ ॥

तपोधनैरयं शैलो महाभाग महीयते । गोधनैरपि न त्वत्र महाभागम हीयते ॥ ५८ ॥

रोधोरोधोज्झितैरेतैरुत्सैरुत्सैकतैरसौ । महीमहीनां तनुते ग्रावाग्रावासतारकः ॥ ५९ ॥

धिषणातीत धिषणा लोकनीत्यास्तु लोकनी । सुधरेऽस्मिन्वसुधरे तात तेजस्वितातते ॥ ६० ॥

पादपादग्रपर्यन्ता दीनादीनामसौ गतिः । गोप गोपनयोग्यास्मिन्कान्ता कान्तारभूरपि ॥ ६१ ॥

इह पुष्पौघनिष्पन्नव्रजामोदे वने हिते । भृशमुत्सवसंतोषं व्रजामो देवनेहिते ॥ ६२ ॥

प्रयतस्व गिरेरस्य व्रजदेव सभाजने । स्वपुष्पकल्पे मा भक्तिं व्रज देवसभाजने ॥ ६३ ॥

(गोमूत्रिकाबन्धः)

देवस्थानमिवेन्धानं परायणमवारितम् । गोवर्धनमवेह्येनं नारायणमिवागतम् ॥ ६४ ॥

मोघाशो मघवान्देवः स्यादत्रत्यस्य सादने । मेघानाममि वा भावः सादमेत्यद्रिसादने ॥ ६५ ॥

अचञ्चलाङ्गसत्ताकश्चलाचलघनाततः । अचलः कस्य नाकल्यः साध्यानन्दस्य सिद्धिकृत् ॥ ६६ ॥

अगः सनग आसन्नः सालतालल्लताततः । सततं संहतघनः संगतानन्दसाधकः ॥ ६७ ॥

अहहाङ्ग खगङ्गकगाहकाङ्गाङ्कगागकः । अघाकागाङ्ककागाङ्कगाङ्ककागखगाङ्ककः ॥ ६८ ॥

रजतगैरिकरत्नगणैरयं कनति कान्तलताञ्चितकाननः । त्रिजगदेकनिधानतयादिकस्त्रिदशराजधराधरतल्लजात् ॥

सहेत पर्वतोऽयं वो गोसुं क्वचन कन्दरे । अदरिद्रा वसामोऽत्र सर्वहेतोरिवोदरे ॥ ७० ॥

घनाघना वनाघनाद्भुतेह शाखिसंततिः । वनावनावनावनानुरूपसत्फलावृता ॥ ७१ ॥

वृतेह भाति हेमभूर्नमेरुणा समन्ततः । प्रतीहि नैनमद्भुतं न मेरुणा समं ततः ॥ ७२ ॥

इह प्रभूतवाहिनीवने वने वने वने । फलेन भूयते स्वयं नतेन तेन तेन ते ॥ ७३ ॥

अहार्यमेति चेतनासितासितानराजते । अहार्यमेति चेतना सितासिता न राजते ॥ ७४ ॥

समग्रगुणभूमाऽसौ सानुमानागमानितः । समाहितधियां सेव्यः सानुमानागमानितः ॥ ७५ ॥

याऽचले जरसाऽनेता ताने सारजले चया । कालिमानवसायामा माया सा वनमालिका ॥ ७६ ॥

(एकक्रियान्वितश्लोकावृत्तिः)

अभ्रान्तमतिशय्येह विराजिततमागमे । निशामयालीनवनं सालौघमतिनन्दनम् ॥ ७७ ॥

अभ्रान्तमति शय्येहविराजि ततमागमे । निशामयालीनघनं सारौघमतिनन्दनम् ॥ ७७ ॥

चारुचीरीरुचा रोची रुरुचारैरचर्चरुः । चिरोच्चरोचिरचरो रुचिरो रुचिराचरः ॥ ७८ ॥

नीतिनेत्र नतानन्त नितान्तोन्नततानतः । तातेतोऽतनुतोऽनीतं न नुत्तैनोनुतान्ततः ॥ ७९ ॥

सरासससारसासारैः सूरोस्त्रसरुसारसैः । रससूः सरसस्रंसैः सरःसाररसैरसौ ॥ ८० ॥

धीर धीरधुराधारी धाराधरधरोऽधरे । रोधोधरारोधरोधिधाराधारो धराधरः ॥ ८१ ॥

भूभृन्निभेभमानेनानेन भूनाभिनेनभ । भानुभानुभभाभिन्नं नुन्नं नूनं न नो नभः ॥ ८२ ॥

तत्र तत्रातितारेऽत्र तारातीततरूत्तरे । तरेत्तातारतीरेतातते त्रातरि ते रतिः ॥ ८३ ॥

वितितीतावृतिवृते वीतातीतावृतावृतौ । तातावातातिवृत्तेऽति वातोऽतीवाततेऽवति ॥ ८४ ॥

नुन्नैनसां निनंसूनां सानूनासनसानुना । सानसां नः ससेनानां सानेनासन्नसूः सनिः ॥ ८५ ॥

कल्लोलोल्लोलकीलाले केकाकल्कलाकुले । कालिकाकलिलालोके काले काले किलैककुः ॥ ८६ ॥

पतता पततोपेतः पतितोत्पतितातपः । पाता पीतोपतापोऽपि तपःपूतपते पितः ॥ ८७ ॥

भूतभूते भूतभृतो भीतताभीतिभूतिभूः । भातीतो भूभृतो भाभृद्भाता भाता तु भूतितः ॥ ८८ ॥

मरुमुर्मुरमर्मारिं मारमारेऽमरामरे । रमारामे मुरारौ रुरामेममुरुमेरुमम् ॥ ८९ ॥

रवीरेरावरावारोऽवर वैरिविरावर । विवराराविविवरो वीर वव्रे वरैरुरुः ॥ ९० ॥

मानयानन्यनियमो मान्यमेनमनामयः । यमिनां नाम नम्योऽयममेयो मौनमानिनाम् ॥ ९१ ॥

निःसमानेन मानेन सुमनोमानसैःसमः । सोमसीमासमासन्नसानुमान्सानुमानसौ ॥ ९२ ॥

तातेतातीतितातीतः केकाकाकुककेकिकः । पापोपपापपापापो नानानानान्ननान्ननीः ॥ ९३ ॥

ययेया याय यो योऽयः स सोऽसौ सास सासुसूः । मम मामोऽममामाम गोगागोगागगोगगुः ॥ ९४ ॥

रुरुरूरुरिरारोऽरं दूदादीं ददादिदः । लालिलोलालिलीलालो हाहाहूहूहहेह हि ॥ ९५ ॥

नानानानानानानानाना नाना नाना ना नाना । ना नानानाना ना नानानानाना ना नानानाना ॥ ९६ ॥

इति तत्त्वमतत्त्वं च यथावदवगाढया । अर्च्यानर्च्यौ धिया भिन्दन्गोधनान्यव गाढया ॥ ९७ ॥

नयानयानयानयानयानयानया । नयानयानयानयानयानयानया ॥ ९८ ॥

यानयानयानयान यानयानयानयान । या नयानयानया न यानयानया न या न ॥ ९८ ॥

मायाभासा साभायामा या सूताया यातासूया । भातायायायायाताभा सा यायागे गेयायासा ॥ ९९ ॥

सेवा माननमावासे वाञ्छिताहिहिताञ्छिवा । माता पिता तापितामा नहितातता हि न ॥ १०० ॥

गेहा देववदेहागे हासताननतासहा । देतानयायानतादेऽव नयात तयानव ॥ १०१ ॥

नदीसारसमेतात्र दीता भासा नरावृता । सामानासौ मामिरामे रसा सौम्या सुमानस ॥ १०२ ॥

(मुरजबन्धः)

वसुदा तसदानन्द धीसुदान्त मुदा नता । तानदा मुक्तिदा रम्या सनदात सदा रसा ॥ १०३ ॥

(कविकाव्यनामाङ्कितचक्रबन्धः)

सद्दैवेऽङ्करयातवैभवलताशोभ्युचनानागमे भव्यं कर्म सदार्चितोद्भव नदीयाद:सनाथीकृते ।

चिताटव्यनुवाहिवातवलनश्रेयःप्रचेयोत्सवे वेदोक्त्या समये भजेः शुचि गिरौ मेरून्नतेऽस्मिन्ध्रुवे ॥

(अष्टदलपद्मबन्धः)

वासे नास्मिन्पूजादेवा वादे जातातोद्यारावा । वाराद्याविर्भूताजीवा वाजीतात्रादीना सेवा ॥ १०५ ॥

सानुमानयमतीततारकः सानुमानयमतीततारकः । सानुमानयमतीततारकः सानुमानयमतीततारकः ॥१०६॥

विराजमानादसमान भूमाविराजमानादसमानभूमा । विराजमानादसमानभूमा विराजमानादस मानभूमा ॥

अक्लिष्टचित्रमिदमत्र मनागिवोक्तं चित्रायुतानि सुवचनानि पुनस्तथापि ।
कृत्यं विभोर्निगमनीयमनन्यभक्तैराराध्यतां हरिरसौ पृथिवीधरात्मा ॥ १०८ ॥

इति कथयति कृष्णे गोपवृद्धा निदध्युः शरणमशरणानां शाद्वलश्यामलाङ्गम् ।
पुलकितवनमालं पुष्पकिञ्जल्कजालैः पुरुषमचलशृङ्गे पुण्डरीकायताक्षम् ॥ १०९ ॥

शतमखमणिशैलः स्यादसौ देवतात्मा शरदि समुदितं वा तोयकालस्य तोकम् ।
चिरपरिचितपूर्वं चेतसां किं न भाग्यं न किमिदमिति चिन्तां न व्यतीयाय नन्दः ॥ ११० ॥

आद्यं किमेतदधिदैवतमद्भुतानामाकालिकं फलमुतैकमिदं शुभानाम् ।
एकीभवन्निधिरसौ किमभीप्सितानामित्यन्वभावि सविधोपगतैः स देवः ॥ १११ ॥

पीतांशुके पृथुलबाहुभुजान्तराले मेघाभिजन्मनि मिथः प्रतिबिम्बबुद्ध्या ।
धन्यानि गोपनयनानि तदान्वभूवन्कृष्णे च तत्र च कियन्ति गतागतानि ॥ ११२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये षष्ठः सर्गः ।

## ७. सप्तमः सर्गः

व्रजौकसो विस्मयमन्थराक्षा बालार्कवर्णं वसनं वसानम् । श्यामं युवानं शतपत्रनेत्रं शैलोदितं देवमथोपसेदुः ॥ १ ॥

यमाहुरन्तर्बहिरप्यलक्ष्यं योगेश्वरं योगिभिरेव दृश्यम् । तमद्रिशृङ्गे समुदीक्षमाणा गोपं सतां गोपगणाः प्रणेमुः ॥ २ ॥

स तानशेषाननुधयेव दृष्ट्वा प्रहर्षयन्प्रत्ययितप्रसादः । सरामकृष्णान्सनकादिगम्यः स्वामी सतां स्वागतमन्वयुङ्क्त ॥ ३ ॥
शरत्प्रवृत्त्येव शशाङ्कभासो वाचा हरेर्गोपधियः प्रसन्नाः । मिथो विमर्शैः कुमुदैरिवासन्निषद्भिरासादितनिर्मलाशाः ॥४॥
विधानदक्षा विपिनाश्रयास्ते तदन्यसंराधनवीतसङ्गाः । तमर्चयामासुरदीनसत्त्वाः संप्रीणनैः शक्रमखोपनीतैः ॥ ५ ॥
अनन्ययोगादयजन्त चैनं कृष्णेन तेनैव कृतानुचाराः । समेधकैलासनिभैरसंख्यैः सव्यञ्जनैः सादरमन्नकूटैः ॥ ६ ॥
निर्धारितार्थेषु निजोपदेशान्न्यस्तोपहारेषु महीधरार्थम् । अर्च्यत्वमाचार्यकमप्ययासीद्गोपेषु कृष्णो भुवनेषु गोप्ता ॥ ७ ॥
उपाहरन्यानि सभाजनार्थं बलद्विषो बल्लववंशवृद्धाः । परेण पुंसा परिगृह्यमाणैः प्राप्तं फलं पुष्पफलादिभिस्तैः ॥ ८ ॥
मृत्पूपसिक्तैर्भुवनैरशेषैरनन्यदत्तैरपि हव्यकव्यैः । अलब्धपूर्वाममजत्तदानीं गोपाहृतैः प्रीतिमशेषगोप्ता ॥ ९ ॥
विधिप्रयुक्ते हविषि प्रभूते संभुज्यमाने हरिणा समक्षम् । अनागमश्रान्तधियोऽपि तत्र श्रद्धामविन्दन्त समग्रतोषाः ॥
अमृष्यमाणो विहतां स्वपूजामक्ष्णां सहस्रेण तदा महेन्द्रः । अनेहसं रक्तशिलीन्ध्रजालैराकालिकैरञ्चितमन्वकार्षीत् ॥
अवञ्चितान्पूर्वपयःप्रदानानाराधकान्कालमियन्तमिन्द्रः । आहारकर्पादमिहन्तुमैच्छत्कृतानभिज्ञेषु किमानृशंस्यम् ॥ १२ ॥
अथाजुहाव प्रतिघानुषङ्गाद्धोराशयो घोषविमर्दकाङ्क्षी । समेष्यतां संभवमर्णवानां संवर्तकं नाम गणं घनानाम् ॥ १३ ॥
प्रदीपितान्कोपहुताशसूनुा पीतोदधीन्वारिधरायुधीयान् । मरुद्भुजेन त्वरितं मरुत्वान्प्रायुङ्क्त घोषाभिमुखं सघोषान् ॥१४॥
प्रकल्पयन्तः परिवेषचक्रं वृन्दावने विह्वलगोपवृन्दे । समीरनुन्नाः सहसा पयोदाः शक्रस्य ते शासनमन्वतिष्ठन् ॥१५॥
तटित्सहस्रेण विदीप्तनेत्रः समेतवज्रो धृतचित्रचापः । अतर्क्यतेन्द्रः स्वयमभ्रवाहः कालात्मना भूमिकयेव खेलन् ॥१६ ॥
असूयता वज्रभृता प्रयुक्तामाकालिकीं प्रावृषमादिदेवः । आशानिरोधं जगतां दिशन्तीं निरोद्धुमैच्छन्निजया न शक्त्या ॥
वियत्पयोधिं परितः पयोदैर्वेलातमालैरिव वर्धमानैः । जिघांसता गोपगणान्मघोना च्छन्नेन तस्थे मृगयार्थिनेव ॥ १८ ॥
अदृश्यरूपः स तदा मरुत्वानम्भोमुचामन्तरतोऽवतस्थे । अपारयन्द्रष्टुमिव त्रिधाम्नो दीप्तिं दिवाभीत इवातिसूर्याम् ॥
अनर्घवेगादचमत्क्रियोत्थाज्जिघृक्षता वज्रमकुण्ठवीर्यम् । अलक्षि जीमूतरथे मघोना मोघक्रियो मुक्त इवेन्द्रचापः ॥२०॥
सुतीव्रहुङ्कारभृतो निनादैः सौदामनीदर्शिततर्जनीकाः । मरुत्वदाज्ञाविमुखानभीक्ष्णं निर्भर्त्सयामासुरिवाम्बुवाहाः ॥ २१ ॥
क्षणप्रभास्तत्क्षणमन्तरिक्षे प्रायेण गोपान्ग्रसितुं प्रवृत्ताः । बभासिरे वासवरोषवह्नेर्ज्वालाग्रजिह्वा इव जातलौल्याः ॥ २२ ॥
किमन्तरिक्षेण घनीबभूवे किमुत्थितं ध्वान्तमहीन्द्रलोकात् । मूलं किमेतत्प्रलयार्णवानमितीव मेने मलिनाभ्रमाला ॥ २३ ॥
व्रजोपमर्दं समयो विधास्यन्बभार नम्रेण पयोदमूर्ध्ना । महीयसीं वासवचापलेखां मायाप्रदिष्टामिव माल्यशेषाम् ॥ २४ ॥
कठोरगर्जापटहप्रणादः करप्रसूनैरवकीर्य पृथ्वीम् । क्षणप्रभाभिर्घटिताङ्गहारः कालः प्रतुष्टाव युगान्तनृत्तम् ॥ २५ ॥
प्रणुद्यमानाः प्रबलैः समीरैराप्लावयामासुरमन्दघोषाः । महीमपर्यायनिपीतमुक्तैरौदन्वतैरम्बुभिरम्बुवाहाः ॥ २६ ॥
अङ्गाररूक्षस्तनयित्नुपूर्णादैरम्मदे तेजसि तप्यमानात् । विहायसो नूनमभूद्विलीनाद्विष्वङ्मुखी वृष्टिरवारणीया ॥ २७ ॥
प्रदीप्तविद्युद्गणदुर्निरीक्षान्सोढुं व्रजाः श्रोत्रविघातिघोषान् । न शेकुरावर्जितशक्रचापान्धाराशरश्रेणिमुचः पयोदान् ॥ २८॥
सहुंकृताः सामिनिमीलिताक्षा दीर्घोरुशृङ्गा दरभुग्नवक्त्राः । प्रत्यग्रहीषुः प्रतिपन्नरोषा धाराः क्षणं धैर्यभृतो महोक्षाः ॥

स्तनाहितस्वस्तिकबाहुबन्धास्त्यानालकाः संनतवक्त्रपद्माः । विलग्नदेहा वसनैर्न्यषीदन्व्रजस्त्रियो वादितदन्तवीणाः ॥३०॥
चलद्बलाकोल्बणशङ्खमाला पयोधरव्यक्तिधरोर्मिमाला । प्रावृट् पुनः संववृतेऽतिघोरा संवर्तसिन्धोरिव धर्मपत्नी ॥ ३१ ॥
गम्भीरगर्जापटहप्रणादं प्रारब्धझञ्झानिलनादगीतम् । तडिद्भिरापादिततताण्डवं तत्कालस्य संगीतपूर्वमासीत् ॥ ३२ ॥
विद्युद्गुणैः संदितया समन्ताद्व्रजे मरुत्वान्मृगयामिवेच्छन् । समावृणोत्सान्द्रतमिस्रधाम्ना मेघात्मना वागुरया वनाद्रीन् ॥
आसारधाराच्छुरितेन्द्रचापैर्मेघैर्दिशा माघवती चकाशे । आमुक्तमुक्तागुणरत्नदामैः सिन्धोरपत्यैरिव धीरनादैः ॥ ३४ ॥
हुंकारवन्तः स्तनितैरुदारैः क्षणप्रभाकाञ्चनवेत्रभाजः । पुरंदरस्येव पुरःसरास्ते प्रचेरुरुत्सारितगोपवर्गाः ॥ ३५ ॥
प्रकृष्टवज्रायुधचापचिह्नां पौरस्त्यवातेन कृतप्रकम्पाम् । कालस्य कृष्णामिव केतुमालां कादम्बिनीं प्रेक्ष्य जनश्चकम्पे ॥
पयोमुचां पङ्क्तिरसह्यधारा भूभृद्व्रणान्भेत्तुमिव प्रवृत्ता । विडम्बयामास विशेषभीमां कृतान्तकोपोल्लसितां कृपाणीम् ॥
पयोदभारैर्नमितं नभः किं शेषाहिना भूमिरुत प्रणुन्ना । अदूरतः संपुटभावभाजोरासीत्तयोरन्तरमल्पशेषम् ॥ ३८ ॥
प्रायः प्रकीर्णाशनिविस्फुलिङ्गैर्लोकास्तदा लोचनरोधमापुः । पयोदरूपेण विवर्तमानैः पर्जन्यकोपानलधूमजालैः ॥ ३९ ॥
अलातकल्पाः करकास्त्रिलोकीमापूरयन्नद्भुतभीमरूपाः । युगान्तवात्यारभसावधूताः संभूय तारा इव संपतन्त्यः ॥४०॥
चकास चञ्चत्करकास्थिमाला कादम्बिनीकण्टकभीषणा द्यौः । वज्रौघनिष्पेषमहाट्टहासा मूर्तिस्तदा मोहकरीव रौद्री ॥
शतह्रदाभिर्धृतहेमकक्ष्या धाराधराः सेन्द्रधनुष्पताकाः । अदभ्रघोरघ्नयोऽनुचक्रुः सप्तसुतां शक्रमतङ्गजानाम् ॥ ४२ ॥
अहीन्द्रभोगप्रतिमाः पतन्त्यो धारास्तदा घोरमरुत्प्रणुन्नाः । अभावयन्भीमपयोदनक्रं व्योमार्णवं वीचिगणावकीर्णम् ॥४३॥
आसारदुर्लक्षतटित्प्रकाशमन्योन्यसङ्कीर्णहरिद्विभागम् । आसीदसह्यस्तनितं प्रजानामभिन्ननक्तंदिवमन्तरिक्षम् ॥ ४४ ॥
तटित्स्वभावेन तमःप्रकृत्या निर्ह्रादरूपेण जलात्मना च । विवर्तते विश्वमितीव गोपाः प्रायो न चिन्तार्णवपारमापुः ॥
प्रवर्तमानान्प्रतिसर्गकल्पसौ पश्यन्घनान्पाशभृताऽप्यवार्यान् । अभीतिमुद्रामधुरेण गोपानाश्वासयामास करेण शौरिः ॥
यदर्चनादापदियं प्रसक्ता तेनैव गोपालगणस्य गुप्तिम् । अरोचयत्कर्तुमशेषगोप्ता रामेण संमन्त्र्य रथाङ्गपाणिः ॥ ४७ ॥
स लीलया मेरुमिव द्वितीयं गोवर्धनं गोपकुलप्रदीपः । नवप्ररूढं निहितैकहस्तो नागो नलस्तम्बमिवोज्जहार ॥ ४८ ॥
अधोमुखावस्थितमेरुकल्पं शैलं तमुत्पाट्य शरण्यगोपः । उदञ्चयन्सत्वरमूर्ध्वमूलं चक्रे महेन्द्रं शमितार्धगर्वम् ॥ ४९ ॥
फणाभिरामप्रसृताङ्गुलीकः प्रियाङ्गरागव्यतिषङ्गपाण्डुः । भुजस्तदीयो गिरिणा बभासे भूमण्डलेनेव भुजङ्गराजः ॥ ५० ॥
आमुग्नरक्ताङ्गुलिपञ्जरं तद्रत्नोर्मिकारश्मिशलाकमन्तः । नवोदकक्षौमवृतं व्यभासीच्छत्रप्रकाण्डं हरिबाहुदण्डे ॥ ५१ ॥
विहारपद्मस्पृहयेव कृष्णो भुजाद्रिणा भूमिधरं दधानः । स्वशेषभूतस्य हलायुधस्य प्राचीमवस्थां प्रथयांबभूव ॥ ५२ ॥
निवासभूते निखिलस्य तस्मिन् बालाकृतौ बिभ्रति शैलमेकम् । सविस्मयान्वीक्ष्य जहास गोपान्संप्रीतिलक्ष्येण तदग्रजन्मा ॥
स कालिकाकालकृपाणिकानां धाराशतैराहतसन्धिबन्धः । अवासृजत्क्षिप्रतरं क्षरद्भिर्धातुद्रवैर्नूनमसृञ्जि शैलः ॥ ५४ ॥
सगैरिकस्तस्य गिरेः समन्ताद्विलम्बितो वर्षपयःप्रवाहः । वितानपर्यन्तजुषो वितेने विडम्बनां वर्णतिरस्करिण्याः ॥५५॥
इरंमदार्चिर्व्यतिषङ्गदीप्तः पाणौ हरेरद्रिपतिश्चकाशे । प्रत्यस्त्रमिन्द्रेण मुमुक्षितानां प्रयुक्तमुत्खात इवाशनीनाम् ॥ ५६ ॥

स बाहुदण्डेन वहन्सलीलं प्रवालकल्पाङ्गुलिपञ्जरेण । महीधरच्छत्रमनन्यवाह्यं मायामयीं व्याकुरुतेव लीलाम् ॥ ५७ ॥

करालरूक्षाकृतिवर्णभेदान्कालाग्निनिर्वापणकल्पवृत्तीन् । रुरोध शैलीकृतया स्वशक्त्या प्रायो घनान्पर्वतकूटकल्पान् ॥५८॥

पृथ्व्या यथावद्धरितं गिरेस्तन्मूलं निवासाय गवां बभूव । आसानुभावग्रहणार्हमासीदग्रं च तस्यानतिविप्रकृष्टम् ॥५९॥

उदञ्चितस्याद्रिपतेरुपान्ते पयःप्रवाहा निविडं पतन्तः । अतन्वत स्फाटिकवप्रशोभामन्तर्गतैरस्तमयैरवेक्ष्याम् ॥ ६० ॥

अलब्धसूर्येन्दुकरप्रवेशे मूले गिरेरावसतां जनानाम् । स्वलोचनद्वन्द्वविहारभेदान्नक्तंदिनान्यातनुते स नाथः ॥ ६१ ॥

मुकुन्दगात्रं मणिदर्पणाभं छायापदेशेन विगाहमानैः । सगोधनैस्तत्र सुरेन्द्रभीत्या गोपैस्तदा गूढमिवावतस्थे ॥ ६२ ॥

बिभर्ति कृष्णः सुकुमारगात्रः क्षमाधरं तेन विभावयामः । तदग्रजोऽसौ बिभृयादशेषां बलः क्षमामित्यवदन्व्रजस्थाः ॥

बभुः स्वशाखाग्रथिताग्रपादैस्तपोधनैः साकमधःशिरोभिः । कृताभिमुख्याः कृतिनो मुकुन्दे तपःप्रवृत्ता इव तत्र वृक्षाः ॥

अधोमुखस्याद्रिपतेस्तृणानि स्पृष्ट्वा मुकुन्देन निदर्शितानि । जातस्पृहा जग्रसिरे सहर्षं गावस्तदा किञ्चिदिवोन्नमन्त्यः ॥

मणिप्रदीपैरतमांसि गोप्यः प्रविश्य रम्याणि गुहागृहाणि । अस्पृष्टशीतोष्णमयत्नलब्धं स्वस्थाशयाः स्वर्गमिवान्वभूवन् ॥

यथापुरं तत्र स पुत्रदारैरच्छिन्नगोदोहनमन्थनाद्यैः । स्वप्नावबोधप्रभृतीनि गोपैः सिषेविरे विस्मृतपूर्ववासैः ॥ ६७ ॥

अस्पृष्टधाराजलबिन्दुसेकैरकम्पमानैरपदन्तवीणैः । गोपीजनैरादधिरे विहाराः गिरीन्द्रमूले गृहनिर्विशेषम् ॥ ६८ ॥

वनेचरा गोपगणैः समेता विमुक्तपर्जन्यभया विचेरुः । महीधरच्छत्रधरे मुकुन्दे वन्यानि सत्त्वानि च तत्र गोभिः ॥

प्रभूतधाराप्रतिपन्नशैत्यं प्राप्तारमद्रिं प्रभुरद्भुतानाम् । सुदर्शनादप्यधिकामनैषीत्पवित्रतां पाणिसरोजयोगात् ॥ ७० ॥

मुकुन्दहस्ताम्बुरुहाधिरोहात्प्राप्तः श्रियं मेरुमुखैरलभ्याम् । वर्षापदेशेन गिरिः स लेभे नगाधिपत्यार्हमिवाभिषेकम् ॥

मदोल्बणानामिव बल्लवीनां गीतं गणैः शौरिगुणानुबन्धम् । गुहाविशेषैर्ध्रुवमन्ववादीद्गोवर्धनो गोपगणाभिनन्द्यः ॥७२॥

कराग्रयन्त्रे घटितेन कृष्णः सवारिणा सानुमताभिगुप्तान् । अलम्भयद्गोपगणान्सदारान्धारागृहाभ्यन्तरवाससौख्यम् ॥

अचिन्त्यशक्तेरकुमारयूनः कौमारलीलाकवचेन गुप्तम् । बलं तदाऽग्राङ्गुलिसंश्रिताद्रेस्तावत्परिच्छिन्नमबोधि गोपैः ॥७४॥

निमेषनिष्ठ्यूतयुगानि यासां येभ्यो निरोधव्यसनान्यभूवन् । तासां स तैः सार्धमभूत्समीक्ष्यो वामभ्रुवां बल्लवयूथनाथः ॥

कृतार्थभावं भृशमादधाने कृष्णाङ्गसंस्पर्शविलोकनादौ । अयन्त्रिताभिश्चिरमाशशंसे वर्षानुवृत्तिर्व्रजसुन्दरीभिः ॥ ७६ ॥

धारानिपातैः स्तनतां घनानामक्षप्रमाणैरभिहन्यमानः । आकस्मिकीमन्वभवत्स शैलो वज्रव्यथां वासवरोषजाताम् ॥७७॥

तमेकहस्ताङ्गुलियन्त्रलग्नं धाराहतं धारयतस्त्रिधाम्नः । अमुक्तबाल्यस्य समग्रशक्तेः क्षणार्धवत्सप्त दिनान्यतीयुः ॥७८॥

स तादृशांस्तोयभृतो युगान्ते श्वासानिलैः शोषयितुं क्षमोऽपि । महेन्द्रदर्पात्ययमात्रकाङ्क्षी प्रख्यापयामास गिरेः प्रभावम् ॥

एकत्र संरक्षति कृष्णमेघे गोत्रेण चैकेन गवां कुलानि । अशेषगोत्रौघभिदा नियुक्तैर्मेघायुतैर्मोघतमैर्बभूवे ॥ ८० ॥

व्रजोपमर्दे वितथे सुरेन्द्रः स्वयंवृतोऽपत्रपया भिया च । दुनोति मामिन्द्रपदं दुरन्तं किं पौरुषं केवलमित्यदुःख्यत् ॥

निवृत्तरोषे निभृतेऽपि शक्रे संदर्शितस्वामिनिदेशसञ्ज्ञाः । ववर्षुरुर्व्यां मुहुरश्मवृष्टिं वैरोपपन्ना इव वारिवाहाः ॥८२॥

निवार्य दुर्वारजवान्पयोदान्नाथं सतां नन्दसुतं प्रपित्सुः । करम्बितप्रीतिभयः क्षणार्धं व्यक्तिं भजन्व्योमतलेऽवतस्थे ॥

क्रमेण पृथ्वीमभिगन्तुकामः श्वेताभ्रपर्यायगजाधिरूढः । विलोचनव्याञ्जितपद्मसंपद्विपर्यययो मूर्त इवावभासे ॥ ८४ ॥
पुनः प्रसन्नां पुरुहूतदान्त्या पश्यन्दिवं प्राणभृतामधीशः । तमद्रिमव्याहतदिव्यलीलः संतोलयामास निवेशयिष्यन् ॥
विलक्षवृत्त्यैव तिरोहितेषु मेघेषु विश्रान्तविकत्थनेषु । स्थाने निवेशादचलीचकार च्छत्राचलं शौरिरखिन्नबाहुः ॥ ८६ ॥
उत्क्षिप्यमाणः परिवर्त्यमानः संस्थाप्यमानोऽपि तथैव भूयः । स तस्य संकल्पवशेन भेजे शैलो न शैथिल्यकथाप्रसङ्गम्॥
व्यपेतशैलव्यवधानदृश्यो विभूषितः स्वेदकणैः स बालः । दिशद्भिरामोदमभौमभोग्यं दिव्यैरवाकीर्यत पुष्पवर्षैः ॥८८॥
निवेश्य कृष्णं शकटीरथाग्रे नाथोपचारैरुपसेदिवांसः । सगोधनाः स्वं व्रजमाव्रजन्तः संगीतलीलामभजन्त गोपाः ॥
कच्चिन्न खिन्नोऽसि वहन्गिरीन्द्रं कच्चिन्न विम्लायति पाणिपद्मम् । इति ब्रुवाणाः सुहृदो मुकुन्दं पर्याकुलाः पस्पृशुरङ्गमङ्गम् ॥
अथावतीर्य स्वयमन्तरिक्षादनुज्झितैरावतदानवर्षात् । विलक्षचित्तो वसुदेवसूनुं वल्गुस्मितं वज्रभृदाससाद ॥ ९१ ॥
पुरोदधानः सुरभिं प्रतीक्ष्यामाजग्मुषीमात्मभुवो नियोगात् । अपत्रपागद्गदमावभाषे बद्धाञ्जलिं बालमुपेन्द्रमिन्द्रः ॥
नाथ त्वया नर्मविहारभाजा विमोहितो विप्रतिसारितश्च । अकिंचनस्त्वामहमाश्रितः सन्क्षितापकारो न बहिष्क्रियार्हः ॥
कृतापराधेष्वपि सानुकम्पं क्षेमंकरं क्षेत्रविवेचकानाम् । विश्वोपकाराध्वरबद्धदीक्षं वेद्यं परं वेदविदो विदुस्त्वाम् ॥९४॥
निगृह्णतस्ते सृजतश्च वर्षं निमित्तभावे निहितैस्त्वयैव । प्रवर्तते निष्प्रतिघो विहारः स्वयं प्रयुक्तैरिव यन्त्रभेदैः ॥ ९५ ॥
अनन्यसाधारणपारमेष्ठ्यादन्यानशेषानतिसंदधानात् । गोपायितुं पारयति त्रिलोकीं गोपायमानादपि न त्वदन्यः ॥९६॥
वनौकसां नाथ दिवौकसां वा विपत्प्रसङ्गे विहितावतारः । एकस्त्वमेव स्वयमीप्सितानां दयासहायो नियमेन दाता ॥
स्वरूपतो विग्रहतश्च विश्वं नित्यं त्वयैकेन धृतं यदेतत् । तदेकदेशोद्वहनादमुष्मान्न विस्मयं तत्त्वविदो भजन्ति ॥९८
प्रयोजितोऽहं त्वयि भक्तिबन्धाद्गोभिः स्वलोकादुपसेदुषीभिः । इच्छामि संरक्षितगोत्रजं त्वां स्थाने गवामिन्द्रतयाऽभिषेक्तुम्॥
तिरोहितामम्भसि विन्दता गां पूर्वं त्वया पोत्रिवरेण लब्धा । निरुक्तनिष्णातकृताभ्यनुज्ञा व्यक्तिं पुनर्यातु शुभा त्वदाख्या ॥
उपेन्द्रभूताद्भवतोऽपि भूम्ना मान्यो मनुष्याभिनये मया त्वम् । अभ्यर्थनामादरतस्तदेनां प्रतीच्छ विश्वंभर विश्वमूर्त्यै ॥१०१
इति ब्रुवाणो मघवान्धृताद्रेः श्रान्तिं जगद्धातुरिवापनेष्यन् । ध्यातोपयातां त्रिदशप्रणेता दिव्यापगां दर्शयति स्म देवीम् ॥
अभौमगङ्गापयसा प्रपूर्णामावर्जयन्वारणराजघण्टाम् । अशेषसाम्राज्यपदाभिषिक्तं गुप्त्यै गवां गोत्रभिदभ्यषिञ्चत् ॥
तदङ्गसंस्पर्शवशेन धन्यैराप्लाव्यमानानभिषेकतोयैः । अपेतभारामिव भूतधात्रीमुल्लाघितां प्रैक्षत नाकनाथः ॥ १०४ ॥
कृताभिषेकः कृतिना मघोना गुणेन गोविन्द इति स्वनाम्ना । कृतप्रसादः प्रजिघाय कृष्णः स्वर्गाधिरोहाय पुनः सुरेन्द्रम् ॥

प्रतिगतवति यूथे पुष्कलावर्तकानां दिवि भुवि च नियत्या दीर्घनिद्रोज्झितानाम् ।
गुणगरिमसमृद्धं गोकुलं वीक्ष्य तुष्यन्गुरुभिरभिनियुक्तामाशिषं प्रत्यगृह्णात् ॥ १०६ ॥

मुकुलितरविधाम्ना देहदीप्त्यैव मुष्णञ्जलदकदनजातं जीवलोकस्य जाड्यम् ।
व्यचरदचलभोगे चारयन्धेनुचक्रं पिशुनितनिजमायां भूषयन्पिञ्छमालाम् ॥ १०७ ॥

प्रणिहितमधिरोहन्प्रागिवाद्रिं पृथिव्यामवमतपुरुहूतैरर्चितो गोपवृन्दैः ।
व्रजपतिरुपसीदन्बाल्ययोग्यान्विहारान्वनचरपरिबर्हो वत्सपालैः सिषेवे ॥ १०८ ॥

नाथः सोऽयं शिशुरपि सतां नन्दगोपस्य सूनुः प्रायः शैलः प्रतिनिधिरसौ पद्मनाभस्य पुंसः ।
किं नः साध्यं सुरपतिमुखैः किंपचानैस्तदन्यैः साकं दोरिति किल जगुस्तत्र संभूय गोपाः ॥ १०९ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये सप्तमः सर्गः ।

## ८. अष्टमः सर्गः

अथ प्रसूनायुधमागधेयान्यारब्धमन्दानिलमौक्तिकानि । मधुप्रसङ्गान्मधुराणि यूनामनुष्णशीतान्यभवन्दिनानि ॥ १ ॥
अनेकरूपैः स्वयमेकरूपः कालात्मकं रूपमकालकल्यः । ऋतुप्रभेदैरनुभूय रेमे रामासखो राममनुप्रयातः ॥ २ ॥
हेमन्तपूर्वः शिशिरान्तिमश्च शरच्च संभूय वसन्तवृत्त्या । शनैः शनैः शान्तिमुपेयिवांसस्तद्वैभवात्तन्मयतामिवापुः ॥ ३ ॥
प्रायेण पञ्चायुधपञ्चवक्त्रः पलाशकोशाकृतिमादधानैः । मनस्विनीनां नगजेन्द्रभेदात्सशोणितैः पाणिरुहैश्चकाशे ॥ ४ ॥
जगन्ति पुण्ड्रेक्षुशरासनेन प्रसूनबाणैरपि जेतुमिच्छोः । असूचयन्नात्मभुवः स्वनादैरव्याहतामाशिषमन्यपुष्टाः ॥ ५ ॥
वराङ्गनावक्त्रपदाम्बुजानां स्वाभाविकीं सौरभरागलक्ष्मीम् । प्रपित्समानौ प्रसवैस्तदर्हं द्वेधा द्रुमौ दोहदमन्वभूताम् ॥६॥
तीक्ष्णारुणाग्राण्यचिरप्ररोहाच्चकाशिरे चम्पककुड्मलानि । दत्तानि कामोत्सवमङ्गलार्थं दीपाङ्कुराणीव वसन्तलक्ष्म्या ॥७॥
मुक्तापगामज्जसमुत्थितात्मा भूयोभजन्पुष्परजोभिषेकम् । चचार मन्दं मलयाद्रिवातश्वेतोभुवो दत्त इवौपवाह्यः ॥ ८ ॥
पुष्पेषु संयोगवियोगवृत्त्या क्रमाद्भजन्ती नतिमुन्नतिं च । वनान्तरे षट्पदपङ्क्तिरासीन्मञ्जुस्वना मन्मथचापमौर्वी ॥ ९ ॥
वसन्तक्लृप्तान्मदनस्य बाणानान्दोलयन्नूतनमनोकहेषु । दिनेदिने दक्षिणमातरिश्वा गतागताभ्यां गणयांचकार ॥ १० ॥
आघूर्णमानैरभितो नभस्वान्कान्तैः प्रदीपैरिव कर्णिकारैः । वनश्रियो माधवसंगमार्हं मङ्गल्यनीराजनमाचचार ॥ ११ ॥
प्रसूनहासाधरपल्लवानां किञ्जल्करोमाञ्चजुषामभुङ्क्त । मन्दानिलैराहितवेपथूनां कान्तिं वसन्तो वनवल्लरीणाम् ॥ १२ ॥
विहारयोग्यामथ वीक्ष्य वन्यां रमापतिं रामसखं विशन्तम् । नमश्चरैः साकमनोकहास्तं नाथं प्रसूनोर्मिभिरभ्यषिञ्चन् ॥
पुष्पाकरेण प्रतिपन्नशोभं वृन्दावनं नन्दितगोपवृन्दम् । प्रदर्शयन्प्रापितधेनुवत्सं रामानुजो राममिदं बभाषे ॥ १४ ॥
मनोभुवो मूर्तमिवावलेपं मान्यं मनस्कारमिव त्वदीयम् । चिरं त्वया सेव्यमिहार्य मन्ये चित्रं वनं चैत्ररथाभिनन्द्यम् ॥
अनानुषप्राप्यमरण्यमेतत्प्राप्तस्य ते पादरजःप्रभावात् । सत्त्वोपपन्ना न भजन्ति सत्त्वाः शान्ताशयाः शाश्वतिकं विरोधम् ॥
अचिन्त्यभूमंस्तव सन्निधानादन्योन्यजातीयदशां दधानाः । सिंहीवशास्तन्यविदो भजन्ते सुभ्रातृतां केसरिदन्तिपोताः ॥
त्वदर्पितस्वादुतृणादिनीनां त्वद्दर्शनादामृतपायिनीनाम् । मन्ये गवां वत्सगणावृतानां विष्वग्वनं विश्रमयोग्यमेतत् ॥ १८ ॥

वसन्तलक्ष्म्या इव वासभूमिं सङ्कल्पयोनेरिव शिल्पशालाम्। रतेरिवारामविभूतिमन्यां वन्यामिमां वेद्मि तवोपकार्याम् ॥
वनस्थलीयं मकरन्दवर्षैरतोयकर्मान्तिकमात्तसेका। प्रस्तौति पर्याप्तपरागजाला समीहितं सञ्चरणोत्सवं ते ॥ २० ॥
नभःस्पृशामत्र महीरुहाणां नीडादमी निष्पतिताः सलीलम्। प्रयुञ्जते स्वागतमञ्जसा ते प्रायः शुभालापजुषः शकुन्ताः ॥
वातावधूतास्तरवः स्वमूर्ध्ना सन्तानसान्तानिकसम्पदस्ते। प्राज्यैरमी पुष्पफलैश्च नूनं वितन्वते वन्दनमर्हणां च ॥ २२ ॥
आस्वाद्य चूताङ्कुरमन्यपुष्टाः प्रायः स्वनैः पञ्चममुद्गिरन्तः। आकारयन्तीव वनं गतं त्वां दिव्यानमी दर्शयितुं प्रदेशान् ॥
त्वत्पादविन्यासविशेषधन्यामापादयिष्यन्त इवात्मधात्रीम्। एनां स्वशाखाग्रकरप्रयुक्तैः प्रचिन्वते भूमिरुहाः प्रसूनैः ॥२४॥
निशामयन्त्यो वनदेवतास्त्वां चकोरसंमोहनचारुदीप्तिम्। प्रीतिं प्रभूतां परिवाह्य गीतैः शीताश्रुणा शेषमिवोद्वमन्ति ॥
रसालरम्भादिभवैरहीनाः फलद्रवैः पिच्छिलपार्श्वभागाः। वत्सावगाह्या वनराजिमध्ये पूर्णाः सुधाया इव भान्ति कुल्याः ॥
कह्लारपद्मोत्पलकान्तिभिस्ते कटाक्षविक्षेपगुणं भजन्त्यः। अरण्यभागानभितः प्रवाहैराप्याययन्त्याप इमाः प्रसन्नाः ॥२७॥
वद्वक्त्रपद्मप्रतिमासहस्रैः संसृज्यमानेव सपुष्करासौ। प्रभावतः ख्यापितपुष्करश्रीः पुण्योदका पुष्करिणी विभाति ॥२८
सञ्चारजातैः श्रमवारिलेशैरालक्ष्यमुक्तागुणमण्डनं त्वाम्। व्यक्तं नदी वीजयतीयमारादम्भोरुहैराश्रितवीचिहस्तैः ॥२९॥
सहन्ति वातातपवर्षवातांस्तोयेषु तिष्ठन्ति रविप्रतीक्षाः। तपस्यतस्त्वन्मुखकान्तिलोभात्पद्मानिमान्पश्चिमरामन्ये ॥ ३० ॥
तरङ्गिणीभिः परिरभ्य मुक्तः संलापवान्भृङ्गरवैरधीरैः। आपृच्छते नूनमतः प्रयातं मन्दीभवन्कुन्दसमीरणस्त्वाम् ॥ ३१
मनःप्रसादं तव दर्शयन्ती प्रालेयसंघातनिभैः पयोभिः। शुद्धा नवेन्दीवरनीलवासाश्छायेव ते शैवलिनी विभाति ॥ ३२
त्सह प्रयच्छन्ति तव प्रियाभिश्चञ्चूर्ध्वमाणा इह चक्रवाकाः। आहूय दातार इवातिथेयाः कालोचितां कस्त्वमितीव वाचम् ॥
विधूतवालव्यजनाः स्वपक्षैश्चारुस्वनापादितचाटुवादाः। अभिन्नवर्णाः प्रतियन्त्यमी त्वां राजोपचारैरिव राजहंसाः ॥ ३४ ॥
दिवापि गोवर्धननिर्झराणां संछादिते व्योम्नि तुषारजालैः। इहातपश्चान्द्रमसेन धाम्ना विकल्प्यते बोधितपङ्कजोऽपि ॥ ३५
अतर्कितप्राप्तमवेक्ष्य कान्त्या मेचकरं मेचकमम्बरं ते। निनादनिष्पादितषड्जगीता नृत्यन्त्यमी सानुषु नीलकण्ठाः ॥३६
नदीभिरारब्धतरङ्गलास्यं नादैर्युतं निर्झरदुन्दुभीनाम्। गायद्द्विरेफं गिरिणा त्वदर्थं प्रायेण सङ्गीतमिह प्रयुक्तम् ॥३७॥
कलिन्दजाकच्छभुवां सखीभिः प्रच्छायवन्याभिरधित्यकाभिः। सूते गिरिः सूचितनन्दनोऽसौ स्वर्गौकसां स्वैरविहारवाञ्छाम्॥
अभ्यागतं वीक्ष्य भवन्तमारात्साला इमे सामिनताग्रशाखाः। सुधारसस्वादुतमानि भक्त्या स्वयं प्रयच्छन्ति फलानि धन्याः॥
पात्रीभवन्तस्तव वीक्षणानां पद्मालयावासविकल्पितानाम्। चराचराः कानि कियन्ति वैते तपांस्यतप्यन्त भवान्तरेषु ॥
विजानतां सत्पुरुषप्रभावं पुंसाममी पुण्यतमीभवन्तः। प्रायस्त्वदङ्गीकरणात्प्रयास्यन्त्याराध्यतामद्रिवनावकाशाः ॥ ४१ ॥
संस्कारपूतामिरितीव वाग्भिः संमोदयन्नग्रजमादिदेवः। विज्ञातलीलो विजहार ह्यप्यन्वन्यः सतां वत्सगणानुयायी ॥४२॥
स्वयंवृतः स्वैरविहारलक्ष्म्या मुहुर्विर्तेने विपिने मुकुन्दः। स्थानान्तरप्राप्तिविभावितानि स्थितेरभिन्नानि गतागतानि ॥४३॥
प्रभूतया पुष्पफलप्रसूत्या वदान्यवृत्तीनि वनानि दृष्ट्वा। सस्मार चिन्तावशवर्तिनीनां व्रजस्थितानां वरवर्णिनीनाम् ॥४४॥
प्रायस्तदाह्वानविधौ नियोक्तुं प्रगृह्य वेणुं प्रतिपन्नदूत्यम्। न्यवेशयत्कुड्मलिते सलीलं बिम्बाधरे सूचितचित्तरागे ॥४५॥

सामोपपन्नान्क्रमशः स्वरन्ध्रैः सप्त स्वरान्सप्तभिरुद्वमन्तम् । प्रचक्रमे वादयितुं वनान्ते वंशं प्रियो बल्लववंशजानाम् ॥
मुकुन्दवक्त्रानिलवाद्यमानो वेणुर्बभौ वेद इव द्वितीयः । रागावधीनां रहसां यदेकं गीतात्मनां तस्य निदानमासीत् ॥
तद्वंशनादः सुभगोऽनुगच्छन्नग्रेसरन्सौरभमागमानाम् । अयत्ननिष्पन्नमनःसमाधीनाब्रह्मकानातनुतेव जन्तून् ॥ ४८ ॥
शृण्वद्भिरुद्भ्रान्तमधुप्रवाहं वंशस्वनं तस्य सुधैकवंशम् । सयूथ्यतां नूनमवाप्य सर्वैः सत्त्वैः स्थितं सामिनिमीलिताक्षैः ॥
मधुद्रवैरुल्बणसंमदाश्रूण्यालेख्यनिष्पन्दमृगद्विजानि । उदग्रकोशोत्पुलकानि कृष्णो वंशीनिनादेन वनान्यकार्षीत् ॥५०॥
आस्वाद्य तद्वंशनिनादमाध्वीमाघ्राय तत्सञ्चरसौरभं च । मुक्तामृतानां भुवि सौरभेय्यः क्षितेतरां क्षीवदशामवापुः ॥ ५१
वंसस्वनास्वादवशीकृतानां व्यक्तोदयानां वनदेवतानाम् । स कर्बुरः स्निग्धतमैः कटाक्षैः सेन्द्रायुधो मेघ इवावभासे ॥
आध्मापयामास स शृङ्गमग्र्यं शङ्खं तथाभूतमिवात्मयोगात् । जगौ च गेयानि बहूनि येषां गान्धर्ववेदोऽपि न पारदृश्वा ॥
त्रिस्थानयुक्तस्वरभूषितं तत्त्रिधा स्थितं ग्रामविशेषयोगात् । अरञ्जयत्सप्तजगन्त्ययत्नाद्गीतं हरेराहृतकिंनरौघम् ॥ ५४ ॥
विलासवाक्यैरिव वेणुनादैर्दिव्येन गीतेन च दैत्यहन्तुः । निवेदितार्थाः सुदृशः स्ववासादाजग्मुराकर्षणमन्त्रतीक्ष्णैः ॥५५
अनिष्टशब्दैर्वलयैरपोढाः काञ्च्याप्यवज्ञातपदोपगत्या । गुणावकृष्टाः प्रियमाप्तुमीषुः कामोपदिष्टेन महापथेन ॥ ५६ ॥
आदिश्यमानां प्रियवंशनादैराशां निजाशामिव निर्विघाताम् । तदास्थितां प्रास्थिषताशु धन्यामासन्नसन्ध्याधिकरागभाजः॥
मधुव्रताधिज्यशरासनेन पुष्पात्मकं संदधता पृषत्कम् । अनुप्लवेन व्रजता बभूवे तासामनङ्गेन तदोद्यतानाम् ॥ ५८ ॥
आदेशयोगैरथ तत्र गोप्यो निवार्यमाणा अपि दुर्निवाराः । आनिन्यिरे रागमयैर्महौघैः क्लेशापहं कृष्णसुधापयोधिम् ॥
त्वरासखीनां पुरतः प्रचेले तरस्विना निःश्वसितेन तासाम् । सदागतिप्रार्थनया समेतं दूरस्थितं कृष्णमिवोपनेतुम् ॥६०॥
प्रायेण वेगात्सुदृशां विभिन्नः प्रकीर्णमुक्ताफलपुष्पजालः । प्रस्तावयन्कामविहारनाट्यं हारः समालक्ष्यत सूत्रधारः ॥६१
अवस्थितं क्वापि कदम्बमूले वल्गुस्मितं वादितमञ्जुवेणुम् । साचीकृताक्षं ददृशुस्तरुण्यः स्वाद्यं सतां स्वस्तिकचारुजङ्घम् ॥
तदङ्गशोभामवलोक्य दिव्यां विस्मेरभावं व्रजतेव दूरात् । अमोहयद्यौवतमादिधूर्तः संतोषदिग्धेन समीक्षणेन ॥ ६३ ॥
द्रुतागतिव्याकुलभूषणास्ताः किंचित्समुच्छ्वासितनीविबन्धाः । पर्याकुलाक्ष्यः परिवार्य तस्थुः कृष्णं कृपाधीनदृशं कृशाङ्ग्यः॥
स वल्लभः संसदि वल्लवीनां बर्हस्रजा दर्शितदानराजिः । उदग्रशृङ्गध्वनिरावभासे दृप्तो वशानामिव वारणेन्द्रः ॥ ६५ ॥
अवृद्धिसंकोचमिवेन्दुमन्यमकार्मुकं काममिवात्तवेणुम् । तमद्भुतानामिव राशिमेकं गोप्यस्तदात्मान इवान्वभूवन् ॥ ६६
सुराङ्गनाभिः समये धृतायां स्वेनैव गोपाकृतिभूमिकायाम् । अकर्मवश्यस्य विभोस्तदासीदर्चाफलस्पर्शनमात्रलीला ॥६७॥
न खल्वमुष्य प्रमदामदान्ध्यं न कुत्सनं तत्तदभीष्टदातुः । न धर्मसंस्थापनबाधगन्धः शुद्धानुचिन्त्या हि शुभस्य लीला ॥
अनागमप्रत्ययसंभवानां गुरुत्यजां गोपकुमारिकाणाम् । अनन्यसङ्गात्स दयालुरासीदसङ्गघण्टापथसार्थवाही ॥ ६९ ॥
पुष्पावचायप्रवणेन गोप्यः प्रसाधितास्तेन स च प्रियाभिः । अभिन्नबाह्यान्तरमैकरस्यादामोदमन्योन्यसगन्धमापुः ॥७०॥
स्वलालनादापतितं स तासां सौभाग्यदुर्मानमदं विनेष्यन् । पुष्पावचायव्यपदेशलौल्यादासीद्दवीयानवहिः स्थितोऽपि ॥
अविप्रकर्षेऽपि तिरस्करण्या क्लृप्तावृतिं कृष्णमनीक्षमाणाः । भीमैरदूयन्त भृशं तरुण्यः क्षणैः स्वनिश्वाससमीरदीर्घैः ॥

पुष्पावकीर्णेषु वनद्रुमाणां मूलेषु मोहालसचेतसस्ताः । कृतासिकाः कृष्णवियोगखेदात्कामास्त्रपर्यङ्कगता इवासन् ॥७३॥
विलीनचित्ता विषमास्त्रतापाद्विलपयन्त्यो वसुधां विलापैः । अदृश्यरूपस्य हरेरगायन्गुणांश्चरित्राणि च गोपकन्याः ॥७४॥
मुकुन्दविश्लेषविमोहितानां संश्रूयमाणानि मुहुर्वनान्ते । शमप्रदान्यात्मविदाममूवंस्त्रय्यन्तगन्धीनि वचांसि तासाम् ॥७५
स माययात्मानमसौ परेषां प्रच्छाद्य संदर्शयति प्रसादात् । इतीममर्थं प्रथयन्प्रियाणां दृष्टिं शुभां दातुमियेष तासाम् ॥
तासामथ स्मेरमुखाम्बुजेन श्यामेन पीताम्बरचित्रितेन । आविर्बभूवे सहसा पुरस्तान्मधुद्विषा मन्मथमन्मथेन ॥ ७७ ॥
तमेकचित्ताः प्रतिसंनिवृत्तं यातेन नृत्यन्तमिवाद्भुतेन । गोप्यः पुनर्जातमिवात्मनैव प्रैक्षन्त संमोदपयोधिमग्नाः ॥ ७८ ॥
नवेन्दुरेखाकृशपाण्डुराङ्गीस्तापाश्रुसंदर्शितवह्नितोयाः । ददर्श गोपीरवतारगोपः श्वासैस्त्रिलोकीमिव शोषयन्तीः ॥ ७९ ॥
अविध्यतैकः प्रणयापराधी योगैरलक्ष्यो युगपत्प्रयुक्तैः । आवर्जितभ्रूधनुषाममोघैरेणीदृशामीक्षणचित्रपुङ्खैः ॥ ८० ॥
प्रसादजीवातुभिरङ्गनानां प्रत्येकमन्याभिरलक्षणीयैः । विलासचाटूक्तिविलोकनाद्यैरानन्दयन्सान्त्वनमाचचार ॥ ८१ ॥
तासां तदङ्गव्यतिषङ्गलोभात्स्वैरन्भिकावृत्तिमुपेयुषीणाम् । विरक्तनिध्येयपदः स रागी रागाधिकां प्रास्तुत रासलीलाम् ॥
तदग्रहस्तग्रहणार्थिनीनां स सव्यतो दक्षिणतश्च तिष्ठन् । बभार विद्युद्व्यवधानभाजां वात्याजुषां वारिमुचामभिख्याम् ॥
द्वयोर्द्वयोरेकतया स तासां मध्ये स्थितो मण्डलरासनृत्ते । करद्वयस्पर्शरसेन कान्ताः प्रत्येकमानन्द्य भृशं ननन्द ॥
अपारमावर्तयता रसाब्धिं रामानुजो रासजवेन दीव्यन् । पदाश्रितानां श्रमशान्तिहेतुः प्रियासहस्रं भ्रमयांचकार ॥ ८५
स्वमायया घूर्णयतो महत्या विश्वानि भूतानि विमोरजस्रम् । रामाजनं रासवशं विधाय स्वस्य स्वयं प्राप निदर्शनत्वम् ॥
स्वपादपांसुस्नपिताकृतीनां स्विद्यन्मुखीनां व्रजसुन्दरीणाम् । लम्बालकानां ललितस्मितानां लाभात्स्वयं लब्धमनोरथोऽभूत् ॥
सनृत्तगीतेन विहारयूना गोपीजनैरन्तरितेन बद्धम् । तदद्भुतप्रस्थिति रासचक्रं जवादलक्ष्यान्तरमावभासे ॥ ८८ ॥
जगुः सहर्षं दिवि देवकन्याः दिव्यास्तदा दुन्दुभयः प्रणेदुः । पपात कल्पद्रुमपुष्पवृष्टिः सदर्चिते संश्रितरासलीले ॥८९
गृहीतहस्तद्वितयाः सलीलं मिथ्याभुजङ्गेन मृगीदृशस्ताः । परिभ्रमन्त्यो विपरीतवृत्त्या प्रक्रान्तरासां भुवमभ्यजानन् ॥९०
मनोज्ञमलीहमितेन तासां रम्येण कृष्णो रजनीमुखेन । अन्यादृशीं प्रीतिमनन्ययोगादापादयिष्यन्विरराम रासात् ॥९१
उद्भिन्नघर्माम्बुकणं विहारात्तासां करस्पर्शरसेन चैनम् । लतागृहे नन्दनगर्भशोभिन्यासीनमन्वासत गोपकन्याः ॥९२॥
स्वलम्बितैश्चित्रपलाशपुष्पैः संवीज्यमानो विटपैः प्रियाभिः । निदर्शयामास वनान्तराले नीलाद्रिमुद्भ्रान्तमयूरवृन्दम् ॥
विचित्रलीलाहितवेपथूनां तासामनासादितविश्रमाणाम् तापोपशान्त्यै तपनात्मजायामाह्लादनीमद्भिरियेष लीलाम् ॥९४॥
मुखेन तस्य द्विजराजभासा ताराभिरामेण तमोपहेन । प्रेमोदधिं वर्धयता प्रियाणां संचिक्षिपे तत्र सरोजकान्तिः ॥ ९५ ॥
सन्ध्याघनाभः स तदा प्रियाणां मध्ये बभौ वारिजरेणुताम्रैः । शृङ्गारदिग्धैरिव दृष्टिपातैः शृङ्गोदकैराप्लुतचित्रदेहः ॥९६
स पद्मिनीनां सलिलस्थितानां चकार संमीलनमाशु तासाम् । तुषारजालैस्तुहिनांशुसौम्यः कामोपनेता करयन्त्रमुक्तैः ॥
पटीरपङ्कैः प्रतिपन्नगङ्गां शोणान्वितां कुङ्कुमसंगमेन । कस्तूरिकाभिः प्रचितात्मवर्णां कृष्णप्रियाः कृष्णनदीं वितेनुः ॥
अकालजातप्रतिमेन्दुजालनाकीर्णमिथ्याशफरांस्तरङ्गान् । वक्त्राक्षिवक्षोरुहबिम्बयोगादकल्पयन्कल्पितचक्रवाकान् ॥ ९९ ॥

सविभ्रमा चारुपयोधराभा ताभिः समं सूर्यसुता प्रपेदे। अलब्धपूर्वं तदनन्यलभ्यं कृष्णोपभोगेन कृतार्थभावम्॥१००॥
नितम्बवक्षोजनिरूढवृद्धिर्मध्ये कृशा संश्रितनिम्ननाभिः। विलोलपद्माग्रतरङ्गहस्ता तासामसूदन्यतमेव साऽपि॥१०१॥
अनूययेव प्रमदाजनानां लाक्षाञ्जनादीनि विलोपयन्ती। निसर्गशोभातिशयप्रकाशात्कृतोपकारेव नदी बभूव॥ १०२॥
चिरप्रवृद्धं दयितेऽनुरागं चित्ते दुरासेधमिवोद्वमन्ती। प्रायेण तत्कान्तिमधूपभोगाद्दृष्टिस्तदा रागमुवाह तासाम्॥१०३॥
अनङ्गरागोज्ज्वलचित्तदेहा विश्वाधिकं विव्यधुरायताक्ष्यः। कह्लारशोभारचितैः कटाक्षैः कामस्य बाणैरिव तापदीप्तैः॥
विगाहनाद्रोपनितम्बिनीनां संवर्धमाने सहसाऽम्बुपूरे। तद्वक्त्रशोभाविजितैः सरोजैरन्तर्हितं नूनमवाप्तलज्जैः॥ १०५॥
कृष्णाम्बुदः कल्पितहस्तयन्त्रश्चकार गोपीनयनोत्पलेषु। धाराम्बुसेकादुपसंभवन्त्या रागश्रिया रक्तसिलीन्ध्रशोभाम्॥
मुहुःप्रयुक्तां मुखपुण्डरीके कदर्थयन्त्या करयन्त्रधाराम्। कान्ते कयाचिद्दधिरे कराभ्यां गतागतान्युत्पलकाननानाम्॥
प्रयापिते गोपिकया कयाचित्कृष्णाननं कीचकयन्त्रतोये। निमीलनोन्मीलनतस्तदीयावक्तंदिवं तत्क्षणदृश्यमासीत्॥
तमार्द्रभावान्निविडान्तरीयं लम्बालकं राशिमिवाद्भुतानाम्। पश्चादुपेता परिरभ्य तस्थौ काचित्प्रिया कामवधूरिवान्या॥
अभङ्गुरप्रेमबलेन तस्याः बद्धं प्रियं बाहुलताद्वयेन। समीक्ष्य कामार्पितपाशमन्याः संप्लावयामासुरपेतशङ्का॥ ११०॥
यदङ्घ्रियोगाज्जगतां त्रयाणां मन्दाकिनी मान्यतमा बभूव। तयापि संभाव्यतमा तदासीत्कृष्णेन सा तेन कृतावगाहा॥
अथोपचारानुपपादयन्ती दिव्येन देहेन दिनेशकन्या। आनर्च पादार्पितरत्नपुष्पा गोपीसखं गोपकुमारमाद्यम्॥ ११२॥
सरिद्भिरन्याभिरपि प्रभावात्प्रायेण गोपीतनुमाश्रिताभिः। तोषादुदन्वत्सुतयोपभोग्यस्तोयोपचारेण विभुः सिषेवे॥११३॥
तमुत्तरन्तं सरितः प्रवाहादुत्तारकं पङ्कमयात्पयोधेः। मरुत्प्रयुक्ता वसनाङ्गरागैराकल्पयन्नप्सरसस्तदर्हैः॥ ११४॥
व्रजाङ्गनाश्च त्रिदशाङ्गनाभिः प्रसाध्यमाना बहुमानपूर्वम्। रमासहायप्रणयानुरूपां संमाननां साधुजनेष्वविन्दन्॥११५॥
विहृत्य तस्मिन्व्रजसंमुखीने चक्रं गवां शैलवनान्निवृत्तम्। उपाद्रवत्कश्चिदरिष्टनामा कैलासपर्यायतनुः ककुद्मान्॥११६॥
खुराग्रवज्रेण विदारयन्क्ष्मां विषाणनिर्भिन्नविमानमूलः। दुर्वारवेगो ददृशे स दूरान्मृत्योरुपक्रान्तमहो महोक्षः॥११७॥
शृङ्गावरुग्णैः शकटैः प्रकीर्णं वृषान्तरैराशु विमुक्तमार्गम्। व्रजं तदा विप्लुतगोपवर्गं त्यक्त्वा स कृष्णाभिमुखं जगाम॥
तमापतन्तं प्रतिसंजिहानो निर्ह्रादवित्रासितदीनधेनुम्। विषाणयुग्मग्रहणेन शौरिश्चक्रे विनिष्पीडितपीनकण्ठम्॥ ११९॥
अपहृत्य दुर्जयमरिष्टदानवं जगतामरिष्टमिव जातविग्रहम्। व्रजसद्भिरद्भुतविहारतोषितैः सुरसत्तमैरपि समं स तुष्टुवे॥

अन्यैरप्यसुरमलिम्लुचैरनेकैरातङ्कान्स्थिरचरसूतिभिः प्रसूतान्।
गोपानां प्रतिविदधे गवां च काले रामेण स्तुतचरितो रथाङ्गपाणिः॥ १२१॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये अष्टमः सर्गः।

## ९. नवमः सर्गः

अथ भोजपतिर्जगत्पतेरवतारं भुवि नारदान्मुनेः। श्रुतवानतिदेवदानवं व्यथया पीतविषोपमोऽभवत्॥ १॥

निहता पृथुकेन पूतना शकटं तत्परिवर्तितं महत् । ककुभद्वितयं निपातितं प्रहितः क्वापि निपीड्य कालियः ॥ २ ॥
स च गोमुखवर्धनो दधे गमितः क्षोदमरिष्टपर्वतः । प्रथितश्च बलः प्रलम्बजिन्निधनं धेनुकदानवो गतः ॥ ३ ॥
दवहव्यवहश्च जग्रसे विषधृद्विन्ध्यसमो विदारितः । इति नाम विजृम्भणे रिपोरलमेकैकमलङ्घ्यतास्थिते ॥ ४ ॥
बहुभिः किमिह प्रतर्कितैर्बलिनः स्रोतसि धावतो विधेः । यदतीतमतीतमेव तत्करणीयं पुनरायतिक्षमम् ॥ ५ ॥
इति विप्रतिसारविह्वलः स्वयमुत्थापितमृत्युचोदितः । प्रतिहन्तुमियेष चक्रिणं शलभो दीप्तमिवाशुशुक्षणिम् ॥ ६ ॥
दिवसान्तदिवाकरोपमः श्वसितान्दोलितजीवितस्थितिः । भयविस्मयरोषकर्बुरः स शिरःकम्पमवर्तयत्क्षणम् ॥ ७ ॥
स च दानपतिं समादिशद्भवतो जीवतु भद्र सौहृदम् । अजितेन जिघांसितस्य मे भज साहायकमात्मरक्षणे ॥ ८ ॥
अतिमानुषचेष्टितः स्वयं मधुजिन्मानुषभूमिकां वहन् । असुरानभिहन्तुमीहते दमनीयोऽयमरूढयौवनः ॥ ९ ॥
अविचारितमाशु गम्यतामधिनन्दावसथं विहारिणौ । बलदेवजनार्दनौ बलादुपनेयौ भवता च्छलेन वा ॥ १० ॥
सह नन्दमुखैरशङ्कितं करदानव्यपदेशवञ्चितैः । अपरेद्युरिहोपसर्प्यतामसुरध्वंसकृदव्रजान्वितः ॥ ११ ॥
इति वाचमुदीर्य दुर्मतिः स्ववधोपात्तकृपाणिकोपमाम् । सपदि प्रजिघाय केशिनं मधुजित्पीडनलोभमोहितः ॥ १२ ॥
स च वाजिमहासुरश्चरन्ननुवृन्दावनमद्रिसंनिभः । समहेषत संमुखं प्रभोरशनिध्वानभयानकध्वनिः ॥ १३ ॥
कुलिशोपमदन्तपङ्क्तिकं कुटिलप्रेक्षितजातविद्युतम् । खुरखण्डितभूमिमण्डलं ज्वलदङ्गस्फुटविस्फुलिङ्गकम् ॥ १४ ॥
बडवामुखवह्निदारुणं विपुलावर्तविशेषचित्रितम् । धृतसिन्धुतरङ्गताण्डवं मुखनिष्कासितफेनसंप्लवम् ॥ १५ ॥
क्षितिभेदकृतक्षणैः खुरैः पटुधीरध्वनिनिर्जिताम्बुदैः । विदधानमशेषघातिनः शमनस्येव मृदङ्गवादनम् ॥ १६ ॥
धृतवालधिधूमसंहतिं चटुलोल्काशतचण्डकेसरम् । ग्रसितुं क्षममम्बुधीन्क्षणादनुकल्पाश्रितचण्डपावकम् ॥ १७ ॥
गरुडानिलचित्तरंहसं गतदूरान्तिकमक्रमैः क्रमैः । मुहुरुत्प्लुतिभिन्नभास्करं निबिडास्यूतपयोदकेसरम् ॥ १८ ॥
भ्रमणे कृतसालमण्डलं क्रमणे दिक्षु विदिक्षु च स्थितम् । नटवृत्तिमिवाशुनर्तने कलिताकाशमिवाङ्गधूनने ॥ १९ ॥
मधुजिद्वहनक्षमात्मना दरनिर्भुग्नफणेन भोगिना । मुहुरुन्नमितामयत्नतो नमयन्तं निजभारतः क्षितिम् ॥ २० ॥
अचलक्षितिसंधिभेदनैरनिलस्कन्धविभागभञ्जकैः । बधिरीकृतनिर्जरश्रुतिं बहुभिः संभ्रमहेषितोर्मिभिः ॥ २१ ॥
द्विरदायुतसारदुर्दमं द्रुतविद्रावितदिग्गजञ्जजम् । असुरादिभिरप्यनास्थितं सुरसेनापरभागदर्शिनम् ॥ २२ ॥
प्रतिकायमिवासुरश्रियः प्रथमाकल्पमिवान्तकभ्रुवः । परिवर्तमिवामरश्रियः प्रतिघस्येव महोत्सवं नवम् ॥ २३ ॥
उपमानमिवात्मनः स्वयं प्रतिमानेऽपि समे समत्सरम् । अवलेपमिवात्तविग्रहं द्विषदुत्पातमिव द्रुतोदितम् ॥ २४ ॥
अचमत्कृतपञ्चवक्त्रकं कृतमन्यैरिह दुष्टसत्त्वकैः । अपसर्पितगोकुलं भयादभिलीनस्थलगोपयूथपम् ॥ २५ ॥
अवमत्य तुरङ्गदानवं शमयन्गोपगणस्य साध्वसम् । प्रजहास हरिः प्रतिद्रवन्प्रसभास्फोटितभावितोद्यमः ॥ २६ ॥
विवृतायतवक्त्रकन्दरं प्रतिधावन्तमिवान्तकं प्रभुः । भुजसानुमतः प्रवेशनादगमं वज्र इव व्यदारयत् ॥ २७ ॥
क्रकचक्षतदारुभेदवत्समपादाक्षिललाटनासिके । ददतुः क्षितिकम्पमाघ्नती शकले सैन्धवदानवस्य ते ॥ २८ ॥

विशरारुभिरस्य विश्वतः कलधौताचलखण्डपाण्डरैः । वितता पृथिवी विदिद्युते विबुधश्रीतिलताङ्कुरैरिव ॥ २९ ॥
तदनाधि विभूतिबन्धुरं विगतव्याधिकुलं व्रजौकसाम् । दमितारिगणेन दीव्यता यदुनाथेन सनाथतां ययौ ॥ ३० ॥
त्वरितं च तदा श्वफल्कजः स्वहितं कंसनियोगमास्थितः । दनुजान्तकदर्शनोत्सवस्थिरसंप्रीतिरिति व्यचिन्तयत् ॥ ३१ ॥
अपि नाम निशामयिष्यते निगमान्तैरिव निर्मिता स्थली । रमयिष्यति यत्र मे दृशौ रसभूमा रमणीयमातृका ॥ ३२ ॥
भवदुर्गतदिव्यभेषजैः प्रचितां तत्पदपद्मरेणुभिः । प्रणिपत्य शुभां वनस्थलीं परिपूतो भविताऽहमप्युत ॥ ३३ ॥
रसमप्रतिमं रसायनं रमया च क्षमया च सेवितम् । नयने मम किं नु पास्यतो नरकातङ्कनिदानभेदनम् ॥ ३४ ॥
अपि शङ्खरथाङ्गतोरणध्वजवज्राङ्कुशमत्स्यलाञ्छनम् । विनिवेशयताद्विभुः स मे विनते मूर्धनि पादपङ्कजम् ॥ ३५ ॥
यदुवंशमसौ समाजयन्बहुमानेन विहारजेन माम् । भुजपञ्जरमध्ययन्त्रितः पुलकोद्भासिततनुं विधास्यति ॥ ३६ ॥
श्रुतिसौरभसौम्यया गिरा सुधयेवैष मुखेन्दुसूतया । शमयेदपि नाम संज्वरं पुरुषः पुष्करलोचनो मम ॥ ३७ ॥
अहमस्मि तवेति वादिनं प्रणयस्मेरमुखः प्रसन्नधीः । विदितेतरवर्जितोऽप्यसौ विभुरक्रूर वदेति वक्ष्यति ॥ ३८ ॥
चिरशीलितसंयमक्रमैर्यतिभिर्योगदृशा दिदृक्षितम् । निधिमद्भुतमुज्झितावधिं परिपश्येयमहं प्रसङ्गतः ॥ ३९ ॥
स दृशा सदृशान्तरोज्झितः सुमुखः स्वागतवाक्यगर्भया । कलुषं किमपह्नुवीत मे करुणासिन्धुसुधोर्मिकल्पया ॥४०॥
व्यथितं वृजिनेन धन्वना विषयाशीविषमोहितं च माम् । अपि जीवयिता पतिः सतामममृतासारनिभैरवेक्षणैः ॥ ४१ ॥
अलमत्र पृथग्विधैः फलैरवशादध्वनि विन्दतो मम । वसुधावसुदेवदेवकीतपसामेकमिदं महत्फलम् ॥ ४२ ॥
मदखेलगती महाबलौ मधुरालंकरणं विधित्सतः । व्रजयूथपती वशानुगौ भवितारौ मम भागधेयतः ॥ ४३ ॥
किमकुर्वत पुण्यमग्रिमं महितास्ते मधुरानिवासिनः । कृपयोपगतौ निरीक्षितुं कृतिनः कृष्णहलायुधावुभौ ॥ ४४ ॥
रमया क्षमया च माधवो रममाणः प्रतिगम्य तां पुरीम् । अपि चर्मदृशोऽपि मादृशानविसंवादयिता स्ववैभवे ॥४५॥
अवरुद्धभुजान्तरः श्रिया विदधानो वसुधाकरग्रहम् । अभिषेकमुपेयिवानसौ किमु नाथो भविता कुलस्य नः ॥ ४६ ॥
असहिष्णुरसह्यविक्रमस्त्रिजगत्क्षोभकृदुग्रसेनजः । बलवान्बलभद्रकृष्णयोर्हतधीर्हन्त किमाचरिष्यति ॥ ४७ ॥
अकठोरशिरीषकोमलैः कथमङ्गैः प्रतियोत्स्यते हरिः । कुलशैलकुलीनमुष्टिभिः कुटिलैः संयति मुष्टिकादिभिः ॥ ४८ ॥
उदयास्तमहीधरस्तनीं चतुरम्भोनिधिमेखलां भुवम् । उपभोक्ष्यत एष कंसजिन्न हि दुःसाधमचिन्त्यतेजसः ॥ ४९ ॥
इति संमतसत्त्वसारथौ महितस्थेम्नि मनोरथे स्थितः । हरिपादरजःपवित्रितं व्रजमासाद्य रथादवातरत् ॥ ५० ॥
नवनीतमुखैरुपायनैरथ नन्दप्रमुखप्रकल्पितैः । उचितामभिनन्द्य सत्क्रियामभितस्तानगवेषयत्प्रभुम् ॥ ५१ ॥
स ददर्श गवामनुप्लवं मुदितं केशिवधेन केशवम् । गतिमप्रतिघाध्वयायिनां गरुडच्छलनिवारितातपम् ॥ ५२ ॥
घनसंवृतनारदस्तुतं निगमाघ्रातनिजाङ्घ्रिसौरभम् । तरुणारुणताम्रवाससं शुभतापिञ्छतुलाधरद्युतिम् ॥ ५३ ॥
अभिलक्ष्यमनुश्रवेक्षणैरविपर्यस्तहिताहितक्रमैः । परिभूषितबर्हभूषणं कमलाकौस्तुभनित्यभूषितम् ॥ ५४ ॥
अतिसूर्यसुधांशुतेजसं समहानेरुपमेयमात्मना । निबिडाद्भुतराशिमक्षयं निगमानामपि नित्यनूतनम् ॥ ५५ ॥

उपवीणयतस्तमर्भकानुपगातृनुपनृत्यतश्च सः । तदवस्थतदर्हभूमिकान्यमिनोऽनन्यमतीनमन्यत ॥ ५६ ॥

शुभतर्णकशोभितान्तिका. सविधे तस्य च धेनुविग्रहाः । अनघाङ्गवतीरमन्यत श्वसितैरस्य समुत्थिताः श्रुतीः ॥ ५७ ॥

प्रगुनाव च भक्तिसंनतः प्रणिधानेन विना समीक्षितम् । हरिमद्भुतगोपखेलनं श्रितसर्वातिथिमागतोऽतिथिः ॥ ५८ ॥

दुरितग्रहयोगदुःखितं त्रिगुणग्रन्थिनिबन्धनिघ्नितम् । पतितं निजपादपङ्कजे परिगृह्णीष्व घृणानिधान माम् ॥ ५९ ॥

स्वपदप्लवमाश्रिताञ्जनावयसे पारमपारवैभवः । अतिवेलमहोर्मिसंकुले कलुषोदन्वति कर्णधारितः ॥ ६० ॥

रमया सह राजहंसवत्परमं धाम विभूषयन्भवान् । प्रणिधानवतामपङ्किले पदमेतन्निदधाति मानसे ॥ ६१ ॥

अतिरोधिरसौ निधिः श्रुतेरनिमेषव्रतदेशिनी दृशोः । तनुते तनुरीश तावकी स्मरणं विस्मरणं च दुःशकम् ॥ ६२ ॥

व्यपदिश्य मुकुन्द देवकीं विहरन्त्या वसुदेवमन्दिरे । जनितोऽसि निजानुकम्पया जगतीरक्षणजागरूकधीः ॥ ६३ ॥

भवतो भवनाटिकां विदन्विभवाडम्बरिणां विडम्बिनीम् । अनपायपदाधिरोपणादपवृत्ता न पुनर्निवर्तते ॥ ६४ ॥

सुधियस्तव गोपभूमिकां सुभगां कौतुकसूतिकां धियाम् । अनुविद्य गताग्रचभूमिकामधिविन्देयुरनश्वरीं श्रियम् ॥ ६५ ॥

दुरितानि भजन्ति संक्षयं तपनेनेव तमांसि दीव्यता । हृदयानि च योगिनां त्वया कुमुदानीव विकासमिन्दुना ॥ ६६॥

गुणतश्च विभूतितश्च ते कचिदंशेऽपि समाधिकत्यजः । उपमानकलाविकल्पितैरुपलक्ष्येत जगत्प्रधानता ॥ ६७ ॥

महिमार्णववर्णनोद्यताः परिमातुं गुणमेकमक्षमाः । त्रपयेव भजन्त्यसीमनि त्वयि वाचंयमतामनुश्रवाः ॥ ६८ ॥

तव विश्वविदो वदामि किं जगदेकाधिपतेर्दिशामि किम् । कृपणः परिपूर्णसम्पदः कमिवांशं परिपूरयाम्यहम् ॥ ६९ ॥

प्रकृते किमनेन तत्प्रभो भवदाविर्भवनस्थलीं पुनः । पदपद्मरजःपवित्रितां विदधानो जहि नाथ विद्विषः ॥ ७० ॥

बहुशाखविजृम्भणो महानवदातेन सुगन्धिनाऽद्य नः । यशसा भवतु प्रसूनवान्यदुसन्तानमहीरुहस्तव ॥ ७१ ॥

त्वरते रिपुरागतौ तव स्वयमेवावसरं समर्पयन् । नतरक्षण किं वदन्त्यसौ न विलोपं भुवि यातु तावकी ॥ ७२ ॥

स्वयमेव समेयुषां वधे विमतानां क्षितिभारजन्मनाम् । मृगयामिव भावयन्त्यसौ महती सम्पदुपस्थिताऽद्य ते ॥ ७३ ॥

शतकोटिसहस्रसारवान्मथनं प्राप्स्यति मातुलस्त्वया । व्यसनं विपदप्यनेहसा विनिपातश्च न कस्य कर्मिणः ॥ ७४ ॥

अभिसंहितमौग्रसेनिना कथितं च क्रमशो व्यजिज्ञपत् । कुलजः कुटिलाशयोज्झितः कुशलं पृष्टवते मधुद्विषे ॥ ७५ ॥

अपरेद्युरुदोपतो नयन्सहसा गोपगणान्स यादवः । स्थितमध्वनि रामकेशवौ रथमारोपयदग्र्यरंहसम् ॥ ७६ ॥

व्रजनोरथ बल्लवस्त्रियो बलभद्रस्य जनार्दनस्य च । अनुदुद्रुवुराशु वर्तनीं कुररीकूजितसूचकस्वनाः ॥ ७७ ॥

व्यलपन्निति बाष्पगद्गदं विरहारम्भविषादविह्वलाः । वलयैः प्रियवर्त्मपातिभिः क्षतपुष्पा इव घर्मवीरुधः ॥ ७८ ॥

अपयाति सहाग्रजन्मना सहसा नन्दसुतो विहाय नः । अनुयाम निवारयाम वा कथमस्माभिरुदास्यते मुधा ॥ ७९ ॥

श्रुतिषु ज्वलनं वमत्यसावदवीयोरथचक्रचीत्कृतिः । द्रुतमेत्य पतेम तत्पदे गुरुभर्त्रादिषु मुक्तगौरवाः ॥ ८० ॥

प्रगुणत्वमिव व्रजस्त्रियश्चलसंबन्धिनि नन्दनन्दने । मुदिरध्वनितां विजानते शिखिनस्तद्रथनेमिनिस्वने ॥ ८१ ॥

अयमुद्धृतगोकुलेक्षणः कथमक्रूर इति प्रजल्प्यते । अथवा भुवनेषु दारुणाः प्रथिताः पुण्यजना निशाचराः ॥ ८२ ॥

वडिशामिषवत्प्रयुक्तया रिपुरक्रूरसमाख्ययाऽन्वितः। विभवं हरति व्रजौकसां किमिहोच्येत वदेम कस्य वा ॥ ८३ ॥
अवतारवराहरूपिणा हरिणा भूमिरुदञ्चितोदधेः। विरहव्यसनोदधेरितः क इवोदञ्चयितुं क्षमेत नः ॥ ८४ ॥
चिरसङ्घटितोऽपि नः क्षणादनुरागो बलभद्रकृष्णयोः। अपयातमहानदीद्वयो भविता शोण इवैष निष्फलः ॥ ८५ ॥
अविकल्पितबाल्ययौवनः प्रणयोऽस्मासु बलानुजन्मनः। विधिना विषमप्रवाहिणा सिकतासेतुरिवैष भिद्यते ॥ ८६ ॥
अनुना शशिनेव कल्पितश्चिरमस्मासु शरन्नदीष्विव। प्रणयः प्रतिभासजीवितः प्रतिमाचन्द्र इव प्रलीयते ॥ ८७ ॥
अहमस्मि तव त्वमेव वा मम दृष्टिस्त्वमिति प्रलोभयन्। विजहाति स एव वल्लवीरलमेतावदतः परेण किम् ॥ ८८ ॥
अयमेवमशुल्कदासिकाः स्वपदोपपन्नलताः स्वयं प्रभुः। बहुमत्य जहाति निःस्पृहः कथमालेख्यगता इवाद्य नः ॥ ८९ ॥
निरपेक्ष इवैष लीलया रसिकः पालिकया सराधया। पृथगत्र किमेतदुच्यते कुहकः कश्चिदसौ कुलस्य नः ॥ ९० ॥
अमृतस्य विषस्य च स्वयं प्रभवस्थानममूतयोनिधिः। नियतं तदनेन दर्शितं निजसंयोगवियोगदायिना ॥ ९१ ॥
मुखचन्द्रिकया मुखानि नः कुमुदानीव विकासमानयन्। कितवो यदुवाच सत्यवत्क गतं तत्क च तेन गम्यते ॥ ९२
यमुनापुलिनेषु दीव्यता यदुतानेन वशीकृता वयम्। विफलप्रणयप्रदायिना विधिना हन्त विलोभितास्ततः ॥ ९३ ॥
विजहाति स एष गोकुलं मथुरामाद्रियते मनोरमाम्। भवितव्यतया शुभाशुभे तदिहैवं परिवर्तितास्पदे ॥ ९४ ॥
सहजं हरता महानिधिं विवशानामिव वैरिणेव नः। विहितः सुकृतेन कीदृशा मथुरायोषिदनुग्रहो महान् ॥ ९५ ॥
सहपांसुविहारसंभृतं जहता स्नेहमनङ्गवर्धितम्। अपि नागरयौवतं क्षणादमुना हन्त विलोभयिष्यते ॥ ९६ ॥
नटवत्परिगृह्य मायया नतचिन्तामणिरेष नस्त्यजन्। अनुरूपतमास्वपि ध्रुवं नगरस्त्रीषु न सङ्गमेष्यति ॥ ९७ ॥
निजवंशनिनादतोऽपि यत्स्वदते श्रोत्ररसायनं वचः। निरवीत नृशंसधीरसौ पुरयोषित्स्वपि वागुरामिमाम् ॥ ९८ ॥
इह तावदुपेक्षिता वयं वशिनाऽऽलेख्यपराङ्गना इव। विहरन्विरसेन चेतसा कितवस्तत्र किमाचरिष्यति ॥ ९९ ॥
युवतीरयमिन्दुकान्तयेन्नगरे नन्दकुमारचन्द्रमाः। स्मितचन्द्रिकया यदीयया द्रवतामेति मनःशिलापि नः ॥ १०० ॥
अपि जम्बुरसुप्य दर्शने नवलुब्धा नगरस्त्रियः प्रियान्। सुलभे सुमणौ कथं मतिः क्रमते काचन काचसंग्रहे ॥ १०१
ललिताद्भुतलास्यगन्धिषु ध्रुवमङ्गेषु बलानुजन्मनः। नवयौवनरामणीयकं नयनैः पास्यति नागरीजनः ॥ १०२ ॥
विधिना विषमप्रवृत्तिना व्यपनीतोऽपि कदाचिदागतः। अपि नः पुनरार्द्रयिष्यते मदनप्राणसुहृद्भिरीक्षितैः ॥ १०३ ॥
इह तत्पदकाङ्क्षिभिः स्तनैर्नयनैस्तन्मुखपद्मषट्पदैः। श्रवणैश्च तदुक्तिजीवितैरपि जीवेम पुनस्तदादृताः ॥ १०४ ॥
करुणाभरितैः कदा पुनः स्वयमुल्लाघयिता स एव नः। अपरस्परपातिभिः शनैरगदंकारनिभैरवेक्षणैः ॥ १०५ ॥
विविधारुणराजिरञ्जिते विशदस्मेरविशालशीतले। किमपि ब्रुवती कृतार्थतां नयने तस्य कदाऽनुनेष्यतः ॥ १०६ ॥
बधिरत्वमिवागतान्यसौ श्रवणान्यद्य पुनः समेत्य नः। रमयिष्यति चाटुभिः कदा रतिसिन्धोरिव वीचिपङ्क्तिभिः ॥ १०७
मदयन्हृदयानि विभ्रमैरपि संवादमिवाचरन्दृशा। अविभागमिवावहन्गुणैरपि नः प्रत्यवपत्स्यते पुनः ॥ १०८ ॥
परिवर्तयिता जगत्त्रयीमपरावृत्तिरनेहसः क्रमः। यदतीतमतीतमेव तत्पुनरेष्यत्यपि पुष्करेक्षणः ॥ १०९ ॥

अथवा पुरसुन्दरीजनैः सुभगंभावुकसौम्यवृत्तिभिः । अवशादवरुद्धचेतसः कृतिनः कैव कथा व्रजागमे ॥ ११० ॥
मथुरापुरमत्तकाशिनीमधुरालापविलोभिताशयः । पुनरेष्यति नन्दनन्दनः किमिवास्मासु विचिन्त्य कारणम् ॥ १११ ॥
बहुविभ्रमपाशबन्धुरां गुणगृह्यः स्वयमेष दुस्तराम् । अतिलङ्घयितुं न शक्नुयान्नगरस्त्रीजननेत्रवागुराम् ॥ ११२ ॥
न रथः परिदृश्यते महान्न च नेमिस्तनितं निशम्यते । न च रेणुरितो विजृम्भते तदपि भ्रश्यति जीवितं न नः ॥ ११३
इति वादिनि वल्लवीजने यमुनां सत्वरसूतचोदितः । घटयन्वसुधामनोरथं वशिनस्तस्य रथः क्षणाद्ययौ ॥ ११४ ॥
स्वगुणानुभवेन सुभ्रुवां भवभोगोचितपुण्यसंचयम् । विरहव्यथया तु तीव्रया वृजिनाम्भोधिमशोषयत्प्रभुः ॥ ११५ ॥
परवन्ति जगन्ति बाधितुं नियतिः किं न करोति निष्ठुरा । विजहौ करुणानिधिः प्रिया विरहे तस्य च ताभिरास्यत ॥
विनिवेश्य रथे सितासितौ वसुदेवस्य सुतौ स यादवः । मणिभङ्गरुचं महापगां दिवमुष्णांशुरिव व्यगाहत ॥ ११७ ॥
अघमर्षणलीनकिल्बिषः सलिले मग्नतनुर्ददर्श तौ । भुजगेन्द्रभुजङ्गशायिनौ पुरुषौ किंचिदिवान्यलक्षणौ ॥ ११८ ॥
उपसृत्य च तीरमादरात्तदवस्थौ निरवर्णयद्रथे । स्मयमानदृशोस्तयोरसौ निभृतः स्वानुभवं न्यवीवदत् ॥ ११९ ॥
प्रणिधानबहिर्विलोचनैः प्रतिलब्धानुभवः प्रसादयन् । अनिनीषत तावुभौ तदा पुरमारब्धशरासनोत्सवाम् ॥ १२० ॥
गजसिंहगती ततश्च तौ गिरितुङ्गेन रथेन तेरतुः । गगनद्रवसंनिभां नदीमपुनःप्राप्तिभयादिवाकुलाम् ॥ १२१ ॥

अथ वियति समेतैः सिद्धगन्धर्वमुख्यैर्भुवि च भुवनगोपः संस्तुतो गोपवृद्धैः ।
ललितगतिविहारो रामचन्द्रेण सार्धं रणपरिणतिकाङ्क्षी राजधानीं जगाहे ॥ १२२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये नवमः सर्गः ।

## १०. दशमः सर्गः

ततस्तौ ददृशुस्तत्र विशन्तौ राजवीथिकाम् । पूर्णदृष्टिफलाः पौराः पुण्यैरेकमुखैरिव ॥ १ ॥
चक्षुषामिव भाग्येन संप्रवृत्तौ महोत्सवौ । युक्तौ मदनशक्त्येव युगपन्मधुमाधवौ ॥ २ ॥
अभिव्याविचिविक्षेपैरपृथग्भावचित्रितैः । समेतैरनुभावाद्यैः सक्ताविव रसोत्तमौ ॥ ३ ॥
क्रममुल्लङ्घ्य भूतानां भोगमोक्षाविवोद्गतौ । तयोरेव विनिष्पत्त्यै धर्माविव च तादृशौ ॥ ४ ॥
पुनन्तौ भुवनं पादैः पुष्पवन्ताविवापरौ । सिञ्चन्तौ कान्तिवर्षेण सितकृष्णाविवाम्बुदौ ॥ ५ ॥
मदोपक्रमदुर्दान्तौ मधुरोद्धतविभ्रमौ । कलभाविव संनद्धौ कंसादिनलमर्दने ॥ ६ ॥
शुभानामिव सीमन्तैः श्रुतिसीमन्तसेवितैः । पुनन्तौ राजविशिखां पुण्यैश्चरणपङ्कजैः ॥ ७ ॥
शीलसंवृतपारम्यैः शृङ्गारपरिकर्मितैः । दृषदोऽपि द्रवीभावं नयन्तौ दिव्यचेष्टितैः ॥ ८ ॥
दिदृक्षादत्तदृष्टीनां मनस्कारमनीषयोः । सप्रीतिरससंतोषं दिशन्तौ देहकान्तितः ॥ ९ ॥

मन्मथायुतसौन्दर्यौ वसन्तायुतसौरभौ । शशाङ्कायुतलावण्यौ चण्डरश्म्ययुतद्युती ॥ १० ॥
चित्रतानिव नीतानां चित्तचेष्टापहारतः । प्रतिसौधं पुरस्त्रीणां निर्विशन्तौ निरीक्षणम् ॥ ११ ॥
सुप्रभातमिह प्राप्तं सुषा च सुदिनं च नः । इति वादिभिरन्योन्यं द्रुतचित्तैरनुद्रुतौ ॥ १२ ॥
बलादपहृतैस्तत्र रजकाद्राजसंमतात् । परभागश्रियं प्राप्तौ वासोभिरसितारुणैः ॥ १३ ॥
लब्धपुण्यविपाकेन मालाकारेण लम्भितैः । शबलौ दाममिश्चित्रैः संदिग्धनवमालिकैः ॥ १४ ॥
कान्तिनिर्जितया कामात्प्रदिष्टैः कंसकुब्जया । दधतौ वर्णकैर्भूयो दिव्यगन्धौ सुगन्धिताम् ॥ १५ ॥
ऋजूकृतसुजाताङ्ग्या ऋजुबुद्ध्याऽथ कुब्जया । प्रणयन्त्या स्वगेहार्तिं प्राप्तमन्दस्मितौ मिथः ॥ १६ ॥
ततो विविशतुः शालां बलिसद्मगुहामिव । प्रथितां पृथुभिश्चापैः पन्नगैरिव भीषणैः ॥ १७ ॥
तत्र शैलनिभं शौरिस्त्रिदशैरपि दुर्दमम् । ददर्शाजगवप्रख्यं दम्भोलिकठिनं धनुः ॥ १८ ॥
स्वपूर्वप्रभवोदन्तमिदानींतनयन्निव । तदानम्य धनुर्भीमं बभञ्ज भुजलीलया ॥ १९ ॥
महता तस्य घोषेण विदद्रे द्विषतां मनः । सौधानि मधुरायाश्च शुष्काशनिविडम्बिना ॥ २० ॥
चापगोपचमूं हत्वा तौ जगद्धितमानुषौ । अतिलङ्घ्य धनुःशालां रङ्गद्वारमवापतुः ॥ २१ ॥
तत्र मृत्युमिव क्रुद्धं निदध्यतुररिंदमौ । नागं कुवलयापीडं निह्नुवानमिवाम्बरम् ॥ २२ ॥
तमासाद्य द्रुतं शौरिस्त्रासितत्रिदशद्विपम् । पञ्चवक्त्र इवाक्रम्य पातयामास भूतले ॥ २३ ॥
तस्य दन्तौ समुद्धृत्य श्वेताद्रिशिखरोपमौ । विदधाते यदुश्रेष्ठौ मल्लयुद्धमहायुधे ॥ २४ ॥
सह गोपैरधिष्ठाय रङ्गमध्यमरिंदमौ । बलिजिद्बलभद्रश्च बालवृत्तैरदीव्यताम् ॥ २५ ॥
नृपोपहूतैरथ तौ विहारैक्यमवापतुः । नर्मकारकजल्पाकनटनर्तकगायकैः ॥ २६ ॥
जनस्य महतस्तत्र जनयामासतुस्तदा । महता कान्तिवर्षेण दिदृक्षां देवमातृकाम् ॥ २७ ॥
उपवेदमधीयुर्ये रणार्थं रङ्गदर्शिनः । तमेव ते द्विधाभूतं तावुभावभिमेनिरे ॥ २८ ॥
तदालोकनलाभेन सामाजिकजनस्तदा । अनिदंपूर्वमाह्लादमपवृक्त इवान्वभूत् ॥ २९ ॥
बिम्बिताकृतयो नार्यस्तद्देहमणिदर्पणे । तत्परिष्वङ्गनिर्वेशमयत्नादिव लेभिरे ॥ ३० ॥
गीतमञ्जुगिरस्तत्र नृत्तसंवादिविभ्रमाः । मञ्चेषु हरिरद्राक्षीद्वरस्त्रीर्मदिरेक्षणाः ॥ ३१ ॥
धृतहेतिपरिष्कारान्धीरोद्धतविलोकितान् । ददर्श पृथिवीपालान्देवानिव दिवश्च्युतान् ॥ ३२ ॥
तमसामिव संघातं समाहारमिवैनसाम् । तुङ्गमञ्चगतं कंसं तुष्टो हरिरवैक्षत ॥ ३३ ॥
ललितारम्भया वृत्त्या रङ्गभाजां रसावहा । नरवृत्तान्तविहृतिर्ववृधे रामकृष्णयोः ॥ ३४ ॥
विदधे सिंहनादेन तारेण यदुसिंहयोः । गर्जितं दैत्यमल्लानां गोमायुगणवाशितम् ॥ ३५ ॥
तावुभौ डिम्भवपुषौ ख्यातवीर्यपराक्रमौ । चाणूरो मुष्टिकश्च द्वौ नियोद्धुमभिजग्मतुः ॥ ३६ ॥

अहो महदुपक्रान्तमत्याहितमिदं यतः । अशिक्षितरणौ बालौ मल्लयुद्धे नियोजितौ ॥ ३७ ॥
शिरीषललितैरङ्गैर्श्लेष्टितैरपि पेशलैः । अद्रिसारकठोराभ्यां कथं योद्धुमिमौ स्थितौ ॥ ३८ ॥
पश्यद्भिरबुधैर्नूनं पौरजानपदैर्जनैः । पापमेतदनुज्ञातं परपिण्डपरायणैः ॥ ३९ ॥
मधुकैटभदुर्दान्तौ मल्लवृन्दारकाविमौ । यदि जेष्यति यः कश्चित् स किं न पुरुषोत्तमः ॥ ४० ॥
अथवा पूतनादीनामप्रयत्नेन घातुकौ । नियुद्धे मल्लमुख्येभ्यो नालमेतौ न वा कथम् ॥ ४१ ॥
जनवादमिमं शृण्वञ्जातहासो जनार्दनः । भुजमास्फोटयामास भूभारहरणे क्षमम् ॥ ४२ ॥
तदास्फोटितशब्देन स्फुटत्कर्णस्य भूयसा । कंसमल्लगणस्यासीत्कथा गोपालकाश्रया ॥ ४३ ॥
गोपयुद्धधिया जिह्मचाणूरः कूणितेक्षणः । पुष्पपेषमिवोत्पश्यन्नाद्रवत्पुष्करेक्षणम् ॥ ४४ ॥
ययोचे विषमं तत्र नियुद्धं स्थूलदृष्टिभिः । तत्त्वदृष्टिभिरप्येवं विश्वाधिकबले हरौ ॥ ४५ ॥
न्यूनाधिकसमारम्भौ विभुस्तत्र विहारतः । विषादप्रीतिसंदेहान् सभ्यानां समतानयत् ॥ ४६ ॥
स बालः प्रचयं प्राप बालातप इव क्रमात् । नीहार इव चाणूरः शनैरपचयं ययौ ॥ ४७ ॥
वारितेष्वथ वाद्येषु विषण्णेन महीभृता । दिव्यदुन्दुभयो नेदुर्निगमध्वाननिर्भराः ॥ ४८ ॥
वल्गता बलभद्रेण कृष्णेन च वसुंधरा । वादित्रमिव दध्वान मथुरेन्द्रभयानकम् ॥ ४९ ॥
भीमकालियभोगीन्द्रस्फटारङ्गमहानटः । मल्लरङ्गनटं दैत्यं मधुमाथं ममाथ सः ॥ ५० ॥
मुष्टिघातेन रामस्य मुष्टिकश्च निपातितः । भोजाधिपमहोत्पातं भूमिकम्पमवर्तयत् ॥ ५१ ॥
रामरामानुजाभ्यां तौ रावणेन्द्रजिताविव । नमयामासतुः पृथ्वीं नगपातं निपातितौ ॥ ५२ ॥
शायितौ वीरशयने दृष्ट्वा चाणूरमुष्टिकौ । द्रुतमभ्यद्रवन्कृष्णं तत्र तोसकलादयः ॥ ५३ ॥
स तानपि नियुद्धेन वसुधायां न्यपातयत् । कालो युगपदुद्भूतान्कल्पान्तमिहिरानिव ॥ ५४ ॥
गरुत्मानिव भूभागाद्गगनाभोगमायतम् । कंसमञ्चमपद्वारादुदप्लवत केशवः ॥ ५५ ॥
कचग्रहेण विवशं कंसमाकृष्य पातयन् । पतन्वक्षःस्थले तस्य तत्सत्त्वमुदपाटयत् ॥ ५६ ॥
महामोहमिवाक्रम्य मातुलं मधुसूदनः । विवेक इव वृत्तस्थमुग्रसेनममोचयत् ॥ ५७ ॥
ददौ च कंसभृत्यानां ददतां तत्र जीवितम् । उन्मुखत्रिदशप्रेक्ष्यामूर्ध्वां गतिमनुत्तमाम् ॥ ५८ ॥
कंसकर्षणमण्डल्यो गम्भीरास्तत्र चक्रिरे । रणलक्ष्मीनिवासस्य रङ्गस्य परिखा इव ॥ ५९ ॥
सुदामनामा कंसस्य सोदरस्त्वरितः क्रुधा । बलेन गमितः क्षिप्रमग्रजेन गतां गतिम् ॥ ६० ॥
अनायुधमहायुद्धं दृष्ट्वा हृषितरोमभिः । प्रवातकदलप्रख्यैः प्राश्निकैरभितः स्थितम् ॥ ६१ ॥
कृतिनस्तादृशं युद्धं किलिकिञ्चितयन्त्रिताः । लीना इव च पश्यन्तो लिखिता इव चाभवन् ॥ ६२ ॥
सिद्धाश्च दिवि तत्तादृक्कालकल्पितताण्डवाः हर्षदुग्धाब्धिकल्लोलं हाहाकारमकल्पयन् ॥ ६३ ॥

अथ तौ भीमदोर्दण्डकण्डूकर्षणतोषितौ । पितृभ्यां दृष्टजन्याभ्यामुपसृत्य प्रणेमतुः ॥ ६४ ॥

तौ च तौ मृदितारातिरिक्तचन्दनरञ्जितौ । अश्रुभिः प्रीतिनिष्यन्दैः पितरावभ्यषिञ्चताम् ॥ ६५ ॥

विबुधत्वमिव प्राप्तो वसुदेवस्सुतेक्षणात् । सतत्त्वप्रतिबोधेन सात्वतां पतिमस्तुत ॥ ६६ ॥

नमस्ते नाभिनालीकरजसा सृष्टवेधसे । अजाय सर्ववेदानामेकवेद्याय विष्णवे ॥ ६७ ॥

अनन्याधारमाधारमनन्येश्वरमीश्वरम् । अनुशृण्वन्ति सन्तस्त्वामनन्याधिपतिं पतिम् ॥ ६८ ॥

अभङ्गुररसं भोग्यमनपायं रसायनम् । अक्षयं धर्मसर्वस्वमिदुस्तव कीर्तनम् ॥ ६९ ॥

अनुग्रहदशादीतमशेषार्थप्रकाशकम् । दयासंप्लुतमाहुस्त्वां दीपमन्तस्तमोपहम् ॥ ७० ॥

देवकी दनुजस्थूणा दिव्यं धाम व्रजाङ्गणम् । रमा राधादयश्चेति राशिभेदैर्न भिद्यसे ॥ ७१ ॥

नियन्ता सर्वभूतानां नियन्तव्यैर्नियम्यसे । पितामहमुखैः पुत्री मम पुत्रोऽसि मायया ॥ ७२ ॥

महता त्वत्पदेनैव मारुतिन्यायमाश्रिताः । निस्तरन्त्यचिरात्सन्तो दुस्तरं भवसागरम् ॥ ७३ ॥

अहितोदन्वदौर्वाग्निमशेषोत्कर्षमातरम् । भवभैमरथीं भक्तिं भजन्ति त्वयि साधवः ॥ ७४ ॥

भरन्यासाश्वयुक्तेन भाववेगप्रधाविना । मनोरथेन गन्तव्यस्सारथिश्च भवान् सताम् ॥ ७५ ॥

वयं तु भवता ग्राह्या वासनादुर्गभेदिना । मनागिव समुद्बोध्य मा पुनर्मूमुहद्भवान् ॥ ७६ ॥

महतामपि निष्कम्पा मनुष्यत्वमतिस्त्वयि । दृढलक्षितचिह्नानां दिङ्मोह इव दुर्दमः ॥ ७७ ॥

दुरन्तसुखखद्योतं दुःखान्धतमसावृतम् । निजेनैव प्रकाशेन निशीथमुपरुन्धि नः ॥ ७८ ॥

मशकानिव मातङ्गः कंसमुख्यानिमान्क्षिपन् । यदि विस्मयनीयस्त्वं विस्मये किं न विस्मयः ॥ ७९ ॥

नखलीलाविदार्येषु नाथेषु विबुधद्विषाम् । परिष्करणपर्यायाः पञ्चापि तव हेतयः ॥ ८० ॥

कालनेमिविकारेऽस्मिन् कंसे विमथिते त्वया । ईदृशामितरेषां च दत्त एव जलाञ्जलिः ॥ ८१ ॥

नमितायतविष्कम्भा दानवप्रभवैः क्षमा । किंचिदुत्तम्भितेवाऽद्य कंसभारापहारतः ॥ ८२ ॥

न खल्वतिशयं कंचिदियमाधातुमर्हति । सुमणावज्रकल्कलेव स्तुतिरस्मत्कृता त्वयि ॥ ८३ ॥

इति विज्ञापितस्तेन व्रीडादिव नतो विभुः । बालोपलालनमिदं भव्यवृत्तिरभावयत् ॥ ८४ ॥

स वाचा सान्त्वयामास पितरं दीनचेतसम् । स्ववक्त्रेन्दुविनिष्यन्दिसुधापूरितकुल्यया ॥ ८५ ॥

गम्भीरमधुरां तस्य गिरं निगमगन्धिनीम् । श्रुत्वा मुक्तिसखीं प्राप मुदमानकदुन्दुभिः ॥ ८६ ॥

देवकी च परिष्वज्य सुतं वात्सल्यनिर्भरा । नन्दगोपवधूलब्धं नवमानन्दमन्वभूत् ॥ ८७ ॥

भूयः प्रादुरभूत्तस्य भुजयुग्मं तिरोहितम् । तथापि तादृशं मर्त्यं तममन्यन्त तामसाः ॥ ८८ ॥

बभूव बलभद्रस्य तेन विश्वातिशायिना । शिरसा विधृतस्यापि किरीटस्येव शेषता ॥ ८९ ॥

क्रियमाणपरिष्कारः किरीटाद्यैस्स बन्धुरैः । तानि तान्येव दिव्यानि तत्तदङ्गैरभूषयत् ॥ ९० ॥

अशोभत शुभं छत्रं तस्य राजन्यलक्षणम् । तन्नाभिपुण्डरीकस्य रूपान्तरमिवोदितम् ॥ ९१ ॥

चामरद्वितयं शौरेः समया मुखपङ्कजम् । शुशुभे सप्रतिच्छन्दा हंसमूर्तिरिव स्वयम् ॥ ९२ ॥

स चन्द्र इव संपूर्णः प्रथमो यदुभूभृताम् । पुनरुन्निद्रयामास कीर्तिं कुमुदिनीमिव ॥ ९३ ॥

अभजन्त द्विजेन्द्रास्तमतद्योगपराङ्मुखाः । सर्गाधिकारान्निर्विद्य(वाप्य) शान्ता इव पितामहाः ॥ ९४ ॥

अहार्यान् यदुवंशस्य स भोगान्समकल्पयत् । स्वपर्यङ्कभुजङ्गस्य फणामणिगणानिव ॥ ९५ ॥

अमरत्वाय पर्याप्तं तन्मुखेन्दुसमुद्भवम् । सुधेव परिवारेभ्यः सस्वदे सूनृतं वचः ॥ ९६ ॥

प्रार्थितोऽपि स राज्याय प्रभावज्ञैर्यदूत्तमैः । अरोचयत राजानमुग्रसेनं वयोधिकम् ॥ ९७ ॥

न्यस्तरक्षाभरो राज्ञा यौवराज्यमुपाश्रितः । शुशुभे पारतन्त्र्येण स्वातन्त्र्यवशवर्तिना ॥ ९८ ॥

तस्य गोपायतः पृथ्वीं गोपालकुहनात्मजः । पर्युपास्त पदं धन्या पार्थिवश्रीरनुत्तमा ॥ ९९ ॥

कृतवीराभिषेकं तं क्लृप्तकल्याणकौतुकम् । तुष्टुवुस्समये वेदाः सौस्नातिकपुरस्कृताः ॥ १०० ॥

शक्तिभिस्तिसृभिर्दीप्तो विवस्वानिव दीप्तिभिः । स्वपदं पृथिवीं चक्रे सुहृद्भिस्सूरिभिर्वृतः ॥ १०१ ॥

विक्लृप्तं तस्य बर्हाढ्यं हेमरत्नविभूषणैः । वैरोचनिहृतानीतः किरीटो न व्यकल्पत ॥ १०२ ॥

सप्तिभिः सैन्यसुग्रीवमेघपुष्पवलाहकैः । व्यक्तिमन्तोऽभवन्वेदास्त्यजन्तो धेनुभूमिकाम् ॥ १०३ ॥

पद्मकमलदायादं पदं तस्य स्वमौलिभिः । श्रुतयो धारयामासुः पादपीठीकृतात्मभिः ॥ १०४ ॥

स वेणुः शङ्खरूपेण प्राचा परिपचेलिमः । अगोपीसंविभागार्हं पपौ तस्याधरामृतम् ॥ १०५ ॥

दिदेश सान्दीपनये धनुर्वेदोपदेशिने । स्वपदारूढतनयप्रत्यानयनदक्षिणाम् ॥ १०६ ॥

प्रहितां(तं) पुरुहूतेन स्वसंकल्पानुवर्तिना । कंसजित्कंसपितरं सुधर्मामध्यवासयत् ॥ १०७ ॥

अशेषरत्नचित्रां तामतीतस्तुतिगोचराम् । अद्वैतमिव सर्वेषामद्भुतानाममन्यत ॥ १०८ ॥

स च तस्यानुभावेन निध्यातनयपद्धतिः । प्रजापालनधर्मस्य पारदृश्वतमोऽभवत् ॥ १०९ ॥

कृष्णपक्षमपि प्राप्य स राजा विश्वरञ्जकः । प्रापद्यत परां वृद्धिं सुमनस्स्वादनक्षमाम् ॥ ११० ॥

मलिनैः सततासारैः मन्त्रिभिश्चपलान्वितैः । विमुक्तः स बभौ भास्वान् मेघैरिव जलाश्रयैः ॥ १११ ॥

प्रचितं बहुभिस्तीर्थैः तस्य गूढं चिकीर्षितम् । सारस्वतमिव स्रोतः स्थानेस्थाने व्यजृम्भत ॥ ११२ ॥

मानसंरक्षकस्तस्य मन्त्रस्तर्क इवानयः । अङ्गपञ्चकसंपत्त्या विपक्षे दण्डतां ययौ ॥ ११३ ॥

स्वतश्शुद्धां यथास्थानं रोषरागवतीं धियम् । स दधे यमुनाशोणशबलामिव जाह्नवीम् ॥ ११४ ॥

सप्तभिस्सामदानाद्यैरुपायैः स्थानपातिभिः । द्विनवद्वीपसंभूतं रत्नजातमजीहरत् ॥ ११५ ॥

अनुगन्ता स्वनेतॄणामुदये विश्वरञ्जकः । दूरीकृततमाः सोऽभूत् द्वितीय इव भानुमान् ॥ ११६ ॥

सञ्चितस्य धनौघस्य स्थानसंचारणेन सः । तटाकस्येव पूर्णस्य परीवाहमकल्पयत् ॥ ११७ ॥

आसागरान्तमवमत्य महीपतीन्द्रान् भूम्ना निजेन परिहृत्य ययातिशापम् ।
ओजोनिरोधकमिलाश्रयमुग्रसेनं राजानमेकमकरोज्जगदेकनाथः ॥ ११८ ॥
क्षिप्तावचं क्षत्रियवृत्त्या बहुशाखं मग्नं शापोदन्वति मान्यं यदुवंशम् ।
इच्छाधीनस्वेतरसर्वः स्वमहिम्ना रक्षागोपो रामयवीयानुदहार्षीत् ॥ ११९ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये दशमः सर्गः ।

## ११. एकादशः सर्गः

तदद्भुतं क्रीडितकं क्रमेण श्रुत्वा हरेरप्रतिमानशक्तेः । महाबलान्कंसवधादिजन्मा मन्युः प्रपेदे मगधेन्द्रमुख्यान् ॥१॥
गोपालडिम्भो नरपालहन्ता कुले यदोरञ्चितमातपत्रम् । अन्यच्च भूम्यामधरोत्तरत्वं हन्तेति वादान्प्रभुरभ्यनन्दत् ॥ २ ॥
हलादिभिर्हेतिवरैर्यथार्हं रथाङ्गमुख्यैरपि रामकृष्णौ । स्ववृत्तियोग्यावसरोपयातैः प्राचीं श्रियं प्रादुरभावयेताम् ॥ ३ ॥
स दैत्यजिद्व्यूहवरूथिनीनां संप्रापकं सारथिमात्रशेषम् । पुनः प्रवृत्तानुशयं पुरीं स्वां निन्ये जरासन्धमहार्यसन्धः ॥
समाहृतैः सैन्यमहासमुद्रैरायातमष्टादश सांपरायान् । देहावशेषं प्रजिघाय दीनं देहेन भीमेन बिभेतुमिच्छन् ॥ ५ ॥
स्वदत्तशक्त्या मुचुकुन्ददृष्ट्या भस्मावशेषो भविता द्रुतं यः । कलेरिवात्मानमनन्तदोषं यं कालपूर्वं यवनं प्रचख्युः ॥
बलस्य च स्वस्य च बाहुभूम्ना यदाहृतम्लेच्छमृगाधिपानाम् । सहस्रकोटीगुणितं सहस्रं पञ्चत्वमायास्यति पञ्चसंख्यम् ॥
तदागमे यादवपुङ्गवानां विद्रावमानोपनतं विषादम् । निवारयामास न वासुदेवः प्रख्यापयन्ब्राह्ममृषेः प्रभावम् ॥ ८ ॥
निसर्गनिध्येयपरावरोऽसौ संमन्त्र्य सार्धं यदुवंशवृद्धैः । विहातुमिच्छन्मथुरां शुभंयुः संकल्पयामास पुरीं तदन्याम् ॥९॥
स्वयं प्रवृत्तैरपि वृष्णिवीरैस्त्रातुं क्षमां त्रासितदैत्यलोकः । अनन्यसाधारणशक्तिरन्यां संकल्पयामास पुरीमपूर्वाम् ॥१०॥
जहौ धरित्रीमिव जामदग्न्यः कौलीमयोध्यामिव कोसलेन्द्रः । अचिन्त्यवृत्तिर्मथुरामनिन्द्यां तज्जन्मजातो महिमा तु नैनाम् ॥
परित्यजन्नप्यभिमत्य तिष्ठन्व्यासः शुभं व्यक्तिपदं तदग्र्यम् । अनन्यभाजामभजत्स देवस्तस्मिन्सतां प्रागिव संनिधानम् ॥
अहंसपद्मामिव वाहिनीं तां वीतेन्दुतारामिव वासतेयीम् । समाप्तकार्यामिव सत्रशालां शून्यां पुरीं प्रेक्ष्य जगाम शौरिः ॥
चित्रावशेषद्विरदाश्वयोधा शुकादिसंभाषणशेषसूक्ता । मणिप्रभाशोषितदीपिका सा नाम्नैव माधुर्यवती तदासीत् ॥१४॥
प्राचीमनादृत्य निवासभूमिं प्रत्यङ्मुखीं पद्धतिमाददाना । स्थिरं पदं प्राप्तुमियेष सेना सत्त्वाधिका धीरिव सात्त्वतानाम् ॥
उत्सारयन् धूलिमिवाग्रयायी विनिर्दिशन्वासमिवातिदूरात् । प्रत्युद्गमाय त्वरयन्निवाब्धिं मरुद्ववौ मन्दविधूतकेतुः ॥१६॥
प्रभूतभीमोन्नतनागनक्रा पारिप्लवैरूर्मिमती तुरङ्गैः । अपूर्ववारांनिधिमाव्रजन्ती स्वयं तथा शौरिचमूरभूत्सा ॥ १७ ॥
समेति मां सात्त्वतवाहिनीयं सिप्णासया हन्त जिगीषया वा । इति प्रभूताद्भुतवैभवां तामुपेन्द्रनाथामुदधिः शशङ्के ॥
गतागतैर्योद्धुमिव प्रवृत्तैरा(त्ता)सीदतामद्भुतभीमवेगौ । मिथःप्रतिच्छन्दतया प्रतीक्ष्यौ वेलावने सैन्यमहासमुद्रौ ॥१९॥

महीयसा सैन्यरवेण सद्यः पयोधिरन्तर्हिततीव्रघोषः । प्रकम्पमानो भृशमावभासे भयेन तूष्णीमिव भाव्यमानः ॥ २० ॥
प्रतीक्ष्य सेनामुपधावमानां पत्या नदीनां प्रणिधीयमानः । प्रकाशयन्सर्वजनानुकूल्यं समीरणो मन्दतरं चचार ॥ २१ ॥
वदन्निव स्वागतमागतेभ्यः प्रभूतसन्तोषभवैः प्रणादैः । तरङ्गहस्तप्रहितैः सरत्नानभ्यर्चयामास यदून्पयोभिः ॥ २२ ॥
चिरप्रयातं परिहृत्य शय्यामभ्यागतं वारिधिरादरेण । मिथःसमायोजितवीचिहस्तः प्रायः प्रभुं प्रार्थयत प्रसादम् ॥२३॥
निवेश्य सेनामुदधेः समीपे तालाङ्कसंभावितराजताले । दयार्द्रमेवोपमदेहभूमा विश्वंभरो विश्रमयांचकार ॥ २४ ॥
कदाचिदात्मानमवाप्तरत्नं कपालिनं चन्द्रकलावतंसम् । क्षमं सुभिक्षां च दिवं विधातुं ध्यातागतं सिन्धुमथादिदेश ॥२५॥
अनारतप्राप्तजयोद्यमानां धर्मं निजं धारयतां यदूनाम् । अपत्यरक्षोचितमन्तरीपं दिव्योपमं देयमिह त्वयेति ॥ २६ ॥
स तस्य दिक्पालनिवासकल्पां विधित्सतो वृष्णिपुरीं विशालाम् । अगाधपाथःपरिखाभिगुप्तं द्वीपं ददौ दुर्गविधानयोग्यम् ॥
बलोत्तराणामपि बह्वमित्रं स्फीतं यदूनां कुलमीक्षमाणः । अवन्ध्ययन्विश्वविदर्थशास्त्रं दुराक्रमं दुर्गमियेष कर्तुम् ॥२८॥
स शासिता शास्त्रमनुप्रतस्थे कर्माददे कर्मफलप्रदाता । प्रभुः स्वबुद्ध्यैव जगन्ति गोप्तुं कुर्वीत बाह्यैरपि किं न गुप्तिम् ॥
प्रभूतरत्नद्युतिकेसरं तत्प्रवालपत्रौघपरीतपार्श्वम् । स्थानं हरेरिष्टतमं तदासीत्संभूतिराजीवमिवेन्दिरायाः ॥ ३० ॥
प्रचोदितस्तत्र च विश्वकर्मा नाथप्रसत्त्यै नलिनासनाद्यैः । रथ्यादिवैचित्र्यवतीं वितेने राशिं गुणानामिव राजधानीम् ॥
स शिल्पविद्यां विधिनोपदिष्टामशेषतो नूनमधीत्य दाक्ष्यात् । शुभानि तस्यां भवनानि कर्तुं सौधेषु दिव्येषु चकार योग्याम्॥
गतागतार्थे हरिवाहिनीनां सेतुं च योगेन बबन्ध सिन्धौ । चकार दिग्भाग(काल)विमूढतां यः प्रत्यर्थिनां चक्रधरप्रभावात्
नलेन पूर्वं स्वसुतेन सृष्टान्नवीनमन्यूनतरं स्वकल्पम् । समीक्ष्य तुष्यन्नपि विश्वकर्मा नाथाय रोचेत न वेत्यताम्यत् ॥
स सेतुरास्कन्दितकूल्युग्मः संकल्पितो वासवलोकतक्ष्णा । महापुरीं तां च महीं च मातुं मध्ये तुलादण्ड इवार्पितोऽभूत् ॥
निवेदितां निर्जरशिल्पिनैव स्वयं चमत्कारवता सुकल्पाम् । अदृष्टपूर्वामिव विश्वदर्शी दृष्टिः सतां द्रष्टुमियेष नाथः ॥
निजप्रतिच्छन्दनिदर्शनीयां मृग्योपमानान्तरसृष्टकान्तिम् । उदन्वता दत्तकरेण देवः प्रदर्शितां पूर्वमवैक्षतैनाम् ॥ ३७ ॥
अनन्यदृष्टिं नगरी नवीना विस्मेरतां विश्वपतिं निनाय । स्वयंप्रभैः सौधभरैरुदारैस्तुङ्गैः सुमेरोरिव रत्नशृङ्गैः ॥ ३८ ॥
तामद्भुतां तारकिताग्रसौधां धर्मस्य पूर्णामिव योगसिद्धिम् । सपौरभृत्यः समयान्ववेक्षी विवेश वृष्ण्यन्धकयूथनाथः ॥
परेण नाकं प्रलयानभिज्ञामधीयते यस्य पुरीमचिन्त्याम् । स लोकनाथो विदधे सनाथां दूराधिकां द्वारवतीं दिवोऽपि ॥
विधाय यस्यां विदितैस्स्वचिह्नैर्यदून्यथास्थाननिवेशतुष्टान् । तामेव नाथस्त्रिदशाभिनन्द्यां त्यक्तामयोध्यां मधुरां च मेने ॥
उदन्वति व्योमतले च लग्नां दृष्टोभया दर्पणदर्शनीये । यामद्भुतामात्मपुरीं च देवाः छायाममन्यन्त मिथस्समीक्ष्याम् ॥
प्राकारचक्रं पृथुभिस्तरङ्गैरास्फालयन्नम्बुधिरात्तवेगः । अमर्त्यमुख्यैरपि जातकोपैरक्षोभ्यतां व्याकुरुतेव यस्याः ॥ ४३ ॥
यत्सौधपर्यङ्कजुषां वधूनां संगृह्य निःश्वासगुणं समीरः । पद्मेषु नूनं प्रदिशन्प्रभाते गतागतं याति गवाक्षवर्त्मा ॥ ४४
जालानि यत्रागुरुधूम(प)जालैः संदिग्धपारावतसंनिधानैः । अवासयन्नूनमहार्थगन्धानासेदुषां नाकसदां विमानान् ॥ ४५
परार्घ्यरत्नप्रचितात्मभिर्या प्रासादमालाभिरलंकृताङ्गी । नाथोपभोगानुगुणां पयोधौ ननन्द दृष्ट्वैव निजामभिख्याम् ॥४६॥

मणिप्रदीपप्रशमप्रयुक्ते विहारचूर्णे विफले वधूनाम्। अपत्रपायाः समयेऽपि यस्यामभूदनास्था परमार्थदीपे ॥ ४७ ॥
प्रायेण यत्र प्रमदाजनानां नित्यं गुणैरप्रतिमैर्निरुद्धाः। संस्कारयोगादपि लब्धसत्त्वाश्चित्रार्पिता नाकसदो न चेरुः ॥
यदन्तरे यामिकवारणानामासेदुषामम्बुनिधेरभिख्याम्। कराभिमर्शेषु पुनश्चकासुः कल्लोललक्ष्म्या इव कर्णशङ्खाः ॥ ४९ ॥
सौधेषु यस्यां युवसेवितेषु त्रिविष्टपादप्यधिकोन्नतेषु। व्रीडातिभारान्नमिता इवासन् वैमानिकैरध्युषिता विमानाः ॥५०॥
न षड्भिरासन्व्यसनानि पुंसां यद्वासिनामीतिभिरूर्मिभिर्वा। अयोगयत्नेन विनैव चान्ते जज्ञे जगद्धातरि बुद्धिरेका ॥
अदेशकालप्रविभागभाजा भूम्ना जगद्धातुरचिन्त्यभूम्नः। यस्यां विहारोपवनान्यभूवन्समाधियोग्यानि तपोवनानि ॥ ५२ ॥
अनंहसामध्वरदीक्षितानामाह्वानतः प्रागपि संनिधानात्। अभुङ्क्त कल्प्यानि हवींषि नित्यं यत्र स्वयं यज्ञतनुः स देवः ॥
रतिप्रसूता इव राजकन्या रसोदधेरूर्मिपदं भजन्त्यः। विरक्तभाव्यं तमवाप्य यस्यां रागोपपन्ना रमयांबभूवुः ॥ ५४ ॥
प्रवालचित्रीकृतजालकश्रीः सालावृता संभृतपत्रजाला। परिष्कृता भद्रमृगादिभिर्या बभौ स्मरस्येव विहारवन्या ॥ ५५ ॥
ध्वजाग्रभिन्नात्तुहिनांशुबिम्बादनुक्षरन्त्या सुधयाऽनुलिप्तैः। चिरप्रक्लृप्तैरपि यत्र सौधैर्नित्यं नवीनैरिव निर्बभासे ॥ ५६ ॥
स्ववैभवैरप्रतिरूपशोभैः व्यक्तश्रियो वाङ्मनसानि(ति)वृत्तैः। तिरोदधुर्यत्र नरेन्द्रवासाः स्वयंप्रभां देवसभां सुधर्माम् ॥५७॥
विभूतिभेदैरनुपप्लवैर्या भोगार्थिनां भूमिगताऽप्यभौमैः। निवारयामास तपोधनानां वासादरं वासवराजधान्याम् ॥ ५८ ॥
यत्सौधरत्नप्रकरेषु विष्वक्प्रसारितैरन्वहमैकमुख्यात्। करैः सहस्रेण गृहीतदीप्तिः प्रद्योतते नूनमतीव भास्वान् ॥ ५९ ॥
यच्चन्द्रशालासु निषेदुषीणां मृगीदृशां हारमणिप्रकाशैः। तिरस्क्रियां प्राप्य विलज्जमानास्तारागणा नूनमधश्चरन्ति ॥६०
गृहेषु यस्यां मणिभित्तिभागे प्रतिक्षणं दृष्टमुखेन्दुबिम्बः। वधूजनः केवलमग्रहस्तैरादत्त मङ्गल्यतयात्मदर्शम् ॥ ६१ ॥
अनन्तचित्रप्रतिमाभिरामैरजस्रमाक्रान्तदिशावकाशैः। अभावयद्गोपुरवैभवैर्या विश्वप्रसूतेरिव वैश्वरूप्यम् ॥ ६२ ॥
सरोभिरुल्लासितपुष्करश्रीः सङ्गोज्झितैः सङ्गमितप्रयागा। प्रभासिता रत्नगणांशुभिर्या धर्माश्रयाणामिव संसदासीत् ॥६३॥
हसद्भिरुच्चैःश्रवसं हयाग्र्यैरैरावतं दन्तिवरैश्च दृप्तैः। नरोत्तमैर्नाकसदश्च याऽभूत्सुभ्रूभिरप्यप्सरसः स्वयं द्यौः ॥ ६४ ॥
वप्रेषु यस्याः स्फटिकप्रदेशान्द्वाराभिमानाद्द्रुतमापतन्तः। अवापुरागन्तुजनाः सलीलैरन्तःस्मितैर्नागरकैर्निरोधम् ॥ ६५ ॥
पयोभिरच्छस्फटिकद्रवाभैः दवीयसां दर्शनमादधानैः। सुधाधिकस्वादुरसैरविन्दन् स्वान्तोपमां यत्र सतां सरस्यः ॥६६॥
यामेकचित्तः प्रसमीक्ष्य तुष्यन् यादोनिधेराहितदिष्टिवृद्धिम्। लज्जामयासीदिव विश्वकर्मा लङ्कादिनिर्माणकथाप्रसङ्गे ॥६७
समग्ररत्नौघशुभाकृतिं यां सनाथकां मध्यजुषा त्रिधाम्ना। रम्यां हि हृद्यां हृदयेन नूनं रत्नाकरो रत्नमधत्त भूषाम् ॥
अभिन्नसत्त्वान्नभसः परस्मात्क्षीरोदधेरंशुमतश्च बिम्बात्। रमासखस्य प्रणिधानभाजां याऽभूत्त्रियं व्यक्तिपदं पृथिव्याम् ॥
यत्सौधभाजां निशि सुन्दरीणां मुखेन्दुभिश्चूषितकान्तिमिन्दुम्। सद्यः स्वनिष्यन्दसुधाप्रवाहैराप्याययामासुरिवेन्दुकान्ताः
उद्वेलचञ्चत्तुरगोर्मिमालमुद्घोषितामुत्सवतूर्यघोषैः। प्रभूतरत्नौघनिधिं पयोधिर्यामद्भुतां या च तमन्वकार्षीत् ॥ ७१ ॥
यद्वप्रशैलेषु दिवाऽपि सिन्धोरास्फालनादुत्पतितैः पृषद्भिः। उत्क्षिप्तमुक्ताफलदर्शनीयैरालक्ष्यतारौघमभूद्विहायः ॥ ७२ ॥
कलत्रपुत्रादिजुषामजस्रं दीर्घायुषां यत्र सतां जनानाम्। धर्मैकभाजामितरे पुमर्थाः प्रायः स्वयं संनिदधुः स्वभूत्यै ॥

रराज सा रामजनार्दनाभ्यां प्राप्तप्रकाशापि यदुप्रवीरैः । सत्येव तारानिकरे त्रिलोकी चक्षुष्मती चन्द्रदिवाकराभ्याम् ॥

प्रभुणा सहस्रवदनेन वर्ण्यतां द्विगुणैरमुष्य नयनैरवेक्ष्यताम् ।
श्रुतिभिश्च तस्य वहुधा निशम्यतामधिकां ततः श्रियमवाप सा पुरी ॥ ७५ ॥

स्वयमजनि किमत्र श्वेतमेवान्तरीपं परिणतमुत किंचिद्भागधेयं पृथिव्याः ।
वरुणनगरमन्यद्वारिधेरुत्थितं वा किमिदमिति पुरं तत्कीर्तयन्ति स्म पौराः ॥ ७६ ॥

रामप्रष्ठैरधिवसति सा राजधानी जगाहे लोकाधीशे सह बहुमतैर्लोकपालैरिवान्यैः ।
आश्चर्याणां प्रकृतिरियमित्यद्भुतावेशयोग्यामप्रत्यूहामनितरतुलारोहणीयामभिख्याम् ॥ ७७ ॥

तन्मध्ये विरचितशिल्पमेरुकल्पं वैचित्र्यादपहृतवैजयन्तगर्वम् ।
प्रस्पर्ष्टं निजमिव पारमेष्ठ्यमुर्व्यां प्रासादं प्रभुरधिवासयांचकार ॥ ७८ ॥

रामः पुनर्व्रजमुपेत्य विहारभेदैराश्वासयन् सहचरैः सुहृदश्च सर्वान् ।
विश्राणितां दुहितरं वरुणेन विन्दन् सीरावकृष्टयमुनाप्लवितो विजह्रे ॥ ७९ ॥

प्रत्यञ्चमब्धिमवधूतवतोऽतिदूरं दग्धुश्च कूलमिव दक्षिणमस्त्रभूम्ना ।
आकर्षतश्च सरितं सवितृप्रसूतां रामस्य तस्य शुशुभे रसिकस्य लीला ॥ ८० ॥

पद्मयोनिवचनादुपनीतां प्राक्तनीं प्रियतमामिव कान्तिम् । रेवतस्य तनयामनुरूपां रेवतीं च परिणीय स रेमे ॥ ८१ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये एकादशः सर्गः ।

## १२. द्वादशः सर्गः

तथाविधानन्दमहापयोधेस्तरङ्गवृत्त्या भजतोऽवतारान् । अशेषरूपेष्वनुरूपरूपा देवी जगद्धेतुरनुप्रजज्ञे ॥ १ ॥

सा तस्य नित्योदितदिव्यधाम्नः पत्युः प्रिया भानुमतः प्रभेव । अध्यासितुर्द्वारवतीमदूराद्व्यक्तिं शुभां प्राप विदर्भदेशे ॥

शिखण्डकं निष्प्रतिमं श्रुतीनां शृङ्गारलीलोपमविश्वकृत्यम् । अधीयते तन्मिथुनं स्वभावादन्योन्यजीवातुमनन्यभोग्यम् ॥३॥

दयेव नित्यं दयिता त्रिधाम्नः सर्वेषु भावेषु समानभावा । परावराणां जननी प्रजानामासीद्विदर्भाधिपतेरपत्यम् ॥ ४ ॥

महीतलान्मैथिलसीरकृष्टात्क्षीरोदधेराहितमन्थशैलात् । भृगूद्वहात्ख्यातिमतश्च याऽभूत्सा भीष्मकादभ्युदियाय भूयः ॥५॥

अमन्यतैनां तनयां स राजा रुक्मश्च मोहादनुजामजन्याम् । यामेकपत्नीमनघस्य पुंसः प्रजासृजां मातरमामनन्ति ॥६॥

त्यक्त्वाऽपराः श्रीर्गुणराशिरेनां शरण्यभूतां शरणं प्रपेदे । प्रायेण दोषैरविविक्तवासाद्भीतः स्वयं भीष्मकराजकन्याम् ॥७॥

आरब्धदेहामिव भागधेयैरक्षीणि लक्ष्यान्तरतो नियन्त्रीम् । सुतामिमां प्राप्य सुधामिवान्याममर्त्यकल्पौ पितरावभूताम् ॥

अनन्यवृत्त्या घनतामुपेतैः प्रौढसूर्येन्दुमयूखजालैः । सुवर्णरत्नैरथवा प्रक्लृप्तां सुतां सुजाताकृतिमन्वभूताम् ॥ ९ ॥

महीयसीं मङ्गलदीपमालां विद्युत्प्रकाशा विदधे कुमारी । आकल्परत्नांशुतिरस्करिण्या दीप्त्या रजन्यामपि दीनभासम् ॥
कलामिवार्धामकठोरधाम्नः पुण्योदयानामिव पूर्वचर्याम् । प्ररोहवेलामिव कान्तिवल्ल्याः प्रैक्षन्त शुद्धान्तमृगीदृशस्ताम् ॥
आत्माधिकारादधिकामवस्थामयत्नतो नूनमवाप्तुकामा । वार्तानभिज्ञे वयसि स्थितां तां वाग्देवता वन्दिमुखे ववन्दे ॥
प्रदित्समानेन हरेरभीष्टं कामेन सा कल्पलतेव सृष्टा । पित्रोरिवानन्यदृशां प्रजानामाशंसया सार्धमवाप वृद्धिम् ॥१३॥
पद्मादिरेखाप्रथमानभूमा निर्धार्यमाणा निगमैरभिज्ञैः । तदङ्घ्रिविन्यासमिषेण जज्ञे भूमेस्तदा भूषणपङ्क्तिरग्र्या ॥ १४ ॥
अदृश्यभेदैरतिसूक्ष्मभावाज्जज्ञे जगन्मङ्गलतां दधानैः । विहारलौल्याद्विषये(विधे)षु तस्या गतेषु वाक्येषु च नृत्तगीतैः ॥
यदप्सरःपाणिसरोजमुक्तं प्रसूनवर्षं निपपात तस्याम् । अपूरि तस्यैव रजोभिरग्र्यैरपांसुला पांसुविहारवाञ्छाम् ॥१६॥
यदृच्छया तत्र परागजालैर्यानेव सः केलिगृहानकार्षीत् । ततः परं त्वष्टुरमी समीची महेन्द्रशालाविधिमातृकाऽभूत् ॥
चतुर्दशैतानि जगन्ति यस्याः क्षेमाश्रितं क्रीडनकं बभूव । पर्याप्तलीला मुमुदे तदैषा पाञ्चालिकापञ्जरशारिकाद्यैः ॥
आस्वादनीयान्यधिकं श्रुतीनां मुग्धाभिजातानि वचांसि तस्याः । प्रायेण लौल्यादधिकृत्य खिन्ना विधिप्रिया व्याहरतान्यभाषाः
अविप्लुतव्याकरणानि तस्याः क्रमेण शिक्षानियताक्षराणि । अनुश्रवाणामनवप्रवृत्तेरादेशदायीनि वचांस्यभूवन् ॥ २० ॥
विभूतयस्तत्र दिशांपतीनामात्मीयया देवतयाऽवतीर्णाः । स्वचिह्नभेदान्परिवर्हयन्त्यः प्रपेदिरे तत्परिवारभावम् ॥ २१ ॥
वेदालवाले विहितस्थितिं तां रम्यप्रतानामिव रत्नवल्लीम् । स्तनादिलक्ष्यस्तवकादिचिह्नैराविष्कृतं यौवनमाविवेश ॥ २२ ॥
तदीयसर्वाङ्गजुषोरगाधं सौन्दर्यलावण्यसुधास्रवन्त्योः । ममज्जुरापत्य दृशस्सखीनामन्योन्यसंभेदमपूर्वतीर्थम् ॥ २३ ॥
निशेव चन्द्रेण घनव्यपाये नैसर्गिकी बुद्धिरिव श्रुतेन । फलेन सा नीतिरिवाप्रमादा युक्ता बभौ नूतनयौवनेन ॥२४॥
आलक्ष्यसंलापलवैरपाङ्गैरङ्गैरनङ्गोदयपूर्वरङ्गैः । वियातमुग्धैरपि (लक्षणै)विभ्रमैस्सा विलक्षयामास विभूषणानि ॥ २५ ॥
अनुक्तकौमारयुवत्वसीम्ना कान्त्या बभौ कल्पितरागभूम्ना । जरत्पलाशप्रसवानुषक्ता प्रतानिनी पल्लवसंपदेव ॥ २६ ॥
प्रसाधनानां परिकर्म दिव्यं विजृम्भणं विभ्रमजालकानाम् । वयश्शुभं वामदृशश्चकाशे पश्यद्दृशां भाग्यमनन्यभोग्यम् ॥
अवाप्य सा मुग्धदशामपूर्वामव्याजलीलागतिराबभासे । रम्या रसोत्पत्तिदशाविशेषाज्जाम्बूनदी जङ्गमपद्मिनीव ॥ २८ ॥
तस्यास्तनुं वर्णयतो ममैवं हीनोपमा दोषपदं न विन्देत् । निदर्शनं तैरपि तस्य दृष्टं येषां निकर्षोऽपि गुणो यतस्स्यात् ॥
तारेण तस्याश्चिकुरान्धकारे तारायितं मौक्तिकजालकेन । प्रायेण योऽसौ प्रलयावसाने निशीथसृष्टेरभवन्निदानम् ॥ ३०
द्युतिं शिखारत्नसहस्ररश्मेः ज्योत्स्नां च मुक्ताफलजालजाताम् । तत्कुन्तलश्रेणिमयी तमिस्रमैत्रीं दधौ मन्मथचापमौर्वी ॥
मुखाब्जसौन्दर्यमधुद्विरेफाः कान्त्यापगाशैवलपुञ्जकल्पाः । शोणेन चूडामणिना ससन्ध्यां तमीमपुष्यन्नलकास्तदीयाः ॥
शरत्प्रसन्नेन्दुकलाभिरामा ललाटरेखा सुदृशो रराज । कामेन तत्कान्तिलतासमृद्ध्यै स्वयं प्रक्लृप्तेव सुधास्रवन्ती ॥३३
कस्तूरिकाक्लृप्तविशेषकं तत्पश्यन्मृगाङ्को वदनं मृगाक्ष्याः । विभाव्य तादृक्परभागशोभां कलङ्कयुक्तोऽपि जहौ विषादम् ॥
तारुण्यनद्यास्तनुवीचिकल्पे तद्भ्रूलते शार्ङ्गनिदानदृश्ये । अनङ्गवेदप्रणवस्य रत्या लेखाक्षरं न्यस्तमसूचयेताम् ॥३५॥
प्रसूतपद्मोत्पलकाननश्रीः प्रारब्धवीचीविभवा विलासैः । दृष्टिस्तदीया ददृशे दयार्द्रा द्राघीयसी मन्मथदीर्घिकेव ॥३६॥

तद्दृष्टिरायामवती सुजाता श्यामोज्ज्वला चारुविशालमध्या । मन्ये समेष्यन्मधुवैरिलक्ष्या चेतोभुवः शक्तिरभूदमोघा ॥३७
निगृह्णती रत्नतिलप्रसूनं नासा तदीया नयनाब्धिसेतुः । अबोधि निश्वाससमीरगन्धैरन्तर्गतान्वेदगणान्वमन्ती ॥ ३८ ॥
नवेन्दुसंध्याप्रभृतीनि लोके निर्वर्ण्यमानानि निदर्शनानि । न खल्वविन्दन्कलयापि तस्याः स्मिताधरव्यासिक्तामभिख्याम्॥
अहेतुरज्यन्नधरस्तदीयः प्रसूनमुक्तायितमुग्धहासः । लक्ष्मीलताया ललितोदयेश्च प्रवालयोगं प्रथयांबभूव ॥ ४० ॥
मुखं तदीयं विरराज मुग्धं सौरभ्यलावण्यसमुच्चयेन । व्यवस्थितान्योन्यविशेषलोभादेकत्वमापन्नमिवेन्दुपद्मम् ॥ ४१ ॥
वर्णानुपूर्वीसुभगेन काले भव्यां श्रुतिं भावयता यथावत् । तारस्य संस्थानमिवान्वकार्षीत्कण्ठेन सा काञ्चनकम्बुभासा ॥
मधुद्विषः कण्ठ(र्ण)परिष्क्रियार्थं कामात्मना माल्यकृतेव क्लृप्ते । बभूवतुर्बाहुलते तदीये शम्पात्विषौ चम्पकमालिके द्वे॥
आसीदधिष्ठानविशेषसीमा वक्षोजयोरङ्कुरतोरमुष्याः । मुकुन्दवक्षःस्थलमुद्रणार्हां भव्यामवस्थामिव भावयन्ती ॥ ४४ ॥
समावृतौ हारमयूखसूत्रैस्तस्याः स्तनौ चारुतरावभूताम् । जिगीषतस्तत्प्रियचित्तवृत्तिं मनोभुवो मङ्गलपूर्णकुम्भौ ॥ ४५ ॥
तस्यास्तदा तद्वदलक्ष्यमध्यं तन्व्याः स्तनद्वंद्वमवाप वृद्धिम् । काले यथा तत्प्रथिमप्रभूतं कृच्छ्रादभूत्कृष्णभुजान्तरालम् ॥
मध्यं कृशिम्ना विरराज तस्या नाभिह्रदान्नालमिव प्ररूढम् । प्रियागमोदर्कमभूद्यदग्रे कुचात्मना काञ्चनपद्मयुग्मम् ॥ ४७
स्तोकानताङ्गी स्तनभारभूम्ना मुग्धा बभौ मुष्टिमितावलग्ना । भृङ्गाभिनन्द्येन गुणेन युक्ता कामस्य सा कापि धनुर्लतेव ॥
रराज लावण्यतरङ्गरम्या वलित्रयी मध्यगता मृगाक्ष्याः । अन्तःस्थितानामिव दर्शयन्ती निवेशसीमान्तमनुश्रवाणाम् ॥
मध्येवलग्नं सुदृशो विलग्ना रोमावली कामधनुर्गुणाभा । जिगाय नाभीसरसः सुजातामुल्लासिनीमुत्पलरेणुपङ्क्तिम् ॥
अनुप्रयातः स्ववशामभिख्यां यूथोज्झितो यौवनगन्धहस्ती । तद्रोमराजिव्यपदेशदृश्यां नूनं दधौ नूतनदानरेखाम् ॥ ५१
प्रकाशितावर्तरुचिः प्रभाढ्यौ नाभिः सुवृत्ता रुरुचे नताङ्ग्याः । रोमावलीरत्नलतानुरूपं रुक्मेण निष्पन्नमिवालवालम् ॥
पृथ्वी चकास्ते स्तनसंपदस्या लावण्यमम्भो नियतं च तेजः । श्वासोदयो गन्धवहः शुभाङ्ग्याः नाभिश्च मध्यं च नभो विभक्तम्
गजेन्द्रहस्तादिषु तत्समत्वे दूरे सतां दोषगुणावमर्शः । भविष्यतः शार्ङ्गभृतस्तदूरू लीलोपधाने किमतोऽधिकेन ॥५४॥
मनोज्ञवृत्तं मधुबुद्बुदाभं चक्षुष्मतां सादरदर्शनीयम् । स्वदेहकान्तेः सविशेषदृष्टौ जानुद्वयं दर्पणतामयासीत् ॥ ५५ ॥
उदेष्यतः पञ्चशरस्य तस्यामुत्पादयिष्यन्नुचितं निषङ्गम् । विधिः स्वयं मातृकया किलार्थी जङ्घायुगं वीक्ष्य जहर्ष तस्याः॥
अलक्तकादप्यधिकात्तरागा पदद्वयी पद्मदृशश्चकाशे । प्राचीनजन्मप्रणयानुरोधात्संभाव्यमानेव सरोजलक्ष्म्या ॥ ५७ ॥
पादाम्बुजे दत्तमधुप्रसत्त्या निर्णेजयामास नखेन्दुकान्त्या । प्रायेण सा सत्पथमाश्रयन्ती पङ्कानसत्सङ्गभवान्पृथिव्याः ॥
तस्याः पदाम्भोजमृणालभासा प्रकाशभूम्ना नखमौक्तिकानाम् । प्रकीर्णपुष्पा सुधयावसिक्ता विहारभूम्यो युगपद्बभूवुः ॥
कलाचिकां काञ्चनसारक्लृप्तां कान्तेः शुभां कामपि काहलीं च । शशङ्किरेऽनन्यसमीक्ष्यशोभां जगन्ति जङ्घामवलोक्य तस्याः
तस्याः श्रुतिश्रेणिशिखामणीनां सकेसरा दीधितिभिर्नखानाम् । प्रसाधिकालोचनभृङ्गलौल्यं पद्मद्वयी पादमयी निरास ॥
मुखेन्दुनिष्पन्दनिभैरमुष्याः मन्दस्मितैरिन्दुरिवाप्तमान्द्यः । प्रायः प्रभूताद्भुतकान्तिलोभान्नखात्मना तत्पदमेव भेजे ॥६२
अलक्षि देवैरवतारलक्ष्म्याः तस्याश्शुभा पादनखेन्दुपङ्क्तिः । आगामिकल्पेष्वधिकारलोभात्तारावलिस्तत्पदमाश्रितेव ॥६३॥

यातेन मञ्जीररवैश्च तस्याः प्रायः पराभूतगतिप्रणादाः । शिक्षाविशेषार्थमिवाधिचक्रुः पादानुवृत्तिं प्रणयेन हंसाः ॥६४॥

रराज दिव्यैरधिराजचिह्नैः श्लाघापदं तत्पदमागमानाम् । अश्मानमास्थापयता परस्तात्पाणिना विश्वपतेरवाप्यम् ॥ ६५

अतीत्य कृच्छ्रात्समुदायशोभां प्रत्यङ्गसौन्दर्यपरा दिदृक्षा । पर्यभ्रमत्प्राप्तविहारडोला पुष्पेषु भृङ्गीव मुहुः सखीनाम् ॥६६

शृङ्गारयोनेरिव शिल्पविद्यां दिव्यां त्रिलोक्या इव दिष्टवृद्धिम् । सीमान्तरेखामिव संपदस्तां जगुः स्त्रियो जङ्गमरत्नसृष्टिम् ॥

वयस्यया‌ऽभीष्टवरानुयोगे साऽपश्यदात्मानममन्दलज्जा । असूचयन्नूनमनेन तस्याः स्वलक्षणं शौरिमनन्यलक्ष्यम् ॥ ६८॥

अलिप्सत श्वेव हविस्तदैनां दैत्यस्वभावो दमघोषजन्मा । तस्मै च कृष्णैकमनोरथां तां रूपाधिकां दातुमियेष रुक्मी ॥

परस्परं भूषयतः प्रतीकानौद्वाहिकं मङ्गलमुद्वहन्त्याः । प्रायः स्वदीप्तेरतिरोधिमिच्छन्त्यावारयन्नाभरणानि तस्याः ॥ ७० ॥

लावण्यकल्पद्रुममञ्जरीं तां शृङ्गारदिग्वारणवैजयन्तीम् । सौन्दर्यदुग्धोदसुधाप्रसूतिं सैरन्ध्रिकाः प्रेक्ष्य मिथः शशंसुः ॥७१

व्यामातिरिक्तस्तनकुम्भभूम्ना व्याप्ताकृतिं यौवनकुञ्जरेण । प्रसाधयन्त्यः पतिदेवतास्तां नाथोचितां प्रेक्ष्य न तृप्तिमापुः ॥

मौलौ सुकेश्याः स्फुटरश्मिजालं मुक्तामयं जालकमाबबन्धुः । क्रीडोचितं कृष्णमृगं ग्रहीतुं तेन स्मरो वागुरिकस्तदाऽभूत्

अनन्यदृष्टिं विततान तामप्यादर्शसंक्रान्तिविशेषदृश्यम् । प्रसाधनैः प्राप्तगुणैः प्रतीक्ष्यं तस्या मुखं तामरसायताक्षम् ॥७४

अंसावलम्बिन्यसितेक्षणायाः कम्पोज्ज्वला काचन रत्नमाला । अलक्ष्यतोल्लासितरम्यरश्मिः कामार्पिता कान्तिविहारडोला ॥

रराज मुक्ताभिरवाप्तफेनं रत्नाङ्गदं प्राप्तगुणं तदङ्गे । प्रवाहवृत्तेः परिवृत्तिभेदान्महीयसी मण्डलितेव कान्तिः ॥ ७६ ॥

अभासतात्मस्मितसौम्यभासा हारेण हृद्येन जगत्प्रतीक्ष्या । प्रियस्य चन्द्रं हृदयाद्विधातुः प्राप्तानुसारेव निसर्गशुद्धम् ॥७७

मनुष्यताकञ्चुकितात्मभूम्नः काले चकाशे कुचकञ्चुकश्रीः । रत्नाचले भोगिशयप्रियायाः स्वतल्पनिर्मोक इवावलीनः ॥

आदर्शबिम्बेन तदङ्गकान्तेरक्षाम्यता निष्प्रतिमत्ववादम् । प्रतिप्रवृत्तिं प्रतिमां विधाय प्रख्यापिता वृत्तवतामपीर्ष्या ॥७९॥

अभिन्नरूपामनुवेलभिन्नात्प्रसाधनादभ्यधिकां प्रसत्तिम् । विलोकयन्ती जनता तदीयां व्यावर्तयामास ततो न दृष्टिम् ॥

मुखेन्दुलावण्यसुधाप्रवाहे मुहुः प्रतीपप्लवनोद्यतेन । तत्कर्णभूषामकरेण मन्ये मन्दीकृता मन्मथलाञ्छनश्रीः ॥ ८१ ॥

प्रभाप्रवाहोदितसैकताभे स्तनद्वये तामरसेक्षणायाः । तत्कंधराशङ्खमतल्लिकायाः प्रसूतिराशङ्क्यत हारवृत्त्या ॥ ८२ ॥

स्वभावजादभ्यधिकं तदङ्गेष्वासादितं सौरभमङ्गरागैः । स सर्वगन्धोऽपि यदन्वयेन प्रभूतमामोदविशेषमृच्छेत् ॥ ८३ ॥

प्रतिक्रियामात्मतिरस्क्रियायाः प्रायः स्वयं व्यापृतया विधातुम् । तदङ्गयोगोज्ज्वलरत्नधाम्ना संछादितं मेखलयाऽन्तरीयम् ॥

शिखण्डकानि श्रुतिसुन्दरीणां चारूणि पादाभरणानि तस्याः । पदेषु संघर्षवशादिवासन्मिथः पुरोभागिपदास्पदानि ॥

अनुक्षणं बन्धुजनैरमुष्यामामुच्यमानेषु विभूषणेषु । अयत्नतस्तानि तदन्तराले कृतास्पदा केवलताऽप्यशेत ॥ ८६ ॥

निनीषतां देवगृहं यथैतामाकल्पलक्ष्म्या समयोजयन्त । मुकुन्दसंस्पर्शमवाप्तुमर्हा सैव स्थिरा धन्यतमा बभूव ॥८७॥

पतिव्रताः पार्थिवयोषितस्तां प्रत्यङ्गसौन्दर्यनिमग्नभावाः । कृताशिषः कृष्णमनोरथस्थामारोप्य कर्णीरथमन्वगच्छन् ॥८८॥

मङ्गल्यसंगीतसमेतयात्रा मनुष्यदेवीभिरनुद्रुता सा । निनंसितैषा स्वयमेव देवी नान्येति सद्भिर्निरणायि नाथा ॥ ८९ ॥

भावान्तरेषु प्रतिपन्नलीला पैतामहादीनि पदानि दातुम् । स्वदत्तशक्तेः कुहनामनुष्या कुतश्चिदिष्टं स्वयमाशशंसे ॥

प्रणम्य मूर्ध्ना निहितोपहारामुत्तस्थुषीमुत्सवदेवतैनाम् । अवोचदारादशरीरिवाचा परैरजय्यं पतिमाप्नुहीति ॥ ९१ ॥

पत्या निजेन परिणीतिमवाप्तुकामा लब्ध्वा वरं ललितमुत्सवदेवतायाः ।
तेनैव सा समसमीहितसिद्धिरासीन्मानाधिका जगति मन्मथमन्मथेन ॥ ९२ ॥

ऊरुः सव्यो नयनकमलं भ्रूलता चापि तस्याः प्रावेपन्त प्रियमुपगतं सूचयन्ति स्ववृत्त्या ।
आरादासीदलघुतुलसीगन्धसौम्यः समीरः प्रत्यासन्नं मुहुरुदचरत्पाञ्चजन्यप्रणादः ॥ ९३ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये द्वादशः सर्गः ।

---

## १३. त्रयोदशः सर्गः

प्रसादभाजः प्रतिनिर्गतां तां प्रासादतो वासववल्लभायाः । समग्रशक्तिस्समयोपयातः प्राणेश्वरीं प्राप्तुमियेष शौरिः ॥१॥

तामद्भुतां सिद्धिमिवाद्भुतानां सौभाग्यविद्यामिव सद्गुणानाम् । सत्तामनन्यामिव सद्गुणानां यथाश्रुतं प्रैक्षत यादवेन्द्रः ॥२

अङ्गैरवज्ञातकदम्बगोलैः अस्पन्दमन्देन विलोचनेन । लीलोपशान्त्या लिखितेव साऽभूत् दामोदरे दृष्टिपथं प्रयाते ॥

पद्माकराणां परिषद्विशेषे पर्याप्तचन्द्रायुतकान्तिसारे । अनन्यलभ्यां लभते स्म तृप्तिं तस्या मुखे दृष्टिरतीव शौरेः ॥४॥

वाचस्पतित्वं च वनस्पतीनां दिव्येतरेषां च दिवस्पतित्वम् । दातुं क्षमाया दयिते तदानीमाज्ञापको नूनमभूदनङ्गः ॥ ५

तस्मिन् द्वितीयामिव वैजयन्तीं सा च प्रिये साचि विशेषरम्याम्। कटाक्षमालां निबबन्ध कृष्णे कामाधिके कौतुकमेदुराक्षी

अलक्ष्यभेदत्रिविधाम्बुजाभैरालक्ष्य शृङ्गारगुणानुबद्धैः । स्वयंवरस्त्रग्भिरभावि तस्याः कालोदिते कंसरिपौ कटाक्षैः ॥ ७ ॥

स वैजयन्त्यादिविभावशाली निर्व्याजनिष्पन्ननिजानुभावः । शृङ्गारवीराद्भुतचित्रितात्मा रम्यस्तया निर्विविशे रसोऽन्यः ॥

आकेकराणामनवस्तदानीमेकक्षणं लक्ष्यमभूद्बहूनाम् । तस्याः स्थिरानन्दपरिप्लुतानामर्थस्पृशामर्धविलोकितानाम् ॥ ९ ॥

तस्याश्चिराकाङ्क्षितलाभधन्यैरपत्रपामन्थरितैरपाङ्गैः । बभार भूयो बहुमानपूर्वं बाल्ये धृतां बर्हिकलापभूषाम् ॥ १० ॥

सन्तानसौभाग्यघनेन यूना सिक्ता सुधासारनिभैरपाङ्गैः । उद्भिन्नरोमाञ्चत(ति)नुर्बभासे कान्तप्ररोहा कलमस्थलीव ॥११॥

स्वकान्तिसाम्यादिव जातसङ्गैरशौरिस्तदा स्वागतसूक्तिगर्भैः । प्रियासखीनामभजत्प्रहृष्टैरुद्वीक्षणैरुत्पलपुष्पवृष्टिम् ॥ १२ ॥

स रुक्मिणीनेत्रचकोरचन्द्रस्सा तत्प्रहर्षाम्बुजपूर्वसन्ध्या । तदद्भुतं द्वन्द्वमवेक्ष्य सख्यः प्रापुस्तुलामप्सरसामनूनाम् ॥

तथैव तादात्म्यमिवागतानां तस्यास्सखीनां सममाविरासन् । परस्य वीक्षां प्रतिसंलपन्तो वक्रोक्तिगर्भा इव मन्दहासाः ॥

स कौस्तुभाभ्यर्णनिवेशयोग्यं कन्यात्मकं कामपयोधिरत्नम् । परीतमारात् प्रतिहारपालैः पश्यन् क्षणं पान्थ इवावतस्थे ॥

तं माल्यभूषापरिकर्मिताङ्गं धारातटिद्वन्तमिवाम्बुवाहम् । समीक्ष्य बाला तदनन्यदृष्टिश्चर्यामवालंबत चातकानाम् ॥१६॥

तलोदरीं तालफलस्तनीं तां ताम्राधरां चारुनवोत्पलाक्षीम् । किं नाम भावीति विभावयन्तीं कृष्णस्तदा किंचिदिवाससाद॥

दुर्दर्शमध्यां द्विरदेन्द्रयातां व्यूहक्रमव्यक्तविचित्रगात्रीम् । परैरभेद्यां प्रतिजग्मुषीं तां कान्तात्मिकां कामचमूं स मेने ॥

स चन्द्रिकां चन्द्र इवाऽभियातः चन्द्राननां यादववंशचन्द्रः । निर्वेशनीयः सविशेषमासीन्नेदीयसां नेत्रचकोरवृन्दैः ॥
अहं त्वया दूतमुखेन दूरात् साध्व्या समाहूत इहोपयातः । मा ते भयं भूदिति मञ्जुभाषी तामग्रहीदग्रकरे मुकुन्दः ॥
प्रियेण सा तेन गृहीतहस्ता तद्वक्त्रदिव्याम्बुजषट्पदेन । विलोचनेन व्यवृणोत्सखीभ्यः कृतार्थतां क्षीवदशोल्बणेन ॥
प्राचोऽवतारानतिशय्य भूम्ना सा रुक्मिणी तेन हृता चकाशे । तस्यैव रूपान्तरदूरवृत्तिः कन्दर्पजन्मानुगुणेव कान्तिः ॥
मल्लीविकासोज्ज्वलमन्दहासा रोमोद्गमैराहितकोरकश्रीः । समेयुषी संददृशे तदा सा वसन्तलक्ष्मीरिव माधवेन ॥२३॥
अधर्मजस्वेदकणावकीर्णामभीतिजं वेपथुमुद्वहन्तीम् । अनुष्णबाष्पोदयमन्थराक्षीं विलोक्य देवीं हरिरभ्यनन्दत् ॥ २४ ॥
हरिप्रियामन्यनृपद्विपेन्द्रैर्दुरासदां केसरिणीमिवैनाम् । सखीजनः प्रीतमना निदध्यौ ययौ च खेदं निजविप्रयोगात् ॥ २५
मिथोगुणैस्तन्मिथुनं निबद्धं वियोगवैदेशिकसंप्रयोगम् । अजायतान्योन्यनिलीनभावं सखीदृशां सादरदर्शनीयम् ॥ २६
जगत्त्रयार्तिप्रशमाय जातां विहारसंक्षोभितवैरिसिन्धुः । देवेषु पश्यत्स्विव पूर्वमेनां जग्राह तां जाग्रति राजलोके ।
स पुष्पकं राम इव प्रियां स्वामुत्तारितां शत्रुभयादुदीर्णात् । मनोजवं सत्यमनोरथस्तामारोपयामास रथं रथाङ्गी ॥ २८॥
सा चामरौघैरुपचर्यमाणा वातावधूतैरिव काशजालैः । रराज नाथेन रथोदयाद्रौ चन्द्रेण पूर्णेन शरन्निशेव ॥ २९ ॥
परस्परप्राप्तगुणेन भासा बर्हावृतं व्योम विभावयन्तौ । विरेजतुस्तुङ्गरथाश्रयौ तौ विद्युत्पयोदाविव मन्दरस्थौ ॥ ३० ॥
प्रभेव देवेन तमोपहेन प्रत्यग्दिशं तेन सह प्रयान्ती । नित्यानपायित्वमजानतीनां सत्यापयामास निजं प्रजानाम् ॥३१॥
तामुद्वहन् तामरसायताक्षो रत्नौघदीप्तेन रथेन देवीम् । आत्मानमेवार्यममण्डलस्थं विद्यासखं व्यञ्जयति स वीरः ॥३२
अतीतदर्शामिव चन्द्रलेखां शान्तोपरोधामिव शारदीं द्याम् । अमंस्त निर्विघ्नफलामिवेच्छां शोकत्यजं शूरकुलेश्वरस्ताम् ॥
समेत्य सिंहीमिव तामनन्यां यानोद्यतं यादवपञ्चवक्त्रम् । आघुष्य गोमायुरिवामिषार्थी चैद्यः क्रुधा दीप्तमुखोऽन्वधावत्
रुक्मी च तूर्णं प्रतिपन्नरोषः पुरोभवन् भूमिभृतां सखीनाम् । पराभवस्य प्रतिकारमिच्छन् जग्राह पार्ष्णिं जगदेकनेतुः ॥
जिघांसिते भ्रातरि जातखेदैः कान्तामिलापैः कतकैरिवाम्भः । मनः प्रपेदे सहजां प्रसत्तिं सत्त्वाधिकं सात्वतवंशगोप्तुः ॥
स वीक्षमाणः सविलासनेत्रं वल्गुस्मितं वामदृशो मुखाब्जम् । तदुक्तिभिः स्वादुतमामिरासीदाप्यायितो नूनमनाविलाभिः
अनुद्रुतां वैरिचमूं स वीरो बलेन रुद्ध्वा निजबाहुनैव । विनिर्दिशन्मार्गभुवो विशेषान् विश्वासयामास विदर्भकन्याम् ॥
प्रियासहायः पदवीं स गच्छन् द्राघीयसीं दारुकसारथिस्ताम् । उदग्रवेगानुदधेरनूपे वीतीन् क्षणं विश्रमयांबभूव ॥ ३८
भयार्णवादुद्धृतया स्वयाऽसौ श्रियेव साक्षादनुभूयमानः । पयोधिरूपां परिखां विलङ्घ्य द्युसंमितां द्वारवतीमयासीत् ॥
परिष्कृतां काञ्चनतोरणैस्तां वल्गुध्वजां वन्दनदामचित्राम् । रामासहायः प्रसमीक्ष्य रेमे रम्यप्रसूनाञ्चितराजवीथीम् । ४१
महीयसां मङ्गलदुन्दुभीनां नादैरवज्ञातपयोधिशब्दा । श्रितोत्सवानां विदधे पुरी सा स्वर्गौकसां श्रोत्रसुधामपूर्वाम् ॥४२
प्रत्येयुषां कंसरिपुर्यदूनां देवद्रुमाणामिव जङ्गमानाम् । अनर्घरत्नाभरणप्रधानानादत्त दिव्यानुपदाविशेषान् ॥ ४३ ॥
तस्मिन्महानीलमणिप्रकाशे तां रुक्मिणीमाहितरुक्मकान्तिम् । पुराङ्गनाः प्रेक्षितुमीहमानाः स्वर्गाधिकानारुरुहुः स्वसौधान्
कलक्वणन्नूपुरचारुवाद्यं कर्णावतंसोदितभृङ्गगीतम् । कस्याश्चिदन्वागतनाट्यवेदं लीलागतं लास्यमभूदपूर्वम् ॥ ४५ ॥

परिच्युतं किंचिदिवान्तरीयं काचित् समालम्ब्य सहैव काञ्च्या । क्षिप्तेव तीव्रेण कुतूहलेन क्षणेन वातायनमाससाद ॥
आमुच्य ताटङ्कमनङ्गचक्रं सव्येतरे सत्वरमात्रजन्ती । अन्येन काचिद्भृशमावभासे कर्णेन कैवल्यविभूषणेन ॥ ४७ ॥
उदञ्चिता वाहुलतेतरस्या मौलिस्रजा हस्तगृहीतयाऽऽसीत् । जगज्जिगीषोर्मदनस्य जैत्री पताकयेवाद्भुतकेतुयष्टिः ॥ ४८
प्रकोष्ठभाजः प्रियशारिकायाः पयः स्वयं सादरमर्पयन्ती । गवाक्षमागम्य गजेन्द्रयाता काचिद्विसस्मार कृतावशेषम् ॥
प्रचारवेगात् त्रुटितेन चक्रे हारेण मुक्ताफलवर्षिणाऽन्या । अदूरतस्संनिहितस्य शौरेराचारलाजाञ्जलिपूर्वरङ्गम् ॥ ५० ॥
स्तनांशुकं स्रस्तमबुध्यमाना सखीजने सस्मितमीक्षमाणे । परामृशन्ती वितता न काचित् प्रतिक्रियां पाणिनखांशुजालैः ॥
सखीधृतैश्चामरतालवृन्तैराश्यानतां प्रापितमङ्गरागम् । विलोकिते शार्ङ्गिणि विह्वलाऽन्या श्वासानिलैः शोषमिवानिनीषत् ॥
प्रसाधयन्तीमवधीर्य धात्रीमङ्गैरसंभावितभूषणाऽन्या । समीक्ष्य कृष्णं सहसोपजातैः परिष्क्रियामाद्रियतेव भावैः ॥ ५२ ॥
भ्रुवा स्फुरन्त्या मदनस्य मौर्वीं ज्याघातरेखाममिदर्शयन्ती । अन्यानुषक्तेऽपि हरौ वियातां प्रायुङ्क्त दूतीमिव दृष्टिमन्या ॥
तदीक्षणे भर्तुरिव संरन्त्या कन्यादशां कामवशाद्व्रजन्त्या । स्वयंवरार्हे स्वयमेव तस्मिन् कयाचिदाधायि कटाक्षमाला ॥
समेयुषीनप्रतिमेन यूना तां रुक्मिणीं प्रेक्ष्य विलीनभावा । भाग्यं किमस्या इति भावयन्ती तदात्मतां नूनमलिप्सताऽन्या॥
कक्ष्यानिवन्धच्यवने सलीलं स्तनाहितस्वस्तिकबाहुबन्धा । जगत्पतौ पश्यति जातभीषा प्रायस्तदालिङ्गनमभ्यनैषीत् ॥
रथेन तं राजपथे प्रयान्तं निर्व्याजसङ्गेन निशामयन्ती । त्यक्ता निमेषैरपराऽन्वकार्षीत् चित्राङ्गनानां सुरयोषितां च ॥
समीक्षितस्यापि सहत्वसंगाद्दुष्प्रापलोभादपि दूयमाना । गलद्भिरन्या वलयप्रसूनैरभ्यर्चनामातनुतेव शौरेः ॥ ५९ ॥
समानकान्त्या प्रियया समेते दृष्टे जगद्धातरि जातरागा । प्रणामयोग्येयमितीव मत्वा प्राप्तं पदं मेखलया परस्याः ॥ ६० ॥
तासां तदेकोत्सुकदर्शनानां समाधिभाजामिव शेमुषीणाम् । अलं प्रसुप्तोऽपि न मातुमासीदपारहर्षादनघामवस्थाम् ॥
अवारुणीसंभवसोरभैस्तैरनन्यसाध्यादरविभ्रमार्यैः । निरञ्जनोपस्थितनेत्रशोभैस्स पिप्रिये पौरवधूमुखाब्जैः ॥ ६२ ॥
स पौरकन्याकरविप्रकीर्णान् प्रायः प्रतीच्छन्नुपचारलाजान् । अचीचरत् स्यन्दनमञ्जनेत्रः सव्यापसव्येन गतेन वीथीम्
कह्लारपद्मोत्पलकान्तिचोरैः कटाक्षणैः पौरवधूजनानाम् । मुग्धेन्दुहासो मुमुदे मुकुन्दः पश्यन् प्रियां प्रापितपुष्पवृष्टिम् ॥
कृष्णस्य तां स्कन्धमुपाश्रयन्तीं सुरद्रुमस्येव सुवर्णवल्लीम् । अवेक्ष्य नूनं चतुरः पुमर्थाननन्यलभ्यानलभन्त पौराः ॥ ६५
वक्त्रैस्सुधासोदरकान्तिपूरैः कस्तूरिकापङ्ककलङ्कदृश्यैः । अलक्ष्यदेहा विदधुर्मृगाक्ष्यः प्रत्युप्तपूर्णेन्दुशतान् गवाक्षान् ॥
शुचिस्मितास्सौधतलान्तरस्थाः पद्मेक्षणं प्रेक्ष्य परिस्फुरन्त्यः । शरत्पयोदोदरसंश्रितानां क्षणद्युतीनां द्युतिमन्वविन्दन् ॥
अपाङ्गजालैरसितोत्पलाभैः कृष्णात्मकं भावमिवोद्वमन्त्यः । वितेनिरे राजपथे मृगाक्ष्यस्तदाद्दृतां बर्हवितानशोभाम् ॥ ६८
हरेरभिख्यामनुपाधिरम्यां विलोचनैर्वीतनिमेषविघ्नैः । आस्वादयन्त्यस्सुदृशस्तदानीमयत्ननिष्पीतसुधा इवाऽऽसन् ॥ ६९ ॥
तं विद्यया तत्त्वविदस्समार्यं संमेनिरे जुष्टमिवात्मवन्तम् । आसक्तया तत्परयेव लक्ष्म्या पराक्रमन्तं दययेव देवम् ॥ ७०
अम्भोरुहाणामवलेपसीमां कर्णोत्पलानामपि कान्तिकक्ष्याम् । विलङ्घयन्तः सुदृशां कटाक्षाः विलिल्यिरे लक्ष्यमवाप्य कृष्णम्
तां प्राप्य चित्रामिव तारकेशः स्तव्यैस्स्तुतो वन्दिगणैरभौमैः । विवेश धाम स्वमुदीर्णधामा वैवाहिकीं संपदमाप्तुमिच्छन्॥

विहारयोगेन विभज्य युक्तं मिथोऽनुरूपं मिथुनं तदाद्यम् । उपाचरन् व्योमचरा यथार्हं संप्रीणनैरुत्सवसंविधानैः ॥ ७३

सदाऽभिगम्यैरभिगम्यमानं विश्राणने वैश्रवणात्प्रभूतम् । तं शङ्खपद्मप्रमुखा महान्तः सिषेविरे शेवधयस्समेताः ॥७४॥

अपत्रपाविप्लुतचेतसो ये त्यक्त्वा विपक्षं तरसोपसेदुः । यथाक्रमं सात्यकिरुत्सवादौ संभावयामास सभासदस्तान् ॥७५

शुभंयवः स्वामिमहोत्सवेन स्वाराज्यमक्षय्यमिवाप्नुवन्तः । दत्तोपचारा वसुदेवदारैः पुण्याशयाः पौरजना जहर्षुः ॥७६॥

अकृत्स्नसंवेदिनि जीवलोके संग्राहयन् धर्ममथात्मवृत्त्या । प्रत्यर्चयामास मुनीनुपेतान् प्रभुः स्वयं प्रेष्य इवोपचारैः ॥७७

सहोदरन्यस्तभरस्तदात्मा रुक्माणि रत्नानि च रौहिणेयः । अदत्त संतोषवशादभीक्ष्णं वाञ्छाधिकं वन्दिवनीपकानाम् ॥

अनन्यभक्तैरनुभाव्यमूम्ना दत्तेक्षणो दानपतिस्त्रिधाम्ना । समाहितैस्संमतमुद्धवाद्यैः पुरोधसां पूजनमाचचार ॥ ७९ ॥

आहन्यमाना धृतहेमकोणैः गन्धर्वमुख्यैरिव गाढविद्यैः । जातानुनादा जगतां त्रयाणां दोषच्छिदो दुन्दुभयः प्रणेदुः ॥

विभावितं शिक्षितनाट्यवेदैरुद्वाहसंगीतमुदारकल्पम् । प्रसादनं दृष्टिमनश्श्रुतीनामदिव्यमास्कन्दितदिव्यमासीत् ॥ ८१॥

लावण्यपूरं ललिताङ्गयष्टेः कार्त्स्न्येन निर्वेष्टुमपारयन्त्यः । अङ्गानि वध्वाः कुलवृद्धनार्यः प्रसाधनैरन्तरयांबभूवुः ॥ ८२ ॥

प्रयुज्यमानानि तयोर्यथार्हं मङ्गल्यमाल्याभरणाक्षतानि । प्रायेण लोकाभ्युदयं प्रदातुं तत्संगमात्तादृशतामकाङ्क्षन् ॥

अरातिपक्षार्णवमन्दराभे हस्ते हरेर्यत्तदबन्धि सूत्रम् । तदाददे स्थानवशादभिख्यां संवीतनागेन्द्रनिदर्शनीयाम् ॥ ८४ ॥

समेधितस्तस्य विवाहवह्निः पुरोधसा पुण्यकृदग्निमेण । प्रदक्षिणावृत्तशिखाकलापः प्रायेण नीराजनमाततान ॥ ८५ ॥

आशास्य लाजाञ्जलिहोमभाजा क्षेमाशिषा किञ्चिदशेषहृद्यम् । अन्योन्यमाकेकरसस्मिताक्षावपश्यतामादिमदंपती तौ ॥

वैलक्ष्यडोलामिव संश्रितानां विलोचनानां ववृधे विहारैः । तयोरनन्यादृशवैभवानामन्योन्यराजीवमधुव्रतानाम् ॥ ८७ ॥

परस्परं पाणिसरोजयोगात् बभूवतुस्तौ पुलकाञ्चिताङ्गौ । अस्विद्यतां च ज्वलनस्तु मन्दैरसूत धूमैरधिवासमात्मम् ॥८८॥

समन्त्रकं साक्षिणि हव्यवाहे सख्योचितां सप्तपदीं भजन्तौ । स्वशासनेन स्वयमन्वयातामाचारमागन्तुकदंपतीनाम् ॥

अन्वेतु विष्णुः स्वयमित्युदीर्य प्रियां पराधीन इवावगच्छन् । जायापतीनां जगदुद्भवानां भव्यां दशां भावयति स्म नाथः

आत्मानमेव स्वयमग्निरूपं परिक्रमैः पर्यचरत्स देवः । विश्वस्य बाह्यान्तरनित्यवृत्त्या न कर्मकर्ता च य एव एषाम् ॥

प्रदक्षिणेन क्रमणेन ताभ्यां दत्तार्चनो दिव्यवधूवराभ्याम् । नूनं तथाऽऽनर्च विघूर्णनेन स्वान्तःस्थितौ बहिरपि स्वयं तौ॥

तस्यास्सलीलं चरणारविन्दं कामी गृहीत्वा करपङ्कजाभ्याम् ।
आस्थापयद्यां दृषदं मुकुन्दः साऽभूत्स्वयं मौलिमणिश्श्रुतीनाम् ॥ ९३ ॥

यदत्र कर्मण्ययथाकृतं तत् स्विष्टं क्रियादग्निरिति ब्रुवाणः । स्वतेजसा भावितविश्वतेजाः स्वाहासखं देवमुपास्त देवः ॥

रामस्य सीतेव रमेव विष्णोरमुष्य भूयास्त्वमिहैकपत्नी । इत्यूचिषो यादववृद्धदारान् प्रीताशया प्रैक्षत सा सनाथा ॥

वरेण वन्द्येन सुरासुराणां मङ्गल्यसीमान्तभुवा च वध्वा । समीक्षिता ब्रह्मसुतस्य पत्नी सर्वैरभूत्सादरदर्शनीया ॥ ९६ ॥

तदेकभावा तमनन्यभावं नाथप्रिया नाथमनुव्रजन्ती । अभीष्टसिद्धेरधिदेवतेयं यद्वा सवित्रीति यथार्थमूचे ॥ ९७ ॥

कृताशिषं कृष्णगृहेश्वरीं तां पुरोधसा पुण्यमनोरथेन । सकौतुकां कौतुकिनस्सुरस्त्रैरभ्यर्चयामासुरमात्यवृद्धाः ॥ ९८ ॥

मनुष्यतां मानयतो विहारैः स्वामेव देवीमुपयच्छतस्ते । समेधतां मङ्गलमित्युशन्तः सत्याशिषस्तं मुनयश्शशंसुः ॥९९॥
प्रदाय ताभ्यामुपदास्समीचीः प्रत्यागताः स्वानि गृहाणि पौराः । आशापतीनां विभवादनूनां तत्रैव ते संपदमन्वभूवन् ॥
स्त्रीपुंसनाम्ना वहुधा विभक्तं विश्वं ययोरेव विभूतिमाहुः । नयो जहौ द्वारवतीं नताभ्यामङ्गीकृतामादिमदंपतिभ्याम् ॥
वधूसखे तत्र जगन्निवासे वसत्यमर्यादगुणानुभावे । तस्मिन्निवासीदनपायभावा तस्यां नगर्यामपि रुक्मिणी श्रीः ॥१०२
तस्याः कटाक्षैर्विहिताभिषेकः तद्बाहुना कल्पितकण्ठमाल्यः । अवाप शोभामधिकां मुकुन्दः सौभाग्यसिंहासनसार्वभौमीम्
कदम्बगोलश्रियमाक्षिपन्तं कन्दर्परूपोदयपूर्वरूपम् । प्रियापरिष्वङ्गरसेन धन्यं प्रीताशयो बह्वमतात्मदेहम् ॥ १०४ ॥
तां प्राप्य कृष्णः प्रभुतामिव स्वां मनःप्रसूतेरिव मन्त्रसिद्धिम् । आसीदभीतैस्सहसाऽभिगम्यो मित्रैरमित्रैरपि सापराधैः ॥
श्रीवत्ससंस्थानजुषा प्रकृत्या स्थानेन चिह्नेन च लक्षणीयौ । दृष्टावभीष्टं भजतां ददाते जगत्पती ताविह दंपती द्वौ ॥
न ते मनुष्या न च देवतास्ते प्रायेण तावेव तथा भवन्तौ । यैरेवमन्योन्यविभूषितं तत् द्वन्द्वातिगं द्वन्द्वमवेक्षि धन्यैः ॥

अथ समुदितहर्षैरादृतो मन्त्रिवृद्धैः सुरपतिदयिताभिः स्तूयमानापदानः ।
रुचिमिव निरपायां रुक्मिणीं प्राप्य तुष्यन् यदुपतिरधिचक्रे यायजूकाधिकारम् ॥ १०८ ॥
सुभगमुपलबिम्बे शातकुम्भेऽपि रत्नं कनति विपिनभागे कालकण्ठेऽपि गङ्गा ।
वशिकनृपगृहे सा वासुदेवेऽप्यदीव्यन्न हि भवति विशेषः कापि नित्योन्नतानाम् ॥ १०९ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये त्रयोदशः सर्गः ।

## १४. चतुर्दशः सर्गः

अथैकदा रोधसि पश्चिमोदधेरदभ्रसत्राजितभक्तियन्त्रितः ।
त्रयीमयश्चन्द्रसमीकृतद्युतिः प्रसेदिवान् प्रादुरभूद्दिवाकरः ॥ १ ॥
अनल्पतेजो निधिमप्रमाथतां प्रसूतिमिष्टस्य धनस्य भूयसः ।
स्वकण्ठलग्नं द्युमणिस्स्यमन्तकं महामणिं भूमिभृते वरं ददौ ॥ २ ॥
तमुग्रसेनार्थमियेष कंसजित् न वार्यते राजनि रत्नहारिता ।
प्रतीत्य सत्राजित एतदप्रियं कचिन्निचिक्षेप गुणाधिके मणिम् ॥ ३ ॥
यदेकमेकेन च लब्धमेकतो रसेन रत्नामिषमर्थकाङ्क्षिणा ।
बभूव तद्बन्धुविरोधमादधत् क्रमाद्बहूनां विनिपातकारणम् ॥ ४ ॥
स्यमन्तकोदन्तविशेषसंभवां मृषाभिशस्तिं शमयन्नथाऽऽत्मनः ।
प्रसेनविध्वंसकसिंहघातिनो बिलं ययौ जाम्बवतो बलानुजः ॥ ५ ॥

स्तनन्धयोपान्तनिबद्धगीतया ददर्श धात्र्या विधृतं करेण सः ।
धनाष्टभारप्रभवं दिनेदिने मणीश्वरं दर्शितकौस्तुभश्रियम् ॥ ६ ॥

जिघृक्षया दत्तदृशं च तत्र तं जरानिरुद्धोऽपि जवेन जांबवान् ।
अरोधनीयं विबुधैरपि स्वयं रुरोध नैसर्गिकसत्त्वरोषितः ॥ ७ ॥

मलिम्लुचं कञ्चिदिवागतं हरिं वनेचरः प्रेक्ष्य तदर्हविक्रियः ।
अहेतिहस्तं स्वयमप्यनायुधः प्रसह्य तं सादयितुं प्रचक्रमे ॥ ८ ॥

अनन्यतन्त्रस्य पितुः पितामहः सुतस्य चारब्धमवेक्ष्य संयुगम् ।
समीहितोदर्कमिदं द्वयोरिति प्रबुद्ध्यमानो न निरोधमादधे ॥ ९ ॥

मिथस्तयोरस्तदयं विमघ्नतो निरायुधं युद्धमपेतकैतवम् ।
अकल्पितप्राश्निकमन्ववैक्षत स्वयं चतुर्भिर्दशभिश्च साक्षिभिः ॥ १० ॥

अरिष्टचाणूरमुखेष्वलक्षितं प्रदर्शयन् ऋक्षपतेः पराक्रमम् ।
चिरं ददौ युद्धमचिन्त्यचेष्टितो मनस्विनस्तस्य मधुप्रभञ्जनः ॥ ११ ॥

प्रकीर्यमाणा निजमुष्टिमुद्गरक्षताकृतेर्जाम्ववतः क्षतोद्भवैः ।
रराज रामावरजस्य सा तनुः सशक्रकोपा वसुधेव शाद्वला ॥ १२ ॥

स चर्क्षराजः क्षतजैर्जयश्रियः कुचार्पितैः कुङ्कुमकर्दमैरिव ।
परिष्कृताङ्गः प्रचितोन्नताकृतिः सगैरिकक्ष्माधरसंपदं दधौ ॥ १३ ॥

अशेषयज्ञाग्रहरं समागतं जिगीषयाऽनु(त्र)द्रुतया स दीक्षितः ।
अतोषयत् संयुगसत्रतन्तुना विभाव्य ऋत्विग्विधिना भुजादिभिः ॥ १४ ॥

तलप्रहारैरथ मुष्टिपातनैः पदाभिघातैर्भुजयन्त्रपीडनैः ।
मिथः प्रतिक्षेपपुनर्गृहीतिभिः नियुद्धचर्यानिपुणौ निजघ्नतुः ॥ १५ ॥

कृतप्रतीकारविशेषतोषितौ परस्परच्छिद्रनिवेशितेक्षणौ ।
दिशागजेन्द्राविव दर्पदुर्दमौ दिनानि तौ निन्यतुरेकविंशतिम् ॥ १६ ॥

अहीयत प्रत्यहमृक्षभूपतिस्सलील्या कंसरिपुस्समैधत ।
तमःप्रकाशाविव तौ दिनागमे बभूवतुस्संयति पूर्वपश्चिमौ ॥ १७ ॥

स तेजसा यादवतिग्मतेजसः समिध्यमानेन निवारितोन्नतिः ।
शरन्नदीपूर इव स्फुटाशयः शनैश्शनैश्शान्तिमवाप जांबवान् ॥ १८ ॥

वलीभिरापाततलं तरङ्गितः सिरालदेहः पलितैः सितासितः ।
चिरप्रवृत्ताहवसंभृतश्रमो न चेतसा ऋक्षपतिः प्रचुक्षुभे ॥ १९ ॥

स्वविक्रमादप्रतिमात् सुरद्विषां भयानकादानकदुन्दुभेस्सुतः ।
अविस्म्यतं प्रेक्ष्य तमृक्षपुङ्गवं महासुरं केवलमस्मरन्मधुम् ॥ २० ॥

युगान्तदम्भोलिनिपातभीषणैः निहन्यमानं निजमुष्टिमुद्गरैः ।
स्वनाभिपद्मोद्भवजृम्भिकासुतं बलानुजन्मा युधि बह्वमन्यत ॥ २१ ॥

दशाननायोधनकेलिकिंकरं परामृशन् ऋक्षपतिं परः पुमान् ।
बलीयसस्तस्य बहूपकारवित् बभञ्ज दर्पं भुजयन्त्रलीलया ॥ २२ ॥

तमादितो मानुषमात्रमागतं सहक्षमृक्षाधिपतिस्ततः परम् ।
अथाऽधिकं सामिनिरुद्धपौरुषः क्रमादमीमांस्यममंस्त कर्मभिः ॥ २३ ॥

उवाच चैनं विधिवक्त्रसंभवः स्वविक्रमप्रीतमनुक्रमाद्विदन् ।
सगद्गदं सन्नमितेन मौलिना नखत्विषा पुष्पितमञ्जलिं वहन् ॥ २४ ॥

अहो महत्सत्त्वमहो पराक्रमः त्वमीश्वरो नूनमहो निरीश्वरः ।
अतीतदेवासुरनागनैरृतः पतिः पतीनां प्रतिभाति मे भवान् ॥ २५ ॥

अनेकमन्वन्तरदर्शिना मया न खल्वरामो ददृशे भवादृशः ।
निजौजसा नैरृतयूथघातिनं नियोधयन्मां निभृतं(तः) प्रवर्तसे ॥ २६ ॥

गुणैरपि प्रत्यवमृश्यते भवान् दशाननाद्यैर्युधि दृष्टवैभवः ।
श्रुतं मया सिद्धजनादिह स्वयं गुहाशयः प्राप्स्यति ते गुहामिति ॥ २७ ॥

वनं तदेतन्महितं तपोवनं गिरिं च वेद्मि त्रिदिवेश्वरालयम् ।
पचेलिमं किं नु तपो बिलस्य मे प्रसाधितं यत्तव पादपांसुभिः ॥ २८ ॥

स्वनाभितस्सप्तमजन्मभागिनो विजृम्भमाणस्य विधेर्यदृच्छया ।
त्वमेव मां वेद मधुव्रताश्रितात् मुखाब्जतः सानुचरं व्यजीजनः ॥ २९ ॥

त्रिभिः क्रमैर्दीव्यति दिव्यवामने स्वमायया मोहितदानवे त्वयि ।
जगन्ति विश्वानि मितानि विष्णुनेत्यघोषयं द्रागिव जैत्रघोषणाम् ॥ ३० ॥

जिघांसिते देव दशानने त्वया हतारिसंघैर्हरियूथपैर्वृतः ।
अवर्तयत्सूर्यसुतस्य सन्निधावयं जनः किंकरवृत्तिमाहवे ॥ ३१ ॥

गतेषु सुग्रीवमुखेषु तावकं पदं तदप्राप्यमहं त्विह स्थितः ।
त्वदीक्षणात् प्राप्तफलोऽस्मि सांप्रतं जरन् पुनर्यौवनमाप्तवानिव ॥ ३२ ॥

न तादृशाः संप्रति सन्ति भूतले ऋते भवत्तः प्रतिसन्धिभावनैः ।
हनूमतैकेन विभीषणेन वा मयापि वा सोऽयमिति त्वमूह्यसे ॥ ३३ ॥

रसावहैरेकधियां रसायनैः शुभैश्श्रुतिश्रेणिशिरोविभूषणैः ।
अपेतभारामतिदेवमानुषैः विहारभेदैरवनिं विधास्यसि ॥ ३४ ॥
विशुद्धमिश्रैश्चतुरश्रवृत्तकैरगाधतुङ्गैः प्रमितामितक्रमैः ।
अनन्यभावाननुकम्पते भवान् अचिन्त्यचिन्त्यैरवतारनाटकैः ॥ ३५ ॥
न वर्धसे कर्मभिरीश साधुभिः न हीयसे च त्वमसाधुभिः कृतैः ।
जगत्परित्राणपरेण केवलं विधिर्निषेधश्च न लङ्घ्यते त्वया ॥ ३६ ॥
गुणोदधिस्त्वं गुणकर्बुरात्मना तिरस्करिण्या पिहितात्मदृष्टिभिः ।
न दृश्यसे देव सदा सहैव सन् दिदृक्षमाणैरपि देवदानवैः ॥ ३७ ॥
जगत्तवान्तर्बहिरप्युपुप्य च त्वमेवमेवंविधचित्रवैभवः ।
समाधिदृष्ट्या मुनिभिस्समीक्ष्यसे सनातनो नूतनभूमिकाश्रितः ॥ ३८ ॥
तवैव संकल्पकलांशतः क्वचित् समर्थवादाः परमेष्ठिनामपि ।
त्वयि प्रतिद्वन्द्विनि कस्य किं बलं क एव जेता न भवेत् त्वदीक्षितः ॥ ३९ ॥
असह्यमेतन्मधुकैटभादिभिः स्वतल्पसारोल्बणबाहुना त्वया ।
निपीडनं यन्निबिडं विषह्यते मयाऽल्पसत्त्वेन तवैव तद्बलम् ॥ ४० ॥
त्वया जितोऽहं क इवाजितः परो न रुध्यसे नाथ मया न किं परैः ।
दयालुनाऽपास्यत दर्प एव मे भुजाहवे च व्युदपादि भूष्णुता ॥ ४१ ॥
न नीतिवर्तन्यतिलङ्घिता मया न च त्वदादेशविपर्यये स्थितम् ।
तथाऽपि सर्वाधिकसत्क्रियोचिते विरुद्धचेष्टा विदधे विमोहितः ॥ ४२ ॥
जगत्पते जाम्बवतीमिहार्हणां गृहाण पत्नीं गृहमागतः स्वयम् ।
मणिं च दिव्यं द्युमणेः स्यमन्तकं युतं धनैर्यौतकमर्पयामि ते ॥ ४३ ॥
ममात्मजाऽपि श्रियमेवमप्सरःप्रसूतिरेषा वहति श्रिया समाम् ।
त्वदर्हशीलादिगुणप्रसाधिता स्वयं वृणीतेऽद्य भवन्तमेकधीः ॥ ४४ ॥
त्वदागमाद्दक्षविलं परं पदं त्वदीक्षणात् सूरिगणा इमे वयम् ।
त्वदाश्रयात्सिन्धुसुतैव मत्सुता त्वया धृतोऽसौ मणिरस्तु कौस्तुभः ॥ ४५ ॥
त्वदाहितस्वातिशयैः स्वयोगतः परत्र साध्योऽतिशयः स्थिरत्रसैः ।
अनन्यसाध्यातिशयस्य तस्य ते स्वशेषताऽसौ न विघातमर्हति ॥ ४६ ॥
स्वयोगभूम्ना चुलकीकृताखिलैः मुकुन्द देवैरपि किं न मुह्यते ।
विवेकवैराग्यविदेशवर्तिना वनौकसा मांसदृशा मया न किम् ॥ ४७ ॥

अभार्गवो नापनयेत न क्वचित् न वक्त्यसाधून्यबृहस्पतिर्न च ।
अवासवो न च्यवते न चाहवादते च ते तद्वदहं तु किं पुनः ॥ ४८ ॥
भवार्णवे कर्मविपाकवात्यया भवद्भिरावर्तगणैः परिभ्रमन् ।
कृतोपरोधः कृपया त्वदीयया भवत्पदं कूलमिव प्रपद्यते ॥ ४९ ॥
अविन्दतस्त्वाममितामृतोदधिं विगाढतृष्णाविवशान्तरात्मनः ।
विगाहनीयाः प्रतिभान्ति वीचिकाः मरीचिकानामिव भोगसंपदाम् ॥ ५० ॥
गुणोदधिं यः प्रमितप्रमाणया गिरा त्वदीयं परिमातुमिच्छति ।
स पातुमीहेत समग्रचापलः (पयोज)सरोजनालेन पयः पयोनिधेः ॥ ५१ ॥
अकर्मतन्त्रस्य जगन्ति कर्मभिः निबध्यमानानि विमुञ्चतस्तव ।
अलीकलेशैरनुपप्लुता स्तुतिः तथाऽप्यकल्प्येयमयावदुक्तितः ॥ ५२ ॥
अजानता त्वन्महिमानमद्भुतं विमोहितं देव तवैव मायया ।
कृतापराधं कृपया वशीकृतः क्षमस्व मामित्यपतत्क्षमातले ॥ ५३ ॥
विलूनमूलद्रुमसंनिभं स तं विलक्षमुत्थाप्य विहारयादवः ।
प्रियाङ्गरागव्यतिहारगन्धिना भुजान्तरेणोपजुगूह सादरम् ॥ ५४ ॥
स कन्यकारत्नमचिन्त्यवैभवं वदान्यरत्नं च समं समर्पयन् ।
सरस्वतीवल्लभवक्त्रसंभवो महामनाः पूर्णमनोरथोऽभवत् ॥ ५५ ॥
वनौकसां पत्युरहीन्द्रशोभिना विमथ्यमानादचलेन बाहुना ।
ननन्द लब्ध्वा हृदयंगमां प्रियां मणिं च दिव्यं मधुकैटभान्तकः ॥ ५६ ॥
स्तनापदेशस्तवकावभासिनी विलासभेदैरभिनीतपल्लवा ।
रमापतौ गारुडभूधरद्युतौ रसाधिका रत्नलतेव सा बभौ ॥ ५७ ॥
सविस्मया पूर्वमथ प्रमोदिनी ततो मदारम्भमिवाभिजग्मुषी ।
तदन्यसंस्कारनिरोधतः क्रमात् तदीक्षणे तन्मयतामवाप सा ॥ ५८ ॥
स पर्यणैषीत्रिदशैरुपस्थितो विधिर्यदाज्ञा विधिजन्मनः सुताम् ।
बिले तदीये विबुधालयोपमे विकल्प्यमानाकृतिमप्सरोगणैः ॥ ५९ ॥
अवाप्य जामातरमादिपूरुषं जगत्प्रतीक्ष्यत्वमवाप जाम्बवान् ।
विदर्भराजेन विदेहभूभृता समक्रमं दुग्धपयोधिना च सः ॥ ६० ॥
मनुष्यभावाभिनयव्यवस्थितां कुशीलवार्हां कुहनां वहन् विभुः ।
पुनस्तमृक्षेन्द्रपदानुभूतये परं च भोक्तुं पदमन्वमन्यत ॥ ६१ ॥

प्रहृष्यता जाम्बवता निवेदितां प्रवालजाम्बूनदरत्नसंहतिम् ।
प्लवङ्गभल्लूकगणैरनुप्लवैरविप्लवां द्वारवतीमजीगमत् ॥ ६२ ॥
ततस्तमामन्त्र्य चतुर्मुखात्मजं प्रतिप्रयातः स्वपुरं प्रियासखः ।
स्यमन्तकं संसदि दानवान्तकः स्वतोऽनघः स्वामिवशे न्यवीविशत् ॥ ६३ ॥
जगत्पतिं जाम्बवतीसखं तदा नियुद्धचिह्नैः परिकर्मिताकृतिम् ।
निरीक्ष्य तं द्वारवतीनिवासिनो ननन्दुरानन्दजलाविलेक्षणाः ॥ ६४ ॥
अपेतसंमोहमिवात्मवेदिनं दिवाकरं राहुमुखादिवोद्गतम् ।
अमंस्त नागेन्द्रमिवास्तशृङ्खलं प्रशान्तवाच्यं प्रकृतिर्यदूद्वहम् ॥ ६५ ॥
जिताहितो जाम्बवतीनिषेवितः स तत्र सत्राजितसात्कृते मणौ ।
स्वचौर्यदुर्वादममार्जयत् स्वयं न विद्यते यस्य न किञ्चिदण्वपि ॥ ६६ ॥
स्यमन्तकस्य द्युमणेरिव त्विषा निमेषमापुः कुमुदाकरा इव ।
ह्रिया च मिथ्यापरिवादिनस्तदा परे च पद्मा इव तद्विपर्ययम् ॥ ६७ ॥
स्वगोचरानेवमगोचरो गिरां बलानुजो बालधियामपाहरत् ।
रहस्सु रथ्यासु च लब्धसंभवानवर्णवादाननघो गुणार्णवः ॥ ६८ ॥
अकीर्तिरारोप्यत कीर्तिरागता यदप्रियं प्रोचुरिदं प्रियाप्तये ।
न कर्मतन्त्रेषु मतेरमोहता न च स्वतन्त्रे स्युरनिष्टहेतवः ॥ ६९ ॥
प्रशान्तखेदः प्रतिलभ्य सन्मणिं जगद्विनेतुर्वसुदेवजन्मनः ।
ददौ धरित्रीमिव सद्गुणाधिकां स सत्यभामां तनयां नयाम्बुधिः ॥ ७० ॥
यथा गिरीशो गिरिराजसंभवां पुलोमकन्यां च दिवौकसां पतिः ।
स्वयं च दुग्धोदसुतां सुधासखीं तथा स रेमे सदृशीमवाप्य ताम् ॥ ७१ ॥
अनुव्रता कामकलास्वधीतिनी विचित्रशस्त्रास्त्रविहारवेदिनी ।
बहुप्रियस्यापि हरेरतीव सा बभूव देवी बहुमानगोचरा ॥ ७२ ॥
यथा न खेदाय गतः क्षणो भवेत् यथा च तन्वीत न भीतिमायतिः ।
अनन्तनिष्कम्पगुणामनुक्षणं प्रियः प्रियां प्रीतिमलम्भयत्तथा ॥ ७३ ॥
स वल्लभाभिस्तिसृभिः प्रकाशयन् परत्वमाद्यं प्रतिपन्नषड्गुणः ।
नयो महीयानिव शक्तिभिस्समं समेतसिद्धिः प्रचिकाय संपदम् ॥ ७४ ॥
स्वदिव्यदेहप्रकृतीरिवापराः पराश्च देवीरवृणीत पञ्च सः ।
ययथार्हसेवावसरे प्रमाद्यतां यदन्वितस्सत्रमिगम्तां ययौ ॥ ७५ ॥

अखण्डिताशोक्तिभिरेकवृत्तिभिः स ताभिरन्योन्यसमन्वितात्मभिः ।
विभूषयामास विभूतिवैभवं दिशाभिरष्टाभिरिवात्मनः पदम् ॥ ७६ ॥
अवाप्य देव्यः पतिमग्रयनायकं महौजसं मन्मथसूत्रसंयताः ।
उदग्रसद्वंशभुवो मिथस्समाः सुवृत्तमुक्तावलिसौम्यतां दधुः ॥ ७७ ॥
आदौ लक्ष्मीरभजत हरिं रुक्मिणीरूपदृश्या प्रापुस्तस्याः प्रतिनिधिपदं तत्प्रियास्सप्त देव्यः ।
सिद्धीरष्टौ दधदिव तदा सेवितस्ताभिरेकः क्रीडायोगी निरवधिमसौ निर्वृतिं निर्विवेश ॥ ७८ ॥
प्राचीनासु प्रकृतिषु यथा प्रादुरासन् प्रजौघाः तद्वज्जाताः सममिव जगन्नेतुरष्टासु तासु ।
पश्चात् प्राप्तप्रणयिनि तथा षोडशस्त्रीसहस्रे तेषामेकः किमयमथवा तत्समानो बभूव ॥ ७९ ॥
शमितनिगमखेदैः साधुभिः श्लाघनीयं चरितमिदमुदारं शास्तृ चाणूरहन्तुः ।
श्रुतमनुकथितं वा शुद्धिमग्र्यां दधानं समतनुत पृथिव्यां शाश्वतं धर्मसेतुम् ॥ ८० ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये चतुर्दशः सर्गः ।

---

## १५. पञ्चदशः सर्गः

अथ पद्मभुवः पितुस्सकाशादभिगच्छन्यदुपुङ्गवं दिदृक्षुः । मुनिरध्वनि वल्लकीसहायः प्रजगौ लास्यतरङ्गितप्रचारः ॥१॥
अहमस्मि पितामहस्य सूनुः स विभोरात्मभुवस्सरोजनाभेः । भजते भुवि साम्प्रतं स देवः स्वयमेवानकदुन्दुभेस्सुतत्वम्॥
अवरोपितगोपसूनुभावः स नटस्संप्रति देवकीसुतस्सन् । परितोषितभावुकः स्ववृत्त्या श्रुतिलक्ष्यां महतीं प्रियामविन्दत् ॥
तदहं तमसः स्थितं परस्तादनपायद्युति भास्वताऽऽत्मनैव । कमलोल्लसितेन दर्शनीयं दिनमाद्यन्तविवर्जितं दिदृक्षे ॥ ४॥
गुणसिन्धुरसौ गुणातिवर्ती गतिरन्तःस्थितिरागमैकगम्यः । दयितासहितो दयैकसङ्गी गुरुराद्यो मयि गौरवं विधाता॥ ५
जगदेकहितेन जन्मनाऽसौ दनुजैराक्रमणं भुवो निरुन्धन् । कलहप्रियमद्वचोऽनुसारात् न कथं विग्रहमारभेत नाथः ॥
अधिकारविलम्बितापवर्गस्थिरसङ्गादपकौतुकस्त्रिवर्गे । विधिना नियतेन धर्मगुप्तौ विनियुक्तोऽस्मि विरोधनेन दीव्यन् ॥
विदधे विनिवेदितं मयाऽसौ विविधं विश्वहितं विधास्यते च । स्वजनत्वधिया सुरासुराणां बहुमानैकपदं यतोऽहमासम् ॥
विनिवेदयता रिपोरुदन्तं दिविषद्वैभवदावचित्रभानुम् । अजितस्य जिगीषतो मयाऽसौ विजयारम्भमहोत्सवो विधेयः ॥९॥
इति भव्यमनोरथो महीयान् प्रभुमासीनमुपह्वरेऽभियातः । विदिताखिलवेदितव्यमित्थं मुदितः प्राह जगद्धितं मुनीन्द्रः ॥
जय देव जगत्रयान्तरात्मन् न नियन्ता न च ते समस्त्वदन्यः। भवभीतिनिशीथिनीविभातं परमं ब्रह्म भवन्तमामनन्ति ॥
उदितः प्रणवाङ्कुरात्मना त्वद्विविधस्कन्धविभक्तरूढशाखः । त्वदनुग्रहपुष्पितः प्रजानां फलमिष्टं निगमद्रुमः प्रसूते ॥१२
विषमं निजकर्मभेदयोगात् बहुमानास्पदबन्धमोक्षलीलः । जनितं भवतैव रक्षसि त्वं जगदेतत् स्वयमेव पुत्रनीत्या॥ १३

गुणचित्रितजन्तुदन्तुरेऽस्मिन् जगति त्वद्विहिते हितेतरेभ्यः । अपि विश्वसृजां समाहितानामयथाचिन्तितमापतन्त्यवस्थाः ॥
सुकृतोपचयेन जातसिद्धिस्त्वदसौ कश्चिदुपस्थितापराधः । अनुभूय हिरण्यरावणत्वे भजते संप्रति चेदिराजभावम् ॥ १५

त्रिषु जन्मसु ते विहार(दक्षं)शिक्षाविधिना सिंहगजक्रमेण सृष्टः ।
सहजः किल रुक्मिणीनिमित्ते स रिपुस्संप्रति कृत्रिमश्च जातः ॥ १६ ॥

विपथेन सदैव विप्रधावन् विबुधग्रामविपद्विदानभूतः । भवतो भजतामनन्यसाध्यं विनिपातं प्रणिपातगत्यनर्हः ॥ १७ ॥
दमनं दमघोषसंभवस्य प्रबलस्यापि यदर्थ्यते तदेतत् । मधुकैटभमेरुमर्दिनस्ते मशकामर्शनमात्रमित्यवैमि ॥ १८ ॥
अथवा जगदेतदोदनस्ते तदुपघ्नन्नुपसेचनं च मृत्युः । महदादि विलापयन्महिम्ना दमनेनाद्रियसे न दानवानाम् ॥१९॥
सुहृदोऽपि सदा सुरासुराणां प्रणतानुग्रहभावितात्मनस्ते । क्वचिदापतितोऽपि पक्षपातः समतामेव समर्थयेत सत्याम् ॥
प्रथमा चरमा च देवता त्वं वरणीया वरदा च विश्ववन्द्या । निगमेषु सती पुरेषु चैका जनयित्री जनपङ्क्तिहारिणी च ॥
कलशै(घटकै)रिव कर्मपाशनद्धैः स्थिरकालात्मकचक्रयन्त्रनिघ्नैः । विहरस्यधरोत्तरक्रमेषु स्ववशैरेव सुरासुरैस्स्वतन्त्रः ॥
सवने भवमुक्तिसन्धिरूपे विधिना विश्वपते विचित्रहेतिम् । हृदि शान्तधियस्समिन्धते त्वामनघात्मक्रतुहव्यवाहमाद्यम्॥
अणिमादिभिरेक एव भिन्नः परविद्यामणिदर्पणेषु भानात् । सुदृशां भजसि त्वमात्मभूतः सुखसंदर्शनयोग्यमाभिमुख्यम् ॥
अपि दृष्टमपि श्रुतं प्रभावं भवदीयं भविनस्तमोभिभूताः । न विदन्ति यथावदात्मवन्तस्त्वनुपश्यन्ति करस्थिताम्बुकल्पम् ॥
सहधर्मचरीं सदानुवृत्तां स्वयमुद्दीपयता त्वयाऽनुकम्पाम् । शरणागतरक्षणव्रतस्य प्रतिलब्धोऽयमिह प्रयोगकालः ॥२६॥
अहितं न विचिन्तितं मयैतत् चिरदुष्कर्मकृतोऽपि चेदिभर्तुः । सह नाकसदामसौ विमानैः सुकृतित्वं लभतां त्वदस्त्रपूतः
स्वपतः किल जाग्रतश्च तस्य त्वयि वैरेण विदीप्तचित्तवृत्तेः । त्वदनुस्मरणप्रभावयुक्ता नियतिस्त्वन्मयतामिवातनोति ॥२८
विनिवेदितविश्वकार्य इत्थं कृतिना तेन कृतार्हणो यथार्हम् । मुनिरात्ममनीषिकावदातः खलचेतोमलिनं खमुत्पपात ॥
वसुदेवसुतश्च पाण्डवेन क्रतुमारब्धवता कृतोपहूतिः । समरप्रियया सह ध्वजिन्या सवनं तस्य जगाम सत्प्रतीक्ष्यः ॥
यदुभिस्सह यादवेश्वरं तं परिषत्प्राप्तमुपेत्य पञ्च पार्थाः । विभवोचितमीश्वरानुरूपं सुहृदर्हं च समर्चयांबभूवुः ॥ ३१ ॥
क्रतुमप्यनघं स धर्मसूनुः हविषां भोक्तरि दत्तसन्निधाने । विधिवत् स्वधिया समर्प्य चक्रे बहुधाऽनुशुश्रुतत्प्रभावभूमा ॥
हरिदश्वसमुद्भवं प्रदाने धनगुप्तौ च सुयोधनं न्ययुङ्क्त । स्वयमेव समाहितेन वव्रे हरिणा विप्रपदावनेजनांशः ॥ ३२ ॥
समये परिषत्सभाजनार्हे दिविषत्पूज्यपदोऽपि दैत्यहन्ता । किमसाविति यादवेषु कश्चित् नृप इत्यैक्षि जनैरलक्ष्यपारः ॥
अविशेषितशेषवृत्तिवाचं निजपारम्यनिगूहनाभिगम्यम् । अपृथग्विभवैस्तमासनाद्यैरुपमृद्नन्त इवासत क्षितीन्द्राः ॥ ३५ ॥
अथ युक्तविमर्शिभिश्चतुर्भिः गुरुभिः पश्चिमपाण्डवो नियुक्तः । प्रविवेश सभामशेषकर्तुः यदुवीरस्य विधातुमग्रपूजाम् ॥
अवदच्च तमेतमग्रगण्यं विबुधानां पितरं पतिं गुरुं च । हरिमर्चितुमर्च्यमुद्यतास्स्मः तदशेषैरनुमन्यतां सुधीभिः ॥ ३७ ॥
जगदेकपतेरमुष्य पूजां स्थिरधर्मद्रुममूलसेकभूताम् । निखिलानुमतां नृपो विधत्ते निरपायप्रियपथ्यभावभाव्याम् ॥ ३८ ॥
इति दर्शयतः पदं समाजे बलिनां मानभृतां महीपतीनाम् । महती बहुवारमुत्तमाङ्गे सहदेवस्य पपात पुष्पवृष्टिः ॥३९

हरिमर्चयितुं य ईहते तं सुरपुष्पैः स्वयमर्चयन्ति देवाः । इति नूनमगापयद्द्विरेफः प्रसृतः पाण्डुसुते प्रसूनवर्षः ॥४०॥
अवलोक्य तदद्भुतं महीयः प्रतिपन्नानुमते नरेन्द्रलोके । निजगाद हसन्नमर्षवेगात् क्षितिपालान् शिशुपाल उन्मदिष्णुः ॥
विदितं भवतामिदं यदेतत् स्वयमाहूय महीयसः क्षितीशान् । अवमन्यत एवमध्वरस्थः कुटिलो हन्त कुमार एष कुन्त्याः
अयमश्विसुतोऽपि तावदास्तां यदि माद्रीतनयस्स पाण्डुसूनुः । रभसादवमत्य राजलोकं यदि जीवेदलमन्ववायवादैः ॥
कृपणेन किमत्र साधुना नः सहदेवेन नियोगसाधकेन । चतुरः पुनरस्य पूर्वजातान् मनसा यात शठान्मनुष्यदेवाः ॥
द्विरदायुतसत्त्वशालिनो मे यदि धर्मध्वज एष धर्मसूनुः । मिषतः परिभूय धर्मपालान् यजते पश्यत पश्चिमेष्टिमस्य ॥
अथवा वसुदेवबन्धुदृष्ट्या वयमासीमहि मन्दहासगर्भम् । स्वयमस्य पिता कथं स धर्मस्तमिमं धर्मविपर्ययं सहेत ॥४६॥
अयमस्मदनुज्ञया विजित्य क्षितिमासादितराजसूयधर्मा । प्रसवोपगमे पतिप्रतीपा वनितेवाद्य बिभर्ति वैपरीत्यम् ॥ ४७ ॥
परिपश्यति हन्त राजलोके पशुपालस्य विधीयते सपर्या । अथ तत्र समर्थतैव तन्त्रं तदसौ वीरवरेण्य एकलव्यः ॥४८
कुरुवृद्धमुपेक्ष्य जाह्नवेयं जयसंप्रीणितजामदग्न्यरामम् । इतरानपि तादृशानिहैतान् न च गोपो न च यादवस्समर्च्यः ॥
अतिमर्त्यबला विराटशल्यद्रुपदाद्या बहवो हि सन्ति वृद्धाः । अतिलङ्घनमभ्युपैतु को वा गुणकर्मश्रुतशालिनाममीषाम् ॥

क्वचिदर्चनमिन्द्रजालतश्चेत् कुहकाः सन्ति परश्शताः पृथिव्याम् ।
अथ कश्चन सत्य एष भूमा क्व गतोऽसौ यवनादिसैन्यगन्धे ॥ ५१ ॥

अयमग्रज एष रौहिणेयो बलशाली वपुषा च शुद्धवर्णः । अनतिक्रमणं तदस्य युक्तं यदि शेषोऽयमविप्लुतः क्रमो वः॥
नटवद्धृतशङ्खचक्रचिह्नाः कति नामात्र विडम्बयन्ति विष्णुम् । अनुकर्तुमयं च तद्वदीशः कथमीशत्वमनूर्मिषट्कहीने ॥

न च विश्वमिमो न वृद्धवाक्यं बलवन्मानविलङ्घनं न चेत्स्यात् ।
न वदन्त्यनिदंपरेषु सन्तः स्तुतिवाक्येषु यथाश्रुतार्थसिद्धिम् ॥ ५४ ॥

इति तत्र मुधा विकत्थमानं कठिनं कण्ठविलग्नमृत्युपाशम् । परिदृष्टपरावरस्तमीषद्विनयन् विष्णुपदीसुतो बभाषे ॥
शृणु तात हितं समाहितस्त्वं रुशतीं वाचमपास्य रोषजाताम् । अविमृश्य विपत्तिमापतन्तीं न हि तिष्ठन्त्यहितेषु बुद्धिमन्तः
अतिपत्य मुकुन्दमन्तिकस्थं वशिकानर्चितुमुन्मना भवेद्यः । अवधीरितकौस्तुभः स नूनं कुरुविन्देषु कुतूहलं विधत्ते ॥
स्तुतिभिः कतिचित्त्रिवर्गमृच्छन्त्यपवर्गं च यमेकमाश्रिताभिः । निरये निपतन्ति निन्दयाऽन्ये यदि तद्वेत्थ वदैष यत्क्रियार्हः
सहजं नयनं च तत्तृतीयं भुजयुग्मं च तव स्थितातिरिक्तम् । सहसा यदुपागमेन नष्टं स्वयमाकारयसि स्वमृत्युमेनम् ॥

न हि सन्ति न निश्चितागमार्था न हि तेऽसन्निहिता न च प्रसुप्ताः ।
अपि तु त्रपया नतास्त्वदुक्तिं त इमे नन्विह चेतसा हसन्ति ॥ ६० ॥

यदि जीवितुमीहसे चिराय प्रतिपद्यस्व हितं यदस्मदुक्तम् । अथ न प्रहितो जलाञ्जलिस्ते शृणुतान्ये य इह श्रुतौ निरूढाः
युगकोटिशतायुतानि वेधाः स्वपदं प्राप यमेकमर्चयित्वा । मनुजः स तदर्चने विगायन् मतिहीनः पशुरेष मर्षणीयः ॥
विधिहस्तधृताच्च दङ्घ्रिपद्मात् च्यवमाना पवमानवेगहीना । विपुनाति जगन्ति दिव्यसिन्धुः क्रमते हन्त तदर्चने विवादः॥

स च कश्चन सर्वमेधयज्वा हविरात्माह्वयमात्मनैव हुत्वा । यत एव बभूव देवदेवस्सकिमस्मामिरदैवतैरनर्च्यः ॥ ६४ ॥
य इहाद्य भजन्ति यज्ञभागान् कृतिनः कार्तयुगेन कर्मणा ते । अयजन्त पुरा यमेकमाद्यं वरिवस्यामिह तस्य वारयेत्कः॥
अथवा विबुधादिपूजनीये मनुजैरर्चनमत्र मा विधायि । इति नाम विमन्यतामिदानीमपशुत्वाय च कल्पतामयं नः ॥
धनबन्धुवयःक्रियादिमात्रैरधिकेष्वप्यचमत्क्रिया विहत्यै । जगदेकपतौ सदोपकर्तर्यपकृत्यैष भजेत कामवस्थाम् । ६७॥
क्वचिदर्चयति प्रभूतपुण्ये त्रियुगं तद्वदलब्धभागधेयैः । यदि नाम धिया न शोचितव्यं न कथं दर्शनतोऽपि नन्दनीयम्
यदनुग्रहनिग्रहप्रयुक्ते सुखदुःखे शृणुमः स्वयंभुवोऽपि । विमतिं भजतस्तदर्हणायां न च देयोऽनुनयो न सान्त्वना च ॥
न पनायति चेदसौ न जिह्वा न नमस्यत्यथ नैतदुत्तमाङ्गम् । यदि नार्चयतो न तौ च हस्तौ कृपया कल्पितसंनिधिं नमेनम्
निरुपाधिकसर्वबन्धुमेनं द्विषताऽनेन न भाषणप्रसङ्गः । निरयज्वलनेन्धनीभविष्यन् कृपणः केवलमेष शोचनीयः ॥७१
सहनीयतया प्रतिश्रुतं यत् वसुदेवस्वसुरच्युतेन पूर्वम् । अपराधशतं तदद्य पूर्णं भविता चैद्यविपत्तये परं यत् ॥ ७२ ॥
कुरुवृद्धवचस्तदेतदर्थ्यं दमघोषप्रभवो निशम्य रुष्टः । प्रभयाऽनुकृतप्रवर्ग्यदीप्तिः प्रतिरुन्धानदुरासदो ररास ॥ ७३ ॥
निपुणैरतिबालवृद्धवाक्यं न परिग्राह्यमिति ब्रुवन्ति सन्तः । सहदेववदेष इत्यनिन्द्यं पृथुकत्वेन पितामहं निनिन्द ॥७४॥
अतिवृत्तिमवेक्ष्य तस्य घोरामशनिक्षोभनिभां सभासदस्ते । सदसत्प्रतिपत्तिमूढचित्ताः क्षणमालेख्यसमर्पिता इवासन् ॥
जहसुः कतिचिद्विनिन्द्य चैद्यं पिदधुः कर्णयुगं परे कराभ्याम् । सुरसिन्धुसुतं शशंसुरन्ये व्यचिकित्सन्त च केचिदल्पसत्त्वाः
मुनिभिः पुलकाञ्चिताखिलाङ्गैः क्षरदानन्दथुबाष्पदिग्धदेहैः । अनुमोदनजातमौलिकम्पैर्हरिकीर्तिश्रवणोन्मुखैरभावि ॥७७
स्तुतिनिन्दनयोरभिन्नरूपं मुखरागं मधुहन्तुरीक्षमाणैः । यदुभिः प्रतिरुद्धरोषवेगैः क्षमया तिर्यगवेक्ष्यत क्षमैव ॥ ७८ ॥
मधुजित्परिवादजातरोषं सहसा चेदिपतेर्वधाय सज्जम् । गदया सह भीममुज्जिहानं शमयन्नित्थमवोचदापगेयः ॥७९॥
बलभीमसुयोधनैरमुष्मिन् परिहीणायुषि न प्रवर्तितव्यम् । अतिपर्यनुयोगया नियत्या हरिणैवैष भवाब्धिवन्निवर्त्यः ॥८०॥
त्यज साहसमुज्झ्यताममर्षस्समये विक्रमसंपदाद्रियेत । सदनागतसूदनापवादो महतां संप्रति मा च भूदयं वः ॥८१
भजतु प्रथमार्हणां यथाह भगवानेष भवार्णवैकसेतुः । प्रकृतस्य विधातुमन्तरायं स्वयमेतस्य शुभस्य न क्षमं वः ॥८२
इति शान्तनवे प्रभाषमाणे निखिलानुश्रवसंशयप्रमोक्ता । मुदितो मुनिरब्जयोनिजन्मा मुहुराधूतकरस्तदभ्यनन्दत् ॥८३
क्षितिपालगणोदधिस्तदानीं विषमारम्भविरोधसेतुभिन्नः । स्तिमितक्षुभिताकृतिर्बभासे गगनाम्भोधरसंनिभो गभीरः ॥ ८४ ॥
ननृते मुदितेन नारदेन क्षिपता मङ्क्षु मृगत्वगुत्तरीयम् । सुरसिन्धुसुतोदितं विपञ्चीमसकृद्वापयताऽनुनादवृत्त्या ॥८५
उदगीयत यत्तदा विधिज्ञैः सममुद्गातृभिरेकताननादैः । मधुमर्दनकीर्तिगर्भया तत् विशदं नारदवीणयाऽन्ववादि ॥८६॥
व्रजयोषिदपाङ्गवेधनीयं मथुराभाग्यमनन्यभोग्यमीडे । वसुदेववधूस्तनन्धयं तत् किमपि ब्रह्म किशोरभावदृश्यम् ॥ ८७ ॥
निकटेषु निशामयाम(मि) नित्यं निगमान्तैरधुनापि मृग्यमाणम् । यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम् ॥
पदवीमदवीयसीं विमुक्तेरटवीसंपदमम्बुवाहयन्तीम् । अरुणाधरसाभिलाषवंशां करुणां कारणमानुषीं भजामि ॥ ८९ ॥
अधराहितचारुवंशनालः मकुटालम्बिमयूरपिञ्छमालः । हरिनीलशिलाविभङ्गनीलाः प्रतिभाः सन्तु ममान्तिमप्रयाणे ॥

जयतादिह देवकीसुतोऽसौ जगतामादिरनाद्यनन्तभूमा । अवतारयितुं भरं पृथिव्या वसुदेवस्य गृहे कृतावतारः ॥ ९१ ॥
क्रतुरत्न समर्पितः कृतार्थः स च धर्मः कमिवाचचार धर्मम् । जगदेकपतेरमुष्य पूजां विदधानेन युधिष्ठिरेण पुत्री ॥
इह नाकसदो न मानुषास्ते य इमे कृष्णमिहार्चयन्त्यनन्याः । अयमेव महो ममेति गायन्स तदा मूर्त इवास नात्ववेदः
अभिनन्दितवृत्तिरार्यमिश्रैः अविसंवादिभिरागमोदितेषु । विनयादवनम्य विश्वभर्तुः सहदेवः स्वयमाहरत् सपर्याम् ॥९४॥
अरजस्तमसां महीपतीनामनुमत्या मुनिमुख्यसंमते च । पुरुषस्य परस्य पूर्वपूजां सहदेवप्रहितां शशंसुरार्याः ॥ ९५ ॥
तृणभुक्प्रतिमस्तृणाय मत्वा स तदा चेदिपतिर्युधिष्ठिरादीन् । अजहत्परुषोक्तिहेतिजालो दरशेषेन्धनवह्निवद्दिदीपे ॥९६॥
अजुगुप्सत भूभृतस्सहिष्णून् परिवादैश्च तिरश्चकार पार्थान् । अवमत्य मुकुन्दमर्भकोऽसाविति धिक्कृत्य पितामहं जगर्हे॥
अनघोऽयमतन्द्रितः क्रियायां गुरुभिश्शिक्षितशुद्धधीरनेकैः । कुरुवंशपितामहः कुतोऽसौ मतिमोहेन महीयसा गृहीतः ॥
अशठैरजडैरनेडमूकैर्मुनिभिश्चात्र किमङ्गचकारि मौनम् । अथवा किमरातिपक्षसक्तैरहमस्मीति मुहुर्जहास मूढः ॥
परिवर्तहुताशनप्रदीप्तं वदनं तस्य रुषा विजृम्भमाणम् । फणभृद्बिलभीषणं तदाऽऽसीत् ज्वलदुल्काशतदुर्निरीक्षनेत्रम् ॥
वडबानलधूमराजिरूक्षा भ्रुकुटिस्तस्य मुखे परिस्फुरन्ती । ददृशे तदसून् प्रसह्य पातुं शमनेनेव निवेशिता भुजङ्गी ॥
भसितीकृतचन्दनानुलेपः क्वथितद्रावितहेमपुष्पदामा । सहसा हृदि तस्य कोपवह्निः समदीपि स्फुटितप्रकीर्णहारः ॥
कठिनौ परिपिंषतः करौ द्वौ बहुशस्तस्य वरोर्मिका विशीर्णा । ध्रुवमप्रशमाय रोषवह्नेः तुषनिक्षेपमधत्त रत्नचूर्णैः ॥
स्ववधाहतडिण्डिमस्वनाभानसकृच्चेदिनियन्तुरट्टहासान् । अभितो मणिभित्तिभिस्सभा सा प्रजहासेव विजृम्भितप्रतिश्रुत् ॥
प्रतिपद्य रुषा विवर्णभावं तमसा विश्रदलङ्घ्यमैकराश्यम् । उपरक्त इवार्यमाऽस्तमृच्छन् स भृशं सद्भिरभूददर्शनीयः ॥
श्वसितैरपि दूरवृत्तिमद्भिः परिवारैरिव तत्यजे त्रसद्भिः । निजमंसमरातिवन्निजघ्ने पविकल्पेन पदेन चास्य भूमिः ॥१०६
निभृतैरपि पूर्वमैकमत्यात् विकृतस्याथ विरुद्धचेष्टितानि । दधिरे दमघोषसंभवस्य प्रतिबिम्बैरिव तस्य मित्रभूतैः ॥ १०७
विकृताकृतिवेषचेष्टितानामवलेपग्रहलुप्तमानसानाम् । अवधीरितजाह्नवेयवाचामपहासः परमाददे महद्भिः ॥ १०८ ॥
उपहूय रणाय वृष्णिवीरान् नृपलोकादथ निर्जगाम चैद्यः । तममंसत यादवास्तदानीमनलस्कन्धविनिस्सृतं स्फुलिङ्गम् ॥
कतिभिश्चन कामचारसक्तैरुपसञ्जातमदैरुदग्रशृङ्गैः । गजयूथपतेरिवाग्रभाजो गतिरेतस्य गजैरिवानुजग्मे ॥ ११० ॥
अथताननुमत्य पाण्डवादीन् समरस्थानमुपागतस्ससैन्यः । हरिरप्रतिरोधनीयवृत्तिर्द्विरदाधीशमिव द्विषं रुरोध ॥१११॥
रथहस्तितुरङ्गपत्तिरूपैर्युयुजाते पृतने यथार्हमङ्गैः । स्थितिकर्मभिराभिमुख्यवद्भिर्युधि बिम्बप्रतिबिम्बवत् भवन्त्यौ ॥११२॥
गरुडा इव पन्नगानुदग्रान् द्रुमषण्डानिव मारुताः प्रचण्डाः । अहितानभिनिघ्नतो निजघ्नुः यदुवीरा मधुवैरिहेतिकल्पाः ॥
स्थितमप्रतिमे रथाङ्गपाणिं गरुडप्रत्यगतागते रथाग्र्ये । पतनोद्यततारकानुकारी शलभो वह्निमिवाससाद चैद्यः ॥
ज्वलदुज्ज्वलहेतिवृन्दशाली विपुलस्यन्दनवेदिमध्यदीप्तः । स्वयमेव बभूव चेदिराजः स्वविभूतेरभिचारहव्यवाहः ॥११५॥
यदुपुंगवसूर्यसंनिधाने शिशुपालः प्रतिसूर्यवत्प्रदीप्तः । किमतो भवितेति खिन्नचित्तैः सखिभिः स्वर्गिभिरप्यवैक्ष्यतैकः ॥
मदलुप्तधिया तदाऽभियुक्तो यदुसिंहश्शिशुपालकुञ्जरेण । विजहार गुहाशयस्तरस्वी निखिलारण्यकनिर्विघातवृत्तिः ॥११७

मधुमर्दनकार्मुकप्रणादः सुमनश्श्रोत्रसुधारसायमाणः । त्रिजगद्भयशान्तिकप्रयोगो रणवेदप्रणवो बभूव रम्यः ॥ ११८ ॥

अचिरद्युतिभास्वरोऽथ चैद्यः पुरुहूतायुधचारुचित्रचापः । प्रलयस्तनयित्नुभीमनादः शरवर्षेण मुकुन्दमभ्यवर्षत् ॥११९॥

गदया तदपोह्य बाणजालं प्रतिनिर्धूतहिमप्रभाकरामः । अहितं विशिखैरहन्मुकुन्दोऽद्रवेधेऽपि दरव्यथाविमुक्तम् ॥१२०

मुषिताम्बरमक्षशस्त्रभूम्ना दनुजारेर्दमघोषजन्मनश्च । अतिरावणरावणं तदानीमभवत् द्वैरथमाकुलेन्दुसूर्यम् ॥ १२१ ॥

रथिनोरथ वादिनोरिवासीत् युधि शस्त्रास्त्रमयैः प्रमाणतर्कैः । अपरस्परपातिभिः प्रभूतैरवधानेन न परस्परं जिगीषा ॥

प्रथितौ रणयज्ञयायजूकौ धनुराम्नायसमाहितप्रयोगौ । तदनन्यरसानतोषयेतां नरदेवानुपहूतसन्निधातॄन् ॥ १२३ ॥

यदुसूर्यमवाप्य चैद्यचन्द्रः शनकैर्यत्र बभूव मन्दधामा । गणना न बभूव कृष्णपक्षे हतभग्नादिविकल्पितेऽपि तस्मिन् ॥

रभसभ्रमणेन हेतिराजो रणनीराजनमाचचार शौरेः । तममंसत सैनिकास्तदुग्रं द्विषदुत्पातमलातचक्ररूपम् ॥ १२५ ॥

सुकृतेन पुराकृतेन चैद्यः प्रतिपन्नप्रकृतिः प्रलीनवैरः । क्षणमद्भुतकृष्णरूपदर्शी शिथिलाकृष्टशिलीमुखोऽवतस्थे ॥१२६॥

समयोदयसंभृतप्रसादः जननग्रन्थिचिकित्सकश्श्रितानाम् । विलुलाव सुदर्शनेन कृष्णः शिशुपालस्य शिरः किरीटजुष्टम् ॥

सहभृत्यगणैस्समित्रवर्गैर्निहते चेदिपतौ निवृत्तखेदाः । अभितुष्टुवुरादरेण देवाः नरदेवाश्च तमीड्यमादिदेवम् ॥१२८॥

हरिणा निधनं तदीक्षणं च प्रयतामप्रतिबोधसंप्रयुक्तम् । जगदद्भुतदिव्यभोगहेतुः प्रतिबोधे तु दुरत्यया विमुक्तिः ॥१२९

सहसा हरिचक्रसंप्रयोगक्षणसंप्राप्तविपाकया नियत्या । अनवस्थितिमन्तिमामवस्थां स तदा संयमिनामवाप चैद्यः ॥१३०

रभसेन रथाङ्गलूनकण्ठाद्वपुषश्चेदिपतेरुदीयमानम् । तपनायुतसन्निभप्रकाशं यदुवीरस्य तनुं विवेश तेजः ॥ १३१ ॥

अवलोक्य तदद्भुतं महीयः क्षितिपालैरमरैस्सलोकपालैः । मुनिभिश्च मुहुः कृतावमर्शैरिदमित्थं त्विति निश्चयो न लेभे ॥

इति संभृतवीररसततन्तुः कृतिना धर्मभुवा कृतानुयात्रः । विनिवर्त्य तमग्रजानुवर्ती परमेशस्स्वपुरीं पुनः प्रतस्थे ॥

जगद्वन्द्यः प्राप्तो जलधिरशनामात्मनगरीं यथार्हं संहृष्टैर्यदुभिरखिलैरर्चितपदः ।
धरित्रीभारस्य (रार्धे) व्यपनयनधर्मे धृतमतिः महिष्या रुक्मिण्या महितचरित(स्तत्र)स्साधु मुमुदे ॥१३४॥

अलघुभिरपराधैराशरीरं प्रवृत्तैः श्रितमपि शिशुपालं शृण्वतामप्यसह्यैः ।
विधिवशनियतेन व्याजमात्रेण मुञ्चन्नजनि परिजनानां शौरिराश्वासपात्रम् ॥ १३५ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये पञ्चदशः सर्गः ।

---

## १६. षोडशः सर्गः

---

ऐरावतमथारुह्य श्वेताद्रिमिव जंगमम् । पुरीं द्वारवतीं शौरेराजगाम पुरन्दरः ॥ १ ॥

अपत्यभावमापन्नमात्मानममृतोदधेः । निमेषरहितैः पौरैः देवमूर्तैरिवेक्षितम् ॥ २ ॥

अदृश्यं मन्दपुण्यानाममन्दप्रीतिदायिनम् । आत्तदेहमिव स्वर्गमासेचनकदर्शनम् ॥ ३ ॥

महनीयपरिष्कारं वल्गुध्वजमतल्लिकम् । महोत्सवमिवाशानामाशाभ्यधिकसंपदम् ॥ ४ ॥
उदधेरिव मन्थेन पीडितस्य समुत्थितैः । दढलग्नैरिवोत्तप्तौ दीप्तं शोणितबिन्दुभिः ॥ ५ ॥
दैत्यदानवदर्पघ्नैः दन्तैर्दलितमन्दरैः । सिंहानामपि हन्तारं सिंहवक्त्रविभूषणैः ॥ ६ ॥
मेरुकल्पेन रूपेण मेदिनीधृतिहेतुना । त्रिदशश्रीनिदातारं स्थानसिन्दूरधातुना ॥ ७ ॥
मूर्ध्ना विपुलतुङ्गेन मेनकास्तनबन्धुना । दधतं मौक्तिकाकल्पं गङ्गाबुद्बुदनिर्मलम् ॥ ८ ॥
अजहद्भृङ्गगीतेन गर्जाडम्बरशोभिना । स्वकान्त्या कर्णतालेन कलतसंगीतखेलनम् ॥ ९ ॥
नर्तयन्तममर्त्यानां नेत्रकौतुकसूतिकाम् । नासां त्रिदशनारीणामूरुनिर्माणमातृकाम् ॥ १० ॥
मङ्गलत्वमिवेच्छद्भिः हेमशङ्खादिमण्डनैः । आश्रितं रत्नपूर्णेन कुम्भेन च महीयसा ॥ ११ ॥
विभूतिशरदम्भोदैः कीर्तिवल्लीगुलुच्छकैः । कान्तिसागरकल्लोलैः सपक्षमिव चामरैः ॥ १२ ॥
सहजं प्रभया चन्द्रं वारुणीं मदसंपदा । सूचयन्तं स्वमूर्त्या च सुधां शुद्धानुभाव्यया ॥ १३ ॥
जगदामोदजनकं दानार्द्रकरपुष्करम् । दभ्रयन्तमिवौदार्यात् दिव्यपादपसंपदम् ॥ १४ ॥
उदग्रबहुदन्तांशुं बृंहितव्याप्तदिङ्मुखम् । हसन्तमिव दिङ्नागानन्यानतिबलानपि ॥ १५ ॥
उद्वहन्तं कदलिकां काञ्चनीं किङ्किणीफलाम् । वप्राभिघातभीतस्य सुमेरोरुपदामिव ॥ १६ ॥
चित्रकंबलसंछन्नं कान्तं कनककक्ष्यया । विद्युतेव परिष्वक्तं वासरान्तशरद्घनम् ॥ १७ ॥
अवधिं दर्शनीयानामाकल्पमनवं दिवः । जीवातुं देवसैन्यानां दर्पभङ्गं विरुन्धताम् ॥ १८ ॥
घण्टायुगलनादेन नगेन्द्रेष्वनुनादिना । क्षरन्तममृतक्ष्वेलौ कर्णेष्वमरतद्द्विषाम् ॥ १९ ॥
महता मदगन्धेन तस्योद्विग्ना विवभ्रमुः । उत्खातविपुलस्तम्भा नागास्त्रुटितशृङ्खलाः ॥ २० ॥
स तं द्वारवतीद्वारे समवस्थाप्य सानुगम् । आससाद हरेः स्थानमवज्ञातत्रिविष्टपम् ॥ २१ ॥
शुभानामिव साम्राज्यं श्वेतद्वीपमिवापरम् । निवेदितसमाहूतः प्रासादं प्राविशत्प्रभोः ॥ २२ ॥
स तेन विहितां शक्रः प्रतिगृह्य प्रियार्हणाम् । निजगाद निजां भीतिं गद्गदोद्गमया गिरा ॥ २३ ॥
दयनीयेषु देवेषु देवदेव त्वयाऽधुना । अपाङ्गाः परिपात्यन्तामनुक्रोशानुवर्तिनः ॥ २४ ॥
सुषुवे नरसिंहं त्वां भक्तप्रह्लादसंमुखम् । रक्षार्थमिह दीनानां रत्नस्थूणेव देवकी ॥ २५ ॥
नाथ त्वयि निराबाधं त्रिलोकीं त्रातुमागते । नरको नाम दैत्येन्द्रः कदर्थयति नाकिनः ॥ २६ ॥
धर्मसूकररूपस्य तवाऽसौ क्षमयान्वये । उत्पात इव भूतानाम् उद्बभूव भयानकः ॥ २७ ॥
जननी सर्वभूतानां पत्नी तव वसुन्धरा । प्रसूय नरकं देवी दूयते त्वदुपेक्षया ॥ २८ ॥
न हिरण्यहिरण्याक्षौ न मधुर्न च कैटभः । उपमानपदे तस्य त्वच्छक्तिजनितात्मनः ॥ २९ ॥
एष कल्पान्तवृत्तान्तमिदानीं जनयन्निव । विधुनोति त्वदालम्बं ब्रह्मस्तम्बमिदंपरः ॥ ३० ॥

विक्रमस्रोतसा तस्य बृहन्त्यपि बलानि नः । सहसा भेदमायान्ति सैकता इव सेतवः ॥ ३१ ॥
यदृच्छोपगमेऽप्यस्य यान्ति देवगृहाश्रिताः । प्रधावितुमनीशानाः साक्षितां सालभञ्जिकाः ॥ ३२ ॥
महता मन्युयुक्तेन वज्रेण ज्वलितात्मना । निलिल्ये तस्य दोर्भेद्ये निष्कासरणवर्ष्मणा ॥ ३३ ॥
त्वत्कोप इव दीप्तोऽपि ज्वलनो न प्रकाशते । ज्योतिरिङ्गणवत्तस्य द्युमणेरिव संनिधौ ॥ ३४ ॥
अमोघत्वयशोभङ्गभयादिव निवर्तते । अखण्डितबले तस्मिन् दण्डो दण्डधरार्पितः ॥ ३५ ॥
नयनार्चिष्मतस्तस्य नैर्ऋतेश्वरवाहिनी । अपसृत्य पुरोभागादद्यापि न निवर्तते ॥ ३६ ॥
तं सुप्तमपि वा मत्तं वारुणो वैरिदारुणः । न रोद्धुं क्षमते पाशो नलस्तम्ब इव द्विपम् ॥ ३७ ॥
शक्तस्स्रंशमयितुं तस्य संवर्ताहिजवोऽपि सन् । नभस्वान् खेलतस्सङ्ख्ये न स्वेदकणिकामपि ॥ ३८ ॥
धनदेन गदा तस्य महती मूर्ध्नि पातिता । अभित्त्वा पौष्पमापीडमनापीडत्वमादधे ॥ ३९ ॥
जटिलान् कृत्तिवसनान् नियमं तीव्रमास्थितान् । तपस्विन इति ज्ञात्वा स रुद्रान्नातिवर्तते ॥ ४० ॥
अहरद्वारुणं छत्रं मामकं मणिभूधरम् । अमृतस्यन्दिनी चास्यज्जनन्या मणिकुण्डले ॥ ४१ ॥
आदर्शमिव संपत्तेरस्मताव्येरिवाशयम् । औपवाह्यमसौ मत्कमाद्यलक्षति सांप्रतम् ॥ ४२ ॥
देवदानवसिद्धानां नृपाणामपि कन्यकाः । अपहृत्य त्वदेकार्हा_ त्वरते पाणिपीडने ॥ ४३ ॥
स भौमस्त्वन्निरस्तानां समवाय इवोत्थितः । बाधते विबुधानेवं बलवीर्यपराक्रमैः ॥ ४४ ॥
तदेवमवसीदत्सु दया देवेषु पात्यताम् । अनवद्युतदास्यानां दोषनिह्नवसाक्षिणी ॥ ४५ ॥
तमर्थं भूमिभारस्य त्वयैवोत्पादितं प्रभो । त्रिलोकीकण्टकं तीक्ष्णं त्वमेवोद्धर्तुमर्हसि ॥ ४६ ॥
निवर्त्यं धर्मशल्येऽस्मिन् निदाने सर्वपाप्मनाम् । निवेदनमिहास्माकमंशो निर्वहणं तव ॥ ४७ ॥
मशकानर्शवधस्य मधुकैटभमर्दनम् । तदन्यदनुजध्वंसे तस्य ते किमिवाद्भुतम् ॥ ४८ ॥
निगमान्तेषु निगदव्याख्यातनिजवैभवः । विधत्स्व विपदुत्तीर्णानमर्त्याननुकम्पया ॥ ४९ ॥
इति विज्ञापितोदन्तं दत्तहस्तं बलद्विषम् । विनिवर्त्य जगन्नाथः वैनतेयमथास्मरत् ॥ ५० ॥
अनुचिन्तितमात्रस्तमुपतस्थे खगेश्वरः । अहीन्द्रदामभिर्भीमैः अंसलम्बिभिरञ्चितः(रंसलः) ॥ ५१ ॥
पक्षमारुतघोषेण त्रैलोक्यदुरितच्छिदा । चतुर्णामपि वेदानां संभूतिमिव भावयन् ॥ ५२ ॥
तरुणार्कप्रभासारसामरस्यजुषा त्विषा । तप्तहेमद्रवौघेन लिम्पन्निव दिशो दश ॥ ५३ ॥
स्वामिदर्शनसंतोषात् प्रहृष्यद्भिस्तनूरुहैः । युगान्तसन्ध्याजलदस्तटिज्जालैरिव ज्वलन् ॥ ५४ ॥
विपुलाद्भुतसंस्थानैर्द्योतितो दिव्यभूषणैः । भुजगेन्द्रफणारत्नशङ्काहेमगिचित्रितैः ॥ ५५ ॥
तुङ्गवज्रव्रणाङ्केन सुविस्तीर्णेन वक्षसा । अबहिर्भावयन् कृत्स्नमवकाशं विहायसः ॥ ५६ ॥
पृथुना भुजयुग्मेन भोगीन्द्रपरिकर्मणा । मन्दराद्वितयेनेव समेतो रुक्मपर्वतः ॥ ५७ ॥

व्यालखण्डनसंक्रान्तविषपङ्ककलङ्किना । दधान इव तुण्डेन दैत्यदर्पगजाङ्कुशम् ॥ ५८ ॥
तक्षकश्रोणिसूत्रेण दृढबद्धेन बन्धुरम् । मान्यमग्रजवर्णेन वसानो दिव्यमम्बरम् ॥ ५९ ॥
नाथभक्तिपरिष्कार्यां नृत्तलीलामिव स्पृशन् । निजेन स्थानकेनाग्रे निहितोन्नतजानुना ॥ ६० ॥
वपुषा भक्तिनम्रेण धीरोन्नतमहीयसा । शान्तवीराद्भुतरसान् समाहृत्येव संपतन् ॥ ६१ ॥
मूर्तिमानिव संरम्भो रूपवानिव मारुतः । तरङ्गान् पक्षतीकृत्य संक्षिप्त इव सागरः ॥ ६२ ॥
संवर्त इव नागानां संघात इव रंहसाम् । वालखिल्यचरित्राणां विपाक इव जङ्गमः ॥ ६३ ॥
प्रसुस्तं दैत्यसिद्धीनां प्रसूतकिलिकिंचितम् । ओलण्डितमिवापश्यदुग्रं समरताण्डवम् ॥ ६४ ॥
दत्तनीराजनस्तेन ददृशे वाहनेश्वरः । प्रदक्षिणीकृतश्शश्वत् प्रतापविजयश्रिया ॥ ६५ ॥
भृशमास्फोटयामास विन्ध्यमेरुसमौ भुजौ । रुद्रया च सुकीर्त्या च मृदितौ कण्ठभूषणैः ॥ ६६ ॥
दुधुवे पक्षती च द्वे डोलायितकुलाचले । वीजयन् घोरदुर्वादिघर्मतप्तामिव त्रयीम् ॥ ६७ ॥
मुहुराम्रेडयामास जयालोकयभारतीम् । मुग्धमध्यप्रगल्भाभिः दशाभिः कर्बुरामिव ॥ ६८ ॥
स तदा सन्नतस्कन्धो बद्धाञ्जलिरनिश्वसन् । मुमुदे मूर्ध्नि संस्पृष्टः मुकुन्देन प्रसेदुषा ॥ ६९ ॥
तस्मिन् प्रथममारोप्य सत्यां विरहविक्लवाम् । आरुरोह ततश्शौरिराखण्डलकृतस्तुतिः ॥ ७० ॥
निवर्त्य स्वनिवासाय शक्रं शमितसाध्वसम् । प्रययौ दीप्तसन्नाहः प्राग्ज्योतिषपुरं प्रभुः ॥ ७१ ॥
श्रेयःपरिपणं तस्य श्रुतिश्रेणीशिरोधृतम् । प्रणतः प्रतिजग्राह शासनं पाकशासनः ॥ ७२ ॥
यथास्वं नगरद्वारे यादवा दानवाश्च तम् । तरस्विगरुडारूढं सत्यमैक्षन्त तत्क्षणे ॥ ७३ ॥
समन्ताद्वैरिदुर्गस्य क्षिप्तचक्रः क्षणेन सः । क्षुरान्तानच्छिनत्पाशानाततान्च्छतयोजनम् ॥ ७४ ॥
मुरं पञ्चजनं सप्तसहस्राणि मुरोद्भवान् । शलभीकृत्य चक्राग्निरुपदुद्राव तत्पुरम् ॥ ७५ ॥
ततः प्राग्ज्योतिषद्वारे दैत्यदानवसूदनः । पाञ्चजन्यमुपादध्मौ प्रलयाम्बुधिनिस्वनम् ॥ ७६ ॥
वीक्ष्य तं विविशुर्दुर्गे दिवाभीता इवासुराः । उद्यन्तमिव तिग्मांशुमुदयाद्रौ गरुत्मति ॥ ७७ ॥
अभिमानोदितव्यक्तिरहंकार इवोल्बणः । महतो दैत्यनगरान्निरगान्नरकासुरः ॥ ७८ ॥
तमस्रमायाभ्यधिका दानवाः पर्यवारयन् । प्रकटच्छन्नकौटिल्या पाषण्डमिव हैतुकाः ॥ ७९ ॥
संयुगे रजसोद्रिक्ते तस्मिन् सत्त्वतमस्विषोः । अर्थिप्रत्यर्थिनोरासीदनभिव्यक्तरूपता ॥ ८० ॥
शरधारासहस्रेण छादयन्नरको दिशः । स्वहेतुमभिसंपेदे समुद्रमिव तोयदः ॥ ८१ ॥
नरकाम्बुदमुक्ताभिः नाथो नाराचवृष्टिभिः । विपद्भिरिव तद्भक्तो विषमाभिर्न विव्यथे ॥ ८२ ॥
दृप्यतामथ दैत्यानां ध्वनिरुत्कम्पयन्दिवम् । पाञ्चजन्यप्रणादेन पर्यभूयत भूयसा ॥ ८३ ॥
दिदृक्षोपागतानां तद्देवानां रोमहर्षणम् । अदीव्यत रणद्यूतमन्तरस्थयशःपणम् ॥ ८४ ॥

प्रतिविव्याध दैतेयं बाणैरशनिभीषणैः । पक्षवन्तमिवाद्रीन्द्रं प्रकुप्यन्पाकशासनः ॥ ८५ ॥
शरसंहतयन्तस्य क्षरन्त्यस्त्राशार्ङ्गशैलतः । द्विधाचक्रुः स्ववेगेन द्विषद्बलमहार्णवम् ॥ ८६ ॥
तस्य ज्याध्वनगीतानि समयुज्यन्त संयुगे । करिणां कर्णतालैश्च कबन्धानां च ताण्डवैः ॥ ८७ ॥
दैत्यशोणितदिग्धाभिः तद्बाणततिभिर्नभः । रुरुधे रोषताम्राभिः कृतान्तस्येव दृष्टिभिः ॥ ८८ ॥
द्विरदाः शरनिर्भिन्नकुम्भनिर्मुक्तमौक्तिकाः । क्षरन्तः करकासारं कल्पमेघा इवाबभुः ॥ ८९ ॥
नासावालधिभिर्नागाः क्षरन्तो रक्तनिर्झरान् । शशंसुर्लाघवं तस्य निष्पत्राकृतसायकम् ॥ ९० ॥
अग्रिमं विशतां स्कन्धमानूलमहितां चमूम् । शराणां तस्य सन्धाननिपातौ न द्विषो विदुः ॥ ९१ ॥
लक्ष्यमेकमभूत्तस्य शराणामुत्पलत्विषाम् । अमरस्त्रीकटाक्षाणामप्यभङ्गुरधन्वनः ॥ ९२ ॥
चिरप्रार्थितभीतानां स तासामेव शातवान् । स्वयंवरपतींश्चक्रे सुधन्वा सुरसुभ्रुवाम् ॥ ९३ ॥
त्यक्त्वा भीतिवृतांस्तत्र विमुक्तान् जीविताशया । सार्धमप्सरसः कीर्त्या वीरान् स्वयमवृण्वत ॥ ९४ ॥
अनन्तस्य तदानन्तैरसुरैराहवोत्सवः । जयश्रियं च सत्यां च संमते समतोषयत् ॥ ९५ ॥
स्वबाधनियतस्तत्र परबाधाभिलाषिणाम् । प्रयासस्सुरशत्रूणां जात्युत्तरमिवाभवत् ॥ ९६ ॥
विसन्धिविग्रहाः क्षिप्तयानासनसमाश्रयाः । द्वैधीभावस्पृजो योधा दुर्नयस्था इवाभवन् ॥ ९७ ॥
अनघव्यवसायानामसङ्गत्यक्तवर्ष्मणाम् । योगिनामिव तत्रासीदपरावर्तना गतिः ॥ ९८ ॥
तनुं तत्र मुकुन्देन त्याजितान्महती स्वयम् । अवृणोदनघा कीर्तिरधिविश्वाप्सरोगणान् ॥ ९९ ॥
निस्सहायीकृतस्तत्र शरवर्षैर्धरासुतः । बहुमन्यत तेनैव द्वन्द्वयुद्धमुपस्थितम् ॥ १०० ॥
कृतप्रतिकृतैरस्त्रप्रयोगैः क्रीडतोस्तयोः । अदृष्टान्तमभूत् युद्धमन्यदृष्टान्तवर्जितम् ॥ १०१ ॥
वक्रवृत्तिः सरुधिरो लोहिताङ्गो महीसुतः । प्राप्य यादवभास्वन्तं मूढस्समभवत्क्रमात् ॥ १०२ ॥
स्वायुधैकसहायस्तु देवः स्वच्छन्दयादवः । निरयापरपर्यायं रिपुं चक्रे निरायुधम् ॥ १०३ ॥
क्रोधरक्तदनुर्दैत्यः क्षरच्छोणितनिर्झरः । गृहीतपादसंचारो गैरिकाद्रिरिवाबभौ ॥ १०४ ॥
निशितैस्तस्य नाराचैः निर्भिन्नरथसारथिः । आस्फोटितभुजस्तार्क्ष्यमजिघांसदमर्त्यजित् ॥ १०५ ॥
निसर्गतमसस्तस्य जिह्मगस्याङ्गमुत्तमम् । रथपादेन चिच्छेद राहोरिव रमापतिः ॥ १०६ ॥
उदतिष्ठत हाकारस्ततो युगपदेकधा । देवदानवसौधेभ्यो हर्षशोकसमुद्भवः ॥ १०७ ॥
स्फुरद्भ्रुकुटि दैत्यस्य रोषदष्टाधरं मुखम् । निकृत्तमपि न द्रष्टुं प्रबभूवुर्दिवौकसः ॥ १०८ ॥
निकृत्तशिरसं देवी निजाङ्के पतितं सुतम् । महती मेदिनी दीनं कम्पमानाऽन्वकम्पत ॥ १०९ ॥
अथ सा दैत्यहन्तारं प्रणम्य नतजीवितम् । अयाचत दयासिन्धुमात्मजस्य शुभां गतिम् ॥ ११० ॥
तुष्टाव च पतिं तुष्टा मेदिनी विश्ववेदिनी । स्नपयन्तीव संयत्तं दन्तदीधितिगङ्गया ॥ १११ ॥

अहमस्मि विभूतिस्ते भूतधात्री त्वया धृता । अशेषाधारमेकं त्वामनाधारमधीयते ॥ ११२ ॥
तिसृभिश्शक्तिभिर्युक्तं षाड्गुण्यप्रथितोदयम् । अधिराजमशेषस्य जगतस्त्वां जिताहितम् ॥ ११३ ॥
अपि कोटिमुखैस्सर्वैरनन्तेनाप्यनेहसा । नाथ त्वद्गुणदुग्धाब्धिबिन्दास्वादनं क्षमम् ॥ ११४ ॥
अकर्तुमन्यथाकर्तुं कर्तुं च निखिलं क्षमम् । लक्ष्मीलक्षणमाहुस्त्वां लङ्घितविधिवधिम् ॥ ११५ ॥
स्थिरत्रसविभक्तं ते चिदचिद्भेदचित्रितम् । स्वसृष्टमिदमुद्यानं त्वदन्यो नास्ति रक्षितुम् ॥ ११६ ॥
स्वानन्यपरतन्त्रस्त्वं पारतन्त्र्यमस्वतन्त्रितैः । विहरस्यात्मसूत्रस्थैः शकुन्तैरिव जन्तुभिः ॥ ११७ ॥
सितासितगुणाख्यैः पाशजालैर्दुरत्ययैः । निबद्धाः पशवो नाथ त्वदेकाधीनमुक्तयः ॥ ११८ ॥
यस्य त्वं यश्च हृद्यस्ते यस्यासौ तस्य यस्तथा । नाथ त्वत्पदमारुह्य न पुनस्तैर्निवृत्यते ॥ ११९ ॥
सुरासुरविभागोऽयं तुलाग्रन्यायतस्त्वया । कल्पितः कालपर्यायात् निम्नोन्नतसमक्रमः ॥ १२० ॥
कस्त्वदङ्गीकृते हन्ता कस्त्राता त्वज्जिघांसितम् । निहंसि पासि चैकस्त्वं स्वेन विश्वं परेण वा ॥ १२१ ॥
वृद्धिसंकोचविषमा गतागतसहायिनी । नियतिः केन लङ्घ्येत निजच्छायानुकारिणी ॥ १२२ ॥
न पुत्रवधमुद्वीक्ष्य दूयेऽहं त्वन्मते स्थिता । न च पुत्राभिमानो मे मत्प्रसूतेषु जन्तुषु ॥ १२३ ॥
सूदने कृतसङ्कल्पः स्वभक्तपरिपन्थिनाम् । यदि तीर्णप्रतिज्ञस्त्वं किं मयैतन्न मृष्यते ॥ १२४ ॥
त्वन्मायाजृम्भितैर्देव ब्रह्माण्डैरपि लीयते । जन्मन्यपि सुरोघेषु जन्तुवर्गेषु का कथा ॥ १२५ ॥
त्वत्प्रसूतस्त्वयैवासौ वधितश्चक्रधारया । का नाम कृतिनस्तस्य परिदेवयितव्यता ॥ १२६ ॥
निरुद्धे नरके नाथ नित्यधर्मात्मना त्वया । निष्प्रतिद्वन्द्विनं स्वर्गसुखमासाद्यतां सुरैः ॥ १२७ ॥
निर्यातितमिदं भूयः त्वज्जनन्यै मया स्वयम् । श्रवणाभरणद्वन्द्वं शीतलार्कयुगप्रभम् ॥ १२८ ॥
इति विज्ञाप्य सा तस्मै विषादाभावमात्मनः । विरराम ततो देवी विलक्षा विश्वधारिणी ॥ १२९ ॥
तामशेषजगद्धात्रीं सत्रताङ्गीमसान्त्वयत् । सहधर्मचरीं पूर्वां वासुदेवो वसुंधराम् ॥ १३० ॥
पुरस्कृतप्रसादस्तां पूर्वसंभवगेहिनीम् । गृहीतकुण्डलो गन्तुमन्वमंस्त गदाग्रजः । १३१ ॥
ततस्सा तत्समादेशात् सत्यभामाभिवन्दिता । रथ्यं प्रतिययौ स्थानं रत्नसानुशिखण्डकम् ॥ १३२ ॥
ददर्श यदुवीरोऽथ दैत्यवीरनिवेशनम् । अचिन्त्यमिव मायानां प्रभावमनुपप्लवम् ॥ १३३ ॥
विचक्षणवरं दैत्यं वैरिसंपत्करग्रहे । विभूतिसंचयप्रेक्षी बहुमंस्त बलानुजः ॥ १३४ ॥
सुधानिष्यन्दिभिः स्थूलैर्मुक्तादामभिरावृतम् । पश्यन् पाशभृतश्छत्रं विश्वकर्ता विसिस्मिये ॥ १३५ ॥
निदध्यौ कन्यकास्तत्र निदर्शितपरस्पराः । असुद्राभङ्गसुभगाः नीवीरिव रतेश्शु(भः)भाः ॥ १३६ ॥
लावण्यजलधौ लक्ष्म्याः छाया इव सहोदिताः । मधुस्वच्छन्दतासीम्नः मान्मथीरिव दीर्घिकाः ॥ १३७ ॥
कामकीर्तिपताकाभिः स ताभिः प्रत्यवेक्षितः । आत्मानममृतोदन्वदन्तःस्थितममन्यत ॥ १३८ ॥

सुप्रभातमभूत्तासां सुदिनं च तमोपहम् । भवद्येषामर्यमा यासां देवो दृष्टिपथं गतः ॥ १३९ ॥

रत्नशैलनिभांस्तस्य भुजान् कटकभूषितान् । उपधास्यन्ति यास्तासां श्रेयसी भवितव्यता ॥ १४० ॥

सर्वस्वमिव पुण्यानां साम्राज्यमिव संपदाम् । समाजमिव सिद्धीनां स तद्यौवतमग्रहीत् ॥ १४१ ॥

भुजमन्दरवेगेन चक्रभ्रमवता विभुः । मथिताद्गनवाम्भोधेरमृतं तदविन्दत ॥ १४२ ॥

मणिपरुवकसंपन्मानीयस्तनीनां मनसिजवपुषेव स्वेन संकल्पितानाम् ।
सकलजगदभिख्यासारसीम्नां स तासां स्वयमजुषत सिद्धिं स्वप्रसादप्रसूताम् ॥ १४३ ॥

पुरमथ गमयित्वा भूषितां यादवाग्र्यैः शतसमधिकसङ्ख्यं षोडशस्त्रीसहस्रम् ।
अवनितनयभीतान् प्रीणयन्नादितेयान् परिणयनविलम्बं पद्मनाभः प्रसेहे ॥ १४४ ॥

दिवि भुवि च समिद्धं दीपरूपेण रूढैः त्रिभुवनविभवानामङ्कुरैरेकरूपैः ।
जनितनिगमसख्यं दानवीनां विलापैः नरकवधदिनं तन्नाथपूजार्हमासीत् ॥ १४५ ॥

ऐरावतप्रतिनिधीनथ षट्सहस्रं स्तम्बेरमान्पृथुलदन्तचतुष्कभाजः ।
काम्बोजवाजिनियुतानि च सप्तिसप्ताप्य(न्य)भ्यानयन्निजपुरं नरकस्य भृत्यैः ॥ १४६ ॥

उद्धृत्य दुर्गजलधेरुदयाद्रिकल्पं तुङ्गं विहङ्गमपतिं त्वरयाऽधिरोहन् ।
उल्लासहेतुरभवद्यदुवीरभास्वान् वैमानिकप्रणयिनीनयनाम्बुजानाम् ॥ १४७ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये षोडशः सर्गः ।

## १७. सप्तदशः सर्गः

आततत्रमथ तत्प्रचेतसो मन्दरस्य मणिशृङ्गमुन्नतम् । सावरोधमपि सात्वतां पतिं लीलयैव गरुडो वहन् ययौ ॥ १ ॥

तं क्षिपन्तमधिकेन रंहसा मारुतस्य मनसोऽपि शीघ्रताम् । वालखिल्यसुकृतं विपक्त्रिमं प्राणमैक्षत बहिश्चरं विभुः ॥२॥

लोकतः खगरथेन मध्यमादुत्पतन्तमवनस्य माधवम् । निर्जराः स्तुतिभिरभ्यपूजयन् पुष्कलाभिरपि पुष्पवृष्टिभिः ॥ ३ ॥

पाञ्चजन्यनिनदोपहूतया पर्यचारि परितोषनिघ्नया । भक्तिभारनतया सदोन्नतः स्वर्गिणां परिषदा यदूद्वहः ॥ ४ ॥

प्राप्य यादवपतिस्त्रिविष्टपं देवमातुरुपनीतकुण्डलः । अग्रजेन हरिणा हरिः स्वयं भावितेन समभाव्यतोचितम् ॥ ५ ॥

भागधेयपरिपाकतस्तदा वासवो वसतिमभ्युपागतम् । देवदानवसमानदैवतं पर्युपास्त परिकल्पितार्हणः ॥ ६ ॥

तत्र संमदवतीभिरञ्जसा लोकपालमहिषीभिरर्चिताम् । देहिनीमिव जयश्रियं निजां बहुमंस्त दयितां बलानुजः ॥ ७ ॥

सप्रसादमभिनन्द्य सव्रतान् नाकिनो नरकभीतिवर्जितान् । कृत्यशेषविधये कृती भुवः प्रत्यपद्यत निवृत्तिपद्धतिम् ॥ ८ ॥

स्वप्रभावविनिवृत्तसाध्वसां सोऽतिपत्य नगरीं सुपर्वणाम् । पुष्पधन्वन इवोपकारिकां प्रैक्षतोपवनसंपदं पुरः ॥ ९ ॥

वर्तते दशशतेक्षणोऽपि सन्नेकचक्षुरिव यन्निरीक्षणे । तत्र दत्तनयनो वियद्वने विश्वदृष्टिरनघो विसिस्मिये ॥ १० ॥
दर्शयन् तदनु रामणीयकं नन्दनस्य वसुदेवनन्दनः । इत्युवाच मधुरस्मितेक्षणां प्रेयसीं प्रणयपेशलाक्षरम् ॥ ११ ॥
पुण्यकृद्भिरभिकाङ्क्षितं त्वया पौरुहूतमनुभूतमास्पदम् । अस्य संसदमनेकशाखवत् प्रेक्ष्यतामिदमिहान्यदद्भुतम् ॥ १२ ॥
अञ्चितस्मितमकेवलेक्षणं भङ्गुरभ्रुपरिवर्तिताननम् । किंचिदत्र तरलाक्षि तावकीं नन्दनं नयनवृत्तिमर्हति ॥ १३ ॥
विश्वमेतदवधेन जेष्यतः षट्पदज्यधनुषो धनुर्भृतः । अत्र नित्यऋतुभिः सहोदितैः षड्विधं बलमिवैकतां गतम् ॥ १४ ॥
ऐकमुख्यममरेन्द्रतुष्टये संश्रितैरिह वसन्तपूर्वकैः । शोभते सुनयने गुणैरिव स्वानुरूपफलसंपदाहिता ॥ १५ ॥
जम्बुचूतरसजर्जरञ्जितैः स्निग्धकण्ठकलकण्ठनिस्वनैः । त्यक्तगेहदमनाय निष्पतन् पुष्पकेतुरिह घुष्यते ध्रुवम् ॥
अर्दितान्मकरकेतुसायकैरत्र देवि दयितान् पदाश्रितान् । मुद्रयन्ति चकितान् सुरस्त्रियः पत्रभङ्गमकरैः स्तनार्पितैः ॥
कैश्चिदत्र कृतिभिः कृतास्पदैः निर्ममैर्मनसिजो निगृह्यते । संभवन्त्युपवने वनेऽपि वा सावधानमनसां समाधयः ॥ १८
पल्लवैरधरकान्तिरंशतः स्मेरकुड्मलरुचा स्मितं च ते । वल्लरीभिरिह दोर्लतागुणश्चोरितानि निहितानि वा त्वया ॥ १९ ॥
वादितेषु विहगेष्वनुक्षणं मञ्जु गायति च षट्पदव्रजे । मारुतेन चतुरेण नर्तिताः लास्यमत्र परिचिन्वते लताः ॥ २०
मन्थरश्वसनसौरभोल्बणा वल्लरीः स्फुरितपल्लवाधराः । मन्मथेन ऋतुसंगमादिमा निर्वृता इव निशामयाद्भुताः ॥ २१ ॥
केलिशैलमणिमेखलापदादुद्गतामिह तमालवाटिकाम् । पश्य नन्दनभुवस्सुमध्यमे रोमराजिमिव मध्यसंश्रिताम् ॥ २२ ॥
संभ्रमेण वनपालदारिकाः सामिलङ्घितपरागरोधसम् । आलवालवलयेषु शाखिनां वाहयन्ति मकरन्दवाहिनीम् ॥
चक्रवाकमिथुनोदितस्तनी वीक्ष्यतामिह विहारवापिका । पुष्परेणुरुचिरा मधुश्रियः पुत्रिकेव पुरुहूतसंमता ॥ २४ ॥
दिव्यपद्मवदना मणिप्रभा दीर्घिकेयमसिताब्जलोचना । अन्तरिक्षमणिदर्पणान्तरे बिम्बितेव भवती विभाव्यते ॥ २५ ॥
अप्सरस्सु निखिलास्वलक्षितां रूपसंपदमसौ तवाद्भुताम् । पश्यतीव पुरुहूतवापिका भृङ्गतारकितपद्मलोचना ॥ २६ ॥
बिभ्रति त्वदभिलापचेतसोः स्वादुतां प्रसदनं च शाश्वतम् । दृष्टिरुत्पलवनं दिशत्यसौ दीर्घिकापयसि दीर्घलोचने ॥
शोणकुड्मलमुखी सरोजिनी शोभते हरितपत्रशालिनी । संवृता त्रिदशपादपैरसौ शारिकेव मणिपञ्जरस्थिता ॥ २८ ॥
व्याहृतिक्षमदशाविवर्तिनीं विप्लुताम्बुज(स्वर)रुचं रजःकणैः । सेवते मधुमदेन मोहितः पुष्पितां भ्रमर एष पद्मिनीम् ॥
एष चात्र समया सरोजिनीमेकतानयति चित्तचक्षुषी । पादपैरभिगतश्चतुर्विधैः पारिजात उदधीन्द्रसंभवः ॥ ३० ॥
पद्मरागरमणीयपल्लवं पश्य कोमलहरिन्मणिच्छदम् । पुष्पभूतवरशिल्पभूषणं तप्तहेमरुचिरत्विषं तरुम् ॥ ३१ ॥
नम्रतामुपगतः फलैरसौ वल्गुभृङ्गविरुतैरभिष्टुवन् । आर्द्रभावसुभगो विभाव्यते कामकिंकर इवोचितक्रियः ॥ ३२ ॥
अक्षदामरचनोचितैः फलैः देवतानुगुणपुष्पसंपदा । वल्कलैश्च वसनैश्च विन्दते वीतरागधृतरागहृद्यताम् ॥ ३३ ॥
त्वत्सगन्धतुलसीसहोदरः पुण्य एष पुरुहूतपादपः । प्राणिनां यदवलोकनक्षणे पूर्वजातिषु भवत्यनुस्मृतिः ॥ ३४ ॥
एष कल्पलतिकापरिष्कृतः प्रत्यवेक्षयति पल्लवारुणः । सागरेन्द्रसुतया समन्वितं धाम कौस्तुभमयूखरञ्जितम् ॥ ३५ ॥
पश्य जालकितपल्लवाधरैः मौक्तिकैरमृतबिन्दुनिर्मलैः । सूचितस्मितरुचिं सुरद्रुमं बालचन्द्रमणिराजसोदरम् ॥ ३६ ॥

अस्य नूनममृताधिकैः फलैः सेवितैरनुदिनं दिवौकसाम् । न प्रसक्तिरपवर्गनन्दथौ न क्षुधा न च जरा न च व्यथा ॥
त्वामिह त्रिदशदर्शनागतां मञ्जरीभिरवनम्य भूरिभिः । मानयत्ययमसौ सुरद्रुमः मन्मथोपवनदेवतामिव ॥ ३८ ॥
द्वारकापरिषदं प्रयास्यतो दूरवर्त्मपथिकस्य मे दृशा । प्रातराशवदिहाद्य भुज्यते सप्तलोकतिलकस्य चारुता ॥ ३९ ॥
गाढबद्धनयना त्वमीहसे कामधेनुसहजन्मनि द्रुमे । नूनमस्य मणिभूभृता सह स्थापनं निजनिवेशनिष्कुटे ॥ ४० ॥
व्युत्थितेषु विमुखेषु वा स्वयं निर्निमेषनयनेषु नाकिषु । त्वद्विवक्षितमतः परं कथं पुष्पमस्य विभृयात्पुलोमजा ॥ ४१ ॥
शङ्खपद्मसुरपादपादिभिः श्लाघितां त्रिदिवतो गुणाधिकाम् । माननीयचरिता मया सह द्वारकां त्वमधिवत्स्यसि प्रिये ॥४२
दुग्धसिन्धुदुहितुस्सहोदरे वासमेयुषि वदान्यपादपे । शक्रदारवदनेऽपि दुर्लभां लप्स्यते तव विहारभूः श्रियम् ॥४३॥
इत्थमादिकविना समीरिता साऽन्वभावि किल सत्यभामया । सामरस्यमिव तेन जग्मुषी सौकुमार्यसुभगा सरस्वती ॥
योजितोऽथ यदुवंशकेतुना ख्यातकीर्तिरमृतापहारतः । उत्क्षिपन् खगपतिस्सुरद्रुमं पक्षपङ्क्तिविपिने न्यवीविशत् ॥ ४५ ॥
एतमश्रुतचरं पुरन्दरः शुश्रुवान् क्षणमुदन्तमैश्वरम् । भीतिकोपसमवायरूपया डोलयेव समकृप्यत द्विधा ॥ ४६ ॥
अप्रतिक्रियमपि प्रभोरिदं चेष्टितं प्रतिचिकीर्षता तदा । मन्युरेव शतमन्युना महान् आगृहीतमनसाऽभ्यमन्यत ॥ ४७ ॥
दीप्तदृष्ट्यचिररश्मिसन्ततिर्वज्रघोषपरुषो मरुत्सखः । चित्रचापशरवर्षवान् ततः प्रत्यदृश्यत मरुत्वदम्बुदः ॥ ४८ ॥
न्यस्तकर्बुरकुथोत्तरं निजं वारणेन्द्रमधिरुह्य वासवः । नैकधातुमति रूप्यभूधरे शोभते स्म निजरत्नशैलवत् ॥ ४९ ॥
अप्रतर्क्यवृजिनौघमातुरं भावमाश्रितवता वलद्विषा । दुर्जयोऽपि विजिगीषितो विभुः सस्मितस्समरसंमुखोऽभवत् ॥ ५० ॥
देवराजयदुराजयोरिदं द्वैरथं प्रतिभयं दिदृक्षवः । वेधसा सह सनन्दनादयः त्यक्तसंयमधियोऽवतस्थिरे ॥ ५१ ॥
भीषणप्रलयमेघसंनिभं कृष्णमेवमथ मेघवाहनः । आपतन्नसुरभेदनं क्षणादाचकर्ष ऋजुरोहितं धनुः ॥ ५२ ॥
चक्रपाणिविजयाय चक्रितात् भीमघोषदलितश्रुतेरिव । वज्रपाणिधनुषश्शरोर्मयः संबभूवुरुदधेरिवोर्मयः ॥ ५३ ॥
वज्रिणश्शरगणास्समापतन् वाहने खगपतौ मुरद्विषः । तस्य तेजसि बभूव भस्मसात् तूलराशिरिव कालपावके ॥५४॥
प्लावितो विशिखवृष्टिभिस्तदा जम्भवैरिजलदप्रसूतिभिः । अन्वदीपि गरुडः प्रतापवान् आज्यसिक्त इव वह्निराध्वरः ॥५५
वृत्रहन्तुरचमत्क्रियामिमां विश्ववित् स्वविषये विभावयन् । पश्यति स्म विबुधेषु काश्यपिः पन्नगेष्विव पराक्रमं क्षमम् ॥
तस्य देवपृतनाविभूतये जृम्भमाणवपुषो महौजसः । अप्रभूतमभवज्जगत्त्रयं बिभ्रतस्त्रिजगदेकदम्पती ॥ ५७ ॥
तुङ्गपक्षतिशताङ्गशालिनो भीमनागघटिताकृतेरभूत् । वाहतां च वहतः सपत्नितां सैन्यताऽस्य सुरसैन्ययोधिनः ॥ ५८ ॥
पारिजातपवनोर्मिबृंहितैः वासुकिप्रभृतिभिर्महोरगैः । गाढतां हरिरथस्य बिभ्रतः सारथिश्च तुरगाश्च साहसम् ॥ ५९ ॥
गाढदीप्तगरलानलोष्मला तार्क्ष्यभूषणभुजङ्गफूत्कृतिः । पीतनिर्भरसुधारसोन्मदाः पाकशासनचमूरमूमुहत् ॥ ६० ॥
अप्रतर्कितरसो गरुत्मतः पक्षवेगपवनेन ताडिताः । आत्मकङ्कटमपोह्य वज्रिणं बभ्रमुर्दशसु दिक्षु मारुताः ॥ ६१ ॥
तस्य पक्षमरुता निवर्तितैः वाहिनी दिविषदामशेषतः । वृत्रशासनशरासनच्युतैः प्रत्यविध्यत शरैरजिह्मगैः ॥ ६२ ॥
वैनतेयनखरैर्विदारितो वाह्यमान्तरमपि त्यजन्मदम् । शोणितैर्विरुरुचे सुरद्विपः श्वेतशैल इव धातुनिर्झरैः ॥ ६३ ॥

क्ष्वेलितेन मुषिताशयानिव श्लोषितानिव दृशा प्रदीप्तया । दारितानिव पतत्रमारुतैः निर्जरानतनुतारुणानुजः ॥ ६४ ॥
स्वासु दिक्षु समवस्थितास्तदा दिष्टवञ्चितधियो दिवौकसः । तोयदा इव युगान्तभास्करं संनिकृष्य समवृण्वताच्युतम् ॥
नाजिघांसदपराधिनोऽपि तान् नाकनायकभटान् जनार्दनः । आनृशंस्यमथवा न भज्यते तस्य संश्रितजनेषु जातुचित् ॥
तेषु शिक्षणपरश्शिलीमुखान् प्राहिणोत्प्रसुरमर्मभेदिनः । अङ्कुशेन निशितेन हस्तिपो दुर्मदान् प्रशमयन्निव द्विपान् ॥
तं समेत्य निरपायतेजसं सप्तसप्तिमिव तारकाग्रहैः । सद्भिरेव विबुधैरसत्समा कापि दुर्ग्रहदशाऽन्वभूयत ॥ ६८ ॥
अष्टभिश्च हरितामधीश्वरैः अर्यमप्रभृतिभिश्च संहतैः । वृष्णिवीरशरखण्डितायुधैर्विह्वलैरजनि वीतशक्तिभिः ॥ ६९ ॥
अक्रमाद्दश दिशो विलोकयन् दत्तदृष्टिरभितः क्रमाद्रुषा । स्रस्तकार्मुकशिरस्त्रकञ्चुकां प्रेक्ष्य देवपृतनामदूयत ॥ ७० ॥
अस्त्रशस्त्रविनिपातमोहितानाहतानसुरवैरिसायकैः । सत्रपेव सपदि त्रपा जहौ दैन्यमीलितदृशो दिवौकसः ॥ ७१ ॥
अप्सरोनयनतोयकज्जलैः शोणितैश्च विभुना सुपर्वणाम् । आत्मकीर्तिसुधया विशोधिते चित्रमम्बरतले व्यलिख्यत ॥७२॥
पञ्चवक्त्रवदनस्थमामिषं प्राप्तुकाम इव बालवञ्चकः । प्रस्थितामभिनिवेशवान् पुनः प्रत्यपद्यत धृतिं पुरन्दरः ॥ ७३ ॥
वज्रमात्तमरिहन्तृ जिष्णुना विष्णुना च युधि चक्रमुद्यतम् । दृष्टवन्ति भुवनानि जज्ञिरे कम्पितानि कलुषाणि च क्षणात्
तौ परस्परजिगीषयोद्यतौ वीक्ष्य निष्प्रतिमवीर्यवैभवौ । व्योमभित्तिलिखितैरिव स्थितं व्यक्तविस्मयभयैस्सुरासुरैः ॥ ७५ ॥
कस्य केन परिभूतिरापतेत् कश्च वेद रणवर्तनीमिति । सन्दिहानमनसेव तत्क्षणं मध्यसीम्नि विजयश्रिया स्थितम् ॥७६॥
प्रेषितां हरिहयेन भीषणां ह्रादिनीं हुतवति त्रिधामनि । लोलिता निववृते परस्परं लोकपालपृतना पराङ्मुखी ॥ ७७ ॥
कान्दिशीकजितकाशिनोरिमां व्यापृतिं विबुधवृष्णिवीरयोः । प्रेक्ष्य दुर्मदविवेकयोरिव प्रस्थितेव चकिताऽमरावती ॥७८॥
तं तथा समरदैन्यविप्लुतं शान्तदर्पमयथापुरं स्थितम् । व्यक्तनृत्त(रिक्त)हृदयं वलद्विषं वीक्ष्य विश्वमखिलं व्यलज्जत ॥
व्रीडया तरलितैर्विलोचनैः वेपमानकमलाकरोपमः । सन्नतः क्षणमवैक्षि वासवः सापहासमिव सत्यभामया ॥ ८० ॥
यादवेन्द्रविबुधेन्द्रयोस्तदा रत्नयोरिव तुलाधिरूढयोः । गौरवेण ददृशे समुन्नतिर्लाघवेन च नतिस्तदद्भुतम् ॥ ८१ ॥
यत्प्रभौ नरकमर्दनेऽभवत् देवदर्पदमने ततोऽधिकम् । पुष्यति स्म मकरन्दमेदुरं पुष्पवर्षममृतोद्भवस्तरुः ॥ ८२ ॥
इत्यनाकलितपूर्वसत्कृतिं वृक्षमात्तकल्होल्वणं विभुः । आत्तशस्त्रममरावतीश्वरं निर्जिगाय मिषतां दिवौकसाम् ॥ ८३ ॥
दीप्यमानमनघेन तेजसा देवकीसुतमवेक्ष्य देवताः । अस्त्रजालमवधूय सिद्धिदानञ्जलीनबिभरुः कराम्बुजैः ॥ ८४ ॥
सोऽथ संयति पलायनोन्मुखः पाकशील इव पाकशासनः । सत्यया विहसितोऽपि सत्त्ववान् प्रत्यबोधि परमेष्ठिनं पुनः ॥
धिक्प्रमादमदिरां विमोहिनीं धिक्परिग्रहविशेषमीदृशम् । धिक्च मे त्रिदशराजतामिति स्वं जगर्ह मघवा मुहुर्मुहुः ॥८६
तेन तत्र विहगेन्द्रवाहनः वारणादवनतेन विस्म्यता । निर्जितेन हरिणा प्रियासखः पर्यवेक्षि शरणं स्वयं हरिः ॥ ८७ ॥
तुष्टुवे च पुरुषं पुरुष्टुतं(पुरःस्थितं) प्राञ्जलिः परिवृढो दिवौकसाम् । रक्तभावविगमोज्ज्वलं मुखं राहुमुक्तमिव चन्द्रमुद्वहन्
शक्र एष शरणं प्रपद्यते भक्तजीवित भवन्तमीश्वरम् । मित्रभावसमुपागतं जनं न त्यजेयमिति नाथ मन्यसे ॥ ८९ ॥
मातरं त्रिजगतां तव प्रियां मानुषीति मनुते स्म मद्वधूः । तेन नूनमनुभूतमीदृशं दैन्यमेतदवशोदितं मया ॥ ९० ॥

निर्जितोऽहमजि तेन यत्त्वया लम्भितोत्वतिरनेन न त्रपे । न ह्यजय्यमिह किंचिदस्ति ते सर्वनेतुरतिरिक्तमात्मनः ॥९१॥
अस्तु मा स्म भवदित्यनन्यया दीक्षया जगदिदं नियच्छता । नाथ निष्प्रतिघतेजसा त्वया नन्वयं मम पराजयो जयः ॥
आत्मघातिभिरहंमतिग्रहान्मादृशैस्त्वदितरेषु रागिभिः । अव्यवस्थितजयेतरकमं द्यूतमेतदघृणैर्निषेव्यते ॥ ९३ ॥
आधिकारिकपदेषु ते वयं स्वेषु यावदधिकारमाहिताः । प्रापितास्तव परं पदं त्वया निर्विशेम निविशेमहि त्वयि ॥९४॥
न क्षिपेदपि तृणं समीरणः त्वत्प्रयुक्तमनलो न निर्दहेत् । न प्रजापपशुपती न चेतरे त्वद्विपक्षमभिरक्षितुं क्षमाः ॥९५॥
अग्रजे मयि दिवौकसां पितुः पुत्रभावमुपसेदुषा त्वया । मानितोऽहमवमानितः स्वयं वानरानुचरितैः स्वचेष्टितैः ॥९६॥
मद्विधा विषमवृत्तिशालिनः शान्तघोरसमयातिलङ्घिनः । पोषयन्ति भवतः क्षमानिधेः प्रायशः प्रहसनोचितं रसम् ॥९७
असदिष्टमनघास्त्रिविष्टपं दुःखमिश्रमवधार्य दुर्गतिम् । त्वत्पदं परमनन्यचेतसः संश्रयन्ति निरपायमाश्रयम् ॥ ९८ ॥
अल्पमस्थिरमपायदन्तुरं स्वर्गसौधमवधीर्य सूरयः । निस्तरन्ति जगदेकहेतुना सेतुनेव भवता भवार्णवम् ॥ ९९ ॥
त्वत्पदैकदृढभक्तिरूपया मुक्तिवासरविभातसन्ध्यया । क्षीयते जगति कस्यचित्प्रभो मोहसन्ततिमयी महानिशा ॥१००॥
देशकालगणनातिलङ्घिभिः मातुमागमगणेन वाञ्छितैः । भूषितो गुणविभूतिसागरैः त्वत्समस्त्वमितरे मिथस्समाः ॥
का कथा तव समेऽधिकेऽपि वा हीन इत्यपि क एव गण्यते । मेरुसर्षपनिदर्शनं च ते मा स्म भूत्त्वदितरस्य चात्मनः॥
भूतभव्यभवदात्मनः प्रभो यन्निदानमखिलस्य शाश्वतम् । यत्प्रविश्य न पुनर्निवर्तते यत्परं पदमुशन्ति तद्भवान् ॥१०३
जातिवर्णरचनाविचित्रितं तूलिकां त्रिगुणलक्षणां वहन् । आत्मभित्तिनियताश्रयं प्रभो विश्वचित्रमुदमीलयद्भवान् ॥१०४
अप्रयच्छति दुरत्ययक्रमे त्वय्यशेषजगदेकधातरि । इष्टमन्यदुभयं च मिश्रितं कस्य केन किमिवोपपद्यते ॥ १०५ ॥
आयतन्त भुवनान्यशेषतः त्वय्यतस्त्वमनुपाधिरीश्वरः । वर्धनीयविभवा वयं पुनः त्वत्प्रतिष्ठपुरपत्तनेश्वराः ॥ १०६ ॥
जन्मकर्मभिरसौ निबध्यते तानि यस्तव न वेत्ति तत्त्वतः । त्वत्कथामृतरसं पिबन्ति ये ते भवेयुरपुनःस्तनन्धयाः ॥१०७
कथ्यते चिदचिदन्तरात्मनः शास्त्रशुद्धहृदयैर्मनीषिभिः । सृष्टिसंहरणरक्षणेषु ते विश्वरूप ननु कर्मकर्तृता ॥ १०८ ॥
आकुमारमनुभावमीदृशं नाथ लोकविदितं तव क्षिपन् । हन्त नूनमहिमांशुमण्डलं तस्करस्तमसि गोप्तुमिच्छति ॥१०९॥
पक्षपातपरिहारशुद्धया पश्यति प्रणिदधानया धिया । यत्पृषन्ति निगमाः स्पृशन्ति तं त्वत्प्रभावमनपायमात्मवान् ॥११०
मानुषत्वमनुगच्छता त्वया मोहितैस्त्वमवधीर्यसे जनैः । तेन नस्त्रिगुणतन्त्रचेतसामागतेयमसमीक्ष्यकारिता ॥ १११ ॥
शर्वरीदिवसवद्विघूर्णते स्वापजागरदशा विधेरपि । किं पुनस्तदितरस्य तन्मया मोहबोधविवशेन भूयते ॥ ११२ ॥

योऽसि सोऽसि च यथा तथाऽसि च त्वां त्वमेव खलु वेत्सि वा न वा ।
तस्य ते नखलु तत्त्ववेदिनो वारिधेरिव वयं तटस्थिताः ॥ ११३ ॥

त्वत्प्रतीपचरणाद्दिवौकसां दानवायितवतां त्वयाऽधुना । स्थान एव परिभूतिराहिता नासुरो न च सुरो गुणान्तरे ॥
अर्चनीयचरणाम्बुजे भवत्याततायिपदवीमुपेयुषाम् । न्यस्तशस्त्रपरिकर्मणामसौ निष्कृतिस्त्वदुपसत्तिरेव नः ॥ ११५ ॥
किं तदस्ति कुशलेषु यत्र ते तच्च किं त्वदितरेषु यत्तव । ईदृशस्य भवतः किमीदृशा तस्थुषा त्रियुग जग्मुषाऽपि वा ॥

अल्पसत्त्वमवलेपयन्वितं बल्वजेषु बहुमानशालिनम् । त्वत्कृपैकपरिहार्यविप्लवं प्रत्यवेक्षणपदं प्रतीहि माम् ॥ ११७ ॥
मृष्यतां मम विभो व्यतिक्रमः विस्मृतत्वदुपकारपद्धतेः । क्षुद्रकोपविवशस्य देहिनः कस्य नाम न भवत्यपक्रिया ॥११८
त्रातुमेव शरणागतान् सुरान् आसुरानपि जिघांसता त्वया । रागरोषरहितात्मना स्वयं दैत्यशत्रुरिति नाम गृह्यते ॥११९
त्वद्गृहीतगुणसूत्रसन्दितान् दारुपुत्रनयतः प्रवर्तिनः(तान्) । निर्गुणानपि निसर्गकिंकरान् स्वीकुरुष्व कृपया स्वयैव नः ॥
वासवस्य वचनं निशम्य तद्भावशुद्धिपरिकर्मिताक्षरम् । दीनगुप्तिजननीं पुनर्दयामन्वविन्ददरविन्दलोचनः ॥ १२१ ॥
उद्धृतं च विभुना सुदर्शनं त्राणदं त्रिदिवसद्मनामभूत् । तस्य दृप्तदमनेन दीव्यतः शिक्षणैकनियतं हि शासनम् ॥
आह चैनमनघेन चक्षुषा शोधयन्नमृतसिन्धुशोभिना । स्वादुसूनृतगभीरया गिरा पारितोषिकमिवार्पयन्प्रभुः ॥ १२३ ॥
भद्रमस्तु भवते दिवस्पते निर्जराश्च निरपायमासताम् । आत्मचौर्यदुरिताकरत्यजां मापहार्षुरसुराः पदानि वः ॥१२४॥
मा स्म भैष्ट मयि गोप्तरि स्थिते भावितानि भवुकानि सन्तु वः । वीतदानवपराभवाश्चिरं त्रातुमर्हथ सुरास्त्रिविष्टपम् ॥
मन्त्रपूतमनुपप्लवं हविर्यायजूकपरिषन्निवेदि(षेवि)तम् । अन्तरात्मनि निविष्टमन्तराविन्दत स्थिरसुधारसान्तरम् ॥१२६॥
जन्मतो हि भवतां महीयसामाप्तबन्धुरदितेरहं सुराः(तः) । देवकीतनयभावतोऽपि मे सैव संप्रति सहोदरत्वधीः ॥१२७॥
आयुधानि पुनरक्षतानि वः सन्तु सत्त्वमपि दैत्यसूदनम् । पालयन्तु बलिनो जगत्त्रयीं ते भवन्त उपपन्नपौरुषाः ॥१२८
इत्यनाविलमनोज्ञया गिरा निर्मलां निजदयामिवोद्वमन् । सौम्यदृष्टिरकरोत्सुधाभुजः पर्यवस्थितधृतीन् परः पुमान् ॥
ते च तेन गरुडं नियच्छता गम्यतामिति गभीरमीरिताः । अद्य जातवदनन्यवत्सले प्रश्रिताः सुमनसः प्रतस्थिरे ॥
गृह्यतां तरुरसाविति स्वयं भामया भगवता च भाषिते । आगमिष्यति पुनस्त्वया सहेत्याह दानवरिपुं दिवस्पतिः ॥
शान्तगर्वगरले दिवस्पतौ संनिवेश्य सुरलोकसंपदम् । आप्तुमैच्छदनुजीविरक्षितां स्वां पुरीमथ सुपर्णवाहनः ॥ १३२ ॥

आत्माधिकारमनुमत्य दिशापतीनां वज्रं प्रदिश्य पुनरप्यनघं मघोने ।
दिव्यद्रुमप्रतिगतिं च पुनर्विधास्यन् दत्ताभयो दनुजशत्रुरवाप तुष्टिम् ॥ १३३ ॥

अथ पदविनिकीर्णमन्दारवन्दारुवृन्दारकस्तुतिशतबहुमानसत्यापितेहस्स सत्यापतिः ।
अमरसमरवेगविख्यातदाक्ष्येण तार्क्ष्येण गां प्रतिजिगमिषता पुरीं त्रातुमन्वक्समन्वग्रहीत् ॥ १३४ ॥
पश्यत्यारादनिमिषगणे पारिजातापहारात् स्रस्ताकल्पामिव यदुपतिः स्थापयन् स्वर्गलक्ष्मीम् ।
आशापालैरवनतपदस्त्यक्तलज्जैरमीक्ष्णं रामत्राता(भ्राता) खगपतिरथो राजधानीं प्रतस्थे ॥ १३५ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये सप्तदशः सर्गः ।

## १८. अष्टादशः सर्गः

अथाऽऽत्मचिन्तानुचरेण यास्यन् विहङ्गराजेन विभुः पुरीं स्वाम् । उवाच पत्नीं दशनांशुलक्ष्याद्वमन्निवानन्दममान्तमन्तः
सत्ये समीक्षस्व विपारिजातां वृत्तेन हीनामिव वेदविद्याम् । निशामिव प्रोषितशीतभानुं नारीमनाथामिव नाकलक्ष्मीम् ॥

आलम्बिता नम्रमुखी भवत्या हस्तेन रक्ताङ्गुलिपल्लवेन । वदान्यवृक्षस्य विभाति शाखा वक्तुं वयस्येव रहः प्रवृत्ता ॥३॥
सुपर्णवेगानिलविप्रकीर्णैः सुरद्रुमैरन्तरितस्सुमेरुः । आलक्ष्यते कालवशेन भूयः प्ररूढलूनैरिव $ पक्षजालैः ॥ ४ ॥
निसर्गकल्याणतया प्रदीप्तं सर्वोत्तरं तत्वमिवैकमाद्यम् । अमुं प्रिये नूनमतन्द्रितानि ज्योतींषि भक्त्या परियन्त्यजस्रम् ॥५
वितानवान्व्योमतलेन मेरुः तारागणैराहितमौक्तिकेन । निविश्य मध्येक्षितिभद्रपीठम् गङ्गोदकैराद्रियतेऽभिषेकम् ॥ ६ ॥
सहस्रभानुप्रमुखैस्समन्तात् ज्योतिर्गणैरस्य विघूर्णमानैः । महीभृतामग्रसरस्य मन्ये नीराजनं विश्वसृजा प्रयुक्तम् ॥ ७ ॥
प्रख्यातधाम्नामपि दिक्पतीनां प्रासादवासादरमाक्षिपन्तः । अध्यासिता योगिभिरस्य नित्यं राजन्त्यमी रत्नगुहाविशेषाः ॥
परिस्फुरन्त्याः क्षितिपद्ममध्ये पार्श्वेषु हेमाचलकर्णिकायाः । पश्य प्रिये रत्नविशेषचित्रां क्रशोन्नतां केसरशैलपङ्क्तिम् ॥९॥
वलीविभङ्गैरिव वर्षभेदैस्त्रिभिर्विभक्तं त्रिदशानुभाव्यैः । संदृश्यते सागरमेखलायाः सुमध्यमे मध्यमिदं धरण्याः ॥ १० ॥
अभञ्जनीयं प्रथिमानमाप्तां स्थानेष्वरैराकलितामहार्यैः । चराचराणां प्रभवेन धार्यां चक्राकृतिं पश्य समुद्रनेमिम् ॥११॥
विकल्पितानि त्रिदिवेन भूमौ वर्षाणि दिव्यानि विलोकयेथाः । द्वन्द्वैरिह द्वन्द्वविषादमुक्तैर्निर्विश्यते यौवनमेकरूपम् ॥
इलावृतान्तां निषधादवाचीं विलङ्घ्य हृद्यां हरिवर्षसीमाम् । खगेश्वरस्संश्रितहेमकूटं निनीषते किंपुरुषास्पदं नः ॥१३॥
वपुश्शुभं वाजिमुखाङ्गनानां वक्त्रं च युञ्जन्निह किन्नरीणाम् । स्त्रीरत्नसृष्टिं विदधे विधिश्चेत् त्र्यक्षः कथं पञ्चशरस्य जेता
दिदृक्षमाणस्य ममैष देशान् सव्यापसव्येन गतिक्रमेण । अमोघवृत्तिर्गगने गरुत्मान् विचेष्टते चित्तमिव द्वितीयम् ॥१५
निपत्य चोत्पत्य विलङ्घयन्ती निम्नोन्नतान् वर्षविभागदेशान् । छाया समेन स्वपथेन यान्तं तरस्विनं तार्क्ष्यमिवातिशेते ॥
महीयसो वेगवशेन मध्ये सीमन्तयन्नेष शरत्पयोदान् । यदृच्छया संभृतचामरश्रीः संदृश्यते देवि तवौपवाह्यः ॥ १७ ॥
वियत्पयोधिं तरतां विशालं विमानदीतेन गरुत्मता नः । इयं पुरः शैलवनोपपन्ना विश्वंभरा भाति विलोमगेव ॥ १८ ॥
शरद्घनस्तोम इवोपसीदन् संदृश्यते किन्नरनाथशैलः । सन्ध्याविहारच्युतसंहतात्मा शम्भोरिवोद्धूलनभस्मराशिः ॥ १९ ॥
सुधायमानां धनदस्य सौधे स्वाभाविकीमस्य गिरेरभिख्याम् । पर्याकुलैर्विष्णुपदीतरङ्गैराम्रेडयन्तीव हराट्टहासाः ॥ २० ॥
अनुप्य दीतोन्नतदन्तमूर्ध्नो नक्षत्रमालाञ्चिततुङ्गमौलेः । पादेषु भान्ति स्फटिकाः प्रभूताः नाकद्विपस्येव नखेन्दुबिम्बाः ॥
उदग्रवज्रव्रणकर्कशानां पर्याप्तसारेण भुजार्गलानाम् । अनेन विख्यापितविक्रमं तत् रक्षः पुरा रामशरव्यमासीत् ॥२२॥
अयं वनैः श्यामनितम्बभागः गौरः स्वयं गैरिकसंभृतश्रीः । वलाहकग्राह्यगुणान्तरीयं मदारुणं व्यञ्जयते ममार्थम् ॥२३
अस्मिन् धनाधीश्वरराजधान्यामाकर्णितं हैमवतीसखेन । त्वत्कीर्त्युपघ्नं शृणु किन्नरीणां गृहे गृहे किन्नरकण्ठि गीतम् ॥
निशम्य दिव्यद्रुमसंभवानां नूनं रवं नूपुरमञ्जरीणाम् । उड्डीयमानाः प्रतियन्त्यमी त्वां मञ्जुस्वना मानसहंसदाराः ॥२५
इतो हिरण्यप्रमुखोपभुक्ता शोणाधरे शोणितराजधानी । आदौ समुत्खातपुनर्निखातैः कैलासशृङ्गैरिव भाति सौधैः ॥
मृदङ्गनादेन मृगाङ्कमौलिं प्रसादयन् पालयतीह दैत्यान् । बलेरपत्यं बलिनां विजेता बाणासुरो बाहुसहस्रशाली ॥२७॥
रामास्त्ररन्ध्रोदितहंसयूथं क्रौञ्चं गिरिं लक्षय दूरलक्ष्यम् । पीतां पुनः श्रोत्रपथेन काले भागीरथीं जह्नुमिवोद्वमन्तम् ॥

$ प्रसूतलूनैः, प्रलूनरूढैः—इति च पाठान्तरे ।

अमुष्य दूरादसिताक्षि दृष्टिं दिव्ये गिरौ दातुमिहार्हसि त्वम् । मरुद्गणेन ह्यमुनोत्थितेन स्वाहारसंभूतिरमन्थि सिन्धुः ॥
विलग्नदैत्येश्वरशोणितानां वैकुण्ठकेयूरजुषां मणीनाम् । अनन्तशाणोपलतामपुष्यन्नार्द्राः सुधाबिन्दुभिरस्य कूटाः ॥ ३० ॥
लक्ष्मीसुधासंजननाय तूर्णं विमथ्नता वेगमनेन दत्तम् । आवर्तभेदैरधुनाऽप्यगाधैः अर्थापयन्त्यम्बुनिधेर्महौघाः ॥ ३१ ॥
अमोघबाणस्य मुनेरशोष्ये फेनायमानानि यशःपयोधौ । गतागतैर्हंसकुलान्यमूनि छायापथं संजनयन्त्यपूर्वम् ॥ ३२ ॥
धृतिक्षमं देवि सुरस्रवन्त्याः सिद्धाश्रितं शंभुमिव द्वितीयम् । परिष्कृतिं भारतवर्षसीम्नः प्राप्ता वयं पर्वतसार्वभौमम् ॥
अनुप्रविष्टं गिरिजासखीभिः पर्यन्तसंस्तम्भितभूतवर्गम् । अदूरतश्शैलरथात्प्रभूतं वैहारिकं पश्य वनं पुरारेः ॥ ३४ ॥
अभङ्गुरैराहतयोरनङ्गः शृङ्गारदिग्धैरिह चित्रपुङ्खैः । अभिन्नमन्योन्यलयादकार्षीत् देहं द्वयोरर्धसमीक्ष्यभेदम् ॥ ३५ ॥
दिवा महानीलमयूखजालैः नक्तं प्रकाशेन महौषधीनाम् । पश्यन्त्यमुष्मिन् परिवृत्तिशून्यं कालं सदा कर्बुरमादितेयाः ॥
अलुप्तमेघद्युतिरिन्द्रनीलैः वज्रैरसौ नित्यतटित्प्रकाशः । प्रवृत्तगङ्गास्तनितो दधाति प्रावृड्गुणान् प्रीणितनीलकण्ठः ॥३७॥
अमुष्य मूर्धन्युपपत्य निम्नैश्चतुर्दिशं विष्णुपदी प्रयाति । चतुर्भिरुन्मीलितराशिभेदा वेधोमुखैर्वेदमयीव विद्या ॥ ३८ ॥
सरित्सहस्रैरभिगम्यमाना शिलोच्चयैरन्तरिता दधाति । प्रवालमुक्ताप्रभृतेः प्रसूतिः पत्नी पयोधेरियमानुरूप्यम् ॥ ३९ ॥
त्रयीमिव क्षालितविश्वपङ्कां त्रैलोक्यलक्ष्म्या इव सत्त्वशुद्धिम् । तपोधनास्सर्वे इमां भजन्ते धर्मस्य निश्रेणिमिव प्रभूताम् ॥
प्रख्यातगोत्रप्रभवेऽपि नित्यं परिग्रहे भूयसि वर्तमाने । त्वयेव मां वेत्ति कलत्रवन्तं नाथं नदीनामनयैव लोकः ॥४१॥
पतद्ग्रहे तिष्ठति रुक्मशैले धर्मद्रवैरात्मभुवाऽर्च्यमानः । अस्याः प्रसूतिः परमस्य पुंसः पादो नभस्सागरपारदृश्वा ॥४२
त्रिभिस्त्रिलोकीमनघैः स्वपूरैः तारागणाम्रेडितशीकरौघैः । विमार्जयन्ती वृजिनात् पुनीते विष्णोरियं विक्रमवैजयन्ती ॥४३
अभुग्नभागान्तरितैः पयोभिः संभिद्यमानैरियमन्तरेषु । नगेन्द्रमूर्धन्युपयाति शोभां नक्षत्रमालेव गजेन्द्रकुम्भे ॥ ४४ ॥
स्रोतोभिरस्याः परिपूर्यमाणस्सुधामयं सिन्धुमिवादधानैः । अपां निधिर्नित्यमविन्धनेन ज्वालावता नूनमशोषितोऽभूत् ॥
भगीरथप्रार्थितसिद्धिमेनां पृथक्प्रवाहां पृथिवीं पुनानाम् । भस्मीकृतानां सगरात्मजानां प्राहुस्सुधां प्रापितदेवभावाम् ॥
स्थानानुरूपं प्रसृतैः प्रवाहैर्महद्भिरेषा मधुरावदातैः । प्रालेयशैलात्प्रथितानुभावा प्रवर्तते वागिव वश्यवाचः ॥ ४७ ॥
उदीरितास्तार्क्ष्यजवानिलेन त्वन्नूपुरान्नूनमधीतनादाः । भवन्त्यमी स्वागतवादिनस्ते भागीरथीसैकतराजहंसाः ॥ ४८ ॥
प्रदीयते सुन्दरि दूरकृष्टैः दिव्येन ते शेखरसौरभेण । मयूरपिञ्छातपवारणश्रीः मन्दाकिनीहेमसरोजभृङ्गैः ॥ ४९ ॥
वहन्नसौ काञ्चनपद्मरेणून् व्योमापगावीचिविहारशीलः । विलुप्तपत्राङ्कुरमानने ते स्वेदोद्गमं न क्षमते समीरः ॥ ५० ॥
अस्यास्समीरैरपनीतगन्धान्यलक्तकैरङ्कितसैकतानि । स्वैरोपभोगं सुरसुन्दरीणां विवृण्वते तीरलतागृहाणि ॥ ५१ ॥
रहस्त्वदाश्लेषरसोत्सुकस्य त्वदेकदृष्टेरपि विश्वदृष्टेः । वियन्नदी लोचनयोरसौ मे विहन्ति लक्ष्यान्तरपक्षपातम् ॥ ५२ ॥
दिव्यं बदर्याश्रममेतदन्ते देवैः स्तुतं दक्षिणतः प्रतीयाः । निःश्रेयसं दर्शयतीव वृत्त्या नारायणो यत्र नरेण सार्धम् ॥
निवृत्तरागैः परिचर्यमाणो नाथः स्वयं नाकनिकेतनानाम् । धन्यैरनन्यैरनुपालनीयं धर्मं निजं धारयतीह शुद्धम् ॥ ५४ ॥
तृतीयवर्णप्रभवे निजाङ्गे स्त्रीरत्नमुत्पाद्य विहारयोगी । इहात्मसंमोहनलालसानामपत्रपामप्सरसामकार्षीत् ॥ ५५ ॥

अन्यच्च दूरादनवं तदीयं प्राग्दक्षिणं भाति तपोवनाश्रयम् । भजन्ति यस्मिन् पदयोरमुष्य न्यासं शुभं निश्चितयोगलक्ष्माः॥
अत्र स्थितं शान्तिजुषां मुनीनां छायाल्कृष्णाजिनपल्लवेन । वैरोचनेर्दानजलस्य सेकाद्वर्धिष्णुना वामनपादपेन ॥५७॥
इमानि च प्रेयसि तापसानामेकान्तहृद्यानि तपोवनानि । इहैकपादस्थितिमेतदीयां धर्मो युगे धारयतीव तुर्ये ॥ ५८ ॥
तमो निर्गीर्णं सकृदेव पुंसामासीदतामाश्रमहव्यवाहाः । इहौषधादीनि हवींषि भुक्त्वा धूमोपलक्ष्यं ध्रुवमुद्वमन्ति ॥५९.
निजाश्रमेभ्यः प्रतिनिर्जिहाना दूरादमी दर्शितपूर्णकुम्भाः । सत्याशिषस्संप्रति साधुवाक्यैरभ्यर्चयन्त्याहितवह्नयस्त्वाम् ॥
समीपवृक्षेष्विह बद्धनीडाश्शिक्षोपपन्नां श्रुतिमुद्गृणन्तः । शकुन्तयश्शोणमुखा भजन्ते सब्रह्मचर्यं सह तीक्ष्णधीभिः ॥
धर्मस्य संभूतिरिवाग्रतस्ते सान्दीपिनेराश्रमभूमिरेषा । अधीतिनो यत्र मम त्रिवेद्यामास स्थिरालोक इवान्तरात्मा ॥६२॥
समग्ररत्नौघमिवाब्धितोऽयं तारागणैराप्तमिवान्तरिक्षम् । विशङ्कटं विन्ध्यहिमाद्रिमध्यं पुण्यं प्रिये भूषितमेतदार्यैः ॥ ६३ ॥
पितृक्रियानिर्वृतजामदग्न्यं क्षितैनसां क्षेत्रमिदं कुरूणाम् । समेयुषां संयुगदीक्षयैतद्देहत्यजां दक्षिणतो न पन्थाः ॥६४॥
सव्ये भवत्यास्सरयूसमेता रम्येयमाभाति पुरी रघूणाम् । दयाविपाकेन चराचराणां दिव्यं पदं यत्र दिदेश रामः ॥६५
तमालषण्डैस्तमसेव सृ(ह)ष्टैर्वामेतरो वामविलोचने नः । वसुंधराकुन्तलकान्तिचोरैः कान्तैरसौ भाति कलिन्दशैलः ॥६६
दिवाकरेणात्र विलेपु नूनं बन्दीकृतानां बहुलक्षणाणाम् । छायाविशेषैः प्रचितैस्तदर्हामाप्यायनामारचयन्ति वृक्षाः ॥६७
इतः प्रभूतात्पितुरावजन्ती कालिन्द्यसौ कालियदोषमुक्ता । समेत्य सख्येव सुरस्रवन्त्या सरित्पतिं शुद्धिमती प्रयाति ॥
स्वनूलशैलस्य विभाति शृङ्गे धातूपरक्ते सवितुस्सुतेयम् । महावराहस्य महीव पूर्वं दंष्ट्राङ्कुरे दानवशोणिताङ्के ॥ ६९ ॥
यमस्वसुस्तन्वि यथार्थनामा मान्या समीपे मथुरा विभाति । सुपर्वणां यत्र सभां सुधर्मां भूमेरहं भूषणतामनैषम् ॥७०
पिबत्यसौ पश्चिमदक्षिणाशां नूनं खगेशोऽयमनूनवेगः । विलोकितानामिह न व्यवस्था नेदीयसां देवि दवीयसां वा ॥
त्रयीमयस्तन्वि तवौपवाह्यः कालक्रमादापतितान् धरण्याम् । सामाभिरामध्वनिभिस्समन्तात् पक्षानिलैर्मार्जयतीव दोषान् ॥
आ पश्चिमादम्बुनिधेरवन्ध्या शरत्प्रसूतैः क्षितिरस्य सस्यैः । दिवौकसां दर्शितभागधेया दिशत्यसौ लोचनदिष्टवृद्धिम् ॥
सरित्प्रवाहैर्व्यतिकीर्यमाणैः सङ्कल्पयोनेरिव शिल्पभेदैः । पश्य प्रिये त्वं परिवृत्य किंचिद्दिव्योपमान् जानपदान्विशेषान् ॥
तवैष जीर्णश्चलयन्पुरस्तात् विद्युन्मयीं वेत्रलतां प्रतन्वीम् । बिभर्ति शुद्धो धृतकञ्चुकश्रीः प्रायः प्रतीहारपदं पयोदः ॥
आदाय शालिस्तवकानदूरात् प्राप्ता शुकश्रेणिरसौ विभाति । त्वदागमप्रीतशरत्प्रयुक्ता वैहायसी वन्दनमालिकेव ॥७६॥
आरक्तफुल्लैररविन्दिनीनां सूनैरमी नूतनसूर्यकल्पैः । त्वत्कान्तिमाध्वीमनुभूय रक्तैः नेत्रैरिवाभान्ति समुद्रदाराः ॥७७॥
करेणुकाभिस्सह गाहमानाः पयः प्रसन्नं शरदापगानाम् । अमी निमीलन्नयनाः कपोलैः आविर्मदैराविल्यन्ति नागाः ॥
स एष सप्तच्छदरेणुजालैः क्रीडन्निवालिम्पति गन्धवाहः । वन्यद्विपानां व्रजतां प्रतीपं मदप्रवाहैर्मलिनान्कपोलान् ॥
अभिन्नवर्णा गृहिणीव भव्या वेलाटवी वारिनिधेर्विभाति । नित्यानुभूतामपि नव्यबुद्ध्या रसैरसौ निर्विशतीव हृष्यन् ॥
तरङ्गवेगोत्तरलाम्बुराशिः गृह्णात्यसौ गारुडरत्नवर्णः । वसुंधरावारिरुहस्य पार्श्वे सिद्धोदयां श्यामलपत्रशोभाम् ॥ ८१ ॥
विभाति पर्यन्तमही पयोधेः फेनैरसौ वीचिकरप्रकीर्णैः । अभ्यर्चितानां त्रिदशातिथीनाम् आहारशेषैरिव पर्युदस्तैः ॥८२

प्रवालवह्नौ परिदीप्यमाने मुञ्चन्त्यसौ मौक्तिकलाजवर्षम् । अमुष्य वेला धृतवेपथुस्ते वैवाहिकीं स्मारयतीव वेलाम् ॥८३
स्वसंभवं संप्रति पारिजातं दृष्ट्वा चिरप्रोषितसन्निवृत्तम् । आलिङ्गनार्थीव तरङ्गहस्तानाविर्मणीनुन्नमयत्युदन्वान् ॥ ८४ ॥
अहीन्द्रनिश्वासमरुत्प्रणुन्नैरावर्तसंभेदिभिरेष फेनैः । उपायनं दित्सुरिवाम्बुधिस्ते मुक्तातपत्राणि मुहुः प्रसूते ॥ ८५ ॥
वेलाचलादर्भकपञ्चवक्त्रान् विहङ्गपातेन जिघृक्षमाणान् । निमज्जनोन्मज्जनवेगभूम्ना मातङ्गयादांसि विलोभयन्ति ॥८६॥
प्रवालमुक्तामणिभिः प्रदिष्टैः प्रत्याहृतैः पत्रलताङ्कुराद्यैः । अन्योन्यभूषापरिवृत्तिलीलां करोत्यसौ कूलभुवा पयोधिः ॥८७
विवृण्वती वाडववह्निदीप्तिं विद्योतते विद्रुमपङ्क्तिरेषा । देवेन संपीडितयोस्त्रिधाम्ना दैत्येन्द्रयोरान्त्रपरम्परेव ॥ ८८ ॥
वर्णं महानीलमणिप्रकाशैः स्मितद्युतिं मौक्तिकचन्द्रिकाभिः । बिम्बाधरं विद्रुमभङ्गभेदैः व्यनक्त्यसौ तन्वि तवाम्बुराशिः॥
महावराहस्य खुराद्रिघातैः क्षुण्णः प्रविद्धो रघुवीरबाणैः । विसंस्थुलद्वीपतयोपलक्ष्यैः वीरव्रणैरेष विभाति रूढैः ॥ ९० ॥
संभृत्य तोयं सहमोज्जिहानान् सेन्द्रायुधान्पश्य घनान्सनादान् । उदन्वता दुर्जयमन्तरिक्षं जेतुं प्रवृत्तानिव तस्य पुत्रान् ॥
अयं तरङ्गैरयमन्तरङ्गैराप्लावयिष्यन्समये धरित्रीम् । समीनयूथस्तनुते सरस्वान् सत्राहगन्धीनि गतागतानि ॥ ९२ ॥
असौ परप्रेमपदं स्वभावादापूर्यमाणो महता रसेन । आत्मेव दृष्टः सहसा प्रजानामदर्शनेच्छामितरेषु धत्ते ॥ ९३ ॥
गरुत्मतः कम्पितदिव्यवृक्षं पक्षानिलं पातुमुपेत्य नागाः । वितन्वते बालमणिप्रकाशैरसूर्यबालातपमन्तरिक्षम् ॥ ९४ ॥
मरुद्भिराघूर्णितसाद्रिनागैर्वेगोद्धवैरस्य विमथ्यमानः । उत्क्षिप्तशङ्खप्रकरापदेशात् भूयः सुधामुद्गिरतीव सिन्धुः ॥ ९५ ॥
दोधूयमानं विविधोर्मियोगात् छायागरुत्मन्तमवेक्ष्य भीताः । आवर्तशैलीमभिनेतुमिच्छन्त्यङ्गैरमी कुण्डलितैर्भुजङ्गाः ॥ ९६
सफेनहासो जटिलः प्रवालैरुद्वर्तयन्नूर्मिभुजैर्भुजङ्गान् । विडम्बयत्येष निसर्गभीमः कस्यापि कल्पान्तनटस्य लीलाम् ॥९७
अशेषतस्तोयमचिन्त्यभूमा कुम्भीकुमारेण निपीतवान्तः । सिष्णासया संपततोऽपि दृष्ट्वा द्विजाधिपान् वेपत इत्यवैमि ॥
प्रदर्शितात्मभ्रमणेन नूनं प्रत्यायितां मन्दरनर्तकेन । सव्यापसव्यभ्रमणैस्तरस्वी रम्यामसौ पुष्यति रासलीलाम् ॥ ९९ ॥
तैस्तैरसौ निर्मथितो विधूतस्संक्षोभितो बन्धनपीडनाद्यैः । प्रसादगाम्भीर्यनिधिः प्रथिम्ना क्षमान्वयं नोज्झति शीतलात्मा ॥
विमथ्य विश्राणितमेतदीयं दैत्यद्विषा देवि मरुत्वदाद्याः । सारं पिबन्तस्त्रिदशाः कदापि द्राघीयसीं नानुभवन्ति निद्राम् ॥
कलत्रवन्तं पुरुषं पुराणं कपालिनं चन्द्रकलावतंसम् । ऐरावताद्यैः प्रचितानकार्षीद्वैमानिकानेष महावदान्यः ॥ १०२ ॥
इदं जगद्दर्शिततारतम्यं यद्भ्रूलतालास्यविशेषनिघ्नम् । प्रजापतीनां जननीमजन्यां तामेष देवीमनघामसूत ॥ १०३ ॥
वराय दत्त्वा निरवद्ययूने कन्यामसौ कौस्तुभयौतकं च । महोत्सवे वाहनभोजनाद्यैरानर्च देवानितरान् यथार्हम् ॥ १०४ ॥
जगन्त्यशेषाणि यदेकदेशे पर्यङ्कतां तस्य गतः प्रथिम्ना । अलङ्घनीयं महिमानमन्यैर्भजत्यसौ भावितशेषभावः ॥१०५।
अनर्घमाद्यं हरिनीलरत्नं लक्ष्मीदृशा नित्यनिदर्शनीयम् । नभःप्रतिच्छन्दनिभेन नूनमन्तर्गतं व्यञ्जयति स्वधाम्ना ॥१०६
मधुद्विषो वर्णमुषां मणीनां त्रासव्यपायेऽपि तिरोहितानाम् । उदन्तमाख्यातुमिवोर्मिमाली करानसौ कर्षति वीचिहस्तैः ॥
पश्यामि सौहार्दवतां तवाद्य तरङ्गनिम्नोन्नतलङ्घनेन । उद्वर्तितानां महसा मणीनामूर्ध्वं प्रसर्पन्तमिवोर्मिमन्तम् ॥ १०८
अन्वेषयन् दिक्षिताद्दक्षिणोऽहमाचार्यसान्दीपिनिसूनुवृत्तम् । आविष्टशङ्खासुरसन्निवेशं प्राञ्चं महाशङ्खमिहान्वविन्दम् ॥

यादोनिधाने यदुराजधान्यास्संप्राप्तये सेतुरिहोपक्लृप्तः। रामेण सीतापतिना निबद्धे लङ्कापथे लाघवमादधाति ॥११०॥
अमूनि कैलासनिभान्यदूरात् सिद्धाङ्गनासेव्यलतागृहाणि। पुण्यानि सत्ये पुलिनानि सिन्धोश्चिरेण दृष्टिं चरितार्थयन्ति ॥
तटप्रदेशेषु तरङ्गहस्तैः प्रसारयन् संप्रति फेनपङ्क्तीः। सभाजनार्थं तनुते भवत्याः प्रायः पदन्यासपटीमुदन्वान् ॥११२॥
विलङ्घयन् व्योमपथेन सिन्धुं त्वद्दर्शने दीप्तकुतूहलानाम्। रथस्तवासौ त्वरयाऽतिशेते मनोरथं विष्णुपदीवधूनाम् ॥
सुरद्रुमस्त्वद्विरहालसानां तवागमं सूचयितुं सखीनाम्। मधुव्रतीनां मधुरैः प्रणादैः प्रियंवदं प्रेषयतीव गन्धम् ॥११४॥
विजित्य संख्ये नरकं सनाकं प्रत्यागतं मां प्रतिगन्तुकामाः। पौराः प्रहर्षोपनतैः प्रणादैरम्भोनिधेरन्तरयन्ति घोषान् ॥
विधाय तार्क्ष्यं गगनाद्विपोतं सार्धं मया देवि समाव्रजन्तीम्। प्रत्युत्थितेव प्रतिभाति भव्यां दूरादियं द्वारवती पुरी त्वाम् ॥
निबद्धजैत्रध्वजपङ्क्तिरम्या पुष्पैरसौ पूरितराजमार्गा। सदामजाम्बूनदतोरणश्रीः सौधत्विषा सूचयतीव हर्षम् ॥ ११७ ॥
पदे परस्मिन्निव नित्यमस्यां शुद्धेन सत्त्वेन विभूषितायाम्। धर्मस्य वासाः प्रथिताः पृथिव्यां सरित्पतौ गोष्पदवद्भवन्ति ॥
स्वरश्मिनिष्पातितसूर्यभेदामर्चिर्मुखैरञ्चितमध्यभागाम्। निवृत्तिधर्मे नियतस्थितीनां नैःश्रेयसीं पद्धतिमाहुरेनाम् ॥११९॥
सौधोपरुद्धत्रिदिवावकाशां छायासमाक्रान्तभुजङ्गलोकाम्। पुरीमिमां भूषितसिन्धुमध्यां कुत्र स्थितां वेत्सि कुतोमुखां वा ॥
उदन्वता खातवती समन्तादयत्नवप्रायिततुङ्गवेला। न शक्यते सात्यकिना सनाथा नाथैस्सुराणामपि जेतुमेषा ॥१२१॥
प्राकारचक्रं यदुराजधान्याः पश्यैतदुत्तुङ्गमसूर्यलङ्घ्यम्। यद्भावमेवं भजते यथार्थं संकोचमृच्छन्निव चक्रशैलः ॥१२२॥
निर्मुक्तशेषोरगनिर्विशेषैर्निकेतनैरुन्नमितान्तरिक्षम्। उदग्रतालध्वजमेतदग्रे सीमान्तरं सीरभृतो गुरोर्नः ॥ १२३ ॥
अभौमसंभाव्यविभूतियोगं हैमैस्सुरत्नैरचिरोपनीतैः। अनुत्तमादुत्तरमार्थधाम्नः ख्यातं त्वया गेहमिदं मदीयम् ॥ १२४ ॥
प्रतीक्षमाणानविचन्द्रशालं पश्य त्वया शिक्षितचारुलास्यान्। त्वत्केशहस्तस्वजनैः कलापैः गोपानसीश्छादयतो मयूरान् ॥
आहारभेदैरुचितैर्भवत्या संरक्षितानां तनयाभिमानात्। शृणु त्वदालोकन(त)हर्षभाजां प्रजल्पितं पञ्जरशारिकाणाम् ॥
सीमन्तमुक्तामणिसन्निकर्षात् प्रसूतिचिलीकृतशुक्तिरम्याः। अमी पुरस्ताद्भवतीसखीनामन्तर्मुदामञ्जलयस्स्वदन्ते ॥१२७॥

मायाधिकेन विधिना मनसैव सृष्टैराभाति यादवगृहैरनघा पुरीयम्।
नाभागनाहुषनलादिनराधिपानाम् आजानसंपदपहासमिवादधानैः ॥ १२८ ॥

नित्यं धनेशनगरीं निधिभिः प्रभूतामाखण्डलेन महितामभरावतीं च।
प्रत्येकधामविभवैः परिभूय दृप्ता सौधैरियं प्रहसतीव सुधावदातैः ॥ १२९ ॥

इत्यालपन्तमथ तार्क्ष्यरथेन कृष्णं हेमाद्रिणा हरितशैलमिवोपनीतम्।
पौरास्समीक्ष्य मुदिताः सह वल्लभाभिः पद्मावृतां दिवमकुर्वत दृष्टिपातैः ॥ १३० ॥

प्रत्युद्गतप्रियसखीजनदत्तहस्तां सत्यां त्रयीमयरथादवतारयिष्यन्।
नाथस्तदा नगरमध्यनभःप्रदेशादासीदति स्म निजसौधसमीपरथ्याम् ॥ १३१ ॥

व्यतिकरितसुवेलां विश्वकर्मप्रसूतिं लवणजलधिगुप्तां प्राप लङ्कामिवान्याम् ।
धनपतिबहुमान्यां धर्मसेतुर्यदूनां दुरधिगमसमीपां द्वारकां राजधानीम् ॥ १३२ ॥

विजयिनमुपयातं वीक्ष्य सत्यासहायं व्यतनुत मुदितेव द्वारका वन्दिकृत्यम् ।
अमरतरुसमीरैः प्रेषितैराहृतानामुपवनमधुपानामुन्मदानां प्रणादैः ॥ १३३ ॥

स्तुतिशतमुखराभिः स्वर्गनेतुस्स जेता सविनयमनुयातः सत्यभामासखीभिः ।
निजमगमदगारं निर्विशन् प्रेयसीनां स्मरशरशयितानां मन्दमभ्युत्थितानि ॥ १३४ ॥

अभिगतमुषया तदाऽनिरुद्धं बलितनयेन बलीयसा निरुद्धम् ।
यदुपरिषदि सर्वलोकदर्शी कलहरुचिः कथयांबभूव योगी ॥ १३५ ॥

बाणाभिख्यं बलिसुतमथो बद्धबन्धुं जिगीषुः सेनोत्थानं सुमहति पुरे श्वस्तनं घोषयित्वा ।
चिन्तारूढत्रिभुवनहितश्चिन्तनीयो मुनीनां वासागारं प्रभुरधिगतो वासतेयीं निनाय ॥ १३६ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये अष्टादशः सर्गः ।

## १९. एकोनविंशः सर्गः

नित्यप्रबुद्धमपि निर्मलया स्वदृष्ट्या निद्राणवद्दरनिमीलितनेत्रपद्मम् ।
प्राबोधिकीभिरुपसेदुरितीव वाग्भिः स्वाधीनमर्त्यतनयं श्रुतिवन्दिनस्तम् ॥ १ ॥

यामिन्यपैति यदुनाथ विमुञ्च निद्रामुन्मेषमृच्छति तवोन्मिषितेन विश्वम् ।
जातः स्वयं खलु जगद्धितमेव कर्तुं धर्मप्रवर्तनधिया धरणीतले त्वम् ॥ २ ॥

अश्रान्तसन्ततिभिराभरणप्रकाशैरारात्रिकं प्रमुखयन्त्य इवोपचारम् ।
इच्छन्ति ते प्रथमदृष्टिमनन्यलभ्यां पद्मानना: पदनिवेशितधन्यहस्ताः ॥ ३ ॥

वृद्धाः कथञ्चिदररं व्यतिमिच हैमं दौवारिकास्तव गृहीतसुजातवेलाः ।
निर्गच्छतः प्रविशतश्च निशामयन्तो नाथ त्वदेकहृदया न भजन्ति तन्द्राम् ॥

विद्वैकतीर्थमजनेन विशुद्धिमन्तो निद्रोज्झिता निगमसीम्नि निशात्यये च ।
वैतानिकान् विधिवशेन विहृत्य वह्नीन्पुण्याशयाः परिचरन्ति पुरोधसस्ते ॥ ५ ॥

निद्रावशेन निभृतेक्षणमुत्थितानां द्वित्राणि मन्थरपदान्यपगत्वरीणाम् ।
काले गृहीतमुचिते रशनाः कथञ्चिन्मौनव्रतं जहति मुग्धवधूजनानाम् ॥ ६ ॥

संत्यज्यते तरलमौक्तिकजालदृश्यैः तारागणैस्त्रिदशवर्त्म तमालनीलम् ।
पद्मापतेरमृतनिर्मथनावसाने दुग्धाम्बुराशिपृषतैरिव रूपमग्र्यम् ॥ ७ ॥

नाथ स्फुरन्त्युपयति द्युमणिप्रकाशे न ज्योतिरिङ्गणगणा न च तारकाद्याः ।
तेजस्विनोऽपि तमसैव समृद्धिमन्तः त्वत्सन्निधौ मुषितभास इव त्वदन्ये ॥ ८ ॥
आनर्तितान् सललितं दिवसावसाने वाचालरत्नवलयैः निजहस्ततालैः ।
निद्रालसान्मृगदृशो गृहनीलकण्ठानावासयष्टिशिखरादवरोहयन्ति ॥ ९ ॥
नृत्यन्त्युदीरितघनस्तनितामकाण्डे नेदीयसीं तव निशम्य विभातनान्दीम् ।
चित्रातपत्रपरिमण्डलचारुबर्हाः शृङ्गारयोनिशरपत्ररुचो मयूराः ॥ १० ॥
निर्गत्य चित्रगरुतो निलयान्तरेभ्यः तारस्वनास्तरुणविद्रुमताम्रचूडाः ।
रत्नाङ्कणेषु रमणीभिरवेक्ष्यमाणाः क्रीडारणं विदधते कृकवाकुवर्याः ॥ ११ ॥
प्राप्तास्तुलां हरितकोमलवाह्यपत्रैः किंचित्परिस्फुरितशोणमुखैस्सरोजैः ।
वामभ्रुवां वलयपङ्क्तिषु संचरन्त्यो मञ्जु क्वणन्ति मणिपञ्जरशारिकास्ते ॥ १२ ॥
प्रत्यक्षिते तमसि यास्यति विप्रकर्षं सं(भि)छिन्नभानुमति संप्रति जीवलोके ।
गङ्गायमानसलिलं निजरश्मियोगात् सिप्णासयेव सितभानुरुपैति सिन्धुम् ॥ १३ ॥
प्रत्यूषघर्मसमयेन समग्रधाम्ना शोषं व्रजत्यमृतरश्मिमयूखपूरे ।
अह्नाय कैश्चिदभिघातमवाप्नुवत्यः ताराः प्रयान्ति विलयं तनुबुद्बुदाभाः ॥ १४ ॥
पत्युस्त्विषां प्रजहतः प्रथमाध्धितल्पं सन्ध्यासरोरुहदृशः प्रथमोत्थितायाः ।
सीमन्तिते तिमिरकुन्तलमध्यभागे सिन्दूरराजिरिव भाति मयूखरेखा ॥ १५ ॥
ज्योत्स्नापदेशमवधूय सितोत्तरीयं स्तोकावशेषितसदाभरणप्रबन्धा ।
अङ्गीकरोत्यरुणभावितमङ्गरागं प्राची दिशा दिनपतिं परिभोक्तुकामा ॥ १६ ॥
निर्णिज्य संप्रति निशाङ्गनिवेशलग्नं कालेयपङ्कमिव सन्तमसं कलङ्कन् ।
क्षोणीभृतामरुणदीधितयोऽनुरक्ताः पादानलक्तकरसैरिव रञ्जयन्ति ॥ १७ ॥
प्रादुर्भविष्यति चराचरजन्तुवर्गे प्राप्तारुणेन विधुना तमसा च वेला ।
आभाति भावितपरस्परदेशयोगा(त)मायाविपक्तिरिव लोहितशुक्लकृष्णा ॥ १८ ॥
उन्निद्रपद्मनयनः सुभगोत्पलाभः संभावितो मुनिगणैरुपपन्नबोधैः ।
रागोत्तरां श्रियमवाप्य रथाङ्गशोभी जातस्स एष समयो जगदेकसेव्यः ॥ १९ ॥
नीतः श्रमं निहतरात्रिवरूथिनीकः चन्द्रातपत्रविनिपातविलुप्तभूमा ।
प्रत्यूषवैरिविभवेन पराहतात्मा कालप्रतीक्ष इव गच्छति कामवीरः ॥ २० ॥
योऽसौ जनस्य दिशतीव सुधानिधानं जातध्वनिः श्रुतिषु जागरदुन्दुभिस्ते ।
मन्ये स एव मदनस्य निशाचरस्य स्वच्छन्दमौक्तिकनिवृत्तिमभिव्यनक्ति ॥ २१ ॥

अन्तर्बहिश्च तमसा परिमुच्यमाने जागर्यया जगति संप्रति दीप्यमाने ।
पञ्चायुधश्चिरमविश्र(क्र)मशान्तिमिच्छन् निद्रामुपैति हृदयेषु नितम्बिनीनाम् ॥२२॥
अग्रे भवन् गुरुरिव स्वयमानकानाम् आदिष्टसंपदिव कन्धरया तवैषः ।
व्यक्तप्लुतेन निनदेन विशुद्धवर्णः प्रस्तौति नाथ निगमान् प्रतिबोधशङ्खः ॥२३॥
मुग्धाः स्वमुष्टिपरिमेयमनोज्ञमध्याः पर्यायचापलतिका इव पञ्चबाणः ।
प्रास्थानिकप्रणयदुर्विनयोपशान्त्यै प्रत्यक्षयन् प्रतिनिवर्तयतीव यूनः ॥ २४ ॥
अन्तश्चकासदसितोत्पलमङ्कयोगात् भासोन्मदेव परिमीलिततारकार्धा ।
निष्पीतकान्तिमकरन्दरसं प्रतीच्यां नीहारभानुचषकं निदधाति सन्ध्या ॥ २५ ॥
दृष्ट्वा निमीलितवतीं नियतिप्रभावादात्मप्रियां कुमुदिनीमवधूतधामा ।
च्योतत्तुषारनयनोदकबिन्दुरिन्दुः प्रस्थानमिच्छति महत् प्रतिपन्नदैन्यः ॥ २६ ॥
भोक्तुं दिवं निजवियोगविलुप्तदीप्तिं प्रागेव तीव्ररुचिना प्रहितेव सन्ध्या ।
मालिन्ययोगमपनीय करावमर्शैः प्रायो यथार्हमनुलिम्पति कुङ्कुमेन ॥ २७ ॥
अर्धेन पाटलमनूरुकरानुषङ्गात् अर्धान्तरेण मणिमेचकमन्तरिक्षम् ।
अस्पृष्टतापमधिरोहति निस्तमस्कं संवीतपीतवसनेन तुलां त्वयैव ॥ २८ ॥
पद्मापदाम्बुरुहयावकपिङ्गधाम्ना भासा नितान्तमुदयान्तरितस्य भानोः ।
आरज्यते गगनमद्य जगत्प्रसूतेः नाभीसरोरुहभुवा रजसेव गात्रम् ॥ २९ ॥
दग्धुं तमो दनुजबृन्दमिवाम्बुराशेः उत्तस्थुषो मधुरिपोरिव तिग्मधाम्नः ।
उन्मेषिणी सुमनसामुदिता पुरस्तात् चक्रप्रभामनुकरोति मरीचिमाला ॥ ३० ॥
दृष्टिद्वयं नियतकालमिदं प्रजानाम् एका निमीलति तयोरितराऽप्यलक्ष्या ।
तत्त्वादृशोस्तव दृशोर्युगपत्प्रबोधादालोकयोगमनघं भजतां त्रिलोकी ॥ ३१ ॥
प्राचीनशैलविषये प्रचुरांशुरेखां सन्ध्यादशामरुणरागघृतावसिक्ताम् ।
कालो निधाय सृजतीव शनैस्तदन्ते तिग्मद्युतिं त्रिभुवनैकमहाप्रदीपम् ॥ ३२ ॥
पर्याप्तरश्मिनिकरेण सुवृत्तभूम्ना सूर्येन्दुबिम्बयुगलेन समस्थितेन ।
आभाति कालवणिजा परिकल्प्यमाना नक्तंदिवक्षणतुलेव नभःस्थलश्रीः ॥३३॥
नैशं तमः क्षिपति नन्दितचक्रवाके पद्मानि बोधयति भावितमित्रभावे ।
दृष्टिं प्रसादयति दर्शितसत्पथेऽस्मिन् दोषोल्बणा कुमुदिनी बहुमानशून्या ॥
पादस्पृशां दिशति भूमिभृतां प्रकाशं सत्त्वं समेधयति सद्भिरुदीरितार्घ्यः ।
तेजोगणानपि तिरस्कुरुते स्वदीप्त्या चक्रप्रियस्त्वमिव संप्रति चण्डभानुः ॥ ३५ ॥

आजानपाण्डरतनुः परभागमृच्छन् नीलाम्बरद्युतिमुषा निजलाञ्छनेन ।
स्फीताकृतिः परिगतो मदरागलक्ष्म्या वीर त्वदग्रज इवैष विभाति चन्द्रः ॥३६॥
सन्ध्योपरागसमयं प्रतिलभ्य पुण्यं स्नातुं निशा गगनसौधतलावतीर्णा ।
आरक्तरूपमवलम्बयता कराग्रे पत्या सह प्रविशतीव परं समुद्रम् ॥ ३७ ॥
देव त्वयीव दिवसागमजागरूके संरक्तविश्वमुदयं सवितर्युपेते ।
अस्तं शनैरभिपतन् भजते मृगाङ्कः त्वद्वैरिवारवनितावदनेन्दुवस्थाम् ॥ ३८ ॥
राजाऽस्तमेति सुहृदा मदनेन सार्धं दीनाकृतिः कुमुदिनी दृढबद्धकोशा ।
वैरीसमेति विषमाख्व इतीव भीता छायाच्छलेन भजते गगनं त्रियामा ॥३९॥
आमृश्य रात्रिमरुणोदयजातपुण्यां प्राप्तानुताप इव सत्पथलङ्घनेन ।
ज्योत्स्नांशुकं द्विजपतिः परिधाय नूनं व्रीडानतो विशति वारिनिधिं विवर्णः ॥
अभ्येति भानुरुदयाद्रिमसह्यतेजा स्थातुं स एष समयो न ममेति पश्यन् ।
प्रायस्समाश्रयति पाशभृताऽभिगुप्तं तारापतिश्चरमसागरतोयदुर्गम् ॥ ४१ ॥
मूले मनाग्भवति मुञ्चति पूर्वभागं शैथिल्यमृच्छति तमालरुचिस्त्रियामा ।
आकृष्यते चरमशैलवने विहर्तुं सीरायुधेन यमुनेव सुधांशुनेयम् ॥ ४२ ॥
प्रस्थानकालभजनात्परितोषितेन ज्योत्स्नात्मिकां हरिवधूसहजेन दत्ताम् ।
प्रायेण नाकवनितानखदीप्तिलक्ष्यां शेषापटीं चरमभूभृदसौ दधार ॥ ४३ ॥
सूक्ष्माभिराममनिजदीर्धि.सूत्रलम्बी पर्यन्तलग्नतिमिरालकदर्शनीयः ।
सिन्दूररञ्जित इवैष विभातलक्ष्म्याः सीमन्तमौक्तिकमणिः प्रतिभाति चन्द्रः ॥
प्रालेयरूषितमिदं प्रथमेतराब्धौ मग्नैकदेशमनुयाति मृगाङ्कबिम्बम् ।
मानच्छिदां मकरकेतनसायकानां शाणोपलं चिरनिघर्षणकर्शितार्धम् ॥ ४५ ॥
आदौ वराभमुदितं शरपाण्डु मध्ये पश्चान्मधूकपरिधूसरमिन्दुबिम्बम् ।
संपद्यते पुनरदृष्टतमामवस्थां कालार्पितं करजचिह्नमिव क्षपायाः ॥ ४६ ॥
नैशं तमिस्रमरुणेन विलुप्तसारं निश्शेषयन्नयमुदेति मयूखमाली ।
सत्सेवनेन पुरतो मुषितैकदेशं विद्यावतां वृजिनराशिमिवान्तरात्मा ॥ ४७ ॥
उद्गच्छता पुरुषकेसरिणेव पूष्णा काले तमो विदलितं करजैः प्रवालैः ।
गाढं हिरण्यकशिपोरिव गात्रमन्धत् सन्ध्याच्छलेन रुधिरं क्षरतीव सान्द्रम् ॥
प्राप्तोदयस्य तपनस्य तवेव धाम्ना क्षिप्तो गुहान्तरनिरुद्ध इवान्धकारः ।
विश्वावलोकननिरोधवियातवृत्तेरत्याहितस्य परिपाकमिवैष भुङ्क्ते ॥ ४९ ॥

मग्ना चिरं महति सन्तमसाम्बुराशौ दंष्ट्राभिरामरुचिना दिवसागमेन ।
उत्क्षिप्यते दनुजशोणितलोहितेन प्रायो वराहवपुषा विभुनेव भूमिः ॥ ५० ॥
निद्रामपास्य तमसा च दृशो निरोधं प्रत्यङ्मुखं प्रथमतः प्रथयन् प्रकाशम् ।
निःश्रेयसप्रतिपदेन निजेन धाम्ना विश्वं समाधिरिव दर्शयते विवस्वान् ॥ ५१ ॥
आशापरीतमविवेकमिवान्धकारं शङ्काशतास्पदमलक्षितसर्वतत्त्वम् ।
निर्धूय संप्रति निशामिव बाह्यविद्यां तत्त्वावसाय इव भाति विभातकालः ॥५२॥
निर्विश्य चन्द्रमितपद्मरसं निशात्मा रोलम्बजातिरमितो लुलितान्यपुष्पा ।
त्वद्वक्त्रचन्द्रनिरपायरसानिदानीं पद्मानुपैति परितोषितराजहंसान् ॥ ५३ ॥
नात्यन्ततः कुमुदिनी प्रतिपन्ननिद्रा नातीव बोधमुपयाति सरोजिनी च ।
एतेन नूनमनयोरविशेषदृश्या नाथानुवृत्तिनियतेव भवत्यवस्था ॥ ५४ ॥
पर्यस्यता सुरभि पद्मपरागजालं पक्षानिलेन परिधूननसंभवेन ।
सन्धुक्षयन्ति मकरध्वजहव्यवाहं शान्तं पुनः पुनरमी सरसीषु हंसाः ॥ ५५ ॥
कालोत्थिताः स्थितिभृतो गुणयन्त्रितत्वात् दानोदकार्द्रकरपुष्करदर्शनीयाः ।
संभावयन्त्यभिमुखास्समयोपयातान् भृङ्गान् वनीपकजनानिव वारणेन्द्राः ॥५६॥
गङ्गामुपेत्य मदकुञ्जरगण्डपालीं मत्तान्समीक्ष्य मधुपान्परिघूर्णमानान् ।
शुद्धानि हन्त कुमुदानि तमस्यपेते भूयस्तदन्वयभयादिव सङ्कुचन्ति ॥ ५७ ॥
सत्त्वक्षमाधिकतया शयिताः पृथिव्यां निद्रामयीं व्यपगमय्य निजामविद्याम् ।
निस्सङ्गवृत्तिनियताः स्थिरसंयमार्हा मुञ्चन्ति संप्रति मदं मुदिता गजेन्द्राः ॥५८॥
शैव्यादयस्तव हयाः समयप्रबुद्धाः चत्वार एव निगमा इव मूर्तिमन्तः ।
आवर्तयन्त्यतनुहेषितवीचिभेदैः वैभाति(राति)कं वटुभिरध्ययनं प्रवृत्तम् ॥ ५९
आयोधने विहरणेऽप्यवधानवन्तः प्राज्यैः परिच्छदपरिष्करणोपचारैः ।
संयोजयन्ति रथयोगविदश्शताङ्गं तार्क्ष्यं द्वितीयमिव सारथयस्त्वदीयाः ॥ ६० ॥
निद्रावशेषविगमेऽपि मदानुषङ्गात् मन्दं दृशो मुकुलयन्ति मदावलेन्द्राः ।
एषामनूरुकिरणैररुणीकृतानां सततुतां भवति सान्ध्यपयोदलक्ष्मीः ॥ ६१ ॥
आकृष्य दूरमवरोधगृहादमुष्मात् स्वाभाविकं वदनमारुतसौरभं ते ।
अम्भोरुहां गणमपलपयन् समीरो मन्दं परिभ्रमति मन्दिरदीर्घिकासु ॥ ६२ ॥
आघूर्णितानि मृदुना पवनेन पद्मान्यादर्श(देश)यन्ति मदलेशमयीमवस्थाम् ।
निर्गच्छतां तव च वारवधूजनानां निद्रावशेषकलुषाणि विलोचनानि ॥ ६३ ॥

रेणूत्कराः सरसिजोत्पलकैरवाणां कुर्वन्त्यनूरुतिमिरेन्दुरुचिप्रकाशाः ।
प्रायस्समुद्गतरुणीपरिकर्मभूतां चर्चां नवीनघुसृणागुरुचन्दनानाम् ॥ ६४ ॥
अध्यासितं कुमुदतल्पमपोह्य काले पद्मोत्पलानि शनकैः श्रियमाव्रजन्तीम् ।
संवीजयन्त्यलघुचामरदर्शनीयैः पक्षैः स्वयं परिजना इव राजहंसाः ॥ ६५ ॥
प्रत्यूषलक्षणरसायनसंप्रयोगात् प्रालेयरश्मिमहसा जरसेव मुक्ताः ।
पद्मोत्पलप्रभृतिभिः परिकर्मवत्यः गृह्णन्ति यौवनदशां गृहदीर्घिकास्ते ॥ ६६ ॥
औद्यानिकीषु सुमनस्स्वनवातपूर्वं नूनं सरोरुहवनेषु च नूतनेषु ।
आदित्सते वदनमारुतसौरभं ते शय्यानिकायमभितो विहरन्समीरः ॥ ६७ ॥
अर्घ्यस्य संप्रति सतामवगाढतीर्था मन्ये प्रगृह्य नलिनी मकरन्दमर्घ्यम् ।
व्यक्तद्विरेफनिनदा विहिताभिमुख्या पत्युस्त्विषां प्रणयतीव करप्रसारम् ॥ ६८ ॥
ज्योत्स्नासखीं कुमुदिनीं भ्रमरः प्रहृष्यन् निर्विश्य नित्यपरिशुद्धरुचिं निशायाम् ।
रागादुपैति नलिनीं रजसाऽभिजुष्टां किं नाम नाचरति मन्मथहस्तवर्ती ॥६९॥
सन्ध्याच्छलेन पुरुषोत्तम सांप्रतं ते सैवाधुना भृगुसुता तमसां निहन्त्री ।
भूयः समुत्थितवती धृतपुण्डरीका भोगाय सागरगृहाद्भुवनैकयूनः ॥ ७० ॥
चन्द्रातपत्रिदिवशैवलिनीप्रवाहे मग्नोत्थितां कमलिनीमुपसेवमानाः ।
प्रत्यग्रभिन्नमुकुलप्रसृतैः परागैः उत्थापयन्त्यगुरुधूपमिवोत्पलिन्यः ॥ ७१ ॥
पौरन्दरीं दिशमनूरुनिबद्धरागां दृष्ट्वा तथा परिणमत्यपरा दिशाऽपि ।
स्त्रीणां गतानुगतिकप्रतिपत्तिभाजां ख्यातं ततो भवति कामितकामिनीत्वम् ॥७२॥
निद्रायते कुमुदिनी चिरसंप्रबुद्धा सुप्ता प्रबोधमुपयाति सरोजिनी च ।
यामेषु वृत्तिमनयोरधिगम्य नूनं शिष्यायितं त्वदवरोधनितम्बिनीभिः ॥ ७३ ॥
मित्रस्य लुप्ततमसोऽप्यतिरागभाजः संप्रेक्षणं मम न युक्तमितीव मत्वा ।
मीलत्यसौ कुमुदिनी सह तारकाभिः प्राप्तं व्रतं तदिह राजपरिग्रहाणाम् ॥७४॥
आमोदयोगमवशात्सहसाश्रयन्ते पत्युस्त्विषां तव च पादनिषेवणेन ।
क्षिप्तास्त्वया हृदि गृहीतशुचः क्षितीन्द्राः स्वान्तर्निविष्टमधुपाश्च सरोजकोशाः ॥ ७५ ॥
आविस्तृतैरमृतसिन्धुतरङ्गकल्पैराकेकरप्रियतमाजनदृष्टिभोग्यैः ।
त्वत्सौविदशायनिकसूरिगणेन सार्धं निर्वेशयोगमुपयाम निरीक्षणैस्ते ॥ ७६ ॥
अधिगतनिलयानामौपवाह्यद्विपानां मदपयसि वितन्वन् मज्जनोन्मज्जनानि ।
प्रवहति पवमानः स्पन्दयन्मन्दमन्दं परिणमदरुणिम्नः पङ्कजारण्यकोशान् ॥ ७७ ॥

उपवनमधुपानामुन्मदैः स्वैरगीतैः तनुमरुदुपदिष्टैश्चारुलास्यैर्लतानाम् ।
दरविलुलितदानैर्दन्तिनां कर्णतालैः समयसमुचितं ते भाति सङ्गीतकृत्यम् ॥ ७८ ॥

हरति रतिविहारैरर्धविस्रंसितानां युवजनहृदयानि श्रान्तपञ्चायुधानि ।
उपहितगुणमारादुत्थिताभिर्वधूभिः कुटिलनियमिताग्रं गुम्भनं चूलिकानाम् ॥ ७९ ॥

क्षितिरियमवधूतध्वान्तनीलोत्तरीया विकसितमुखपद्मा व्यक्तसन्ध्याङ्गरागा ।
अभिमतकरदानान्निर्व्यपेक्षा त्वदन्यैरनुभवितुमिव त्वां दर्शयत्यात्मरूपम् ॥ ८० ॥

मधुन इव दयायाः सामरस्यं दधानैः कमलवनमनन्यां कान्तिमध्यापयद्भिः ।
फणिपतिरमणीयं देव पर्यङ्कमुज्झन् परिणमय शुभं नः पावनैरक्षिपातैः ॥ ८१ ॥

दिनमुख इति नाम श्रावितस्सूतपुत्रैः अभजत जितनिद्रो जागरं यादवेन्द्रः ।
सरि(शर)दुपगमकाले साधुसंरक्षणार्थी मुनिभिरिव स एव स्तूयमानो मुकुन्दः ॥ ८२ ॥

धनमिव निगमानां धर्ममुत्तम्भयिष्यन् त्रिजगदनुविधेयं कर्म निष्पाद्य सान्ध्यम् ।
सितगुणपरिधानैः सेवितो मन्त्रिमुख्यैः अलमकुरुत नाथो हैममास्थानपीठम् ॥ ८३ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये एकोनविंशः सर्गः ।

## २०. विंशः सर्गः

अथोपहूतैः पुरुहूतजेता सेनेश्वरैरप्रतिमानशौर्यैः । अभीशुभिः सूर्य इवाभिदीप्तः कुबेरगुप्तां ककुभं प्रतस्थे ॥ १ ॥

प्रयाणतूर्यध्वनिरस्य भूयान् घर्मान्तजीमूतरवानुकारी । आनर्तयद्धर्ममयूरमाद्यं प्राप्तस्थितिं पादयुगेन भूम्याम् ॥ २ ॥

नभःपृथिव्योरुपदिष्टकम्पे नाथस्य यात्रापटहप्रणादे । उपेतरासां नयनं चकम्पे वामेतरद्धाणपुराङ्गनानाम् ॥ ३ ॥

तस्येन्दुबिम्बं सितमातपत्रं भास्वान्मणीन्द्रो महनीयतेजाः । ताराश्च मुक्तावल्यो विरेजुः शिखी रथाङ्गाकृतिरात्मधाम्नः ॥

अग्रे मुकुन्दस्य तदग्रजन्मा दैत्यैस्समं जन्यविहारमिच्छन् । आकारयद्यादवभूपतीनां वरूथिनीं शम्बरवैरिपूर्वाम् ॥ ५ ॥

कथंचिदुत्क्षिप्तकरेण सोढं सुमाग्रभोगं भुजगेश्वरेण । आसन्नभारात्ययजातहर्षा विश्वंभरा सैन्यभरं विषेहे ॥ ६ ॥

प्रस्थानभाजि प्रथमे यदूनां पृथ्वी स्वयं तद्बलरेणुलक्ष्यात् । भारावतारप्रियवादलब्धा प्रायो ययौ पद्मभुवस्सकाशम् ॥७॥

अशेषतश्छादयता दिगन्तान् आरोहता भूमिभृतां च मूर्ध्नः । प्रायेण सेनारजसा स्वमेव प्रादुष्कृतं लाघवमुल्बणेन ॥८

रथादिघोषैरथ शार्ङ्गपाणेः कल्पात्ययैकार्णवनादकल्पैः । वित्रासितेव त्रिदशारिलक्ष्मीरियेष गन्तुं यदुवीरदुर्गम् ॥ ९ ॥

अथ क्षणादात्मभुवं प्रयान्तं परिष्कृतं पञ्चभिरायुधाग्र्यैः । आशाबलेन स्वयमुत्तराशा प्रायः प्रतीयाय जगत्प्रतीक्ष्यम् ॥

पुरं ततश्शोणितपूर्वमग्रे ददर्श दैत्याधिपदर्पहन्ता । खगेन्द्रपक्षानिलतीव्रघातात् त्रासादिवोत्कम्पितकेतुहस्तम् ॥ ११ ॥

पुरोपकण्ठे पुरभिद्वियोगात् प्राकारभावं प्रमथा भजन्तः । प्रलम्बहन्तुः प्रसमीक्ष्य वेगं भीताः पलायन्त भृशार्तनादाः॥

इतस्ततस्संगततां यदूनां व्यक्तानुबन्धं विरुदैरुदारैः । सुरद्विषः शुश्रुवुरेकतानं कलध्वनिं काञ्चनकाहलीनाम् ॥ १३ ॥
कशाग्रसंस्पर्शमसृप्यमाणैः समीरवेगैस्समरावलिप्ताः । उदग्रहेषामुखरैस्तुरङ्गैः वृष्ण्यन्धका वैरिपुरीमवृण्वन् ॥ १४ ॥
उद्वेलवेगान् स्तनतो गभीरमौर्वप्रतिच्छन्दविदीप्तदृष्टीन् । अचोदयन् दानववप्रभङ्गे स्तम्भेरमान्सागरपोतकल्पान् ॥ १५ ॥
प्राकारभङ्गे प्रसभं प्रयुक्ता दम्भोलिभीमायतदन्तकाण्डाः । ऊर्ध्वप्रवृत्तैर्निजहस्तनालैरुत्तम्भयामासुरिवान्तरिक्षम् ॥ १६ ॥
असह्यवेगैस्सहसा बलौघैराक्रम्यमाणा बलिनां यदूनाम् । प्रचुक्षुभे दैत्यपुरी प्रभूता संवर्तभिन्नेव समुद्रवेला ॥ १७ ॥
यथार्थशौर्या यदुवीरयोधाः स्थानानि चित्तानि च दानवानाम् । व्यकम्पयन् विक्रमसत्कथानां सिद्धान्तभागैरिव सिंहनादैः ॥
जहार चित्तानि बिभेद सौधान् श्रोत्राण्यरीणां बधिरीचकार । अनन्यशब्दं च जगद्वितेने घोरस्तदा यादवसैन्यघोषः ॥
विमथ्यमानात् स्वपुरात्यदूनां मन्थाचलेनेव महाबलेन । विनिष्पपात त्रिदशारिनेता काले समुद्रादिव कालकूटः ॥ २० ॥
सरोषरूक्षो बहुदीप्तिहेतिः दिशो दिधक्षन्निव दैत्यवह्निः । कृष्णाम्बुवाहप्रमुखं प्रतस्थे तापच्छिदा तेन शमं प्रयास्यन् ॥
सरित्पतीनामिव सन्निपाते वार्ष्णेयदैतेयबलोदधीनाम् । अदभ्रसंघोषमभूतपूर्वं युगान्तसंवादि बभूव युद्धम् ॥ २२ ॥
बलद्वयक्षुण्णमहीतलोत्थं रजस्तदा संवृतसर्वलोकम् । अकल्पयत् स्वेतरतत्त्वलोपादपञ्चभूतामिव विश्वसृष्टिम् ॥ २३ ॥
प्रथीयसा सूक्ष्मनिरन्तरेण क्षौमाभिरामेण परागभूम्ना । प्रच्छन्नसेनाङ्गतया तदानीमासीज्जयश्रीरवकुण्ठितेव ॥ २४ ॥
रजोनुबन्धादभिसंवृताङ्गी भास्वत्करस्पर्शमनश्नुवाना । निवारिताशाविततिस्तदासीन्नभःस्थली नाकिभिरप्यदृश्या ॥ २५ ॥
रणाख्यदर्शे रजसोत्थितेन प्रच्छाद्यमाने तमसेव भानौ । निस्त्रिंशधारासलिले निमग्नाः शुद्धिं परामन्वभवन्युयोधाः ॥
असृक्छटासारवशाद्धुजिन्या रजस्समेते तमसि प्रशान्ते । सत्त्वानुरूपं विदधे प्रमोदं समान् मिथस्संमुखयन् प्रकाशः ॥
ततो हरस्त्रातुमनाः स्वभक्तं दत्ताभयं दानवसार्वभौमम् । अनुद्रुतो भूतगणैरनन्तैः प्रत्युद्ययौ विश्वपतिं प्रकुप्यन् ॥
तमुन्मदोदग्रवृषाधिरूढं सिताचले मेरुमिव ज्वलन्तम् । शरैः प्रतिप्रास्थित शार्ङ्गधन्वा देवं सुधासूतिकलावतंसम् ॥
शिलीमुखैः शौरिधनुर्विमुक्तैर्विस्मारितान्पूर्वविकत्थनानि । पलायमानान् प्रमथानशेषान् मेने पशूनेव पतिः पशूनाम् ॥
आस्वादिनीं दानवशोणितानामकुण्ठितामद्रिविदारणेऽपि । अनाहतास्त्रो युधि शम्बरारिः संस्तम्भयामास गुहस्य शक्तिम् ॥
क्लेशादिदोषैरपराहतेन क्रीडामनुष्येण जनार्दनेन । ज्वरे निरस्ते गिरिशप्रयुक्ते वीतज्वरं विश्वमिदं बभूव ॥ ३२ ॥
अथ प्रयुक्तानसुरेन्द्रगुप्त्यै प्रसह्य वह्नीनपि पञ्च जित्वा । अजृम्भयद्भावितजृंभणास्त्रो वृषध्वजं विष्णुरचिन्त्यभूमा ॥ ३३
शरव्यभूतत्रिपुरेऽप्यमोघं शूलायुधे शौर्यमवेक्ष्य शौरेः । पुरन्दरप्रत्युपरोधजातं व्ययोजयन्विस्मयमादितेयाः ॥ ३४ ॥
बाणस्सहस्रेण भुजैः प्रसाधयन्नात्मानुरूपैरसुरैस्समेतः । असह्यशस्त्रास्त्रबलो बलादीन् प्रत्यग्रहीत्प्रत्यथितप्रभावान् ॥ ३५ ॥
स वज्रनिर्घोषनिभाट्टहासो गात्रेण रुन्धन्गगनावकाशम् । उदग्रधन्वा शरवृष्टिमुग्रामुदग्रवातजीमूत इवोज्जगार ॥ ३६ ॥
शरासनैरर्धसहस्रसंख्यैर्योद्धुं प्रवृत्तो युगपत्प्रकृष्टैः । प्रत्युद्यतान् प्रार्दयत प्रकुप्यन्नेकस्समस्तानपि यादवाग्र्यान् ॥ ३७ ॥
अथ क्षणादन्तरितान्तरिक्षा वात्या विहङ्गेन्द्रविहारजाता । अलातचक्रप्रतिमानकार्षीत् बाणाशनीन्बाणघनप्रसूतान् ॥ ३८ ॥
गरुत्मतः पक्षमरुत्प्रचारात् दूरीकृतो वारुणनागपाशैः । उषासहायस्सरथस्सधन्वा जग्राह दैतेयबलस्य पार्ष्णीन् ॥ ३९ ॥

विनिघ्नतो दैत्यबलौघमग्रे चापाभियोगो युधि शम्बरारेः । चकार चक्रीकृतचन्द्रलेखं शंभोः शिरःकम्पमनन्यलभ्यम् ॥
रामोऽपि लङ्काधिपतेस्समानान् मुसल्यवृत्तीन्मुसलेन भिन्दन् । चमत्कृतिं चक्रधरस्य कुर्वन्नाधत्त संग्रामविहारमग्र्यम् ॥
उदग्रशृङ्गोल्बणबाहुभूम्ना संचारिकैलासनिभेन तेन । अमृष्यता क्षिप्रमकारि सैन्यं नागाधिपेनेव वनं नलानाम् ॥ ४२ ॥
स लाङ्गलाकर्षणनिर्विचेष्टान्निष्पिष्य नागान् निषधप्रमाणान् । रणक्षितिं शोणितमांसपङ्कैरामग्ननिस्पन्दरथामकार्षीत् ॥
हलायुधोत्क्षिप्तरथौघपूर्णं समीक्ष्य देवास्सहसाऽन्तरिक्षम् । आशङ्क्य दैतेयबलोपयानं दृढार्गलां देवपुरीमकुर्वन् ॥४४॥
प्रभुश्च किंचित्प्रथयन्नमर्षं क्रीडोचितान्वीक्ष्य कृताभियोगान् । विव्याध बाणानुचरानयोध्यः शार्ङ्गोदधेरूर्मिनिभैश्शरौघैः ॥
अदृष्टतूणीरमनुप्लवान्यैरग्राह्यसन्धानविमोक्षबाणम् । अमंसतैनं स्थिरचापचक्रं प्रत्येकमात्माभिमुखं प्रतीपाः ॥ ४६ ॥
निषङ्गदत्ताग्रकरे मुरारौ निर्भिद्य दैत्यान्भुवमाविशन्तः । लक्ष्याणि दूरादलभन्त बाणाः रसातलस्थैरपि दानवेन्द्रैः ॥४७॥
न सेहिरे शार्ङ्गपयोदजातां नाराचवृष्टिं दनुजेन्द्रयोधाः । अमोघवाचा कविना प्रयुक्तामन्तर्वतीं सूक्तिमिवानभिज्ञाः ॥
यतोयतो यादवसैन्यमासीत् ततस्ततो दैत्यचमूरपायात् । गतानि तेजस्तमसोरिवारादाशाविकल्पेन तयोरभूवन् ॥ ४९ ॥
अक्रूरसंदर्शनतापशान्त्यै स्वहेतिधारागृहमाश्रयन्तीम् । विहारयामासुरिवात्मवृत्त्या वीरश्रियं वृष्णिकुलप्रवीराः ॥ ५० ॥
कृपाणभिन्नद्विपकुम्भमुक्ताः मुक्ताः पतन्त्यो रणवप्रभूमौ । प्ररोहतां वीरयशस्तरूणां बीजान्यभूवन्बहुधा विकीर्णाः ॥५१
द्विपाचलेभ्यश्शरवृष्टिपातैरापातितानां रुधिरापगानाम् । अकल्पयन् योधमुखेन्दुक्लृप्ताः कौमुद्वतीं संपदमट्टहासाः ॥५२॥
अदृश्यतान्योन्यविलूनशीर्षैरारब्धमन्योन्यकृतप्रशंसैः । अनेकरूपैकसुराङ्गनाप्तैरपास्तवैरं रणरङ्गनृत्तम् ॥ ५३ ॥
प्रयोजितैः प्राणतृणैः प्रगल्भाः रथ्याभिगम्येषु रणापणेषु । क्षणप्रभालोलतरैरविन्दन् यावद्युगान्तानि यशोधनानि ॥
कृतापदानाः कृशजीविताशाः स्वनाथनामाङ्कजयोक्तिमन्तः । जयश्रियं दोष्णि निवेशयन्तः कीर्तिं दिगन्तावसथामकुर्वन् ॥
अमोघशस्त्रास्त्रतरङ्गभीमे वैरोपसंदर्शितबाडवाग्नौ । विकत्थनं संयति विक्लवानां वीरोदधौ गोष्पदवद्विलिल्ये ॥ ५६ ॥
जिगीषुभिर्जीवितसंशयाख्या डोलाधिरूढा दृढवैरबन्धा । अदूरतो यावदमर्षवेगं मिथः प्रतिक्षेपशतानि चक्रे ॥ ५७ ॥
शरप्रयोगोचितविप्रकर्षं संपादयिष्यन्त्यपराङ्मुखानाम् । प्रशंसनीयानि बभूवुराजौ पश्चात् प्रयातानि धनुर्धराणाम् ॥५८॥
प्रतिप्रवृत्त्या प्रतिगृह्य शूराः शत्रुप्रयुक्तां शरवृष्टिमुग्राम् । त्रिविष्टपानोकहपुष्पवृष्टिं वैमानिकैरन्वभवन्विमुक्ताम् ॥ ५९ ॥
तस्मिन्नघच्छेदिनि धर्मयुद्धे कायत्यजां कृष्णसमीक्षितानाम् । सुहृद्द्विषद्भेदवतां समोऽभूत्स्वर्गापवर्गान्तगतिस्सुपन्थाः ॥
बभूव कीर्त्या धृतकेतकश्रीर्निस्त्रिंशधाराधरपङ्क्तिनीला । रणस्थली यादवदानवानामाकालिकी प्रावृडिवास्त्रवर्षैः ॥ ६१ ॥
अलङ्घनीया रथवारणाद्यैरा सागरादप्रतिघप्रवाहाः । उदग्रभूभृत्प्रभवाः पृथिव्यामुत्तस्थिरे शोणितशैवलिन्यः ॥ ६२ ॥
ज्वलत्प्रतापानलजातदीप्तिस्समुद्यती सैन्ययुगस्य लीला । जयश्रियो वीरपतिंवरायाः वैवाहिकी संपदिवावभासे ॥ ६३ ॥
अमर्षवैश्वानरधूमलेखामन्योन्यसंहारनिशां कृपाणीम् । अवेक्ष्य मृत्योर्भ्रुकुटीमनन्दन् वीराः स्वविक्रान्तिशिरीषमालाम् ॥
मनस्विनस्संयति वीरशय्यामभूषयन् प्रीतिकृतश्शिवानाम् । सुखावहाः स्वर्गविलासिनीनां विहारशय्यामपि वीरलोके ॥
समाश्रितैराहवसत्त्रदीक्षां कुर्वद्भिरन्योन्यमिवोपकारम् । अलभ्यत श्लाघितमप्सरोभिर्दैत्यैर्मनुष्यैरपि देवभूयम् ॥ ६६ ॥

पर्यस्तपादं पतितैः पृथिव्यां वज्राहतैरद्रिगणैरिवान्यैः । द्विपेन्द्रयूथैर्द्रुतसर्पिणीनां द्वीपायितं शोणितवाहिनीनाम् ॥ ६७ ॥

हतावशिष्टा दनुजेन्द्रभृत्याः प्रद्युम्नविक्रान्तिभयान्निवृत्ताः । तत्केतुचिह्नस्मरणेन विभ्युः निशाम्य हर्षान्निजवल्लभानाम् ॥

स्वकोपचापेन ततः प्रणुन्नो महेश्वरानुग्रहसंहितात्मा । अतीत्य मौर्वीमिव दैत्यसेनां बाणस्स्वयं शौरिबलं विवेश ॥ ६९ ॥

व्यभज्यत व्याप्तहयोर्मिजालं बलं यदूनां बलिनन्दनेन । एकेन पर्याप्तभुजाऽद्रिभूम्ना नाथो नदीनां नलसेतुनेव ॥ ७० ॥

अस्त्राणि तेन प्रहितानि तूर्णं विहारभूम्ना वितथानि कृत्वा । युगान्तसूर्यायुतयोगदीप्तं रामानुजन्मा जगृहे रथाङ्गम् ॥

अथाच्छिनद्भीषणसत्त्वसारां भुजाटवीं भूतपतेस्समक्षम् । चक्रेण संकल्पनिभेन कृष्णः किं वा विधौ वैरिणि केन रक्ष्यम् ॥

अवृण्वत क्ष्मां हरिचक्रलूना महत्तरा बाणभुजाः पतन्तः । महेन्द्रहस्तप्रहितेन पूर्वं वज्रेण भिन्ना इव सानुमन्तः ॥७३॥

अमर्त्यशत्रोरवलेपहेतौ बहिर्द्वये बाहुवने विलूने । दयाधनस्संयति दैत्यहन्ता प्रदीप्तमस्त्रं प्रतिसंजहार ॥ ७४ ॥

अनीकिनीमाश्रितदीर्घनिद्रां बाणो निकृत्तामपि बाहुपङ्क्तिम् । अजातखेदो बुबुधे न नूनं विपद्भिरश्रान्तधियो हि वीराः ॥

अशान्तदर्पस्त्वसुरो भुजाभ्यां विकृष्टधन्वा विससर्ज बाणान् । तदेनमन्वीक्ष्य निहन्तुमैच्छज्जन्योद्धतं दैत्यमनन्यजन्यः ॥

ततस्तमव्याहतदिव्यशक्तिं मध्याह्नमार्ताण्डविदीप्तहेतिम् । पश्यन्मुकुन्दं प्रतिबोधभूम्ना जयोक्तिपूर्वं गिरिशो जगाद ॥७७॥

मैवं प्रभो मत्परिवारभूतं बलेस्सुतं बाधितुमर्हसि त्वम् । मयैष रक्ष्यो दनुजस्त्वयापि स्वभक्तबुद्ध्यैव समीक्षणीयः ॥७८॥

त्वमादिदेवस्त्रियुगस्त्रिधामा शुद्धामशुद्धां च विभाव्य सृष्टिम् । अकर्मतन्त्रैरवतारभेदैः क्रीडस्यनन्तैरपि जन्तुजातैः ॥

अयं स ते वेदमयो गरुत्मान् वेदैरशेषैरपि वेद्यसे त्वम् । विभागभृच्छन्त्यमरास्त्वदन्ये शाखैकदेशेषु शकुन्तकल्पाः ॥

सिसृक्षतस्ते भुवनानि सप्त प्रसादतो नाथ बभूव वेधाः । संहर्तुकामस्य तवैव कोपादहं त्वया दत्तनिजाधिकारः ॥८१॥

अविक्रियश्चेष्टयसि त्वमेको विश्वानि भूतानि विहारशक्त्या । अचेष्टमानप्रकृतीन्ययांसि स्वतोऽप्ययस्कान्त इवाभिमुख्यात्

अलङ्घ्यमायागुणजालभीताननन्यचित्ताननुकम्पमानः । स्वदत्तयैव स्वपदाब्जभाजा भक्त्या स्वयं तारयसे भवाब्धिम् ॥

भारावताराय भुवोऽवतीर्णं वहन्तमन्तर्हितदिव्यभावम् । संस्थापयन्तं नियमेन धर्मं धर्मं परं वेदविदो विदुस्त्वाम् ॥८४॥

विधाय दैत्यप्रकृतीनशेषान् नामावशेषान्नरलोकपालान् । करिष्यसि त्वं करुणार्द्रचेता नाथ क्षितिं नावमिवास्तभाराम् ॥

दयाक्षमाभ्यामिह दीव्यसि त्वं लक्ष्मीमहीभ्यामिव लालितात्मा । तत् क्षम्यतामस्य मदेकभक्तेरजानतस्त्वामचमत्क्रियेयम् ॥

नाथो यदूनामिति भूतनाथे स्वभक्तरक्षामभियाचमाने । अतर्कितप्रत्युपकारलेशामाकस्मिकीमाद्रियतानुकम्पाम् ॥ ८७ ॥

प्रविश्य देहं पुनरुत्पतन्त्या स्वमौलिभाजेव सुरस्रवन्त्या । वाचा मनःप्रीतिमिवोद्वमन्तं शौरिस्तदा शूलिनमित्युवाच ॥

तवैष भक्तो मम चेति मन्ये क्षान्तस्ततो नित्यमसौ मयाऽपि । न चास्ति बन्धोरपि सांपराये वीरव्रतं धारयतोऽपकारः

विहारनृत्तानि वितन्वतस्ते वल्गुध्वनिं वादयिता मृदङ्गम् । भजत्वविच्छिन्नधृतिर्भवन्तं दत्ताभयो दैत्यपतिर्मयाऽसौ ॥

अथान्वमंस्त त्रिजगन्नियन्ता पत्युः पशूनां प्रणयानुरोधात् । बाणावरोधप्रमदाजनानां स्थायीनि मङ्गल्यविभूषणानि ॥९१॥

ततोऽसुरेन्द्रः प्रणिपातपूर्वं जगत्परित्राणरतं जगाद । उषानिरुद्धान्वयतस्समीक्ष्या भृत्या वयं प्रीतधिया त्वयेति ॥९२॥

हिरण्यरत्नानि हिरण्यपूर्वैर्बलादुपात्तान्युपदाय बाणः । निरोधखिन्नावुचितोपचारैरानर्च सस्नेहमुषानिरुद्धौ ॥ ९३ ॥

संबन्धिभावप्रतिपत्तिभाजा सन्धाय बाणेन स सत्यसन्धः । उषापतेर्यौतकलाभलक्षाज्जेता जहारेव विपक्षलक्ष्मीम् ॥

हरेण दत्तां हरिणापि बाणः स्थिरीकृतामप्रतिवाममीतिम् । तनुत्रयन्वर्जितलेखवैरः शमान्वितामास्थित शंभुसेवाम् ॥

यथार्थनामानमथानिरुद्धं कृत्वा सभार्यं कृतकृत्यचेताः । सबन्धुसैन्यस्सविशेषदृश्यां प्रत्याययौ विश्वपतिः पुरीं स्वाम् ॥

देवास्सहस्रनयनं दनुजेन्द्रमन्ये निर्धूतमानमनघेन निशामयन्तः ।
कूपोदकप्रभवकूर्मनयेन जातामस्वामिकप्रभुपरिग्रहबुद्धिमौज्झन् ॥ ९७ ॥

नीतस्त्रिलोकपतिना निजराजधानीं भूयः प्रजात इव पौरजनैः प्रतीतः ।
दैत्येश्वरस्य सुतया सहितस्स रेमे रागाधिको रतिपतेरनघः कुमारः ॥ ९८ ॥

अथ तमुषासहायमुपयातमुपायनवान् जनपदपत्तनप्रभृतिकादुपगम्य जनः ।
उपचरति स सम्यगुपपन्नधृतिर्विहुधा यदुनगरे विवाहविजयोत्सवयन्त्रितधीः ॥ ९९ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये विंशः सर्गः ।

---

## २१. एकविंशः सर्गः

वासुदेव इति नाम दधानः पौण्ड्रकस्तदनु भूरिमदान्धः । मानुषत्वकवचान्तरितेन स्पर्धते स्म हरिणा हतचित्तः ॥ १॥

हेतिपञ्चकमधारयत श्रीवत्सकौस्तुभमुखानि च मूढः । ऐश्वराणि चरितानि च पूर्वाण्यात्मनः स्वयमजूघुषदार्तैः ॥ २ ॥

इन्द्रजालकुहनादिषु दाक्ष्यादीश एष इति मोहितलोकः । अध्यशेत भुजगेश्वरशय्यामारुरोह विहगेन्द्रविवर्तम् ॥ ३ ॥

अन्वहं च महतीं वनमालां माल्यकृद्भिरुपकल्प्य बभार । नामधेयमदिशत्सचिवानां नाकनायकविशेषनिरूढम् ॥ ४ ॥

बद्धकृत्रिमभुजान्तरयुग्मं शस्यमानमनुजीविजनेन । विश्वकर्तुरवतार इति स्वं बह्वमंस्त बधिरो निगमेषु ॥ ५ ॥

इत्थमीश्वरविडम्बनरूपं नाटकीयमनुरुध्य विहारम् । शोच्यतामपि परावरविद्भिर्हास्यतामपि जगाम जगद्भिः ॥ ६ ॥

मस्तकस्थितदुरत्ययमृत्योस्तस्य दूत उपसृत्य जगाद । कृत्यशेषविनिवेशितचित्तं निर्भयो नृपतिसंसदि नाथम् ॥ ७ ॥

कृष्ण कृष्ण गदतो गिरमर्थ्यां संशृणुष्व महतीमिह मत्तः । अप्रमत्तमतिभिस्सह मित्रैराप्तवाक्यमवधीर्य न सिद्धिः ॥८॥

अस्ति कश्चिदवधारितभूमा पूरुषश्श्रुतिगणेषु पुराणः । स क्षितिं परिगृहीतविहारः पौण्ड्रकत्वमधिगम्य भुनक्ति ॥ ९ ॥

तस्य नित्यनिरुपाधिकभूम्नो विश्वभोक्तुरधिगम्य तितिक्षाम् । भुज्यते नियतकर्मविपाकैः युष्मदादिभिरिला बहुभागा ॥१०॥

अर्थतत्त्वमिदमश्रुतपूर्वं शृण्वताऽद्य भवता भवितव्यम् । निश्चलीकृतहिताहितसीम्ना जिष्णुना यदुकुलस्य विभूत्यै ॥११॥

आदिशत्यखिललोकनियन्ता त्वामसौ भजनसौहृदनिघ्नः । ईशितव्यगणनालिखितस्त्वं मा कृथा वितथमीश्वरभावम् ॥

बाह्यवर्त्मनि परावरतत्त्वव्यत्ययेन विनिवृत्तसतत्त्वे । चित्तवृत्तिमधिरोप्य विमूढाः श्रेयसोऽपि बहिरेव भवन्ति ॥ १३ ॥

ईश्वरस्त्वमसि चेत्कुत एवं न त्वदग्रज इति प्रमितिस्स्यात् । द्वौ युवां परम इत्यपि दुःस्थं कस्ततो विषम एव न चान्यः॥

अर्थवादकुहनाभिरपि स्वान् नेश्वरान्विगणयन्ति सुरेन्द्राः । निष्प्रमाणजनुषो जनवादात् कःस्विदीश इति विश्वसिति स्वम्
गोपिकाभिरपि कर्मभिरास्तां वद्ध एव यदि मुक्तिविधाता । अद्भुतस्थितिरनन्तरवाद्यः सततमस्तु समयोऽयमपूर्वः ॥ १६॥
इष्ट एव तु मदीश्वरभावः त्वन्मुखैर्न खलु शक्यनिरोधः । मत्सुखादिषु कथं विशयानैः मत्परत्वमपदं प्रतिषेध्यम् ॥१७॥
नामधेयमनपायि मदीयं त्यज्यतां प्रथय दासतया वा । चिह्नधारणमनेन गतार्थं कल्पनेन कथमीश्वरभावः ॥ १८ ॥
तादधीन्यनियमं यदि बुद्ध्वा सोऽहमित्यनुबुभूषसि तत्स्यात् । अन्यथा तु निगृहीतिरलङ्घ्या राजभावतृषितैरिव भृत्यैः ॥
पाप्मनां तमसि पातयितॄणामात्मचौर्यमधिराजपदस्थम् । चोदितेन नियतोऽपि हतात्मा चोरदण्डमवशादुपयाति ॥ २० ॥
अभ्युपेतबडिशामिषनीतिं प्राप्तुमिच्छुरधिकारमयोग्यम् । इष्टमर्थमनवाप्य वराकः प्रत्यवैति सहसा परतन्त्रः ॥ २१ ॥
नापराध्यति क एव नियत्या पण्डितस्तु विनिवृत्य समिन्धे । अस्ति चाद्य शरणागतिरर्थ्या मत्परस्य तव जीवितुमिच्छोः॥
इत्युदीरितवति प्रणिधौ तं प्रत्युवाच विहसन् प्रभुराद्यः । पथ्यमद्य वचनं तव मन्ये यद्ब्रवीषि चिरलिप्सितमेतत् ॥२३॥
उग्रसेनभृतका वयमेते नेशितार इति विभ्रमवन्तः । संप्रति त्वदुपदेशमहिम्ना भावयेमहि तवेश्वरभावम् ॥ २४ ॥
त्वय्यनीश्वरमतिं न च कुर्मः त्वं परोऽसि नियमेन परस्मात् । त्वां दिदृक्षव इमे वयमाशु त्वत्पदं गतभियः प्रतियामः ॥
त्वादृशं प्रमितिमन्तमदृष्ट्वा त्वय्यनादरवतामिति लोके । यामिमां वदसि वाचमनूर्चां भागधेयमिव पक्वमिदं नः ॥ २६ ॥
द्रक्ष्यते शरणमेत्य विभुस्ते क्षेप्स्यते च न मयैव न चक्रम् । गच्छ शीघ्रमभिधत्स्व तमीशं त्वामुपैति कुकुरध्वजिनीति॥
आत्तहेतिरपसर्पनिवृत्तौ चिन्तितात्समधिरुह्य सुपर्णम् । प्रास्थित प्रतिबलावसथाय प्राणितत्रिदशभूतिरनन्तः ॥ २८ ॥
साहसैकरसिकेन ततोऽसौ पौण्ड्रकेण युयुधे यदुवीरः । तत्सखित्वमुपगम्य च पार्ष्णिं गृह्णता सपदि काशिनृपेण ॥२९॥
तत्र वैरिपृतने समकालं पूर्वपश्चिमतया प्रपतन्त्यौ । भावयन्नुभयतोमुखभावं प्रत्यविध्यदधिसायकधन्वा ॥ ३० ॥
वैरिसैन्यविततेषु समन्ताद्दिङ्मुखेषु सममेव पृषत्कैः । तस्य दीप्तरुचिभिर्विनिपेते मध्यगस्य किरणैरिव पूष्णः॥ ३१ ॥
विद्विषौ युगपदुत्थितवन्तौ सागराविव विलङ्घितवेलौ । रूपिणी इव रजस्तमसी द्वे सत्त्ववृत्तिरनघस्स जघान ॥ ३२ ॥
अस्तमेवमनयद्यदुभास्वान् तावुभौ जगदुपद्रवहेतू । पूर्वतश्च परतश्च भवन्तौ दुर्ग्रहाविव दुरासददीप्तिः ॥ ३३ ॥
तस्य तावुभयतो निपतन्तौ भग्नबाहुविटपायुधपुष्पौ । जग्मतुः पृथुकभावविहारक्षिप्यमाणयमलार्जुनकक्ष्याम् ॥ ३४ ॥
नामचिह्नवसनाभरणाद्यैर्नाथसंपदनुकारनिरूढैः । पौण्ड्रकस्थितिमवाप्य सृगालोऽप्यन्वभूत् किल गतिञ्च तदीयाम् ॥३५॥
विद्विषां विहितवीरगतीनां द्वारकोपगमितैर्द्विरदाद्यैः । कौरवाध्युषितभागविभक्तैराहितप्रतिभरा क्षितिरासीत् ॥ ३६ ॥
पातितेषु विमतेष्विति नाम प्राप्य यादवपुरं परमेष्ठी । प्रेयसीभिरविभक्तरसाभिर्वीतरागसुभगो विजहार ॥ ३७ ॥
जीवयुक्तमितरच्च विचित्रं द्यूतमर्पितपणं विदधानः । भाविभारतमहाहवसिद्धेस्सूचनं वितनुते स्म शुभंयुः ॥ ३८ ॥
तोषितत्रिनयनस्य नृशंसः काशिराजतनयस्य पुरोधाः । कल्पिताहुतिरजीजनदुग्रां कालवह्निपदवीमिव कृत्याम् ॥ ३९ ॥
साऽभिपत्य यदुवीरसकाशं हेतिराजविभवेन हताशा । जन्मधामनि निजे नियमस्थं जंजपूकमभिपत्य जघान ॥ ४० ॥
निर्ददाह नगरीमपि काशीं विस्फुलिङ्ग इव माधवदीप्तेः । यादवप्रसनकौतुकवत्या कृत्यया सह रथाङ्गकृशानुः ॥ ४१ ॥

स्यन्दनद्विरदवाजिपदातिप्राज्यसौधपरिपाटिसमृद्ध्या । चक्रवह्निविभवेन तदाऽभूच्चन्द्रशेखरविलेपनभूमा ॥ ४२ ॥

क्षेत्रमेतदविमुक्तसमाख्यं मुक्तियोग्यमुपसृष्टमयोग्यैः । इत्यवेक्ष्य दहनेन तदर्हां संस्क्रियामिव चकार सुदृष्टिः ॥ ४३ ॥

अप्रशान्तरुषमद्भुतदीप्तिं दग्धवैरिपुरमायुधराजम् । निर्जराः प्रतिनिशामयमाना विस्मयन्ति स्म जगदुश्च जयोक्तिम् ॥

दैवतैरपि चतुर्मुखमुख्यैर्दत्तसत्कृतिरसौ जितकाशी । इष्टनिर्वहणनिर्वृतचित्तं विष्टरश्रवसमभ्युपपेदे ॥ ४५ ॥

आसुरप्रकृतिकेषु निरस्तेष्वेवमेभिरनुपालितसख्यः । वानरो भुजबलेन बबाधे दुर्मतिर्जगदिदं द्विविदाख्यः ॥ ४६ ॥

भूधरानुदहरद्भुजशाली प्रक्षिपंश्च नगराणि ममर्द । क्षोभयन् जलनिधीननुवेलं प्लावयंश्च वसुधां प्रजह(द्ध)र्ष ॥ ४७ ॥

अन्यवीररहितामिव मत्वा वारिराशिरशनामवलिम्पन् । आत्मनस्सदृशमाद्रियतैकं धेनुकप्रमथनेन नियुद्धम् ॥ ४८ ॥

एकदा हलधरस्य विहारे संपतन्नमितचापलचेष्टः । द्वारकोपवनपादपभेदी विश्वतः किलकिलां विततान ॥ ४९ ॥

तालकेतुयुवतीर्विहरन्तीस्त्रासयन्मुखविकारविशेषैः । क्रीडनोपकरणानि विभिन्दन् क्ष्वेलितानि विदधे विधिलङ्घः ॥ ५० ॥

तं प्रवृत्तकपिवृत्तमदूराद्बाधितप्रतिबलो बलदेवः । जङ्गमस्फटिकभूधरकल्पो रुक्मशैलरुचिरं निरुरोध ॥ ५१ ॥

वानरेण सुहृदा दनुजानां यातुधानसमरप्रथितेन । प्रेषितां द्रुमशिलोच्चयवृष्टिं निष्पिपेष मुसलेन हलास्त्रः ॥ ५२ ॥

आपतन्नपसरन्नपि भेजे ग्राह्यतामिव च दुर्ग्रहतां च । अग्रतोऽभवदलक्ष्यत पश्चादप्रतर्क्यरभसो हरिवीरः ॥ ५३ ॥

तौ परस्परगवेषितरन्ध्रौ कामपालकपिसैनिकपालौ । योजितोद्धतकरौ युयुधाते दर्पदारुणदिशागजसत्त्वौ ॥ ५४ ॥

तं प्रलम्बदमनः प्लवगेन्द्रं विप्लुतं पुनरपि प्लवमानम् । कालपाशनिगृहीतमरातिं कल्पमानमभवाय विवेद ॥ ५५ ॥

सव्यदक्षिणपरिक्रमणाभ्यां द्रागलातमयचक्रनिरीक्ष्यः । आततान हलपाणिमदूरादग्निसालवलयस्थमिवारिः ॥ ५६ ॥

तं गृहीतगरुडानिलवेगं सर्वतो युगपदेव समीक्ष्य । लाङ्गली जलधिलङ्घनदक्षं लाघवेन लघयन्विचचार ॥ ५७ ॥

अन्धकारमिव तं प्रतिरुन्धन्नर्यमेव मुसली निजदीप्त्या । दिङ्मुखान्यकलुषाणि वितन्वन्विश्वदृष्टिविभवाय बभूव ॥५८॥

घूर्णिताकुलितकौरवधाम्ना लाङ्गलेन ललितोद्धतलीलः । यूथनाथमवरुध्य कपीनां मौलिघातमवधीन्मुसलेन ॥ ५९ ॥

वज्रपाणिमहिताद्भुतभूम्ना वानरेण निहतेन स रामः । व्याचकार विनताभयदाता पूर्वरामचरितं पुनरुक्तम् ॥ ६० ॥

धर्ममर्मभिदि दैवविपाकादुद्धृते द्विविदनामनि शल्ये । रेवतीरमणरेचितखेदा नाकिनश्च मुनयश्च ननन्दुः ॥ ६१ ॥

त्रासितेषु विबुधेषु तदग्रे पीतवन्तममृतं बलभद्रः । प्रापयत्प्लवगमुख्यमितीव स्वर्गिभिस्सह सुधाशनभावम् ॥ ६२ ॥

भूतले हलधराहितगुप्तौ सारभूतसुभटग्रहणेन । उञ्छवृत्तिरुदरंभरिरासीत्तादृशेन तपसैव कृतान्तः ॥ ६३ ॥

एवमीषदवरोपितभारां भावयन्भुवमतोषयदार्यान् । पूर्वदेवजनितानभिनिघ्नन् पूर्वजेन सहितो यदुनाथः ॥ ६४ ॥

भार्गवादिभिरबाधितभूम्नां निर्ममेष्वपि निकारपराणाम् । सौभहंसडिभिकप्रभृतीनां सूदनैरलघयच्च धरित्रीम् ॥ ६५ ॥

उग्रसेनविनिवेशितराज्यामुन्नमय्य यदुवंशविभूतिम् । तस्य दिग्विजयकौतुकमाद्यः सप्तलोकतिलको विततान ॥ ६६ ॥

तन्नियोगमथ शेखरयित्वा स्वप्रशासनवशंवदविश्वः । यावदुक्तनियताखिलवृत्तीन् यादवानुपनिनाय सुधर्माम् ॥ ६७ ॥

आत्मकल्पितधृतेरथ राज्ञः सन्निधौ सचिवपीठनिविष्टः । मन्त्रणाय महतो यदुमुख्यान् संमुखान् प्रतिननन्द मुकुन्दः ॥

अभजत नरपालमुग्रसेनं बहुमनुते स यदूंस्तथापि तुङ्गः । कचिदभिलपने विभक्तिशक्त्या स्वगुणविभूतिगुणीभवन्निवैकः ॥

अधिगुणहरिवंशवीरसङ्गादपचितवासवसङ्गमाभिलाषा । अतिशयरुचिरां वहन्त्यभिख्यामचकमतेव सभा तदाधिराज्यम् ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये एकविंशः सर्गः ।

## २२. द्वाविंशः सर्गः

अथ देवानिवाहूतान्वरदेवानभाषत । देवदानवसामान्यदैवतं देवकीसुतः ॥ १ ॥

एष वः क्ष्मापतिश्शास्ति विधातेव प्रजापतीन् । महेन्द्र इव धर्मेण सुधर्मामास्थितस्स्वयम् ॥ २ ॥

शेखरीकृतभूसारः शेषत्वेन विभोः स्थितः । वेदयत्ययमार्योऽपि मित्रभूतानमित्रजित् ॥ ३ ॥

वयं भवन्तो ये चान्ये महान्तस्सर्व एव ते । विश्वगुप्तौ जगत्कर्त्रा विनियुक्ता विभूतयः ॥ ४ ॥

तदस्माभिरवस्थेयं धर्मवर्त्मनि शाश्वते । बिभ्यद्भिरनवादेशात् वज्रादिव समुद्यतात् ॥ ५ ॥

द्विषन्तः ख्यातनामानो नामशेषास्तथाऽप्यसौ । समुद्रवसना विष्वक् तानसैरवकुण्ठिता ॥ ६ ॥

अंसकस्तूरिका भूमिः भवतां बाहुशालिनाम् । अजुगुप्सापदं न स्यादसद्वृत्तिमलीमसा ॥ ७ ॥

शङ्कितप्रचयश्शेषः शत्रूणां शुष्मणामिव । आयतौ सुखमिच्छद्भिर्न युक्तः क्षन्तुमीश्वरैः ॥ ८ ॥

अतस्त्राणाय साधूनां दुष्कृतां दमनं क्षमम् । कडङ्गरीयरोधो हि कलमोत्सेधकारणम् ॥ ९ ॥

पुष्यतां पाण्डरं छत्रं पुण्डरीकमिव श्रियः । धर्मोऽधर्मश्च नान्योऽस्ति रक्षणोपेक्षणाद्भुवः ॥ १० ॥

पूर्वपूर्वनरेन्द्राणामुच्छिष्टमपि मेदिनी । सोमपीथिनयात् ग्राह्या स्वधर्माध्वरमास्थितैः ॥ ११ ॥

अविवेकविभावर्यां धर्ममार्गमपङ्किलम् । द्रष्टुं दीप इव न्यस्तो नायकेन नयागमः ॥ १२ ॥

अवलम्ब्य जगद्धातुः हस्तमागमविग्रहम् । स्वयमुद्धरतात्मानं स्वैरं पातालपातिनम् ॥ १३ ॥

व्यसनासारवेगाणां वारणं न प्रकल्प्यते । उपदेशैरनार्याणामुत्तानच्छत्रसंनिभैः ॥ १४ ॥

पण्डितप्रहतेनैव सत्पथेन सदोदिताः । विषमेषु स्खलन्तोऽपि न दुर्गतिमवाप्स्यथ ॥ १५ ॥

भूपरिक्रमणादन्या भवतामतिभास्वताम् । तमसामिव शत्रूणां निरासे कीदृशी क्रिया ॥ १६ ॥

जिगीषूणां च युष्माकं न जेतव्यपदे स्थितम् । कौरवैरनुकूलानां विपाकैरिव कर्मणाम् ॥ १७ ॥

अवरोध्याः स्वयं दक्षैरक्षिपद्भिरनेहसम् । करिणां कर्णडोलाभिः कम्पिता इव संपदः ॥ १८ ॥

नीतिपद्धतिरक्षोभ्या भवद्भिरधिगम्यताम् । नियता स्वर्गसौधस्य निःश्रेणिरिव शाश्वती ॥ १९ ॥

खलत्यागस्सुहृत्प्राप्तिरितीदं कवचद्वयम् । वहध्वं मन्त्रदेहस्य भेदं परिजिहीर्षवः ॥ २० ॥

धातूनामिव कोपेषु प्रकृतीनामचेतसाम् । पातुमर्हथ पर्याप्तं प्रसादनरसायनम् ॥ २१ ॥

अनीतिमदिरां त्यक्त्वा लोभादिविषदूषिताम् । अगदङ्कारमादद्ध्वं ज्ञानामृतमनुत्तमम् ॥ २२ ॥
लुलिताशेषसन्मार्गं लोकवेदविरोधिनम् । परित्यजत दुर्मानं पाषण्डमतजीवितम् ॥ २३ ॥
गुणशैलाग्रमारोप्य शनैरात्मानमात्मना । नित्यशङ्कितविभ्रंशं निध्यायत शुभंयवः ॥ २४ ॥
त्रिविधानि विधेयानि संपत्सु च विपत्सु च । करणानि च मित्राणि गोपायत गुणग्रहात् ॥ २५ ॥
अप्रशान्तेषु विस्रम्भमतिशङ्कां सुहृत्सु च । नीतिसंदंशिना बुद्धेः समुद्धरत कण्टकौ ॥ २६ ॥
सपञ्चाङ्गेन मन्त्रेण नीतिमाहात्म्यनिर्विषाम् । नियच्छत निजाङ्गेषु भुजङ्गीमिव संपदम् ॥ २७ ॥
अवधीरयताधर्म्यामर्थकामैकसाधिकाम् । नृशंसप्रेयसीं नीतिं नारीहृदयदारुणाम् ॥ २८ ॥
प्रमादसप्तकं त्यक्त्वा प्रबुध्योपायसप्तकम् । अङ्गसप्तकसंपत्त्या जयत द्वीपसप्तकम् ॥ २९ ॥
अरातिगणकूटस्थान् आदौ जयत दुर्जयान् । अपदक्रोधलोभादीन् अशेषार्थविरोधिनः ॥ ३० ॥
आन्तरेण बलेनैव द्विविधां वहत क्षमाम् । यस्य सत्त्वेप्यसत्त्वेऽपि गतार्थं षड्विधं बलम् ॥ ३१ ॥
न शापो नाभिचरणं न वह्निर्न विषं तथा । नास्त्राणि न च शस्त्राणि यथा तीक्ष्णतमा क्षमा ॥ ३२ ॥
त्रिपक्षजातिभाजोऽपि क्षुद्राननपकुर्वतः । सुपर्ण इव मूनागान् उपेक्षध्वं तरस्विनः ॥ ३३ ॥
कृपणान्क्षममाणोऽपि महासत्त्वो न दैन्यभाक् । मृगेन्द्र इव भिन्नेभः स्वदंष्ट्रां लिहतः खगान् ॥ ३४ ॥
देवानतिशयानानां दैत्यदानवरक्षसाम् । निदानानि निपातस्य स्वयमन्वीक्ष्य सुख्यत ॥ ३५ ॥
यशःप्राणहरान् घोरान् व्यामोहविषपादपान् । समीक्षाशाणघृष्टेन घत शास्त्रेण शस्त्रिणः ॥ ३६ ॥
श्रुतशी(शा)लिभिरुक्तानि दुरुत्सेकज्वरातुराः । अप्रियाण्यपि पथ्यानि मा जिहासत जातुचित् ॥ ३७ ॥
कलिसन्धिसमाघ्रातं त्यजन्तः कर्म कर्बुरम् । सदसत्प्रेक्षणे स्यात सर्वतोदत्तदृष्टयः ॥ ३८ ॥
पल्लवोपमकौमारे प्रसूनोपमयौवने । स्थिरं फलमुपादद्ध्वं जङ्गमे जीवितद्रुमे ॥ ३९ ॥
मिषतां मीलतां वापि द्रुतं धावति जीविते । अनघं तनुत क्षेम्यमान्तरं धनमक्षयम् ॥ ४० ॥
अकालनियतोच्छ्रायमतिसूर्येन्दुपावकम् । क्षात्रं क्षपितजाड्यं वः क्षमं तेजस्समेधितुम् ॥ ४१ ॥
असंप्लावितसप्ताब्धिरत्रिलोकीतमोपहा । अदिक्सौधसुधालिप्तिर्यस्य कीर्तिस्स किंप्रभुः ॥ ४२ ॥
सुधां सुमनसो यस्य स्वादयन्ति यशोमयीम् । स राजा वृद्धिमाप्नोति क्षीयते न च कालतः ॥ ४३ ॥
त्यक्तसान्त्वेन कठिनान् विद्रावयत तेजसा । अयसस्तापसेकाभ्यामवस्था कीदृशी भवेत् ॥ ४४ ॥
प्रसाधितदिशो युष्मान् विमुक्तान्यमहीभृतः । संपदः प्रतिपत्स्यन्ते सरितस्सागरानिव ॥ ४५ ॥
स एष पुरतो याता प्राज्ञः परिमृशन् पथः । सङ्कल्प इव युष्माकं सात्यकिस्सत्यविक्रमः ॥ ४६ ॥
परिवारेण संपन्नः त्यक्तकोशश्च कार्यतः । नन्दकोऽयमनिस्त्रिंशस्संमतो मम शत्रुजित् ॥ ४७ ॥
जैत्रध्वजमिवोदग्रमेनमाहितलक्षणम् । अनुयात दिशो जेतुमस्त्रवेदमिवापरम् ॥ ४८ ॥

वनसिंहनयाद्गुप्तिर्मानतर्कक्रमादपि । परस्परपुरस्काराद्भवित्री भवतामिह ॥ ४९ ॥

अपि युष्माभिरेतावदहङ्कारग्रहोज्झितैः । अङ्गीकृतममुष्मद्भिरातुरैरिव भेषजम् (भोजनम्) ॥ ५० ॥

इति सूक्तिसुधां पीत्वा शौरिवक्त्रेन्दुनिस्सृताम् । सहसा नरदेवास्ते सौमनस्यं प्रपेदिरे ॥ ५१ ॥

तदुक्तिं शुकवत्सर्वे संलपन्तः परस्परम् । प्रहर्षमदधुस्तस्य प्रविष्टा नीतिपञ्जरम् ॥ ५२ ॥

तृषितैरिव ते श्रोत्रैः संभृतश्रुतिसौरभाम् । पपुः प्रियहितां तस्य परिशुद्धां सरस्वतीम् ॥ ५३ ॥

असन्देहविपर्यासामसङ्कीर्णहिताहिताम् । त्रयीमिव गिरं तस्य मानयन्ति स्म ते नृपाः ॥ ५४ ॥

अथ यादवयूथेन सहितस्संयुगप्रियः । सात्यकिः प्रचितोत्तंसः प्रतस्थे भर्तुराज्ञया ॥ ५५ ॥

धर्मगुप्तिकृतादेशः स मेने मधुवैरिणा । अपृथक्त्वमिवापन्नमन्यदायुधपञ्चकम् ॥ ५६ ॥

स्वकेतुकल्पनापूर्वं नियुक्तं हरिणा स्वयम् । तमेव तादृशाकारं तममन्यन्त यादवाः ॥ ५७ ॥

स वीरश्शासनं भर्तुः शिरस्त्राणमिवोद्वहन् । अमन्यत जितप्रायास्सह दिक्पतिभिर्दिशः ॥ ५८ ॥

पयोधिं तर्णकपदं पर्वतं सिकतामयम् । पातालं च स्थलीपृष्ठं प्रैक्षतामितविक्रमः ॥ ५९ ॥

प्रयाणपटहस्तस्य प्रलयाम्बुदडम्बरः । नूनमानर्तयामास भुवं सह पयोधिभिः ॥ ६० ॥

प्रयान्ती पृतना सद्यः प्रणादैर्द्यामपूरयत् । वीरवासकसज्जानां गणैरप्सरसामपि ॥ ६१ ॥

अधिरुह्य रथं जैत्रं स बभौ तार्क्ष्यसंनिभम् । जिगीषितदिशाचक्रः चक्रपाणिरिवापरः ॥ ६२ ॥

दिव्यदुन्दुभिघोषेण पुष्पवर्षेण भूयसा । अशरीरिजयोक्त्या च तेन जज्ञे जितं जगत् ॥ ६३ ॥

स विष्णुरिव विक्रान्त्या बलिध्वंसोद्यतो बली । सुषुवे त्रिषु लोकेषु कीर्तिं त्रिपथगामिव ॥ ६४ ॥

ततो बुद्बुदफेनाभैः प्रचितां छत्रचामरैः । निनाय पृतनां प्राचीं गङ्गामिव भगीरथः ॥ ६५ ॥

पृतनासागरौघेन प्लावयन्सागराम्बराम् । वीरो वेतसवृत्तीनां न भङ्गमभिसंदधे ॥ ६६ ॥

महद्भिरपि तत्सैन्ये संपतद्भिस्सुहृद्बलैः । न वृद्धिरस्मवदृश्या वर्षतोयैरिवाम्बुधौ ॥ ६७ ॥

अशोभत पताकाग्रैरग्रहस्तैरनीकिनी । निर्दिश्य गणयन्तीव जेतव्यविषयाञ्जिजैः ॥ ६८ ॥

तमीदिवसयोस्तत्र पृथिव्याकाशयोरपि । समपद्यत तादात्म्यं सैन्यरेणुसमुत्थितम् ॥ ६९ ॥

असूचिमुखभेद्यं तदचन्द्रार्कप्रतिक्रियम् । रुरोध द्विषतां दृष्टिं रजसा जनितं तमः ॥ ७० ॥

अप्रतीपमरुत्क्षिप्तः परागः प्रसरन् पुरः । आसन्नविनिपातानां वैवर्ण्यमदिशद्द्विषाम् ॥ ७१ ॥

धूमकम्बलसान्द्रेण रेणुना गगनस्थली । नमन्तीं सैन्यभारेण शनैरनुजगाम गाम् ॥ ७२ ॥

पृथिवीं वर्धयन्तीव पृतना खण्डयन्त्यपि । परागैः पूरयामास खातं सगरजन्मनाम् ॥ ७३ ॥

ध्वजपल्लविता सेना शस्त्रपुष्पा परागिणी । बभौ चञ्चूर्यमाणेव मृत्योरुपवनस्थली ॥ ७४ ॥

सा नूनमनुकुर्वाणा सिन्धुपत्न्यौ सितासिते । कुटिलप्रतिकूलर्द्धिः कूलङ्कषगतिर्ययौ ॥ ७५ ॥

विश्वतः प्रसृतिस्तस्या बभूव बहुपद्धतेः । वाहवन्धनकीलानामपर्याप्तबहुद्रुमा ॥ ७६ ॥
अविच्छिन्नगुणांश्चक्रे निश्वासान्निजसेनया । हारानिव भुवश्शुद्धानग्रहारान् परार्पितान् ॥ ७७ ॥
अनाश्रमपदासन्नामभीषितकृषीवलाम् । अनैषीन्महतीं सेनामविरुन्धानगोपिनीम् ॥ ७८ ॥
स्वदेशादविशेषेण स्वीकृते शत्रुमण्डले । न योधा जगृहुस्तत्र किंचिदस्वामिसंमतम् ॥ ७९ ॥
विहारास्तस्य जन्येषु विमतानेव निघ्नतः । समं ददृशिरे देवैः तत्तज्जानपदैरपि ॥ ८० ॥
अदीनसत्त्वश्शत्रूणां दीनसंरक्षणव्रती । अन्वकम्पत धात्रीभिरुपनीतान् स्तनन्धयान् ॥ ८१ ॥
अदृष्टसैन्यरजसामबाणस्पर्शवेदिनाम् । पश्यन् क्वचिदमित्राणां स जिह्राय पलायनम् ॥ ८२ ॥
स मिथश्शौर्यसंघर्षादरातीनभिनिघ्नतः । पुनरुद्दीपयामास सत्कारेण गरीयसा ॥ ८३ ॥
क्रोधपावकदीप्तानां हेतीनां यदुपुङ्गवाः । विदधुस्तत्र वैरिस्त्रीबाष्पतोयेन सेचनम् ॥ ८४ ॥
निहतप्रतिमातङ्गदन्तत्सरुपरिष्कृतान् । द्विषतां मौलिशाणेषु खड्गान्मुहुरशातयन् ॥ ८५ ॥
शस्त्रधाराधरैस्तत्र विक्रमारण्यबर्हिणीम् । विपुले भुजशैलाग्रे वीरश्रियमनर्तयन् ॥ ८६ ॥
नियतं हेतयस्तेषां निपीते वह्निवारिणी । निदधुश्शत्रुनारीणां चित्तेषु नयनेषु च ॥ ८७ ॥
अलभन्त क्षणात्तेषां पुरतः परिपन्थिनः । धनुषा नमता स्वर्गं वपुषा तु वसुंधराम् ॥ ८८ ॥
गूर्जरान् पारशीकांश्च प्रागेव भृतकीकृतान् । अपश्चात्पदविन्यासान् अकरोदग्रयायिनः ॥ ८९ ॥
मध्यदेशं वशीकृत्य योगीव प्रथमं मनः । प्रत्यन्तबहिरक्षाणि त्याजितार्थानि सोऽकरोत् ॥ ९० ॥
गृहीतचरमाम्भोधीन् गरुत्मानिव जग्रसे । धन्विनस्तु रथोपेतान् विमुखान् भुजगानिव ॥ ९१ ॥
यदवस्तत्र निश्वासा यवनैः स्तनयित्नुभिः । शैला इव दधुर्भीमां शरवृष्टिमुदीरिताम् ॥ ९२ ॥
रक्तचन्दनदिग्धास्ते यशोभिस्स्रग्विणस्तदा । जयश्रीपरिरम्भार्थं नैपथ्यमिव भेजिरे ॥ ९३ ॥
कपिचूषिततालाभैः कृत्तैर्यवनमूर्धभिः । ददृशे कालभृत्यानां दत्तपिण्डेव मेदिनी ॥ ९४ ॥
पीते यवनसैन्याब्धौ तत्कोपवडवाग्निना । शकाद्याश्शरणं जग्मुः शङ्कातङ्केन सात्यकिम् ॥ ९५ ॥
प्रवालपल्लवास्तीर्णां रत्नपुष्पौघकर्बुराम् । विहारपदवीं मेने वेलामपरवारिधेः ॥ ९६ ॥
प्रचेतसाऽपि दुष्प्रापैः प्रवालमणिमौक्तिकैः । तं पोतवणिजस्तत्र प्रभूतैः पर्यतोषयन् ॥ ९७ ॥
निर्धूतनिगमांस्तत्र नैगमानपरान्तजान् । स वैद्य इव दुर्व्याधीन् दुर्जयानजयद्विभुः ॥ ९८ ॥
विहरन् वारुणीभाजा स वीरो विजयश्रिया । बभूव बर्बरस्त्रीणां परिदेवनदेशिकः ॥ ९९ ॥
उदनह्यन्त वार्ष्णेयाः कुन्तलान् समरश्लथान् । प्रवालैरपराम्भोधेरान्त्रैरिव समुद्धृतैः ॥ १०० ॥
ततो विलुलितम्लेच्छः पश्चिमोदधिवेलया । अनिलप्रेयसीमाशाममनुष्यपदं ययौ ॥ १०१ ॥
हारीतहरितैस्तत्र महार्घैर्मणिराशिभिः । गृहीतैरन्वगृह्णन्त तेन पोतोपजीविनः ॥ १०२ ॥

पश्चिमां दिशमाक्रम्य प्राङ्मुखं रथमास्थितम् । विपरीतगतिं सूर्यमुदीच्यास्तमजानत ॥ १०३ ॥

स कृष्णवर्त्मविहृतिः युगान्त इव संयुगे । अमित्रलोकमदहद्दीसहेतिगणोल्बणः ॥ १०४ ॥

अनभ्रविद्युत्प्रतिमास्सायकास्तस्य धन्विनः । अभवन् हूणनारीणामश्रुवर्षपुरस्सराः ॥ १०५ ॥

द्विषतो देवदृश्येषु रणरङ्गेषु दीव्यतः । ताण्डवं ग्राहयामास निपातितशिरोधरान् ॥ १०६ ॥

अपरस्परसापेक्षान्तूणीरप्रकाशकान् । अशंसत्प्रतियोधानप्यवधीरितजीवितान् ॥ १०७ ॥

महान्तो मण्डलं चेरुः मध्येप्रतिबलं द्विपाः । प्रलयोदन्वदावर्ते भ्रमन्त इव पर्वताः ॥ १०८ ॥

तत्र सैन्यरजश्चक्रे प्रतीचीरपि वाहिनीः । असमाहितबुद्धीनां चित्तवृत्तीरिवाविलाः ॥ १०९ ॥

तासमुक्तं पुनस्तत्र सिन्धुकाम्भोजयोषिताम् । अश्रुबिन्दुभिराबन्धि मौक्तिकस्तनमण्डनम् ॥ ११० ॥

अकृष्टपच्यघुसृणामच्छिन्नौघमहापगाम् । अधर्मक्लृपितारण्यामनघां भुवमन्वभूत् ॥ १११ ॥

अश्वीयखुरनिष्पिष्टभूधरक्षोदभूयसा । राजवीथीसमां चक्रे रजसा वालुकां नदीम् ॥ ११२ ॥

ग्रामण्य इ(णेरि)व तैस्तस्य सैनिकैरवरोधिताः । स्त्रियः पुरुषधर्माणः स्त्रीत्वमेवोपलम्भिताः ॥ ११३ ॥

बलेन महताऽऽस्कन्द्य मैनाकपितरं गिरिम् । प्रलयोदन्वदारोहमाकालिकमलम्भयत् ॥ ११४ ॥

सम्राजमिव शैलानां विश्वरूपमिव प्रभुम् । उत्तम्भनमिव व्योम्नः तं निदध्यौ सकौतुकम् ॥ ११५ ॥

श्वशुरं भूतनाथस्य स्कन्दमातामहं गिरिम् । प्रसूतिं सर्वरत्नानां पृथिवीधेनुतर्णकम् ॥ ११६ ॥

गृहीतास्त्याजितत्रासा मेनापतिवनौकसः । मार्गमादिदिशुस्तस्य वह्नेरिव समीरणाः ॥ ११७ ॥

तमारुह्य निरैक्षन्त जिघृक्षन्त इवान्धकाः । विकल्पितरवीन्द्वग्नीन् मेरुकैलासमन्दरान् ॥ ११८ ॥

ददृशे गगनं तत्र दिवाऽपि स्पष्टतारकम् । गौरीहारमणिप्रख्यैः गङ्गानिर्झरशीकरैः ॥ ११९ ॥

सुभगां किन्नरीणां च स्वगुणामोदमेदुराम् । गीतिं निशमयामासुः गजशार्दूलकर्षिणीम् ॥ १२० ॥

गुहासु यमिनां नेत्रे (मेने) सैन्यघोषमशृण्वताम् । शृण्वतामपि सिंहानां समं सामि न (नि)मीलितम् ॥ १२१ ॥

अपश्यत्तत्र दूरस्थमन्तिकस्थमिवोन्मुखः । कैलासं किन्नरेन्द्रस्य कीर्तिकन्दमिवोत्थितम् ॥ १२२ ॥

चमरान् सिंहशावांश्च गन्धनाभिमृगानपि । जगृहुस्तत्र वार्ष्णेयाः प्रियासंप्रीणनार्थिनः ॥ १२३ ॥

गुञ्जाहारभृतश्श्यामा बर्होल्लासितकुन्तलाः । प्रवालवसनाः प्रेक्ष्य जहसुश्शबराङ्गनाः ॥ १२४ ॥

शिखरांसपरिष्कारैः सैन्यद्विपमदैर्बभौ । कल्पितः क्ष्माभृतां नाथः कस्तूरीस्थानकैरिव ॥ १२५ ॥

श्रुत्वा गिरिगुहानूक्तं तत्सैन्यगजगर्जितम् । अपि सिंहाः पलायन्त वन्यद्विरदभेदिनः ॥ १२६ ॥

प्रदीप्तरत्नशिरसं प्रालेयपरिपाण्डुरम् । प्रदक्षिणं व्यतीयाय शेषयित्वा महीधरम् ॥ १२७ ॥

अथ कस्तूरिकामोदैरधिवासितभूधरान् । यशसाऽऽवास्य नेपालान्यदुवीरस्स्वदेशयन् (त्) ॥ १२८ ॥

पर्वतेन्द्रप्रतिनिधीन् प्रागुत्तरमहीधरान् । सुप्रतीकविषाणाग्रैरवैक्षत गवाक्षितान् ॥ १२९ ॥

द्वीपपर्वतदुर्गेषु द्विपसिंहनिभान्द्विषः । संग्राममृगयास्थायी जग्राह च जघान च ॥ १३० ॥
प्रभञ्जन इवाम्भोदान् पक्षीन्द्र इव पन्नगान् । प्राच्यान् प्रच्यावयामास पञ्चवक्त्र इव द्विपान् ॥ १३१ ॥
शोषितप्राच्यजलधिरशौर्यबाडबवह्निना । ससर्ज तद्वधूचित्तेऽप्यशोष्यं शोकवारिधिम् ॥ १३२ ॥
यदूनां हेतयस्तत्र शत्रुशोणितपाटलाः । प्रतापज्वलनज्वालासंपदं प्रतिपेदिरे ॥ १३३ ॥
कृपाणिकाभिः कुकुराः कम्पिताभिरकम्पयन् । द्विषतां तद्वधूनां च चित्तदक्षिणलोचने ॥ १३४ ॥
विजह्रुर्यादवास्तत्र विबुधस्त्रीवरप्रदाः । शराणां लक्ष्यदातारः शत्रुसंमतविक्रमाः ॥ १३५ ॥
(?)यादवास्तत्र शत्रूणां कृत्तेषून् नूनमप्रतीन् । अधिज्यधन्वा व्यकिरत् शिरोजातेषु सायकान् (?) ॥ १३६ ॥
(?)विक्रमप्रभवे तेषां विजयश्रीस्वयंवरे । बन्दीकृत्य द्विषश्चक्रुः स्वर्गयोषित्स्वयंवृतान् (?) ॥ १३७ ॥
रमापतिपदोत्पन्नां रत्नाकरपतिंवराम् । पुण्यां सरितमासीदत् पुरभिन्मौलिमालिकाम् ॥ १३८ ॥
स मेने जाह्नवीं यान्तीमर्थमेकमिवार्णवम् । प्रवाहैर्बहुधा भिन्नैर्भाषाभिरिव भारतीम् ॥ १३९ ॥
कृपाणधारातीर्थेन शोधयित्वा कृतागसः । त्रिदिवं प्रापयामास वङ्गांस्त्रिपथगान्तरे ॥ १४० ॥
विक्षिपन् भुवि निस्त्रिंशो वक्त्रपुष्पाणि वैरिणाम् । रणरङ्गनटस्यास्य सूत्रधार इवाभवत् ॥ १४१ ॥
सैन्यदन्तिमदोपेतैश्शत्रुस्त्रीबाष्पकज्जलैः । गङ्गां रविसुतां चक्रे यशसा तां च तन्मयीम् ॥ १४२ ॥
आत्तसारा द्विषस्तत्र मुक्तास्तेन महीयसा । अदृश्यन्त यथापूर्वं दन्तिमुक्तकपित्थवत् ॥ १४३ ॥
पृथुवीचिगणां तीर्त्वा पृथिवीसहजां नदीम् । बाधिताशेषगौडेन बलेनार्णवमार्दयत् ॥ १४४ ॥
विशन्तो वाहिनीं तस्य त्रिस्रोतसमिवापराम् । त्रिदिवं प्रत्यपद्यन्त प्रतियोधा निरागसः ॥ १४५ ॥
कुटिलान् पृतनीकृत्य स्वनामाक्षरभूषितान् । जङ्गमान् दर्शयामास जयस्तम्भान्महीतले ॥ १४६ ॥
शालीनिव सतस्त्रातुं तत्रतत्र प्ररोहतः । यवसौघनिभान् याप्यानुज्जहार यदूद्वहः ॥ १४७ ॥
प्रतापाग्निं पुरस्कृत्य भूयस्सागरवाससः । वेलावलयसंपन्नं करं जग्राह तत्र सः ॥ १४८ ॥
पुरन्दरसमः पूर्वं जित्वा पौरन्दरीं दिशम् । दीक्षितस्सत्परित्राणे दक्षिणाभिमुखोऽभवत् ॥ १४९ ॥
उपदीकृत्य सर्वस्वमुपसन्नयदूद्वहाः । प्राचीमविकलामृद्धिमुत्कलाः प्रतिपेदिरे ॥ १५० ॥
प्रहितानथ कालिङ्गैः पन्थानमुपरुन्धतः । रुरोध सिंहनादेन यदुसिंहः स सिन्धुरान् ॥ १५१ ॥
स तान् गैरिकरक्ताङ्गान् सप्तधा स्रुतनिर्झरान् । जङ्गमानिव विन्ध्याद्रीन् जगृहे गन्धहस्तिनः ॥ १५२ ॥
प्रतियुध्य परिश्रान्तान् गृहीत्वा गजयोधिनः । चक्रलिङ्गधरांश्चक्रे कालिङ्गान् किंकरीकृतान् ॥ १५३ ॥
स तेषामपि सामन्तानाहूतान् विन्ध्यदुर्गतः । दक्षान् द्विरदशिक्षायां चक्रे निजनिषादिसात् ॥ १५४ ॥
वैरिवारणमूर्धन्यैः मौक्तिकैर्लजितां गतैः । रणाग्निर्दर्शयामास व्यूढां तेन जयश्रियम् ॥ १५५ ॥
दारितद्विरदांस्तत्र सिंहानिव महाजवान् । ननन्द स्वभटान् दृष्ट्वा नखरश्रितमौक्तिकान् ॥ १५६ ॥

विपक्षान्भूभृतस्तत्र कुर्वता निर्विचेष्टितान् । देवो हरिहयस्तेन द्विरूपत्वमिवान्वभूत् ॥ १५७ ॥

अपर्युषितपानीयामनघस्रोतसं शुभाम् । गङ्गामिव विभक्ताङ्गीं प्राप गोदावरीं ततः ॥ १५८ ॥

पतिरक्षणतुष्टानां स्वगुणग्रथिताक्षरैः । आन्ध्रेश्वरपुरन्ध्रीणां संगीतैः प्रत्यनन्द्यत ॥ १५९ ॥

आद्यं द्रमिडदेशानां तुण्डीरमथ मण्डलम् । विवेश भूषितं यूपैः वेधसो वाजिमेधिकैः ॥ १६० ॥

क्षिप्तदोषः स तं देशं क्षीरसिन्धुगुणाधिकम् । शुद्धधर्मपरिष्कारं श्वेतद्वीपममन्यत ॥ १६१ ॥

परित्यक्तपथांस्तत्र स काञ्चीकटकत्यजः । आहूय स्थापयामास धर्म्यान् धर्मधुरंधरः ॥ १६२ ॥

प्रलोभयद्भिः(न्तीं) ललितैः ततः प्रथमलक्षितैः । दर्शनीयेषु चोलेषु दिदृक्षामन्ववर्तत ॥ १६३ ॥

अथ कन्यां कवेरस्य ददर्श कनकाश्रिताम् । अपदिष्टनदीरूपाममृतस्येव देवताम् ॥ १६४ ॥

उदारलहरीलास्यां ललितावर्तरासिकाम् । रसिकः प्रैक्षत नदीं रङ्गपर्यन्तनर्तकीम् ॥ १६५ ॥

रथसेतुनिरुद्धा सा रत्नाकरमनोरथात् । अवरुद्ध जगामेव सह्यस्य पितुरन्तिकम् ॥ १६६ ॥

दक्षिणापथगङ्गायाः स तस्या दिव्यसंपदः । ददौ रविसुताश्लेषं दानवर्षेण दन्तिनाम् ॥ १६७ ॥

जननीमिव तां लक्ष्म्याः पाथोनिधिपतिव्रताम् । नियमैरुचितैर्भेजे निगमख्यातवैभवाम् ॥ १६८ ॥

यशोभिस्सह चोलानाम् इक्षुनिष्यन्दसंमितम् । पयस्सह्यपयस्विन्याः पपुर्यादवयूथपाः ॥ १६९ ॥

जहसुर्जागरूकास्ते जङ्घालगुणशालिनाम् । दृष्ट्वा द्रमिडयोधानामवस्कन्दमनोरथम् ॥ १७० ॥

त्रिविष्टपनिभांस्तत्र दृष्ट्वा जनपदान् बहून् । अचमत्कारमन्येषु भूमिभागेष्ववधत्त सः ॥ १७१ ॥

तत्र दर्पममित्राणां मित्राणामपि साध्वसम् । अखण्डयदपर्यायादत्याखण्डलविक्रमः ॥ १७२ ॥

रङ्गमात्मभुवस्तत्र रम्यनिर्माणमातृकाम् । अनन्तपीठिकारूढमभ्यर्च्य मुदितो ययौ ॥ १७३ ॥

दिवाऽपि दीपसापेक्षं गहनं संश्रितान् गजैः । स चोरांश्चूर्णयामास चोलपाण्ड्योपघातिनः ॥ १७४ ॥

रम्यपत्तनसंबाधां रत्नसैकतशोभिनीम् । व्यलोकयत संप्रीतो वेलाविपिनपद्धतिम् ॥ १७५ ॥

मैनाकमहसा दीप्तं सेतुसीमन्तितोदकम् । दमितं रघुवीरेण ददर्शाब्धिं स दक्षिणम् ॥ १७६ ॥

परिखां प्रेक्ष्य लङ्कायाः पयोधिं प्रजहर्ष सः । ताराभूषितदेहस्य त्रिदिवस्येव दर्पणम् ॥ १७७ ॥

सहसोत्पततां तत्र धन्विनो लघुविक्रमाः । उदधिं दन्तिनक्राणां कुम्भरत्नैरपूरयन् ॥ १७८ ॥

गगनं च निरालम्बं गम्भीरं च महोदधिम् । वीक्ष्य ते बह्वमन्यन्त हनूमन्तं गतागतम् ॥ १७९ ॥

स भेजे सरितां पत्युः पुलिनं वृष्णिपुङ्गवः । आसीदविधवा गङ्गा प्रसवे यत्र राघवे ॥ १८० ॥

व्यलोकत च विस्मेरो लङ्कागोपुरमुत्तरम् । रघुवीरशरव्रातपरिकल्पितजालकम् ॥ १८१ ॥

परिभूतरवस्तस्य सैन्यघोषेण सागरः । अधिकं क्षोभमापन्नः त्रासमित्र इवाभवत् ॥ १८२ ॥

तमालान् प्रतिमातङ्गत्रासादालानमण्डलान् । ममृदुर्नूनमावार्य मदान्धा गन्धसिन्धुराः ॥ १८३ ॥

नलसेतुं ततो नत्वा दृष्टमुक्तानदीमुखः । वीरो विश्रमयामास दुर्निवारां वरूथिनीम् ॥ १८४ ॥
कृतव्यावर्तनास्तत्र केतकीरेणुरूषिताः । द्विषः स्कन्धांश्च दुधुवुः हयास्तुमुलहेषिताः ॥ १८५ ॥
धनुषा शार्ङ्गभीमेन सामि विस्फारितेन सः । लज्जितोदधिघोषेण लङ्काद्वीपमकम्पयत् ॥ १८६ ॥
प्रतापदूतवशगाः प्राज्यरत्नोपहारिणः । अजीवन् यदुसिंहस्य पादमाश्रित्य सिंहलाः ॥ १८७ ॥
महतीमुपदां तेषां द्विपरत्नादिशालिनीम् । स संगृह्य पुनश्चक्रे न मनः सेतुबन्धने ॥ १८८ ॥
द्विरदान् सिंहलेन्द्रस्य द्विचतुर्दन्तशोभिनः । पोतभूतांस्त्रिकूटस्य पोतानीतानमन्यत ॥ १८९ ॥
यशोरत्नाकरस्तस्य बभौ पाण्ड्यसमर्पितैः । सैन्यकञ्चुकपर्याप्तैः मुक्तापुलिनमण्डलैः ॥ १९० ॥
सोमवंशभुवां तत्र भूभृतां यदुपुङ्गवः । सयूथ्यभावमुद्भाव्य शङ्काज्वरमपानुदत् ॥ १९१ ॥
स मारुतिपदन्यासैरञ्चिताग्रामधित्यकाम् । प्रभुः प्रदक्षिणीचक्रे महेन्द्रस्य महीभृतः ॥ १९२ ॥
उपभुक्ता बभौ तेन मलयस्य वनस्थली । सैन्यसंमर्दसंभूतैरेलाचन्दनसौरभैः ॥ १९३ ॥
पतगेन्द्रध्वजत्रासात् भ्रष्टकुण्डलितात्मनाम् । जगृहुर्यादवास्तत्र फणारत्नानि भोगिनाम् ॥ १९४ ॥
पृतनां तस्य संप्रेक्ष्य प्रघ्नावितसागराम् । मानमात्मनि तत्याज मलयाश्रमतापसः ॥ १९५ ॥
मरुतस्तत्र नागानां मृदितैलासुगन्धयः । चन्दनद्रुमसक्तानां प्रीतिकोपकृतोऽभवन् ॥ १९६ ॥
पटीरस्कन्धविषयाः तत्र तेषां भुजङ्गमाः । अभजन्त फणारत्नैरवातक्षेपदीपताम् ॥ १९७ ॥
मुक्ताभरणभूयिष्ठा रक्तचन्दनराजिता । चकास यादवी सेना सतारेव पितृप्रसूः ॥ १९८ ॥
निदाघमिव पर्जन्यो निरासे सात्यकिः परम् । प्रयुक्तैरग्रतो नागैः प्रावृषेण्यैरिवाम्बुदैः ॥ १९९ ॥
युगपत्प्रत्यविध्यन्त युद्धे तस्य शरैर्द्विषः । अपाङ्गैश्च सुरस्त्रीणामसितोत्पलमेचकैः ॥ २०० ॥
शस्त्रकेलिं परित्यज्य स्वकान्ताकेशभङ्गुरम् । जगृहुः केरलास्तत्र जैत्रमस्त्रमिवाञ्जलिम् ॥ २०१ ॥
अदूरावस्थितो रामः तत्र वृष्णिवरूथिनीम् । शशङ्के विस्मयाविष्टः सप्तार्णवसमाहृतिम् ॥ २०२ ॥
भुग्नभागस्ततः सह्यः तदाक्रमणयन्त्रितः । प्रणिनंसुरिवाबोधि पर्यस्तशकटोपमः ॥ २०३ ॥
अग्रस्कन्धेन गोकर्णं महेन्द्रमपि मूलतः । अवस्कन्द्य यदुश्रेष्ठः स्कन्धावारं न्यवीविशत् ॥ २०४ ॥
जित्वा सह्याश्रितं वीरं जामदग्न्य इवापरः । दूरमुत्सारयामास द्विषद्बलमहार्णवम् ॥ २०५ ॥
चारुचन्दनसपन्नां शैलस्तनमनोहराम् । बुभुजे दक्षिणामाशां मौक्तिकाकरमेखलाम् ॥ २०६ ॥
तत्र वेलानिलोद्धूतराजतालरवान्वितम् । संगीतं साधु शुश्राव भुजङ्गस्त्रीमुखोदितम् ॥ २०७ ॥
चोलकेरलपाण्ड्यानां पश्यन्ननुगतिं प्रभुः । चकार पुनराधानं धर्म्यं हुतभुजामपि ॥ २०८ ॥
कालदंष्ट्राकरालाभिरुल्काभिरिव हेतिभिः । दुर्मदद्विरदोदग्रान् त्रासयामास तौल्वान् ॥ २०९ ॥
खेटकर्परगूढाङ्गान् कीलयित्वा शरैर्द्विषः । स्थलकूर्मैरिवाकीर्णं चकार रणभूतलम् ॥ २१० ॥

शरैरभ्यर्चितास्तेन कोङ्कणास्समराङ्गणे । पुष्पवृष्टिभिरानर्चुस्तमेव त्रिदशीकृताः ॥ २११ ॥
कुपिताः कोङ्कणस्त्रीणां गण्डूषमधुगर्भितान् । बभञ्जुरमितामोदान्बकुलान्वृष्णिकुञ्जराः ॥ २१२ ॥
प्रमादानिव तान् सप्त देशानतिपतन् प्रभुः । स ममर्द महाराष्ट्रसैन्यं दक्षिणभागतः ॥ २१३ ॥
अपश्यदृश्यमूकान्ते शेषमौलिमणिप्रभाम् । रामसायकरन्ध्रेण निःसरन्तीं नभःस्पृशम् ॥ २१४ ॥
कामक्रोधाविवास्कन्द्य सह्यविन्ध्यौ समाहितः । विजिग्ये विषमान् तत्र विषयान् सत्त्वमास्थितः ॥ २१५ ॥
चापघोषेण निर्भिन्नचक्रवालाद्रिसन्धिना । कुञ्जलीनान् द्विषस्तत्र दिवाभीतानभीषयत् ॥ २१६ ॥
अवन्ध्यतपसा विन्ध्यः स्तम्भितः कुम्भजन्मना । यदुपुङ्गवमातङ्गैर्वर्धमान इवाभवत् ॥ २१७ ॥
सूर्यैरोधितरुच्छन्नामसूर्यंपश्यवीचिकाम् । सोमवंश्याः सुधां तत्र पपुः सोमसमुद्भवाम् ॥ २१८ ॥
तेषां विहरतां तत्र शिञ्जिनीबद्धरावणाम् । कार्तवीर्यजलक्रीडां कथयन्ति स्म तापसाः ॥ २१९ ॥
नगरीं हेहयेन्द्रस्य कारार्पितदशाननाम् । नलादीनां च शिथिलां सनिर्वेदमदर्शयन् ॥ २२० ॥
रथवाजिपदक्षुण्णविन्ध्यमस्तकरेणुभिः । रेवामाचामयामास रिपुस्त्रीवाप्पवर्धिताम् ॥ २२१ ॥
ववृधे समरस्तत्र सुभगस्वर्गसंक्रमः । सिद्धगन्धर्वयूथानां चित्तताण्डवदेशिकः ॥ २२२ ॥
स्फुलिङ्गैः खङ्गनिष्पिष्टदन्तदम्भोलिसंभवैः । आसीद्द्विरदमेघानामचिरद्युतिकल्पना ॥ २२३ ॥
सव्यालमृगसङ्कीर्णा रम्यतुङ्गरथद्रुमा । विससर्प चमूस्तत्र विन्ध्यवन्येव जङ्गमा ॥ २२४ ॥
तालद्वयसजङ्घोग्राः कुम्भैरुत्तम्भिताम्बराः । गर्जितैस्त्रासयामासुः गजा वनमतङ्गजान् ॥ २२५ ॥
बलयन्त्रणया तत्र गृहीतैर्विपिनद्विपैः । व्यवर्धयत तां सेनां विन्ध्यपादैरिवोन्नतैः ॥ २२६ ॥
यूथैर्द्विरदशैलानां कनत्कदलिकावनैः । अन्तरं पूरयामास विन्ध्यनीहारभूभृतोः ॥ २२७ ॥
अरातिवनितानेत्रैः अश्रुधाराधरैरिमाम् । वीरो वसुमतीमित्थं विदधे देवमातृकाम् ॥ २२८ ॥
धर्मयूपनिभैस्तस्य जयस्तम्भैः समन्ततः । प्ररूढाद्भुतरोमाञ्चा प्रत्यभासत मेदिनी ॥ २२९ ॥
जिताशेषविपक्षस्य बद्धमुक्तावभासिनी । अभवत् ककुभां तस्य कीर्तिः श्रवणभूषणम् ॥ २३० ॥
इति ग्राह्यकराश्चक्रे हरितो हरितोषकृत् । वीरस्सुरभिणा स्वेन यशसा वासिताम्बराः ॥ २३१ ॥
हृतसर्वस्वदीनानां व्रीडामपनुदन्निव । अदिशत्क्षौममाशानां यशोभिर्हंसलक्षणैः ॥ २३२ ॥
स चक्रवत्परिक्रम्य क्षमाचक्रमरिंदमः । क्षपयित्वा रिपून्सर्वान् शौरिपार्श्वं पुनर्ययौ ॥ २३३ ॥
सैन्यसिन्धुपथस्तस्य स्थलीशोषितकण्टकः । विदधे विस्मयोन्निद्रप्रीतिकण्टकितां भुवम् ॥ २३४ ॥
तमेवमखिलामाशां परिक्रम्योदये स्थितम् । प्रद्योतनसमं पौराः प्रहृष्टाः प्रत्युपासत ॥ २३५ ॥
सैन्यघोषसमाहूतौ ततो हरिहलायुधौ । तमभ्याजग्मतुर्दूरादुग्रसेनपुरोगमौ ॥ २३६ ॥
ददृशे सात्यकिस्तत्र राममुख्यैस्सराजकः । अन्यैस्सह दिशापालैराखण्डल इवापरः ॥ २३७ ॥

अभिवन्द्य स तान् वन्द्यानभिव्यक्तपराक्रमः । तदनुप्लवभावेन प्राविशत् द्वारकां पुरीम् ॥ २३८ ॥
प्रस्थितौ परिमेयानि पश्चादुपचितानि सा । जगृहे यदुसैन्यानि जगन्तीव हरेस्तनुः ॥ २३९ ॥

अष्टासु दिक्षु विभवैरुपसंगृहीतैः यक्षास्पदप्रहसिनी यदुराजधानी ।
सत्यानुभाववसुदेवसुतप्रसक्त्यै संभूतदिक्पतिविभूतिरिवाबभासे ॥ २४० ॥
अभ्यर्च्य पूर्वविभवादधिकैः प्रदिष्टैः नाकाधिपानिव नवोपहृतान्नरेन्द्रान् ।
धर्मानुपालननियोगनिरूढचित्तान् प्रास्थापयत् प्रतिदिशं प्रथमो यदूनाम् ॥ २४१ ॥
मणिमकुटसहस्रैर्वासुदेवस्य भूपाः पदसविधनिषण्णां पादुकामर्चयित्वा ।
प्रतिययुरुपलब्धैः पारिजातप्रसूनैः सुरभयितुमुपेत्य स्वावरोधान् प्रसाद्यान् ॥ २४२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये द्वाविंशः सर्गः ।

## २३. त्रयोविंशः सर्गः

अथाधिकारच्यवनाय इन्द्राः पञ्चाभवन् पाण्डुसुताः पृथिव्याम् । जयार्थिनस्ते जगदेकनाथं प्रपेदिरे सत्त्वधनास्सदाराः॥
तमोपहैस्तत्त्वविदामृषीणां वाक्यैस्त्रिवेदीमनुसञ्जिहानैः । कृष्णं यथावत्कृतिनो विदन्तः तस्याभवन् प्राणसमास्सखायः ॥
तदाश्रयास्तत्प्रणिधेयकृत्यास्तेनैव नाथेन सदा सनाथाः । अपारयन् योगिभिरप्यजय्यान् बाह्यान्तरान् जेतुमरातिवर्गान् ॥
प्रतिक्रियाः प्राग्भवदुष्कृतानां प्राणोपरोधेऽपि निरुद्धपापाः । धीरास्त्रिलोकीसुहृदः प्रसादात् विपाकरम्या विपदः प्रसेहुः ॥
अलङ्घयन्विश्वपतेः प्रसादात् वृत्तिं पराचीमिव वीतरागाः । अरातिभिश्छद्मविधिप्रवीणैरापादितामग्निजलादिपीडाम् ॥ ५ ॥
कलिङ्गनीतिं कलहैकतानां कर्णं च पार्थेन निबद्धवैरम् । आस्थाय दुःशासनपूर्वजन्मा धर्मोत्तरान् जेतुमियेष पार्थान् ॥
स राजसूयक्रतुधर्मपत्नीं भीमेन गाण्डीवभृता च मान्याम् । द्यूतच्छलात्प्रापितदासभावां साध्वीं मुधा पर्यभवत्सभायाम् ॥
अनन्यनाथां स्थितिमाप्नुवत्याः नाथः स्वसंबोधननामगर्भम् । शुश्राव दूरान्तरितोऽपि शौरिः प्राक्रोशनं पार्थपतिव्रतायाः ॥
मिथ्याविचारान्मिषतां गुरूणां प्रभुस्सतां पाण्डवधर्मपत्नीम् । दुश्शासनव्याकुलितान्तरीयामक्षय्यकौशेयवतीमकार्षीत् ॥९
अवाप्तुकामाः प्रबलैरमित्रैरक्षच्छलेनापहृतं स्वराज्यम् । निक्षिप्तकर्तव्यभरा बभूवुः सत्त्वाधिकास्सात्वतयूथनाथे ॥ १० ॥
स्वातन्त्र्यगन्धद्विरदाङ्कुशेन स्वेनैव शीलेन विनीयमानः । अनन्यलभ्यं प्रतिलम्भितोऽभूत् प्रभुः स्वयं पाण्डवदूतभावम् ॥
स तादृशीमाद्रियत त्रिधामा प्रेष्यक्रियां प्रेषितदेववृन्दः । ननु प्रभूणां निरपेक्षभूम्नां प्रसाधनं भक्तजने गुणत्वम् ॥१२॥
अपि प्रभुत्वानुगुणक्रियाभ्यः श्लाघापदं तत्त्वविदां बभूव । अनन्यतन्त्रस्य विभोस्तदेतन्नाथोचितं नन्तृषु पारतन्त्र्यम् ॥
तपस्यतः पुत्रसमुद्भवार्थे मार्गागतं मोचयतः पिशाचम् । अजन्मनो जन्मभृतश्च शौरेः स्वामित्वसंवादि बभूव दूत्यम् ॥
सरोषसीरायुधहेतिशक्त्या साचीकृतां कौरवराजधानीम् । अद्यापि गङ्गासलिलप्रवाहे प्रक्रान्तपातामिव संप्रपेदे ॥ १५ ॥

खद्योतवद्दर्शितखञ्जदीप्तीन् प्रज्ञादृशो भूमिभृतस्सभायाम् । प्राप्तोदयो भानुरिव त्रिधामा प्रच्छादयामास कुरून्स्वधाम्ना ॥
तदागमेन प्रतिपन्नहर्षाः तद्दर्शनेनाहितपारवश्याः । अतर्कितप्रस्मृतवैरबन्धाः वृत्तिं द्विषन्तो विदधुर्यथार्हम् ॥ १७ ॥
उलूखले भक्तगु(ग)णे च बद्धं गुणोत्तरे गोपवधूस्तने च । इयेष बन्धुं जगदेकबन्धुं दुर्योधनो दुस्त्यजमृत्युपाशः ॥ १८
प्रकाशयन् किंचिदिवाप्रमेयः प्रभावमात्मीयमनन्यवेद्यम् । मुहुः प्रतीपाचरणोत्सुकानां मोघाशतां मूढधियामकार्षीत् ॥
स्ववेदितं संसदि धार्तराष्ट्रे सन्धित्सतो धर्मसुतस्य वाक्यम् । अनाददाने सुरभिन्निवृत्तः सानुग्रहो विग्रहमन्वमंस्त ॥
नरांशजुष्टेन धनञ्जयेन रथीभुवा सारथिनाऽऽत्मना च । धनुर्भृता तोत्रभृता च भेजे पृथक्त्वमैक्यं च यथाप्रमाणम् ॥
रथाधिरूढं च रथं च रक्षन् यथार्थतो दर्शयति स्म यन्ता । त्वय्यन्तचिन्तानिरपेक्षमीशः तत्तादृशं तत्त्वविभागमाद्यम् ॥
पुरस्स्थिते गोप्तरि विश्वहेतौ पश्चादवस्थायिनि तत्प्रवर्त्ये । अनन्ययोगात्प्रणवप्रवृत्तिं बभार वेद्यां स रथः प्रतीतेः(तः) ॥
प्रसुर्विभौ प्रग्रहतोत्रपाणिः कालात्मना भावितपाशदण्डः । यदा तदा देवगणेन मेने शान्तं बलं शान्तनवप्रधानम् ॥
धुरन्धरः स्वर्गनिकेतनानां धुर्योत्थितैर्धूसरितो रजोभिः । रराज मध्ये रथयूथपानां गोष्ठे पशूनामिव गोपवेषः ॥ २५ ॥
समुद्रसङ्घातनिभे नृपाणां सैन्यद्वये संयति संप्रवृत्ते । अस्थानकारुण्यवशान्निवृत्तं धनञ्जयं वीतशुचं वितेने ॥ २६ ॥
फलादपि स्वादुतमप्ररोहं प्रोत्साहने सख्युरिवोद्यतस्सः । जगद्धितार्थाय जगौ दयावानन्यैरविज्ञेयमनन्यधर्मम् ॥ २७ ॥
चिरन्तनस्नेहदयादिमूलं चिन्तार्णवं निस्तरतो दुरन्तम् । किरीटिनः केशवसूक्तिरासीत् कालोचिता काचन पोतपात्री ॥
अभङ्गुरैर्धौतफलानुषङ्गाद्विद्याशरैर्विश्वगुरोरुपात्तैः । विवेकधन्वा विषमानजैषीदन्तःस्थितान् जिष्णुररातिसङ्घान् ॥ २९ ॥
उपघ्नभूतां श्रुतिवल्लरीणामुपास्त तुष्यन्नुपदेशमुद्राम् । नखांशुभिः क्षिप्ततमःकलङ्कां नाथस्य पार्थो नतपूर्वभागः ॥३०॥
विभक्तसामान्यविशेषधर्मा प्रादुर्बभूवोपनिषत्प्रमोर्या । स एव तां व्यासमुनिः समीचीं पर्यग्रहीद्भारतवेदवक्ता ॥ ३१ ॥
अभञ्जनीयां परधर्मसक्तामनश्वरीं भारतसूर्यदीप्तिम् । विदुश्श्रुतीनामनघां वयस्यां गीतामसंमूढजनाविगीताम् ॥ ३२ ॥
कपिध्वजस्तस्य विभोरपश्यत्तदर्पितं चक्षुरवाप्य दिव्यम् । विरिञ्चपूर्वैरपि दुर्निरीक्षं विश्वाश्रयं रूपमशेषमूर्तेः ॥ ३३ ॥
तस्मिन्नभिव्याप्तसमस्तलोके स तत्स्वरूपेण विकल्प्यमाने । विडम्बितान् गोपुरधारिबिम्बैः देवान्विभोरैक्षत दिव्यदेहे ॥
प्रख्यातदीक्षं प्रणतार्तिभङ्गे पार्थस्तदा दैत्यरिपुं प्रपन्नः । विनाशयामास बलं रिपूणां विपत्प्रतीकारपरेण सख्या ॥ ३५ ॥
स्वहस्तपद्माञ्चिततोत्रपाशः स्वच्छन्दलीलासहधर्मचारी । गतागतैरप्रतिमैस्स चक्रे जयश्रियो जैत्ररथेन डोलाम् ॥ ३६ ॥
सविस्मयस्संयति सव्यसाची तत्तादृशा सारथिना समेतः । मनोजवानां निजसायकानामग्रेसरं स्यन्दनमन्वपश्यत् ॥३७॥
यथा नियच्छत्ययमिन्द्रियाश्वान् जीवाश्रये देहरथे निबद्धान् । तथाऽर्जुनस्यन्दनधुर्यनेता बभूव नान्येन निदर्शनीयः ॥
यदेकदेशे निखिलं तदन्यत्तद्देहभागेषु च संविभक्तम् । रथैकदेशे तमवेक्ष्य पार्थः प्राबुद्ध तं सारथिमप्रतर्क्यम् ॥३९॥
निवर्तितं वैरिजनोपमर्दात् न्यस्तं रथे चक्रमुपाददानः । नतप्रतिज्ञानुपरोधहेतोरात्मप्रतिज्ञामजहात्स्वतन्त्रः ॥ ४० ॥
द्विषत्प्रयुक्तं दुरपोहमस्त्रं भुजान्तरालेन विभुः प्रतीच्छन् । विधाय वैकल्पिकवैजयन्तीं प्रच्छादितं प्राणयति स्म पार्थम् ॥
निवेशितां तस्य पदे च पूजां निशाम्य गङ्गामिव चन्द्रमौलौ । अनन्यसामान्यममंस्त सख्युः सङ्कोचवैदेशिकमीश्वरत्वम्॥

दिवाकरेऽनस्तमितेऽपि (ति)गाढं तमस्सृजन् तामसमोहनार्थम् । प्रपन्नरक्षाप्रतिपन्नदीक्षः सत्याभिसन्धं विदधे सखायम् ॥
सुरैरशेषैरपि जातरोषैस्स दुर्जयान्भीष्ममुखान् जिगाय । सहायशक्त्या युधि सव्यसाची किं दुष्करं केशवमाश्रितानाम् ॥
स्वापः किमासीदथवेन्द्रजालं बभूव गन्धर्वपुरी किमेषा । इतीव शङ्कां विदधे प्रलीना पताकिनी पाण्डवकौरवाणाम् ॥
आक्रुष्टदेवासुरसंपरायैरोजस्विनां शस्त्रभृतामुदन्तैः । प्रायस्तदा प्रत्यवहारलीलामाकालिकीं विश्वभुगन्वभुङ्क्त ॥ ४६ ॥
जिघांसुरष्टादश संपतन्तीरक्षौहिणीरद्भुतभीमरूपाः । स्वतन्त्रयामास मिथः प्रतीपान्सूत्रावसक्तानिव दारुमर्त्यान् ॥ ४७ ॥
कृषीवलः स्थावरजङ्गमानां क्षेत्रे कुरूणां समकालपाकान् । अनीकशालीन् भुजशालिवर्गैः फलोपपन्नान् प्रभुरित्यलावीत्
निस्तीर्य संग्राममहासमुद्रं संसारपोतेन परेण सख्या । धनञ्जयस्तत्पदमेव भेजे निर्धूतनीहारदिवाकराभः ॥ ४९ ॥
द्रौणिस्तदा सौप्तिकमाददानः कृपेण सार्धं कृतवर्मणा च । हताहितैः पाण्डुसुतैरवाप्तं सैन्यावशेषं शमयांबभूव ॥ ५० ॥
इत्थं दशाष्टौ च निपात्य भूमावक्षौहिणीरद्भुतभीमरूपाः । सतां पतिः सत्त्वसमृद्धियोगादुल्लाघितामातनुतेव पृथ्वीम् ॥
पराश्वविस्रंसितमुत्तरायाः पद्मासनाद्यैरपि पूजितेन । गङ्गाधरण्योः प्रभवेण गर्भं पस्पर्श पादेन परावरेशः ॥ ५२ ॥
विप्लोषितं द्रौणिशरेण बालं संजीवयन् पादरजःप्रभावात् । वधूकृतक्षुद्रशिलाविशेषं रामानुजो राममिवान्वकार्षीत् ॥५३॥
तस्य श्रुतिश्रेणिशिरोधृतानां स्पर्शः प्रजेशादिभिरीप्सितोऽभूत् । परीक्षिदुत्थानपरीक्षितानामवच्छिदामङ्घ्रिरजःकणानाम् ॥
विभुः स्वसंकल्पहतान् विनिघ्नन् धर्मैकतानेन धनञ्जयेन । प्रतोदसन्दंशिकयोदहार्षीत् पाञ्चालकन्यापरिभूतिशल्यम् ॥
अजस्तदानीं द्रुपदोद्भवायाः कालस्य दीप्तामिव खड्गरेखाम् । विपक्षसंहारमहाभुजङ्गीं वेणीं प्रियैस्संयमयांबभूव ॥ ५६ ॥
पितामहाय प्रततान पार्थः शरप्रयुक्तं शयनं यदग्र्यम् । योगासनं योजितचित्तधैर्यं तदेव पर्यासगुणं तदाऽऽसीत् ॥५७॥

विन्यस्य धर्मतनये विजयाधिकारं सख्यार्जुनेन यशसेव धनुर्धराणाम् ।
दध्मौ स दैत्यमथनो युधि पाञ्चजन्यं वृष्ण्यन्धकादिपरिशेषितभूमिभारः ॥ ५८ ॥

प्रत्यानिनाय रथमात्तजयः स जन्यात् धन्यावलोकनधनञ्जयदर्शनीयः(म्) ।
सारथ्यसंविदवधीरितहेतिजुष्टः सेनापरागपरिधूसरकुन्तलश्रीः ॥ ५९ ॥

आलिङ्ग्य गाढमवगाढरसं रणाब्धौ वीरव्रणैः कृतविभूषणमिन्द्रसूनुम् ।
अन्यावतारपरिकल्पितकेलिलोभादैक्यं निनाय निजमंशमिवान्यनिष्ठम् ॥ ६० ॥

रणभुवि शरतल्पे लीलया शायितेन स्वपदसमुदितायाः सूनुना सिद्धसिन्धोः ।
अनतिचिरविलम्बादाप्तुकामं धरित्रीं कलिमिव शमयिष्यन् ख्यापयामास धर्मान् ॥ ६१ ॥

अप्रत्यूहितसार्वभौमविभवैरभ्यर्चितः पाण्डवैः प्रत्यावृत्तिमहोत्सवेन मुदितां प्राप्तः पुरीं द्वारकाम् ।
प्रत्यक्षं प्रथयांबभूव विहरन् प्रीतः प्रियाभिः समं शुद्धः सामपदागमैरधिगतां स्वाधीनतां श्रीपतिः ॥ ६२ ॥

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये त्रयोविंशः सर्गः ।

# २४. चतुर्विंशः सर्गः

अथ निजविभवादजातशत्रौ प्रशमितशत्रुबले निवेश्य भूमिम् ।
परिचरणफलं प्रभुः प्रयच्छन्नमितगुणाभिररंस्त वल्लभाभिः ॥ १ ॥
ऋतुविधिनियतोऽप्यकर्मवश्यः परिचितकामरसोऽपि वीतरागः ।
नगरवसतिरप्यशेषवासः कथमिव केन विभुः स वर्णनीयः ॥ २ ॥
अनुगमितमिदं स्वदाररक्षामनघमनोभवतन्त्रमाननीयम् ।
निरुपधिकरसस्य नेतुरासीत् नृपतिमहर्षिभिरञ्चितं चरित्रम् ॥ ३ ॥
श्रुतिशतमहिते पदे परस्मिन् सितजलधौ रविमण्डले च सिद्धाम् ।
वहुमतिमतिशय्य सा बभासे नरकरिपोरवरोधभूमिरग्रया ॥ ४ ॥
निधिगणमुखवान्तनिष्कराजिः प्रचितगुणा मणिभिस्स्यमन्तकाद्यैः ।
प्रमुदितमहिषीगणेन चक्रे यदुनगरी विभुना निवासभूमिः ॥ ५ ॥
अविकलविभवस्य विश्वमूर्तेरधिवसनं यदुवीरराजधान्याम् ।
अनुदिनमनपायिनीं प्रतिष्ठामभिलषतामनुचिन्तनीयमासीत् ॥ ६ ॥
सह मुनिभिरुपास्त धर्ममाद्यं व्यवहरणानि ददर्श वेदविद्भिः ।
अरमत च वधूजनैर्यथार्हं बहुतनुरक्रमतो विचित्रशक्तिः ॥ ७ ॥
अपि युगपदवाप्तनैकदेहैरुपनतयोगबलैस्स्वकर्मनिघ्नैः ।
धृतबहुवपुषा जगद्विधाता जितकरणेन तु भुज्यते तदर्थः ॥ ८ ॥
यदुपतिरधिरूढचन्द्रशालः सह दयिताभिरनन्यमानसाभिः ।
जलनिधिमभितः प्रदर्शयंस्ता. निजमिव धाम निवेदयांबभूव ॥ ९ ॥
निजपदमनपायमाश्रितानां प्रभुरपवर्गदशामिव प्रयच्छन् ।
अमितबहुगुणामनन्यलभ्यामतनुत कामपि संपदं प्रियाणाम् ॥ १० ॥
स्वयमुदवमिते स्ववासधन्ये त्रिषु भुवनेषु समामिवाद्भुतानाम् ।
अतनुत समवायमात्मयोगात् अतिशयिनीमथवा विभुस्समृद्धिम् ॥ ११ ॥
विधिसदनमुखेष्वदृष्टपूर्वां प्रथितपरस्परसंमि(म)तिं समृद्धिम् ।
यदुपतिदयितागृहेषु पश्यन् मुदमभजद्भुवि नारदो मुनीन्द्रः ॥ १२ ॥
ललितरुचिषु कल्पवृक्षपोतैः उपवनराजिषु तस्य सञ्चरिष्णोः ।
अदधुरवयवैर्मुदं मुरारेः अनुकृतपुष्पफलादिकैस्तरुण्यः ॥ १३ ॥

अधिगतकुसुमावचायलीलः प्रमदवनानि विभूषयन् स्वधाम्ना ।
प्रजनितमदनो मनस्विनीभिः गुणसुरभिः सुरभिः स्वयं स मेने ॥ १४ ॥
परिपणमिव मन्मथोत्सवानां प्रथमविकस्वरपद्मदर्शनीयम् ।
अनुदिनबहुविभ्रमं वधूनामभिनवयौवनमन्वभुङ्क्त नाथः ॥ १५ ॥
अमृतमयपयःपरिप्लुतानां विषमगुणेषु विहारवापिकानाम् ।
कमलकुवलयादिषु प्रियाणां मुखनयनस्मितकान्तिमभ्यनन्दत् ॥ १६ ॥
अवितथमहिमा निजप्रसादादनघमनोरथतोषितासु तासु ।
स्वपरिजनतया सुरैर्नियुक्ता निरदिशदप्सरसो निदेशभाजः ॥ १७ ॥
बहिरुपनगरं वनानि दृष्ट्वा सह यदुभिस्समये निवर्तमानम् ।
ददृशुरधिगवाक्षमेकचित्ता रथतुरगादिषु रामपश्चिमं तम् ॥ १८ ॥
विधिवदनुविधाय देवयात्रां प्रतिपुरवीथिपरिक्रमेण दृश्यम् ।
पतिमनुददृशुस्तमेव दूरादचरमदेवमनन्यदेवतास्ताः ॥ १९ ॥
बहुविधमुपहारजातमर्घ्यं सुरपतिभिः स्वयमाहृतं मुकुन्दः ।
अपि गगनचरैरदृष्टपूर्वं सममवरोधजनस्य संविभेजे ॥ २० ॥
उपचितशिखरे वदान्यरत्नैः उचितगुहाश्रितहंसतूलतल्पे ।
बहुरिव स बभौ विहारशैले प्रतिमणिभित्तिविभक्तचारुबिम्बः ॥ २१ ॥
युगपदखिलमादरेण साक्षात् युवतिजनस्य निदर्शयन्मुकुन्दः ।
असकृदुपगमय्य चित्रशालामनघसमाधिदशामिवाततान ॥ २२ ॥
अनितरमनसां स्ववल्लभानां नरकजिता निरपायवैभवेन ।
भवभयविनिवारिणी स्वभक्तिः ललितविहारमुखेण लम्भिताऽभूत् ॥ २३ ॥
प्रमुदितविबुधाहृतप्रक्लृप्तैः कनकसरोजवनैरलंकृतानाम् ।
अतिशयमवरोधदीर्घिकाणामधिसुरसिन्धुसमीक्षितं निदध्यौ ॥ २४ ॥
विहरति वनिताजने तदीयैः अपलपितामवलोकनप्रभावैः ।
पुनरपि हरिनीलरत्नभासा दधुरमितोत्पलसंपदं सरस्यः ॥ २५ ॥
स्थिरधृतिमधिरोप्य रत्नडोलां गुणघटितामिव माधवः स्वमायाम् ।
अगमयत गतागतान्यभीक्ष्णं सुकृतजुषः स्वयमङ्गनाः स्वतन्त्रः ॥ २६ ॥
रुचिरकनकशृङ्गवक्त्रवान्तैः प्रतितनु कुङ्कुमवारिभिः प्रसिञ्चन् ।
अजनयदनुरागयोगमन्तः बहिरपि तोयविहारतो वधूनाम् ॥ २७ ॥

नवमणिपरिकल्पितेषु नाथः कमलवनान्तरकेलिमन्दिरेषु ।
श्रिय इव सुदृशो गृहीतपद्मा हृदि निदधे पुरुषोत्तमः प्रतीतः ॥ २८ ॥
दिशि दिशि मकरन्दवर्षदिग्धां विविधपरागविभक्तचूर्णचित्राम् ।
भुवमभजत साकमङ्गनाभिः पु(चु)लकितदृष्टिषु पुष्पमण्डपेषु ॥ २९ ॥
अनुविहितमहोत्सवो यथार्हं वितरणतोषितवन्दिबन्धुवर्गः ।
परिणयनविधिं लतावधूनामतनुत चूतवरैः प्रियार्पितानाम् ॥ ३० ॥
सुतबहुमतिभागिनां शुकानामुपहृतदिव्यरसोपभोगभाजम् ।
श्रुतिमधुरगिरां स्वशिक्षितानामतिशयसिद्धिमदर्शयत्प्रियाभ्यः ॥ ३१ ॥
अनुकृतनिजशक्तिभिः प्रियाभिः सह गुणबन्धविचित्रसन्निवेशैः ।
मुहुरिह निपतद्भिरुत्पतद्भिः करणवरैरिव कन्दुकैरदीव्यत् ॥ ३२ ॥
निजयुवतिषु यद्यपि त्रिधामा नयनपिधानविहारमाजहार ।
न तदनुचरितं तथापि ताभिः त्रिभुवनदृष्टिनिरोधशङ्किनीभिः ॥ ३३ ॥
श्रुतिविहितमवन्ध्ययन् स्वधर्मं प्रतिदिनमन्यपरो यदा बभूव ।
तदुपचरणतस्तदाऽपि तासां समजनयत् प्रियभोगमेव कालः ॥ ३४ ॥
मणिपरुवकमञ्जुलस्तनीभिः मधुसमयापगमे वराङ्गनाभिः ।
सितमणिविहितान् स यन्त्रधाराव्यतिकरशीतलितानभुङ्क्त सौधान् ॥ ३५ ॥
स्फटिकसदनदीप्तिदत्तहस्तां मुरभिदसेवत सादरं सदारः ।
अपजलदनिशोदितस्य शोभां हलधरकान्तिजुषस्तुषारभासः ॥ ३६ ॥
अगरुभिरसितैरनूरुगौरैः अपघुसृणैरपि निर्विवेश नाथः ।
हिमऋतुमवरोधसुन्दरीणां स्तनपरिरम्भसमर्पितैर्विलिप्तः ॥ ३७ ॥
अनलशकटिकाभिरप्यजय्यं शिशिरसमीरणमञ्जसा जिगाय ।
अविरलपरिरम्भलम्भनीयैः स्तनकलशोष्मभिरात्मवल्लभानाम् ॥ ३८ ॥
उपनिषदुपदेशसाभिलाषैरुपचरितो मुनिभिस्सनन्दनाद्यैः ।
रतिपतिसमयस्थितो वधूनां ललितकलागमदेशिको बभूव ॥ ३९ ॥
कलमधुरगिरां कलाप्रसङ्गादतिमदनोपनिषत्परं रहस्यम् ।
प्रियहितरुचिराक्षरं प्रियाणां श्रुतिषु चकार शिखामणिः श्रुतीनाम् ॥ ४० ॥
निरुपधिकनिजप्रभावगर्भं परिषदि विश्वपतिर्निजप्रियाणाम्(याः) ।
किमपि निशमयांबभूव गीतं प्रमुदितकिन्नरदम्पतिप्रयुक्तम् ॥ ४१ ॥

मृदुकरतललीलया मृदङ्गानसमयनर्तितनीलकण्ठयूथान् ।
ध्वनयति दयिते विदूरभूमेः श्रियमिव ताः पुलकोद्गमैरपुष्यन् ॥ ४२ ॥
करकमलपरिग्रहेण धन्यां वरतनुसंसदि वादयन्विपञ्चीम् ।
अविदितगमनाय गायकैः स्वैः उपरतगीतिभिरुन्मुखैः सिषेवे ॥ ४३ ॥
श्रुतिमधुसुभगैरदीनहृद्यैः श्रुतघननादशिखण्डिनीगणश्रीः ।
मधुरिपुवनितागणः समाजे ध्वनिभिरमाद्यत दिव्यदुन्दुभीनाम् ॥ ४४ ॥
सललितकरणाङ्गहारहृद्यं सह दयिताभिरुदारदिव्यनाट्यम् ।
अनुदिनमनिमेषदर्शनीयं जितमधुरप्सरसां ददर्श नृत्यम् ॥ ४५ ॥
अभिनवमभिनन्द्य नर्तकीनां स्वयमुपदिष्टमलङ्घितोपदेशम् ।
पुनरपि मुदितस्तमेव युञ्जन् अविदितपूर्वमिवादरादपश्यत् ॥ ४६ ॥
प्रतियुवतिगृहीतनकरूपः प्रणयवतीभिरनन्य इत्युपेतः ।
अपहृतमणिपादुकः कदाचित् पदमपि गन्तुमशक्नुवन्निवासीत् ॥ ४७ ॥
अनवहिततया सखीसमक्षं द्रुतमुपहूय समाख्ययेतरस्याः ।
रुषितमनसमद्भुतैर्विलासैरिदमपि नाम तवेत्युवाच मुग्धाम् ॥ ४८ ॥
समुचितदिनलङ्घनं सपत्न्याः परिपणितं स्वयमभ्युपेत्य नाथः ।
स्मितमधुरमुखो जितः कयाचिद्विवश इवाक्षविहारतो बभूव ॥ ४९ ॥
अनुगतनिजबिम्बमेनमन्या मणिमुकुरस्थमवेक्ष्य मन्दहासम् ।
न खलु तदवलोकनाय पश्चात् व्यतनुत साचिविधिं तदेकतृप्ता ॥ ५० ॥
पुलकितकुचकुड्मले परस्याः कथमपि साध्वसकम्पिताग्रहस्तः ।
स्थिरचरजगदेकदिव्यशिल्पी विषमतमं विलिलेख पत्रभङ्गम् ॥ ५१ ॥
मृदुसुरभिसुजातबन्धुराभिः प्रणिदधदग्रनिबद्धपङ्कजाभिः ।
मुहुरसितदृशां स्वकण्ठयोर्म्यां भुजलतिकाममिमीत मालिकाभिः ॥ ५२ ॥
अभजत स च ताश्च दूतिकानाममृतपरिप्लुतभेषजायमानैः ।
प्रतिदिनमिदमादिमं प्रमोदं प्रणयविरोधसितासितैर्वचोभिः ॥ ५३ ॥
निजपदपरिचारकाङ्क्षिणीभिः कतिषु भवेषु समर्चिताङ्घ्रिपद्मः ।
प्रतिविधिमभजत्प्रसाधिकावत्प्रियपरिकर्मविधानतः स तासाम् ॥ ५४ ॥
निजसमुदयसंभवैर्निशायां प्रणयपयोनिधिवीचिकाविसर्पैः ।
प्रणतिभिरिव विभ्रमैः प्रियाणां बहुमतिभेदमवाप यादवेन्दुः ॥ ५५ ॥

शरदुपगमशोधिता इवापः तुहिनकरोदयनिर्मला इवाशाः ।
मुरभिदुपगमप्रशान्तखेदाः प्रतिययुरुन्मनसस्तमायताक्ष्यः ॥ ५६ ॥

अमृतमयमिवोदधिं तमुच्चैः अनुसखि लोचनशुक्तिभिः पिबन्त्यः ।
अवशनियतचित्तवृत्तिमेकामदधुरदृष्टपरस्परामवस्थाम् ॥ ५७ ॥

स्मरजनकतनुः स्वदर्शिनीनां ननु विरहः सुदृशां निमेष एव ।
इति किल विगणय्य विश्वकर्ता नियतमकल्पयदप्सरस्त्वमासाम् ॥ ५८ ॥

अनुचरबहुमानमातुकामैरवसरविद्भिरनुस्मृतात्मरक्षैः ।
अनुदिनमुपनीतमादितेयैः अमृतमपाययत प्रियाः प्रतीतः ॥ ५९ ॥

प्रियवचनशतैरुदारवादी रहसि मनःश्रुतिरञ्जकैर्विचित्रैः ।
मुखकमलमधूपमैः प्रकामं मदमुदिता इव मानिनीरकार्षीत् ॥ ६० ॥

अतिशयितगुणैः प्रियोपभोगाद्वसनविभूषणमाल्यिकादिभिस्ताम्(:) ।
मुदमधिकतमां दधुस्तरुण्यः प्रणयरसो हि रसप्रकर्षहेतुः ॥ ६१ ॥

अभिलपनमनस्क्रियातिपातिन्यनुबुभुजे यदुपुङ्गवेन तासाम् ।
अतिशयमितरेतरं प्रयच्छन्त्यभिनवयौवनसम्पदप्रकम्प्या ॥ ६२ ॥

अजनिषत कुतो नु भागधेयात् त्रिभुवनमङ्गलदीपिकाः शुभाङ्ग्यः ।
यदुपतिसहधर्मचारिणीभिः सुखमनघं भुवि याभिरन्वभावि ॥ ६३ ॥

अधिभुजगपति श्रियोपभुक्तं युगपरिपाकविहारिणं युवानम् ।
नरपतिबहुमानतो नताङ्ग्यः सुलभमिवान्वभवन् स्वतल्पभाजम् ॥ ६४ ॥

शकयुवतिकपोलपाण्डुराभैः शशिशकलैरिव नागवल्लिपत्रैः ।
स्मरसुभटयशोनिभैरनन्दन् युवतिजनौघभृतैस्तदर्पितैस्ताः ॥ ६५ ॥

जगदुपजननादिजातभूम्नः क इव वधूजनमोहनो विहारः ।
कथमिव स कुतश्च कीर्तनीयः प्रथितमनोभवतन्त्रपारदृश्वा ॥ ६६ ॥

युवतिभिरनुभूषितस्स ताभिः यदुपतिरद्भुतरूपवेषशीलः ।
निरुपधिकरसामृतौघसिन्धुः सततमपूर्वमपूर्वमन्वभावि ॥ ६७ ॥

हरिपरिचरणेन तोषितानां हरिणदृशां विभवं विभावयन्तः ।
अपजहुसुरवाससंयमाः स्वान् अपरिमितानणिमादिसिद्धिभेदान् ॥ ६८ ॥

सरित इव मृगीदृशस्तमेकं महितगुणौघमहोदधिं भजन्त्यः ।
अविभरुरनपायमैकरस्यं मुनिगणितश्च स एव मुक्तभोगः ॥ ६९ ॥

अनुभवरसतो जगत्प्रसूतेरपचितसुप्तिसुषुप्तिसंभवास्ताः ।
वितमसि विषये स्थिता इवासन् विरतिविहीनविहारजागरेण ॥ ७० ॥
प्रतिदिनमितरेतरानुगुण्यात् प्रचितमयोगवियोगसंप्रयोगैः ।
रसमधिकमवापुरायताक्ष्यः प्रणयिनि शार्ङ्गिणि भागधेयभूम्ना ॥ ७१ ॥
रविरुचिरमणिप्रदीपकेषु स्फुरदसितागरुधूमधूपितेषु ।
सह युवतिजनैः क्षणोपमेयामनयत वासगृहेषु वासतेयीम् ॥ ७२ ॥
पुलकितवपुषां सवेपथूनां घनरसभावितघर्मबिन्दुभाजाम् ।
श्लथमिव सुदृशामसुष्टिमेयं चिकुरमगुम्भयदद्भुतं चिरेण ॥ ७३ ॥
स्ववधूरवधूतभौमभावाः स्वदमानाः स्वयमात्मनैव तृप्तः ।
अनुभूय न तृप्यति स्म नाथस्तमपि प्रेमविलीनचेतसस्ताः ॥ ७४ ॥
चपलप्रतिकूलतीक्ष्णरूक्षाः स्त्रिय इत्यागमिकैर्निदर्शितार्थः ।
प्रथितो यदुवीरवल्लभाभिः परिवादोऽयमपाकृतः पृथिव्याम् ॥ ७५ ॥
शरणागतसर्वपापमोक्षे कृतसंकल्पमिहानुभूय कृष्णम् ।
परितोऽपि तथाविधानुभूतिः स्वरलब्धा प्रतिलम्भिता प्रियाभिः ॥ ७६ ॥
अनघामनपायभक्तिरूपामनुभूतिं यदुवीरवल्लभानाम् ।
अनुकर्तुमपि प्रवर्तमानैरवशैरेव समाहितैरभावि ॥ ७७ ॥
उदधौ बहवो रमा बभूवुर्यदि वा सैव गृहीतनैकरूपा ।
इति नाम विमर्शमादधाना दयिताः प्रेक्ष्य ननन्द देववन्द्यः ॥ ७८ ॥
अजितस्य विशालतुङ्गभूम्ना भुजमध्येन पयोधरैश्च तासाम् ।
इतरेतरसंवृतत्वमासीत् परिरम्भे परितो मिथस्समत्वम् ॥ ७९ ॥
परिहासकुतूहली प्रियाणां विहितद्यूतविहारकौतुकानाम् ।
उभयत्र जयं जगाद पृष्टः कितवः स्थेयपदे निवेशितस्सन् ॥ ८० ॥
स्वयमादिकविः प्रकल्पिताभिः प्रणयोल्लङ्घनरोषमुत्तितीर्षुः ।
प्रहसन् बहुशः प्रहेलिकाभिः मतिमौढ्यं विदधे मनस्विनीनाम् ॥ ८१ ॥
एकीभवद्भिरयुतैरपि मन्मथानां यत्कान्तिसिन्धुपृषतानुकृतिर्न शक्या ।
संप्रेक्ष्य तं यदुपतिं यमिनोऽपि नूनं स्त्रीभावमेव मनसा बिभरांबभूवुः ॥ ८२ ॥
कृष्णानुभूतिविभवेन कृतार्थभावाः तद्वल्लभास्त्रिदशमातृतयाचकासुः ।
यत्पादपङ्कजपरागजुषां शशंसुः जन्माद्भुतं जगति गुल्मलतादिकानाम् ॥ ८३ ॥

श्यामो बभूव किमसौ सुदृशां कटाक्षैः श्यामास्तदन्वयवशादथ वा तरुण्यः ।
ताभिः किमस्य ववृधे महिमा महीयान् तासामनेन यदि वेति बुधैश्शशङ्के ॥ ८४ ॥

अग्राम्यमेव परिहासरसं वितेने नाश्लीलमाह न मृषा न च मर्मभेदि ।
धर्माविरुद्धविभवोचितकामकामः स्त्रीणां वरेण बुभुजे वरदो वरस्त्रीः ॥ ८५ ॥

ताराभिरिन्दुरिव भानुरिव प्रभाभिः युक्तो वशाभिरिव वारणयूथनाथः ।
विद्याभिरात्मविदिवाभ्यधिकं विरेजे योगेश्वरो युवतिभिस्सह मोदमानः ॥ ८६ ॥

पायंपायं प्रेयसः कान्तिमार्ध्वीं माद्यन्तीभिः मञ्जुलालापिनीभिः ।
प्रत्येकोक्तिश्लाघनप्रीणिताभिः प्रायो भोगाः पर्यवाह्यन्त ताभिः ॥ ८७ ॥

करणव्यपायसमये पुनर्भवं विनिवर्त्य शाश्वतसुखं प्रदास्यता ।
स्वपदानुभूतिरुदपादि तादृशी सुदृशां स्वसंमतिभृता गदाभृता ॥ ८८ ॥

तद्गतेन मनसा विवशानां तन्मयीकृतधियामिव तासाम् ।
अप्रलुप्तरहसामभजेतां स्वप्नजागरदशे न विशेषम् ॥ ८९ ॥

श्रियमनपायिनीं वसुमतीमिव दत्तकरां सह महिषीगणेन विभुरेक इवानुभवन् ।
यदुभिरनन्ततार्क्ष्यपृतनेशनिभैस्सहितो निजपदमस्मरन्निह निवासमरोचयत ॥ ९० ॥

उपचितचित्रधर्ममुपशान्तविपक्षभयं मुदितवधूजनं स मुखरं निगमध्वनिभिः ।
बहुविधरत्नशालि बहुमान्यसमग्रगुणं वलयसमं भुजस्य वसुधावलयं बुभुजे ॥ ९१ ॥

अनितरजनलभ्यां प्रीतिमासेदुषीभिः सुचिरमनुबभूवे स्वर्गमोक्षातिशायी ।
निरुपधिकरसाब्धिं निर्विशन्तीभिराद्यं कल्युवतिभिरित्थं कोऽपि शृङ्गारभूमा ॥ ९२ ॥

सहजबलसमेतः शक्रपूर्वैरजय्यः समुदितविषमास्त्रस्तादृशानन्दहेतुः ।
अविदितरचनेन स्वेन पार्थाय गीतः स्वयमजनि स कामः कोऽपि धर्माविरुद्धः । ९३ ॥

स्वपदनलिनभाजां स्वर्गमोक्षौ यथार्हं करणविगमकाले कल्पयिष्यन् क्रमेण ।
मधुरिपुरिह नूनं मन्दपुण्यैरलभ्यौ समतनुत विहारैस्तावुभौ संप्रयुक्तौ ॥ ९४ ॥

नारीदृष्ट्या नियमितधियो नाकनाथेश्वरत्वं संभोगे च प्रवणमनसः शाश्वतं ब्रह्मचर्यम् ।
अत्रैकस्यां पुरि निवसतः सर्वलोकाधिपत्वं निध्यायन्तस्त्वरितमतरन् दुस्तरां तस्य मायाम् ॥ ९५ ॥

आसीदेवं परिणतमधि(तिमति)द्वारकं द्वापरान्ते व्यासप्रख्याविभजनभवद्वेदशाखोपमानम् ।
चिन्तातीतं यदुपतिमनःप्रीतिचिन्तामणीनामेकं तासां भवरसमुजां भाग्यमेकातपत्रम् ।। ९६ ।।

गुरुभिरनघचित्तैराहितोदारभूमा सुरभितरसमेतत् सूनृतं वेङ्कटेशः ।
व्यतनुत यदुवीरप्रीतिमिच्छन् प्रभूतां कविकथकमृगेन्द्रः क्षेमदं काव्यरत्नम् ।। ९७ ।।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु यादवाभ्युदयकाव्ये चतुर्विंशः सर्गः ।

समाप्तश्च ग्रन्थः ।।

॥ श्रीरस्तु ॥

श्रीमत्प्रणतार्तिहरवरदपरब्रह्मणे नमः ।

श्रीमते हयग्रीवाय नमः । श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्तमहादेशिकाय नमः ।

# ॥ श्रीमद्वेदान्तदेशिकग्रन्थमाला ॥

कवितार्किकसिंहसर्वतन्त्रस्वतन्त्रश्रीमद्वेदान्ताचार्यविरचितम्

# ॥ संकल्पसूर्योदयनाटकम् ॥

**श्रीमान्वेङ्कटनाथार्यः कवितार्किककेसरी । वेदान्ताचार्यवर्यो मे संनिधत्तां सदा हृदि ॥**

## प्रथमोऽङ्कः

**यद्भक्तिप्रचयात्मके दिनमुखे दृष्टिक्षमः क्षेत्रिणः क्षिप्रं संसृतिशर्वरीं क्षिपति यत्संकल्पसूर्योदयः ।**
**तच्चैरत्नत्रिभूषणैरधिगतस्वाधीननित्योन्नतिः श्रीमानस्तु स मे समस्तविपदुत्ताराय नारायणः ॥ १ ॥**

**लक्ष्ये यत्र श्रुतिमितगुणाकृष्टिलब्धावधानैः प्रत्यग्बाणः प्रणवधनुषा सत्त्ववद्भिः प्रयुक्तः ।**
**मध्येवक्षः स्फुरति महसा पत्रलः कौस्तुभात्मा पद्माकान्तः स भवतु दयादुग्धसिन्धुः श्रियै वः ॥ २ ॥**

(नान्द्यन्ते) **सूत्रधारः**— आदिष्टोऽस्मि निखिलसुरासुरकोटीरकोटीमणिनिकरनीराजितपादपीठस्य शरणागतपरित्राणसमन्तुदीक्षितस्य सरसीरुहवासिनीसहचरितधर्मणः संसरणदवदहनतापनिर्वापणवलाहकस्य सर्वेश्वरस्य भगवतः श्रीरङ्गवृषगिरिसत्यव्रतयदुगिरिपुरुषोत्तमपाण्डुरङ्गप्रभृतिषु दिव्याभिव्यक्तिप्रदेशेषु यथाभिमतयात्रोत्सवसेवाहेवाकविहितगतागतचटुलचरणनलिनधूलीपटलपवित्रितक्ष्मातलैः यदृच्छया मरुद्वृधान्तरीयमध्यमध्यासीनैः शेषशेषाशनगरुडनिर्विशेषैः अशेषजनसंभावनीयैः असंभवदवद्यगन्धैः अभिजनविद्यासमुचितसदाचारशीलशालिभिः अनादिमायामहावर्तबंभ्रम्यमाणवाह्यकथकरम्भावनमथनगन्धसिन्धुरैः अधिजिगमिषितमुक्तिघण्टापथैः अखण्डदिङ्मण्डलशिखण्डकैः औपनिषदरहस्योपदेशदेशिकैः अवगतसकलकलाकलापैः अत्रभवद्भिरार्यमिश्रैः । यदुत—

**ललितमनसां प्रीत्यै बिभ्रद्रसान्तरभूमिकामनवमगुणो यस्मिन्नाट्ये रसो नवमः स्थितः ।**
**जननपदवीजङ्घालार्तिच्छिदा(दानु)नृगुणीभवन्नटपरिषदा तेनास्वादं सतामुपचिन्विति ॥ ३ ॥**

परिगृहीता च मया भरतमतोपाध्यायस्य सन्मार्गवर्धनस्यान्तेवासिनः सन्तोषपालकनामधेयस्य शैलूषचक्रवर्तिनः

पुत्रेण, प्रतिभटकुशीलवकुञ्जरकण्ठीरवेण वैकुण्ठविनोदिना सप्रतिज्ञं विदुषामाज्ञा। दिव्यप्रयोगदिदृक्षादत्तक्षणा विचक्षणाश्च समुदिताः सामाजिकाः। तथा हि—

**अवधारितनाट्यदेशिमार्गैरसमीचीनपराङ्मुखैरमीभिः। भरतागमदैवतैरिवैषा परिषत्संप्रति भासते महद्भिः ॥**

तदहमशेषविद्यास्थानसम्पदुपलम्भिनीमभूतपूर्वबहुविधभूमिकापरिग्रहेऽप्यतिरस्कृतपारम्यामनवबोधजलधिकुक्षिंभरीमनन्यभक्त्युन्मीलिनीमादिमां देवतामभिगच्छामि।

**प्राची सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जनश्रीरपूर्वा।**
**वक्त्री वेदान्भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥ ५ ॥** (अञ्जलिं बद्ध्वा)

**देवो नः शुभमातनोतु दशधा निर्वर्तयन्भूमिकां रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः।**
**यद्भावेषु पृथग्विधेष्वनुगुणान्भावान्स्वयं बिभ्रती यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥**

(मुहूर्तमिव स्थित्वा ध्यानमभिनीय सोल्लासम्) सोऽहमिदानीं स्वाधीनसर्वतत्त्वसत्ताकस्य स्वतन्त्रदैवतस्य कृपया कटाक्षितः।

**श्रुतिकिरीटविहारजुषा धिया सुरभितामिह नाटकपद्धतिम्।**
**मुहुरवेक्ष्य विवेकमुपघ्नयन्मतमपश्चिमयामि विपश्चिताम् ॥ ७ ॥**

(नेपथ्याभिमुखमवलोक्य) आद्रियतां तावदियमार्यया रङ्गभूमिः। (प्रविश्य)

**नटी**— अय्य, एसम्मि, आणविज्जउ पिअप्पेसणो, एसो परिअणो। [आर्य, एषास्मि। आज्ञाप्यतां प्रियप्रेषण एष परिजनः।]

**सूत्रधारः**—अपि नाम सत्त्वोपपन्नसामाजिकसमादिष्टनाटकसाधनसमुचितभूमिकापरिग्रहे संनह्यन्ति कुशलाः कुशीलवाः।

**नटी**— करचलणदिट्ठिकप्पा खु एदे अय्यस्स। किं ण तुह चिन्तिए तुरन्ति? एदं उण परिपुच्छम्मि किंणामअं कीरिसं रूवअं अहिणेदुं आरद्धंति। [करचरणदृष्टिकल्पाः खल्वेते आर्यस्य। किं न तव चिन्तिते त्वरन्ते? इदं पुनः परिपृच्छामि किंनामकं कीदृशं रूपकमभिनेतुमारब्धमिति।]

**सूत्रधारः**— आर्ये, किं न जानासि सङ्कल्पसूर्योदयाख्यं नायकीकृतविवेकं नवीनं नाटकम्।

**भावं विदन्ति परमत्र परावरज्ञाः प्रज्ञाधनाः प्रगुणनूतनसंविधानम्।**
**यस्मिन्गुणास्तनुभृतः सदसत्प्रकाराः पात्रीभवन्त्यनुगुणैरधिदैवतैः स्वैः ॥ ८ ॥**

अपि च, **विवेकप्रागल्भ्यस्फुरितरणवीरव्यतिकरः परब्रह्मोदन्तप्रकटितदयावीरविभवः।**
**प्रबुद्धक्षेत्रज्ञस्थितिघटितशान्ताकृतिरभूत्प्रयोगश्चित्रोऽयं भवरससुजामप्यभिमतः ॥ ९ ॥**

अमुष्य तावदतिशयोक्ताववधिमपि न संभावयामि। कतिकति न सन्त्यकूपारे शङ्खाः? किं ते परिष्कृतपुरुषोत्तमपाणिपद्मः पाञ्चजन्यः? किं च,

ये लोकानिह वञ्चयन्ति विरलोदञ्चन्महःकञ्चुकास्ते तिष्ठन्तु महद्गृहेषु मणयः किं तैरिदं चिन्त्यताम् ।
श्रीवत्सप्रतिवेशदीपरुचिना सार्धं किमाभाष्यते पद्मोल्लासनदर्पणेन मणिना प्रत्नेषु रत्नेष्वपि ॥ १० ॥

इतश्चायमतीव बहुमन्तव्यः ।

अपदिश्य किमप्यशेषगुप्त्यै निगमान्तेषु निरूढगौरवेण ।
प्रविभक्तहिताहितः प्रयोगः कविना कारुणिकेन कल्पितोऽसौ ॥ ११ ॥

नटी— अय्य, कस्स उण कइणो पओओ एसो, जत्थ बहुमाणेण अम्हेसु वि पअडिअपक्खवाआ एसा परिसआ ? [आर्य, कस्य पुनः कवेः प्रयोग एषः, यत्र बहुमानेन अस्मास्वपि प्रकटितपक्षपातैषा परिषत् ?]

सूत्रधारः—आर्ये किं न श्रुतमिदं ते ? अस्ति खलु सकललोकसंभावनीयस्य विश्वातिशायिनो विश्वामित्रगोत्रभूषणस्य विशुद्धविद्याविहारपुण्डरीकस्य पुण्डरीकाक्षसोमसुत्संभवस्यानन्तगुणशेवधेरनन्तसूरेरात्मसंभवः श्रीरङ्गराजदिव्याज्ञालब्ध-वेदान्ताचार्यपदः कवितार्किकसिंह इति प्रख्यातगुणसमाख्यः छात्रजननिबद्धजैत्रध्वजप्रसाधितदशदिशासौधः सर्व-तन्त्रसङ्कटप्रशमनविशङ्कटमतिः श्रीमद्वेङ्कटनाथो नाम कविः ।

गौडवैदर्भपाञ्चालमालाकारां सरस्वतीम् । यस्य नित्यं प्रशंसन्ति सन्तः सौरभवेदिनः ॥ १२ ॥

अन्येन्द्रकं भुवनमन्यदनिन्द्रकं वा कर्तुं क्षमे कविरभूदयमन्ववाये ।
जन्म द्वितीयमृषिभिः कथितं यतः सा देवी च विश्वजननी यदनन्यगोत्रा ॥ १३ ॥

अपि च, विश्वासिनी विबुधवैरिवरूथिनीनां पद्मासनेन परिचारविधौ प्रयुक्ता ।
उत्प्रेक्ष्यते बुधजनैरुपपत्तिभूम्ना घण्टा हरेः समजनिष्ट यदात्मनेति ॥ १४ ॥

स च, विंशत्यब्दे विश्रुतनानाविधविद्यस्त्रिंशद्वारं श्रावितशारीरकभाष्यः ।
श्रेयः श्रीमान्वेङ्कटनाथः श्रुतिपथ्यं नाथप्रीत्यै नाटकमर्घ्यं व्यधितैतत् ॥ १५ ॥

नटी— अय्य, कहं णाम एअस्स एअन्तणिअमन्तविआणसन्दिअमाणसस्स कक्कसअरतक्ककुलिसणिस्तुटिअपासण्ड-दुमसण्डा भारई अह्मारिसकेलिजोग्गिअं रूपअं कुणज्ज ? [आर्य, कथं नाम एतस्य एकान्तनिगमान्तवितानसन्दित-मानसस्य कर्कशतरतर्ककुलिशनिस्त्रुटितपाषण्डद्रुमषण्डा भारती अस्मादृशकेलियोग्यं रूपकं कुर्यात् ?]

सूत्रधारः— (सान्तर्हासम्) यदेतदुभयमार्या पर्यनुयुङ्क्ते, अत्र तावदादौ किमेनमप्रवृत्तनिखिलकरणव्यापारमनुभवैकतान-मानसमत्यन्तनिभृतावस्थं निबद्धारमवधारयसि । अथापि ब्रूमः ।

मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः के विन्ध्याचलविकटसन्ध्यानटजटापरिभ्रान्ता पद्मोरुपरि यदि गङ्गा निपतति ॥ १६ ॥

अन्यदपि निध्यायतु भवती ।

गम्भीरभीषणगतिर्गिरिखण्डनादौ चूडापदं पशुपतेरपि घूर्णयन्ती ।
स्वादुप्रसन्नसुभगानि वसुंधरायां स्रोतांसि दर्शयति किं न सुरस्रवन्ती ॥ १७ ॥

नटी— (सानन्दम्) जुत्तं एव्व एदं वाहिदं अय्यस्स। तह वि सन्तो णाम रसो णत्थित्ति गन्धव्वाअमदेसिएहिं, समत्थिज्जइ। ता अत्थ कहं तारिसस्स रसस्स णिवेसो ? [युक्तमेवैतद्व्याहृतमार्यस्य। तथापि शान्तो नाम रसो नास्तीति गन्धर्वागमदेशिकैः समर्थ्यते। तस्मादत्र कथं तादृशस्य रसस्य निवेशः ?]

सूत्रधारः— (सावज्ञावहित्थम्) आर्ये न खलु संभावयामि तानहं भरतमतपारदृश्वनः। (विमृश्य)

अथवा तादृशान्सभ्यान्मत्वा जगति दुर्लभान्। शङ्के शान्तिरसोल्लासमशक्यमभिमेनिरे ॥ १८ ॥

अपि च, असभ्यपरिपाटिकामधिकरोति शृङ्गारिता परस्परतिरस्कृतिं परिचिनोति वीरायितम्।

विरुद्धगतिरद्भुतस्तदलमल्पसारैः परैः शमस्तु परिशिष्यते शमितचित्तखेदो रसः ॥ १९ ॥

नटी— होदु णाम, सणअसणन्दणादिमुणिअणसङ्गहीदो सो वि तारिसो रसो। तहवि कहं णिप्पन्दणिहिलकरणणिप्पादणिज्जजोअप्पहाणो एसो सव्वजणपेख्खणिज्जेण णाडअउत्तन्देण संपाइज्जइ ? [भवतु नाम सनकसनन्दनादिमुनिजनसंगृहीतः सोऽपि तादृशो रसः। तथापि कथं निष्पन्दनिखिलकरणनिष्पादनीययोगप्रधान एष सर्वजनप्रेक्षणीयेन नाटकवृत्तान्तेन संपाद्यते ?]

सूत्रधारः— आर्ये, मैवं वादीः। न हि वयमवधूतनिखिलधर्माणामलेपकानां मतमभिनेष्यामः, येनैवमाशङ्कसे। सन्ति खलु भगवता गीताचार्येण सहस्रशः प्रतिपादिताः सात्त्विकेन त्यागेन परिकर्मिता निवृत्तिधर्मपद्धतिनियता विविधा व्यापाराः, यदभिनयेन रङ्गोपजीविनामाजीवावकाशः। अपि चेदं निशमयतु निशामयतु वा नाट्यवैभवं भवती। श्रूयते हि—

न तच्छास्त्रं न सा विद्या न तच्छिल्पं न ताः कलाः। नासौ योगो न तज्ज्ञानं नाटके यन्न दृश्यते ॥२०

नटी— अइदुक्करमारद्धं तुह्मेहिं। अहं उण इत्थिआसभावघुण्णन्तहिअआ मच्चरग्गहगहिआदो पडिपख्खपण्डिअजणादो भअकम्पिअह्मि। [अतिदुष्करमारब्धं युष्माभिः। अहं पुनः स्त्रीस्वभावघूर्णमानहृदया मत्सरग्रहगृहीतात्प्रतिपक्षपण्डितजनात् भयकम्पिताऽस्मि।]

सूत्रधारः— अलं कातर्येण। अद्य खल्वस्माकमभिमुखं भागधेयम्। तथा हि—

लक्षणसमृद्धिरनघा रसपरिपोषश्च सहृदयग्राह्यः। संपतति नाटकेऽस्मिन्स एष शैलूषसुकृतपरिपाकः ॥ २१

किं च, विद्यासंपन्निधिरवहितो वेङ्कटेशः कवीन्द्रः सिद्धारम्भश्चिरमभिनये मामकः पात्रवर्गः।

प्रख्यातेयं परिषदनघा पक्षपातानभिज्ञा रामादीनां कुलधनमिदं रङ्गतां याति रङ्गम् ॥ २२ ॥

अन्यच्च भवत्या भावनीयम्।

शमधननिधिं सत्त्वश्रायं प्रयोगमयोगिनः स्वगुणवशतः स्तोतुं यद्वा वरिवतु निन्दितुम्।

किमिह बहुभिः किं नश्छिन्नं न विश्वमनीश्वरं तदुपनिहिता जाग्रत्येवं चतुर्दश साक्षिणः ॥ २३ ॥

नूनमतर्कितोपनता अप्यचिरद्युतिविदारम्भनियतावसाना मनीषिणामीर्ष्यादयः। यद्वा,

मौनं बिभ्रतु मत्सरेण नमितास्तूर्णं त एव ध्रुवं कालोन्निद्रकदम्बगोलवपुषः कम्पस्फुरन्मौलयः।

किंचिद्व्रीडितकुञ्चिताक्षमवशादुत्तानदत्ताननाः प्रस्तोष्यन्त्यवधिं प्रयोगपदवीसारस्यसारस्य नः ॥२४॥

सन्तु वा निरन्तरनियमितमत्सरनीरन्ध्रहृदया निर्विकाराः । तथापि सर्वथा तावत्—

**उपवेदमुदारधीः स्वनाम्ना भरतः सूचितभावरागतालम् ।**

**यमुदाहरति स विश्वगुप्त्यै तदभिज्ञैरबहिष्कृता वयं स्मः ॥ २५ ॥**

**नटी**— अय्य, एव्वं एदं । तहवि सुअगुरुएसु बहुसु विरुद्धेसु छिद्दं गवेसन्तेसु कहं अप्पमत्तेहिं अम्हेहिं पडिण्णादं णिव्वहणिज्जं ? [आर्य, एवमेतत् । तथापि श्रुतगुरुकेषु बहुषु विरुद्धेषु छिद्रं गवेषयत्सु कथमप्रमत्तैरस्माभिः प्रतिज्ञातं निर्वहणीयम् ?]

**सूत्रधारः**— अयि परगुणसंतोषिणि, श्रुतबाहुल्ये तव केयमास्था ? अथवा अवधारितपरमार्थानामप्यवगतसंवादनार्थमुत्तरोत्तरं परिप्रश्नाः प्रवर्तन्ते । भवतु नाम । विशुद्धविद्यांस्तावदभिमन्यस्व । दृश्यते हि—

**भूयसीरपि कलाः कलङ्किताः प्राप्य कश्चिदपचीयते शनैः ।**

**एकयापि कलया विशुद्धया योऽपि कोऽपि भजते गिरीशताम् ॥ २६ ॥**

तदहमिदानीं पराशरपाराशर्यादिबहुमतामबहुमतदुर्विनीतजनवृत्तिमनवरतपरिचितगान्धर्वविद्याविनोदनप्रसादितपरमपुरुषामेतां परिषदमेकतानयामि । (सप्रश्रयमञ्जलिं बद्ध्वा)

**विवेकप्रारम्भे विमतमतभङ्गप्रयतने मुमुक्षासंसिद्धौ मुरमथनयोगे च सफले ।**

**मुखादीन्निध्यातुं निभृतमिह नाट्ये कृतमुखैर्भवद्भिः स्थातव्यं भरतमतधौरेयमतिभिः ॥ २७ ॥**

(नेपथ्ये) **समयनियतैः प्रयोगैस्सत्पथसीमामनुज्झतो विदुषः । किरणैरिव दिवसकृतः क्षिप्यन्ते तामसारम्भाः ॥**

**सूत्रधारः**— (कर्णं दत्वा सानन्दम्) आर्ये, सम्यगवधार्यतामस्मद्वृत्तिमापवर्गिकवृत्तिं च तन्वयन्तीयमौद्धातिकी गीतिः । ततश्च, **दुर्जनं प्रतिपक्षं च दूरदृष्टिरयं जनः । विवेकश्च महामोहं विजेतुं प्रभविष्यतः ॥ २९ ॥**

(नेपथ्ये) कः खल्वसौ कुशीलवकुलाङ्गारः करतलकलितकठोरमधुरधन्वनि सुरभिसुकुमारचित्तपुङ्खे वित्रासितनिखिलवैरिजने जीवति, सकलसुरासुरमुनिमनुजचित्तवृत्तिसार्वभौमस्य दुर्मतिसहधर्मचारिणो रणरङ्गमहानटस्य देवस्य महामोहस्य विवक्षानर्हं किमपि विपक्षसकाशादाशंसते ?

**सूत्रधारः**— (सभयसंभ्रमं परिवृत्य पश्यन्) आर्ये, कोऽयममर्षसंप्लवादभ्यधिकलोहिताक्षः ससहाय इतोऽभिवर्तते ? आः ! कष्टमवधारितम् । अयं हि—

**अपवर्गविरुद्धेषु त्रिषु वर्गेषु तिष्ठताम् । प्रधानपुरुषार्थस्य पश्चिमस्याधिदैवतम् ॥ ३० ॥**

किं च, **अर्धावशेषितमहेश्वरपौरुषोऽयं वर्गं तृतीयमवधारयतां विनेता ।**

**रत्या सलीलपरिरम्भणलोलगत्या पुष्पायुधः पुलकितैकभुजोऽभ्युपैति ॥ ३१ ॥**

तदिह वयं त्वरितमपसृत्य कालोपपन्नकामोत्सवविहारसङ्कुले जीवलोके संवलितगुप्तवृत्तयः समनन्तरकरणीयमाचरामः ॥

इति निष्क्रान्तौ ।]

॥ इति प्रस्तावना ॥

[ ततः प्रविशति वसन्तदत्तहस्तः कान्तासमेतः कामः । ]

कामः— ( कः खल्वित्यादि पुनः पठित्वा ) रे, रे, भरतकुलपांसन,

दरनमितमनोज्ञभ्रूलताचापभाजां तरलहृदयलक्ष्ये तादृशस्नेहदिग्धे ।
कुवलयनयनानां कूणिते लोचनास्त्रे शरणयतु विवेकः कां दिशं कांदिशीकः ॥ ३२ ॥

वसन्तः— ( स्वगतम् ) उत्पथमनोरथोऽयं उपचितमदो विषमवाणः । अहं पुनरपुनरावृत्तिवर्तनीपथिकानामातिवाहिकगणे परिगणितोऽपि न सहसा परित्यक्तुं शक्नोमि चिरंतनं चित्तजन्मसौहार्दम् । ( प्रकाशम् ) सखे मकरध्वज, एवमेतत् । अहं पुनर्महाराजस्य महामोहस्य माङ्गलिकं विवेकवित्रासनं भावत्कं महोत्सवं प्रक्रमयामि । पश्यतु भवान् ।

चूडावेल्लितचारुहल्लकभरव्यालम्बिलोलम्बकाः क्रीडन्त्यत्र हिरण्मयानि दधतः शृङ्गाणि शृङ्गारिणः ।
तन्वङ्गीकरयन्त्रयन्त्रणकलातन्त्रक्षरद्भस्त्रिकाकस्तूरीपरिवाहमेदुरमिलज्जम्बाललम्बालकाः ॥ ३३ ॥

कामः— साधु, वसन्त, साधु । विशेषतश्चैतत् सर्वथा विजित एवासौ विवेकहतकः, यदयमवधीरितत्रिविष्टपविहारकान्तारेषु मरुद्वृधोपान्तभागेषु महोत्सवारम्भः । इह च,

उन्निद्राम्बुजवाटिकामुभयतो रोधोनिरोधोच्छलत्स्रोतःसंभृतसारणीशतकृतस्वच्छन्दकच्छाप्लवाम् ।
खेलच्चोलवधूविधूतकवरीशैवालितामन्वहं पश्येम प्लवमानहंसमिथुनस्मेरां कवेरात्मजाम् ॥ ३४ ॥

रतिः— अय्यउत्त, आपाअमहुरो एसो महूसवो । एण्हिं किळ अम्हकुलसामिणो महामोहस्स अणिवारणिज्जेण केण वि विहिणा अमोहारम्भो विवेओ दुज्जओ पडिपक्खोत्ति दूमिअं मे हिअअं । [आर्यपुत्र, आपातमधुर एव महोत्सवः । इदानीं किल अस्मत्कुलस्वामिनो महामोहस्यानिवारणीयेन केनापि विधिना अमोघारम्भो विवेको दुर्जयः प्रतिपक्ष इति धूमितं मे हृदयम् ।]

कामः— बाले, विषमशरजीवितेश्वरि, विलासिनीदेवते, किमिति नाम समग्रबलजेतव्यलब्ध्या संतोष्टव्येऽपि भावितस्त्रीचापला विवेकवैभवं वर्णयसि ? पश्यतु भवती,

करधृतललितेक्षुधन्वनो मे भ्रमरगुणार्पितपुष्पमार्गणस्य ।
मरुदनलशरोऽपि मेरुधन्वा क्षणमतिलङ्घितशासनः कथं स्यात् ॥ ३५ ॥

वसन्तः— सखि, सत्यमेवैतत् । मा खल्विदं विकत्थनं मंस्थाः । न हि जगति भवति मशको मातङ्गस्य प्रतिस्पर्धी । अथवा न खलु भवती विश्ववृत्तान्तवैदेशिकी । दृष्टचर एव हि त्वत्प्रियस्यासौ वीरायितवृत्तान्तः । तथा हि,

वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखैर्वरतनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्त्वं गोपीजनस्य वशंवदं मदनकदनैर्न क्लिश्यन्ते कथं त्वितरे जनाः ॥३६॥

कामः— साधु, वसन्त, साधु । कालानुरूपवादी खल्वसि ।

विश्वं युवतिसात्कर्तुं भवता दत्तसायके । विवेकः किं नु वर्तेत विपक्षे मयि संस्थिते ॥ ३७ ॥

रतिः— अय्यउत्त, एव्वं एदं । तहवि विसमट्ठिरसंठाणवेरग्गदुग्गपडिट्ठिओ अप्पमत्तेहिं समदमप्पमुहेहिं अमच्चेहिं अभिरक्खिओ सअं असहाअसूरो अगवाअसाहसो अ विपक्खो किण्णाम कइआ काहिइत्ति कलुसिअहिअअम्हि । [आर्यपुत्र, एवमेतत् । तथापि विषमस्थिरसंस्थानवैराग्यदुर्गप्रतिष्ठितोऽप्रमत्तैः शमदमप्रमुखैरमात्यैरभिरक्षितः स्वयमसहायशूरोऽनपायसाहसश्च विपक्षः किं नाम कदा करिष्यतीति कलुषितहृदयाऽस्मि ।]

कामः— अयि भीरु, अलमतिशङ्कया । नूनं विपक्षपक्षपातिबालिशजनविप्रलब्धा स्वयूथ्यवैभवं न निर्धारयसि । पश्य तावद्विश्वविजयिनस्त्वत्प्रियस्य मे जगत्त्रयप्रसिद्धं जैत्रमुपकरणम्—

वपुरप्रतिमं नितम्बिनीनां दृढसौन्दर्यगुणं दरावनम्रम् । श्रवणावधिनेत्रचित्रपुङ्खं धनुराद्यं मम मुष्टिमेयमध्यम् ॥

अपि च, शैलीं विलोपयति शान्तिमधःकरोति व्रीडां व्युदस्यति विरक्तिमपह्नुते च ।
कर्णामृतं किमपि तत्कलभाषिणीनां नामापि किं न विकरोति निशम्यमानम् ॥ ३९ ॥

वसन्तः— ननु कैमुतिकमेतत्, यदिदं योषितां यदृच्छाकीर्तनश्रवणादिकमपि चित्तसंक्षोभहेतुरिति ।

तिष्ठतु गुणावमर्शः स्त्रीणामालोकनादिभिः सार्धम् । दोषानुचिन्तनार्थी स्मृतिरपि दूरीकरोति वैराग्यम् ॥

अपि च प्रभूतमदमेदुरात्मनो विषयाटवीषु विविधासु धावतः ।
स्वबलेन हन्त मनसो निवर्तनं बिसतन्तुनेव सुरदन्तियन्त्रणम् ॥ ४१ ॥

रतिः— अय्यउत्त, दिढभूमिविब्भमसमुम्मूलणक्खमाणं जोईसराणं दिट्ठिं परिहरन्तेण तुए परक्कमणिज्जं । [आर्यपुत्र, दृढभूमिविभ्रमसमुन्मूलनक्षमाणां योगीश्वराणां दृष्टिं परिहरता त्वया पराक्रमणीयम् ।]

कामः—(विहस्य) प्रिये, पश्यामि चक्षुषीव ते चेतस्यपि कातर्यम् । योजयामि खल्वहं योगीश्वरानपि युवतियोगीश्वरपादे ।

सुभगपरुषैर्मदस्त्रैः कीलितमन्योन्यकवचितैकार्थम् ।
किं न विदितं भवत्या किमपि मिथःस्यूतजीवितं मिथुनम् ॥ ४२ ॥

रतिः— अय्यउत्त, अवहारिअं मए तुह माहप्पं । दाणिं उण दीहबुद्धिवळेण देव्वदिण्णहत्थेण जमणिअमप्पमुहबहुसहाअसंपण्णेन अहण्डुच्छाहप्पहुत्तणमन्तसत्तिणा सत्तुणा कहे किं होजत्ति पबळपवणाहआ कअळिएव्व तरळअरम्हि । पसिद्धं खु पण्णाबळं मोक्खपेरन्ताणं अइदुक्कराणं सिद्धीणं साहणं त्ति । [आर्यपुत्र, अवधारितं मया तव माहात्म्यम् । इदानीं पुनः दीर्घबुद्धिबलेन दैवदत्तहस्तेन यमनियमप्रमुखबहुसहायसंपन्नेन अखण्डोत्साहप्रभुत्वमन्त्रशक्तिना शत्रुणा कदा किं भवेदिति प्रबलपवनाहता कदलिकेव तरलतरास्मि । प्रसिद्धं खलु प्रज्ञाबलं मोक्षपर्यन्तानामतिदुष्कराणां सिद्धीनां साधनमिति] ।

कामः— (सरोषहासम्) अयि मुग्धे, मञ्जुभाषिणि, गुञ्जन्मधुकरशिञ्जिनीसंहितविश्वलक्षविषमविशिखस्य नित्यविजयजागरूकस्य त्वत्प्रियस्य मे संनिधौ का पुनः प्रज्ञा, केन वा कस्य मुक्तिर्भवित्री, किमिति नाम मध्य इव भवत्या मानसेऽपि सौक्ष्म्यं नालक्ष्यते ? (विहस्य) प्रिये, हन्त ! विदितमेतत् नूनमिदानीं स्तनगतं स्थौल्यमेतदन्तरापि संक्रान्तमिति । अथवा अविचारितरमणीयमबलाजनस्वाभाव्यं भवत्यामपि वर्तते । संपश्यतां भवती,

**मयादिष्टः क्रोधः प्रथयति किमप्यान्ध्यमथ च स्मृतिभ्रंशः सेद्धा विघटयति बुद्धिं सपदि सः ।**
**तया मुक्तः क्षेत्री तमसि गहने विन्दति लयं तथाभूते किं वा जनयति विवेको जडमतिः ॥ ४३ ॥**

तदेवमसह्यवेगमसद्व्यूहं विवेकामात्याः शमदमादयो न प्रसहिष्यन्ते। स्वयं च दुर्जयो निखिलसुरासुरकोटीरविन्यस्तवामपादो महामोहः । न हि तरक्षुर्मृगराजस्य परिपन्थी ।

**परस्य पुरुषस्येव पञ्चभिश्च ममायुधैः । समयेषु विमथ्यन्ते सत्त्ववन्तोऽपि शत्रवः ॥ ४४ ॥**

अपि च, **अलमिह विबुधाद्यैरागमग्राह्यवाचो मुनिपरिषदि धर्मान्गायतो मुक्तिहेतून् ।**
**तपसि नियतवृत्तेस्तस्य देवस्य शान्तिं जनितयुवतिरत्नं दर्शयत्यूरुकाण्डम् ॥ ४५ ॥**

**रतिः**—अय्यउत्त, संभावेमि सच्चं तुह भासिअं । अव्वम्हकीडं अत्पडिहअं खु तुह माहप्पं । एदं उण अण्णाअपुव्वं आणवेदु अय्यउत्तो । [आर्यपुत्र, संभावयामि सत्यं तव भाषितम् । आब्रह्मकीटमप्रतिहतं खलु तव माहात्म्यम् । एतत् पुनरज्ञातपूर्वमाज्ञापयत्वार्यपुत्रः । ]

**कामः**— किं तत् ?

**रतिः**— विवेअप्पहुदीणं महामोहप्पहुदीणं अ मिअन्दमाअङ्गाणं विअ किण्णिमित्तं वेरं त्ति । [विवेकप्रभृतीनां महामोहप्रभृतीनां च मृगेन्द्रमातङ्गानामिव किंनिमित्तं वैरमिति ।]

**कामः**— प्रिये, आकर्ण्यतामिदमादितः प्रभृति ।

**त्रिगुणघटिताद्भोक्तुर्बुद्धिः स तदनुव्रता समयनियतोच्छ्रायं त्रेधा कुलं समजीजनत् ।**
**प्रथममिह तद्भोगद्वेष्यं विवेकपुरःसरं द्वितयमितरज्जुष्टं रागप्रमोहमुखं मिथः ॥ ४६ ॥**

अत्र विवेकश्च महामोहश्च समानशीलाभिः प्रकृतिभिरभिषिक्तौ राजन्यौ । तयोरपि,

**मोहस्य धर्मपत्नी दुर्मतिरपवर्गदोषदृष्टिमयी । विषयरसदोषदृष्टिः सुमतिरनन्या विवेकस्य ॥ ४७ ॥**

**रतिः**— तदो तदो । [ततस्ततः । ]

**कामः**— ततश्च रजःप्रधाना रागादयः तमःप्रसूतेः संसारचक्रवर्तिनो महामोहस्य दैत्यानुकूलरक्षःकुलन्यायेन साचिव्यमाचरन्ति । सत्त्वसंभवं तु विवेककुलमसहायमल्पसारं च जगति वर्तते । जनकश्चास्माकं क्षेत्रज्ञः स्वयं मध्यस्थस्वभावोऽपि सहधर्मचारिण्या देव्या बुद्ध्या सहाद्य यावदस्मासु बहुलं दत्तदृष्टिः । तदिदमसहमाना नित्यनृशंसा विवेकादयः जातिवादिन इव स्वभङ्गमप्यनुमन्यमानाः पुरुषस्य भोगं तत्संवर्धकानस्मांश्च उत्सादयितुमीहन्ते । अस्मत्तातेन चानादिसुक्तायां प्रकृतौ विविधान्दोषानुद्धाट्य तातं च तस्यामुपजनितवैराग्यं केनचिदुपायेन विरचय्य महाप्रस्थानेनापुनरावर्तिनं कर्तुमारभन्ते । तथा मर्कटरक्षःपती महापातकिनौ सुग्रीवविभीषणौ स्वकुलोत्सादने प्रमाणयन्ति । न च तदारम्भसमये तातस्य दुर्दशा शक्या वर्णयितुम् । अयं खलु,

**जात्यन्धः परदोषदृष्टिषु परीवादेषु मूकाग्रणीः बाधिर्यप्रथमावतारसरणिर्निन्दासमाकर्णने ।**
**स्त्रीप्रायः परदारसंग्रहविधौ तद्वत्परार्थार्जने संपद्येत समीक्षणेऽपि विकलः पापैर्विवेकादिभिः ॥ ४८ ॥**

अत एवास्माभिरपि परित्यक्तसौभ्रात्रैः तेऽपि दुरात्मानो जिघांस्यन्ते । ततः प्रवृत्तिनिवृत्तिपद्धती समाश्रित्य वयं च ते च संयतिष्यामहे । तदा तु सत्त्वप्रधानं कुलं ज्योतिरिङ्गणज्योतिरिव द्युमणिकिरणैरस्माभिरभिभूयते ।

**सौहार्दमित्थमनवाप्य सहोदराणामासीत्स्वमूलगुणभेदवशाद्विरोधः ।**

**एकप्रजापतिभुवामपि वैरबन्धः स्वात्मावधिः स्वयमुदेति सुरासुराणाम् ॥ ४९ ॥**

**रतिः**— सन्तं पावं सन्तं पावं । पुत्ता एव्व पितुणो भोअं विणासेन्ति । तह कहं सोअरा एव्व इअरेअरविद्धंसण-ळंपटहिअआ होंति । णाह, किं ण होज्ज ताणं तुम्हाणं वि समरदुद्दसाणिवारणसाहणं सन्धी ? [शान्तं पापम्, शान्तं पापम् । पुत्रा एव पितुर्भोगं विनाशयन्ति । तथा कथं सोदरा एव इतरेतरविध्वंसनलम्पटहृदया भवन्ति ? नाथ, किं न भवेत् तेषां युष्माकमपि समरदुर्दशानिवारणसाधनं संधिः ?

**कामः**— मुग्धे, कथंचिदपि नात्र सन्धिः संभाव्यते ।

**सतः सत्त्वविहीनानां सत्तयैवापराध्यतः । कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ ५० ॥**

**प्रतिपुरुषविभक्तमूर्तिभेदा वयमितरे च मिथः प्रतीपवृत्ताः ।**

**क्वचिदधिकरणे समापतन्तः सुतनु दधीमहि वध्यघातकत्वम् ॥ ५१ ॥**

न खल्वर्थकामपराणामस्माकं नारायणपरायणैः कथायामपि संगतिरुपपद्यते । किं च, यथाकथंचिदुपपद्यमानमपि अखण्ड-वैरिखण्डनपण्डितो महामोहः कथंचिदपि संधिं नानुमन्यते । अहं वा कथमसहायवीरस्तमनुमन्ये? न खलु क्षुधितोऽपि शार्दूलः कदाचिदपि शाद्वलमत्ति ।

**रतिः**— को उण तेहिं कुळग्घेहिं महाबलाणं तुम्हाणं वि उम्मूलणे उवाओ संमन्तिओ ? [कः पुनस्तैः कुलघ्नैः महाबलानां युष्माकमप्युन्मूलने उपायः संमन्त्रित ?]

**कामः**— अयि भीरु, अनुद्घाटनीयमिदं राजरहस्यम् । विशेषतः स्त्रीषु ।

**रतिः**— (हस्तं संगृह्य) अय्यउत्त, साविदोसि मए पिअसहेण वसन्तेण अ । सच्चं विवरिज्जइ राअरहस्सम् । [आर्यपुत्र, शापितोऽसि मया प्रियसखेन वसन्तेन च । सत्यं विव्रियतां राजरहस्यम् ।

**वसन्तः**— (स्वगतम्) किमत्र विवरणीयम्? दुष्परिहरः खलु अनिर्धारितकालो नियतिविपर्यासः । (प्रकाशम्) सखे मकरध्वज,

**मनोरथसमर्थानां महामोहविरोधिनाम् । मन्त्रभेदनमस्माभिः कार्यं तत्परिपन्थिभिः ॥ ५२ ॥**

**कामः**— प्रिये, कथयामि तर्हि । अस्ति खलु अनभिज्ञकुलसार्वभौमविवेकमूलकर्तृत्वाभिमानादिनानाविधविषमदृष्टिसह-कृतः कश्चिदसत्कुलाभिचारकाङ्क्षिभिः उपनिषदूषरनिष्ठैः कैश्चिन्निष्ठुरैः अनुष्ठीयमानो निवृत्तिसंज्ञको धर्मः, यन्नि-ष्ठस्य पुरुषस्य परदोषदर्शनादिष्वन्धबधिरषण्डपङ्गुमूकादिवदत्यन्तमवसन्नावस्थानमाकर्ण्यते । तेन च निष्प्रतिक्रियेण केनचिदव(प)ग्रहेणेव पुरुषमाविशता बुद्धिः संगस्यते । तस्मात् लकि तत्संगमादसत्कुलप्रद्वेषदूषितहृदया प्रशान्त-मधुरवेषप्रच्छन्ना भवरसभोगभैमरथी परमकृत्यपरपर्याया ब्रह्मराक्षसी प्रादुर्भविष्यति ।

तथा हि, गुणत्रेतोन्मेषक्रमपरिणतानन्तविकृतिः क्वचित्काले बुद्धिः कुलयुगलकूटस्थगृहिणी ।
अतिक्रूरात्यन्तप्रलयविधिदुर्मन्त्रपरुषां पुरा भीमाकारां सृजति परभक्तिं परवती ॥ ५३ ॥

ततश्च, प्रव्रज्यादियुता परत्र पुरुषे पातिव्रतीं बिभ्रती भक्तिः सा प्रतिरुद्धसर्वकरणा घोरं तपस्तप्यते ।
तुष्टा तेन जनार्दनस्य करुणा कुर्वीत तत्किङ्करं कंचित्कैटभकोटिकल्पमसुरं... (इत्यर्धोक्ते विरमति)

वसन्तः— (स्वगतम्) स खलु संकल्पसूर्योदयः, 'निर्मूलनस्त्वेष नः' इति शेषः । अन्यथा तु पूरयामि । (प्रकाशम्)
शेषं पुनर्दुर्वचम् ॥ ५४ ॥

रतिः— (सभयसंभ्रमम्) णाह, परिरक्ख परिरक्ख । [नाथ, परिरक्ष परिरक्ष] (इति भर्तारमाश्लिष्यति ।)

कामः— (गाढमुपगुह्य अभुक्तपूर्वमिव निर्वेशं नाटयन्, आत्मगतम्)

जनितवलयभङ्गे दत्तहाराग्रमर्दे मुषितनिखिलखेदे मोहसंतोषहेतौ ।
सचकितपरिरम्भे सांप्रतं कातराक्ष्यास्त्यजति युगलचिन्तामङ्गयोरन्तरात्मा ॥ ५५ ॥

(प्रकाशम्) सखि, महामोहसैनिकधुरन्धरस्य मम प्रेयसी सती मा भैषीः । समाश्वसिहि, समाश्वसिहि । इदं खल्वैन्द्रजालिकनगरनिगरणप्रायमनिपुणनैगमिकरथ्यापुरुषनिर्मितं किमप्यैतिह्यम् । तथा हि,

कुवृत्तमिति कौक्कुटं व्रतमधिक्षिपद्भिस्तथा सुधाकरशतक्रतुप्रभृतिभिः स्वयं चस्खले ।
नदद्भ्रमरपङ्क्तिके नमति कार्मुके मामके विरक्तिगृहदेहलीं क इह दोहली वीक्षते ॥ ५६ ॥

तिष्ठन्तु च महाबला मन्त्रिवर्गाः,

प्रमादालस्यनिद्रादिविविधव्यूहविग्रहः । प्रज्ञावरणघोरात्मा मोहः केन विजेष्यते ॥५७॥

रतिः— (स्वगतम् ।) विहिवसेण विवरीअं भणिअं अय्यउत्तेण । (प्रकाशम्) होज्ज मङ्गलं महाराअस्स । [विधिवशेन विपरीतं भणितमार्यपुत्रेण । भूयान्मङ्गलं महाराजस्य ।]

वसन्तः— अयि मन्मथपत्नि मा स्म भैषीर्ननु मोहादिषु संस्थितेषु सत्सु ।
प्रकृतिं पुरुषः प्रपित्समानः प्रतिपद्येत विरक्तितो विमुक्तिम् ॥ ५८ ॥

रतिः—(आत्मगतम्) आः ! वसन्तभासिअं वि विवरीअं विअ दीसइ । [आः ! वसन्तभाषितमपि विपरीतमिव दृश्यते ।]
(प्रकाशम्) अय्यउत्त, किं विवेअस्स णत्थि विवेओ, अमच्चाणं वा तस्स समदमप्पमुहाणं ? पुरुसे खु पइदिं मोक्कूण गए अम्हाणं ताणं वि अविसेससुलहं अवसाणं । [आर्यपुत्र, किं विवेकस्य नास्ति विवेकः, अमात्यानां वा तस्य शमदमप्रमुखाणाम् ? पुरुषे खलु प्रकृतिं मुक्त्वा गते अस्माकं तेषामपि अविशेषसुलभमवसानम् । ]

कामः— एवमेतत् । अस्मदुन्मेषमसहमानाः पुनरेते पापाः प्रज्ञाचक्षुषि कश्चित्पुरुषे साक्षिणि कुलद्वयमूलकूलङ्कषासु कुहनासु गहनमीहन्ते । सर्वथा मूढचेतसश्चैते मोघकर्माणो भविष्यन्ति । यतः,

प्रसुप्तानपि युद्धेन सुग्रीवसुभटानिव । कर्मशक्तिरनुच्छेद्या पुनरुद्बोधयिष्यति ॥ ५९ ॥

(नेपथ्ये) कोऽसौ विपर्यस्तदृष्टिरनुग्रहैकनियतकौतुकानस्मानेव पापान् प्रलपति? रे रे! दुर्विनीत, दुराचार, निस्पन्दनिगलितकूटस्थानां नृशंसवृत्तीनां वः प्रतिक्षेपे पुरुषस्य निरस्तनिखिलदुःखनिरतिशयानन्दप्रापणे तदापि तद्बुद्ध्यनुप्रवेशेन स्वकुलसञ्जीवने च दनुजमथनदयाधीनवृत्तयो वयं प्रवर्तामहे। अस्ति चौपनिषदोऽप्यनुद्घोषः,

स्वाधीनसंसरणनाट्यनिरूढवृत्तेः संतोषितः प्रणतभूमिकयाऽस्य पुंसः ।
स्थाने विधास्यति विभुः स्थिरचिह्नमेदं क्रीडानटस्य भगवान्कृपया स्वसाम्यम् ॥ ६० ॥

ततश्च, रिपुमथनकृतं यशो महीयः पितृपरिरक्षणसंभृतश्च धर्मः ।
अभिमतघटनोद्भवश्च हर्षः सपदि विधास्यति संनिधिं स्वयं नः ॥ ६१ ॥

कामः— (सभयावहित्थमवलोक्य) प्रिये, मोहपरिपन्थिपक्षे मूर्धाभिषिक्तः स्वयमसौ स्वसहधर्मचारिण्या सुमत्या सहाभ्यमिर्लीण उपसर्पति। अयं हि,

मुकुलयति विवित्सां मोहविध्वंसमिच्छन् विमृशति निगमान्तान्वीक्षते मोक्षधर्मान् ।
निशमयति च गीतां नित्यमेकान्तभक्त्या गुणपरिषदवेक्षी गुप्तमन्त्रो विवेकः ॥ ६२ ॥

अपि च, प्रत्यङ्मुखीं सुमतिदीप्तिमिह प्रचिन्वन् प्राप्तोदयोऽप्यमितरागबलोपपन्नः ।
क्षाम्यन्नहंकृतिमयीमवशो हिमानीं भास्वानसौ भजति विष्णुपदं विवेकः ॥ ६३ ॥

तत्र सांप्रतमस्माभिरप्राप्तसमयैरसहायैश्चारातिसंनिधावात्मानं प्रकाशयितुम्। [इति समित्रकलत्रो निष्क्रान्तः ।]

इति मिश्रविष्कम्भः ॥

[ ततः प्रविशति राजा, सुमतिश्च । ]

राजा— (सविमर्शम्) प्रिये, समाकर्णितस्त्वया अनवधिकदुरितविषवननमूलभूतस्यामन्ददर्पस्य कन्दर्पवटोराटोपः ? यदसावशेषपापनिष्कृतौ प्रवर्तमानानस्मानेव पापारोपेण परिवदति। अथवा,

पश्यति परेषु दोषानसतोऽपि जनः सतोऽपि नैव गुणान् । विपरीतमिदं स्वस्मिन्महिमा मोहाञ्जनस्यैषः ॥

सुमतिः— अय्यउत्त, विरूपा खु जणा णिअमुहदोसं णिम्मळेसु वि दप्पणेसु समप्पन्ति। [आर्यपुत्र, विरूपाः खलु जना निजमुखदोषं निर्मलेष्वपि दर्पणेषु समर्पयन्ति । ]

राजा— देवि, सत्यमेतत् । यथार्थदर्शिनी यथादृष्टार्थवादिनी च भवती । किं च,

निर्धूतनिखिलदोषा निरवधिपुरुषार्थलम्भनप्रवणा । सत्कविफणितिरिव त्वं सगुणालंकारभावरसजुष्टा ॥ ६५

(विचिन्त्य) प्रिये, हन्त, निर्विकारपुरुषपीडया क्रीडन्त एते कामक्रोधलोभादयः सुपन्थानमास्थिताः, वयं पुनस्तमेव निश्रेयसे नियोजयितुं समस्तजनसांसिद्धिकसुहृदो भगवतस्तापत्रयाभिहतसर्वजनसंजीविनीं दयादृष्टिमावहन्तः कदध्वना प्रवृत्ताः। अहो ! महानयमुन्मत्तालापः । पश्य मे त्वया सह निर्वर्तनीयं परानुग्रहव्रतम् ।

**महत्यारम्भेऽस्मिन्मधुरिपुदयासंभृतधृतिर्बहिष्कृत्यारातीन्सुमुखि बहिरन्तश्च भवतः ।**
**समाधावाधाय क्षपितवृजिनं क्षेत्रिणमहं परप्राप्त्या धन्यं परिणमयितुं प्राप्तनियमः ॥ ६६ ॥**

**सुमतिः**— अय्यउत्त, कहं सो णिच्चणिम्मळमहाणन्दसअंपहो सव्वजणदंसणजोग्गसहावो पुरुसो महामोहेण माणमदमच्चरप्पमुहेहिं वि दुव्विणीएहिं दुव्वारगव्वसंकुळदुरिअमहोम्मिसंघाअसंघडणभीसणे दुक्खसाअरम्मि णिक्खित्तो [आर्यपुत्र, कथं स नित्यनिर्मलमहानन्दस्वयंप्रभः सर्वजनदर्शनयोग्यस्वभावः पुरुषः महामोहेन मानमदमत्सरप्रमुखैरपि दुर्विनीतैः दुर्वारगर्वसंकुलदुरितमहोर्मिसंघातसंघटनभीषणे दुःखसागरे निक्षिप्तः ?

**राजा**— प्रिये सूक्ष्मदर्शिनि, किं दृष्टमपह्नोतव्यम् ? आगमिकं वा न प्रत्येतव्यम् ? पश्यतु भवती ।

**स्वतः प्राप्तं रूपं यदिह किल भावेषु तदपि त्यजन्तस्ते दृष्टा नियतिघटितोपाधिवशतः ।**
**प्रकृत्या तिष्ठन्ति ह्युपधिविगमे ते च तदसावनादिः संसारः पुरुषमुपरुन्धे गलति च ॥ ६७ ॥**

**सुमतिः**— एव्वं एदं । तह वि कहं एआवन्तं काळं परमकारुणिएण देव्वेण लच्छीवल्लहेण दुस्सहदुक्खसअधूमिओ पुरुसो उवेक्खिओ ? [एवमेतत् । तथापि कथमेतावन्तं कालं परमकारुणिकेन देवेन लक्ष्मीवल्लभेन दुःसहदुःखशतधूमितः पुरुष उपेक्षितः ?]

**राजा**— किं न श्रूयते भवत्या—यदनादिनिजकर्मरूपाविद्योपरोधेन क्षेत्रज्ञोऽयमीश्वरेण क्षिप्तः संसरन्नवसरे तेनैव समुद्ध्रियत इति ? यथा—

**मिथःकलहकल्पनाविषमवृत्तिलीलादयापरिग्रहणकौतुकप्रथितपारवश्यः प्रभुः ।**
**स्वलक्षितसमुद्गमे सुकृतलक्षणे कुत्रचित् घुणक्षतलिपिक्रमादुपनिपातिनः पाति नः ॥ ६८ ॥**

अत्र च, **सुखदुःखवाहिनीनां व्यत्ययविनिमयनिवर्तनानर्हे ।**
**नियतक्रमे प्रवाहे निपतितमुत्क्षिप्य मोदते देवः ॥ ६९ ॥**

**सुमतिः**— अय्यउत्त, अणादिम्मि गए काले अळद्धपुव्वो मोक्खो अणन्ते वि उवरिअणकालम्मि केण कहं लहिज्जत्ति सङ्काकळङ्ककव्वुरिअं मे हिअअं । [ आर्यपुत्र, अनादौ गते काले अलब्धपूर्वो मोक्षः अनन्तेऽप्युपरितनकाले केन कथं लभ्यत इति शङ्काकलङ्ककर्बुरितं मे हृदयम् । ]

**राजा**—देवि विवेकवल्लभे, अनधिगतप्रमाणतर्कसरणिरिव कथमेवमाशङ्कसे ? अथवा,

**कालस्वभावनियतियदृच्छादिषु वस्तुषु । कारणं किमिवात्रेति तापसैरपि तर्कितम् ॥ ७० ॥**

इदमत्र तावदवधातव्यम् ।

**कर्माविद्यादिचक्रे प्रतिपुरुषमिहानादिचित्रप्रवाहे तत्तत्काले विपक्तिर्भवति(बह)हि विविधा सर्वसिद्धान्तसिद्धा ।**
**तल्लब्धस्वावकाशप्रथमगुरुकृपागृह्यमाणः कदाचिन्मुक्तैश्वर्यान्तसंपन्निधिरपि भविता कश्चिदित्थं विपश्चित् ॥**

**स च मोक्ष्यमाणो मत्समक्षमादौ तावत् ,**

**दर्पोदग्रदशेन्द्रियाननमनोनक्तंचराधिष्ठिते देहेऽस्मिन्भवसिन्धुना परिगते दीनां दशामास्थितः ।**

**अद्यत्वे हनुमत्समेन गुरुणा प्रख्यापितार्थः पुमान् लङ्कारुद्धविदेहराजतनयान्यायेन लालप्यते ॥ ७२ ॥**

अपि च, **बहुलदुरितद्वारे ब्राह्मे पुरे परसंमतः(त) स्वमतिघटितस्वातन्त्र्यत्वादयन्त्रितचेष्टितः ।**

**विषमसचिवैः स्वे स्वे कार्ये विगृह्य विकृष्यते नरपतिरिव क्षीबो नानाविधैरयमिन्द्रियैः ॥ ७३ ॥**

**सुमतिः**— अय्यउत्त, एव्वं हुदवहवेडिअघरगअं विअ अप्पाणं अप्पमत्तबुद्धी किं ण णिज्जिगमिसाए रक्खइ पुरुसो ? [आर्यपुत्र, एवं हुतवहवेष्टितगृहगतमिवात्मानमप्रमत्तबुद्धिः किं न निर्जिगमिषया रक्षति पुरुषः ? ]

**राजा**— प्रिये सर्ववेदिनि, अनादिः खल्वयमलङ्घनीयो रागजलधिः ।

**स्थिरत्रसविभक्तिमत्त्रिविधरागदश्योदयं सुमृष्टमणिभित्तिवत्स्वयमभिद्यमानः पुमान् ।**

**त्रियुग्मगुणशिल्पिना त्रिगुणतूलिकाधारिणा विविच्य विनिवेशितं वहति चित्रमत्यद्भुतम् ॥ ७४ ॥**

**सुमतिः**— (सविषादम्) इदि णाम उम्मत्तदसं पुरुसं बुद्धी पिअदमा किं ण बोहेइ ? [इति नाम उन्मत्तदशं पुरुषं बुद्धिः प्रियतमा किं न बोधयति ? ]

**राजा**— प्रिये सूक्ष्मवादिनि, साऽपि खलु इदानीं स्वयंप्रकाशाऽपि सुप्तप्राया वर्तते । यथा,

**पत्यौ दूरं गतवति रवौ पद्मिनीव प्रसुप्ता म्लानाकारा सुमुखि निभृता वर्तते बुद्धिरम्बा ।**

**मायायोगान्मलिनितरुचौ वल्लभे तुल्यशीला राहुग्रस्ते तुहिनकिरणे निष्प्रभा यामिनीव ॥ ७५ ॥**

**सुमतिः**— अय्यउत्त, अइकरुणा इमा बुद्धिसहिअस्स पुरुसस्स बद्धदसा, एअस्स विउलदुःखजालविहलस्स वित्थरेण मोक्खागमं पकासेन्तो विसङ्कं मं कुणसु । [आर्यपुत्र, अतिकरुणेयं बुद्धिसहितस्य पुरुषस्य बद्धदशा, एतस्य विपुलदुःखजालविह्वलस्य विस्तरेण मोक्षागमं प्रकाशयन्विशङ्कां मां कुरुष्व । ]

**राजा**— देवि अनवरतशोभनाशंसिनि, निदानमिह निपुणमुपपादयन्प्रतिपन्नमेव भवतीं प्रत्यभिज्ञापयामि ।

**दुरासेधस्थेम्ना दुरितपरिपाकेण भविनः प्रमाथी संसारः प्रशमरहितोऽयं प्रभवति ।**

**निरोधे तस्यैका निरुपधिककारुण्यघटितस्वतन्त्रेच्छाशक्तिः स्वयमुपधिमाधाय रमते ॥ ७६ ॥**

**सुमतिः**— जइ मए वि सो उवाही सुणिअव्वो, ता मं अय्यउत्तो आणवेदु । [ यदि मयाऽपि स उपाधिः श्रोतव्यः, तदा मामार्यपुत्र आज्ञापयतु । ]

**राजा**— प्रिये विशुद्धभाषिणि, श्रूयतामिह सूक्ष्मार्थसंग्रहः ।

**मदनमत्सरमानमयः पुमान्बहुपिशाचगृहीत इवार्भकः । निगमसिद्धनरेन्द्रनिरीक्षया निपुणपद्धतिमभ्युपपद्यते ॥**

ततश्च, **अनघदेशिकदृष्टिसुधाप्लवे विधिवशादुपसेदुषि देहिनः ।**

**विमलबोधमुखा विविधा गुणाः परिणमन्त्यपवर्गदशाङ्कुराः ॥ ७८ ॥**

अपि च, स्वाधीनेतरपातभीतिपरुषस्त्रत्रासदुर्वासनापाशाकर्षणयन्त्रणाभिरभितः क्षिप्तात्मनः क्षेत्रिणः ।
निष्प्रत्यूहविजृम्भमाणकरुणादुग्धार्णवे निर्भरा भक्तिः सेत्स्यति भागधेयवशतः प्राप्ये परब्रह्मणि ॥

अत्र चान्तरा सर्वस्वदक्षिणोऽयमध्वरः प्रवर्तते । यत्र तु,

त्वया जुष्टः पत्न्या विधिवदिह यष्टा स्वयमहं विधत्ते चार्त्विज्यं शमदममुखोऽयं गुणगणः ।
अकस्मादुद्देश्यो भवति भगवानात्महविषः पशुर्बद्धो मुक्तिं भजति विगलत्कर्मनिगलः ॥ ८० ॥

इदमप्यत्रभवत्या भावनीयम्—

स्वरक्षणभरार्पणक्षणिकसत्रिणः क्षेत्रिणः प्रवर्त्य कृपया स्थितिं प्रभुरभूतपूर्वोदयाम् ।
जगद्विपरिवर्तनप्रथितनित्यशक्तिः स्वयं क्षिपत्यपुनरङ्कुरं दुरितमस्य लक्ष्मीपतिः ॥ ८१ ॥

**सुमतिः**— अय्यउत्त, एव्वं णाम वण्णिज्जन्ती ओवग्गदसा पुरुसस्स कइआ होहिइ ? [आर्यपुत्र, एवं नाम वर्ण्यमानापवर्गदशा पुरुषस्य कदा भविष्यति ? ]

**राजा**— देवि त्रैलोक्यवेदिनि, दुःसहानादिदुःखसागरनिमग्नस्य यथागमं यथान्यायं च केनचित्कारणेन समुत्तारः संभविष्यतीति संतोष्टव्यं तावत् । इह हि,

निरपायदेशिकनिदर्शितामिमां कमलासहायकरुणाधिरोहणीम् ।
क्रमशोऽधिरुह्य कृतिनः समिन्धते परिशुद्धसत्त्वपरिकर्मिते पदे ॥ ८२ ॥

अपि च, स्वयमुपशमयन्ती स्वामिनः स्वैरलीलां स्वमतमिह दुहाना स्वादु पथ्यं प्रजानाम् ।
नियतमिदमिदानीमन्यदा वा भवित्री निरवधिसुखसिद्ध्यै निष्प्रकम्पानुकम्पा ॥ ८३ ॥

इयं हि, अविरलगुणच्छाया मायात(मः)प्रतिरोधिनी परिहृतरजःपङ्का तापैरसंघटिता त्रिभिः ।
मधुरिपुदयामूर्तिर्दिव्या निराकृतकण्टका वहति निगमाद्वर्तन्येका पुरीमपराजिताम् ॥ ८४ ॥

**सुमतिः**— अय्यउत्त, अपरिमिअदुरिअभरिअस्स जन्तुणो दुक्खसाअरादो उत्तारवअणं बालजणसन्तोसवअणं विअ उवच्छन्दणंति पेक्खामि । [आर्यपुत्र, अपरिमितदुरितभरितस्य जन्तोः दुःखसागरादुत्तारवचनं बालजनसंतोषवचनमिव उपच्छन्दनमिति पश्यामि । ]

**राजा**— भद्रे अबाधितार्थग्राहिणि, मा स्म मिथ्यादृष्टिमुपतिष्ठ । सुमतिः खल्वसि, अपि दृष्टः कचिदाप्तागमस्य बाधः, ऐश्वरस्य वा भक्तजनसंरक्षणप्रतिज्ञानस्य ? इयं ते प्रत्यायना ।

शपे दैष्टिक्येन स्वयमिह भवत्या च सुमते त्वयैव द्रष्टव्यः स्वपनविगमोन्मीलितधिया ।
अहंकारग्राहग्रहकदनसाक्रन्दतनुभृन्मुमुक्षासंरब्धो मुरमथनसंकल्पमहिमा ॥ ८५ ॥

अथवा, साधारणश्चायमाश्रितसंरक्षणसमारम्भः । तथा हि—

**दीनो दृप्यतु वाऽपराध्यतु परं व्यावर्ततां वा ततस्त्रातव्यः शरणागतः शकनतः सद्भिस्तथा स्थाप्यते ।**
**विश्वामित्रकपोतराघवरघुव्योमाध्वगप्रेयसीनालीजङ्घबृहस्पतिप्रभृतिभिर्नन्वेष घण्टापथः ॥ ८६ ॥**

सुमतिः— अय्यउत्त, होन्ति खु महन्ता पिआमहप्पमुहा वि मोक्खकामेहिं तेहिं तेहिं उवासिज्जन्ता। ता किं सिरीवई एव्व णिव्वाणस्स काळणं भणिज्जइ ? [आर्यपुत्र, भवन्ति खलु महान्तः पितामहप्रमुखा अपि मोक्षकामैस्तैस्तैरुपास्यमानाः । तत्किं श्रीपतिरेव निर्वाणस्य कारणं भण्यते ?]

राजा— प्रिये सूक्ष्मदर्शिनि, किं न मन्यसे ? असाधारणं हि मधुमथनस्य माहात्म्यम् ।

**पुरा वेधःस्तम्बावधि पुरुषसृष्टिस्थितिमति स्थिरा भक्तिः सूते त्रिपदुपरति पुंसि परमे ।**
**तदन्यानभ्यर्चन्नभिलषितमुक्तिः सुरगणानुदन्यां प्रालेयैरुपशमयितुं वाञ्छति जडः ॥ ८७ ॥**

न खलु सहस्रमप्यालेख्यदिवसकरा अन्धकारं प्रतिक्षिपन्ति । ततश्च,

**आवध्नती विगतशान्तिमनादिनिद्रां चेतस्विनस्त्रिगुणशक्तिमयी त्रियामा ।**
**नाथस्य केवलमसौ नरकान्तकर्तुः संकल्पसूर्यविभवेन समापनीया ॥ ८८ ॥**

सुमतिः— अय्यउत्त, अज्ज खु देवाणं मुणीणं वि परावरपुरुसविवेअणे डोळाअइ चिन्ता । तुए उण कहं एक्कम्मि पुरुसोत्तमे णिट्ठा णिजन्मइ ? [आर्यपुत्र, अद्य खलु देवानां मुनीनामपि परावरपुरुषविवेचने डोलायते चिन्ता । त्वया पुनः कथमेकस्मिन्पुरुषोत्तमे निष्ठा नियम्यते ?]

राजा— देवि, ननु सोपबृंहणनिपुणनिरूपिताभिरुपनिषद्भिरेव प्रसिद्धं खलु वेदविप्रकेशवनामैकराश्यम् ।

**मेयं विष्णुर्वेदवादाश्च मानं मातारश्च ब्रा(श्चेद्रा)ह्मणाः सत्त्वनिष्ठाः ।**
**इत्थं तेषामैकराश्यं प्रतीमः कीटप्रायैर्दुर्विदग्धैः किमन्यैः ॥ ८९ ॥**

अपि च,

**शास्त्राण्यालोड्य सर्वाण्यशिथिलगतिभिर्युक्तिवर्गैर्विचार्य स्वान्तर्निर्धार्य तत्त्वं स्वभुजमपि महत्युद्धरन्नुरिसङ्घे ।**
**सत्यं सत्यं च सत्यं पुनरिति कथयन्सादरं वेदवादी पाराशर्यः प्रमाणं यदि क इह परः केशवादावरिस्ति ॥**

महाजनो येन गतः स पन्थाः इति च महर्षिभाषितम् । दृश्यते चैतत् ।

**तर्को न प्रतितिष्ठति प्रभवति तत्रापि वैयाकुली क्षोभं यान्ति मिथः क्षता ऋषिगिरः क्षुद्रोक्तयः किं पुनः ।**
**इत्थं तत्त्वविनिश्चयो निधिरिव क्षिप्तो गुहाभ्यन्तरे पन्थानं तु महाजनस्य निपुणः प्रत्यक्षमध्यक्षति ॥९०**

महान्तश्च व्यासवाल्मीकिमनुबृहस्पतिशुकशौनकप्रभृतयः प्रवदन्त्यस्माकमध्वानम् । तिष्ठन्त्वेते बहवः । अयं पुनरेकोऽपि,

**अपजन्मजरादिकां समृद्धिं कृपया संमुखयन्नशेषपुंसाम् । परदैवतपारमार्थ्यवेदी परिगृह्णातु पराशरः स्वयं नः ॥**

सुमतिः— अय्यउत्त, अणुत्तरं एदं उत्तरं । अज्ज उण अणन्तसाहणणिअमन्तणिरूपणं असहन्तस्स तुरन्तहिअअस्स चेअणस्स सव्वागमसारं संकळळण दंसेदुं तुमं पेत्थम्मि । [आर्यपुत्र, अनुत्तरमेतदुत्तरम् । अद्य पुनरनन्तसाधन-

निगमान्तनिरूपणमसहमानस्य त्वरमाणहृदयस्य चेतनस्य सर्वागमसारं संकलय्य दर्शयितुं त्वां प्रार्थये ।

राजा— साधु विचिन्तितं भवत्या । तदिदं प्रदर्शयामि,

**स्वसंकल्पोपघ्नत्रिविधचिदचिद्वस्तुविततिः पुमर्थानामेकः स्वयमिह चतुर्णां प्रसवभूः ।**

**शुभस्रोतोभाजां श्रुतिपरिषदां श्रीपतिरसावनन्तः सिन्धूनामुदधिरिव विश्रान्तिविषयः ॥ ९३ ॥**

अपि च, **परः पद्माकान्तः प्रणिपतनमस्मिन् हिततमं शुभस्तत्संकल्पश्चुलकयति संसारजलधिम् ।**

**झटित्येवं प्रज्ञामुपजनयता केनचिदसावविद्यावेतालीमतिपतति मन्त्रेण पुरुषः ॥ ९४ ॥**

प्रिये, संमितमतीनामपि चित्तसमाधानहेतुसंग्रहो दर्शितः । किं तु,

**धृतनिगमकवचगूढाः कष्टं संप्रति कुदृष्टयः केचित् । छलयन्ति सौगतादीन् स्वालोपालम्भतुल्यया वाचा ॥**

अथ विस्तरेण प्रतिविधिरस्य वेदान्तेषु विपुलमतिभिरनुसंधीयते । इष्टमेव खलु विदुषां समासव्यासधारणम् ।

सुमतिः— सुट्ठु भणिअं अय्यउत्तेण । एव्वं वि तेहिं तेहिं महेसिमएहिं तक्केहिं वि तारिसेहिं पआरिज्जन्ता णिअमन्ता चोराकिट्टगोधणसरिसा होहिन्तित्ति संपण्णसद्धसा मह चिन्ता । [सुष्ठु भणितमार्यपुत्रेण । एवमपि तैस्तैर्महर्षिमतैस्तर्कैरपि तादृशैः प्रतार्यमाणा निगमान्ताश्चोराकृष्टगोधनसदृशा भविष्यन्तीति संपन्नसाध्वसा मम चिन्ता ।

राजा— अलमतिशङ्कया ।

**अविप्लुतपरिग्रहस्मृतिशतैककण्ठी श्रुतिः स्वभक्तिविकलस्मृतीः स्वपनतोऽपि न प्रेक्षते ।**

**स्वतःप्रमितिसाधिनी सुदृढतर्कगुप्ता च सा रुणद्धि पुनरप्रतिष्ठितकुतर्ककोलाहलम् ॥ ९६ ॥**

(नेपथ्ये) **मूलच्छेदभयोज्झितेन महता मोहेन दुर्मेधसा कंसेन प्रभुरुग्रसेन इव नः कारागृहे स्थापितः ।**

**विख्यातेन विवेकभूमिपतिना विश्वोपकारार्थिना कृष्णेनेव बलोत्तरेण घृणिना मुक्तः श्रियं प्राप्स्यति ।**

राजा— (**कर्णं दत्त्वा सानन्दम्**) प्रिये, श्रूयते सेयमकृत्रिमसरस्वतीवावितथवादिन्यशरीरिणी भारती ।

सुमतिः— (**सानन्दम्**) अय्यउत्त, तिदसभासिदं खु एदं । ण खु कहं वि अळिअं होज्ज । [आर्यपुत्र, त्रिदशभाषितं खल्वेतत् । न खलु कथमप्यलीकं भवेत् । ]

राजा— प्रिये, सर्वथा तावत्त्वत्सहायस्य मे हस्तगतैव विजयसिद्धिः । अपि च,

**रिपुगणविजिगीषाबिन्दुलेशोऽप्यसौ मे मधुजिदनुजिघृक्षावाहिनीवर्धितात्मा ।**

**सफलयितुमधीष्टे साधु संप्लावयिष्यन् यतिगणबहुमान्यं यत्नसंतानवृक्षम् ॥ ९८ ॥**

[ **पुनर्नेपथ्ये दुन्दुभिध्वनिः । उभौ कर्णं दत्तः ।** ]

सुमतिः— (**सविस्मयम्**) अय्यउत्त,

**कुलवइमोक्खणूसवमिअङ्ककहा कइआ णवसमरूसुआ वि ण अ होइ गइन्दघडा ।**

**तह वि जुअन्तहोन्तथणइण्णुणिहक्कणिओ कह कह को वि हन्त णिहिंळं मुहळेइ णहं ॥ ९९ ॥**

अर्यपुत्र, कुलपतिमोक्षणोत्सवमृदङ्गकथा कदा नवसमरोत्सुकाऽपि न च भवति गजेन्द्रघटा ।

तथापि युगान्तभवस्तनयित्नुनिभक्वणितः कथं कथं कोऽपि हन्त निखिलं मुखरयति नभः ॥

**राजा**— प्रिये, अस्मद्विजयसंनाहसंधुक्षकैरमरपतिभिरयमभिहन्यते दुन्दुभिः । तदिह स्थापितस्वपक्षैरस्माभिः परपक्षप्रतिक्षेपे प्रयतितव्यम् । [इत्युभौ निष्क्रान्तौ]

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके प्रथमोऽङ्कः ।

---

## द्वितीयोऽङ्कः

---

[ततः प्रविशति श्रद्धा विचारणा च । ]

**विचारणा**— समजळबिन्दुणिअरणिब्भासिअणिडाळअळा वच्चदंसणूसुआ वच्चळेव्व तुरन्ती (वंटसि) वट्टसि ।

**मुहचन्दसन्दिअसुहासुहआ छविफुल्लमल्लिमअरन्दणिहा ।**

**णवसोम्मजोव्वणळआकळिआसिरिमुव्वहन्ति तुह सेअकणा ॥ १ ॥**

[श्रमजलबिन्दुनिकरनिर्भासितनिटालतला वत्सदर्शनोत्सुका वत्सलेव त्वरमाणा वर्तसे ।

सुखचन्द्रस्यन्दितसुधासुभगाश्छविफुल्लमल्लीमकरन्दनिभाः ।

नवसौम्ययौवनलताकलिकाश्रियमुद्वहन्ति तव स्वेदकणाः ॥ १ ॥]

**श्रद्धा**— पिअसहि, दाणिं किळ एक्कमुहप्पडिट्ठाविअसुइसिरसिद्धन्तस्स पडिपक्खपडिक्खेवभाविअपडिण्णस्स भत्तुणो विवेअस्स सहधम्मआरिणी देवी सुमई पक्कन्दणिव्वहणदोहळेण परिगहिअमङ्गलाआरा पमदावणपारिसरअणसेळं आसिदा कमलावइचळणकमळसमच्चणजोग्गाइ कञ्चणपदुमाइ उवहरिउं आणविऊण सोहणेक्कताणहिअआ सुहं ठाइ । ता झत्ति उवसप्पम्मि पङ्कआसणवअणपङ्कअराअहंसिं भारइं विअ पसण्णप्पवाहं भाईरहिं । [अध्वश्रममभिनं.य]

**कच्छुत्तंसिअकप्परुक्खसिहरुब्भासन्तवासन्तिआगन्धुग्गारफुरन्तसोम्मळहरीसोहन्तरोहन्तरा ।**

**अह्मे दूसहजम्मसंचरसमासिद्धाइ सुद्धाकिदी दुक्खाइं कइआ णु काहइ सअं मन्दाइ मन्दाइणी ॥**

[प्रियसखि, इदानीं किल एकमुखप्रतिष्ठापितश्रुतिशिरःसिद्धान्तस्य प्रतिपक्षप्रतिक्षेपभावितप्रतिज्ञस्य भर्तुर्विवेकस्य सहधर्मचारिणी देवी सुमतिः प्रक्रान्तनिर्वहणदोहलेन परिगृहीतमङ्गलाचारा प्रमदावनपार्श्वरत्नशैलमाश्रिता कमलापतिचरणकमलसमर्चनयोग्यानि काञ्चनपद्मानि उपहर्तुमाज्ञाप्य शोभनैकतानहृदया सुखं तिष्ठति । तज्झटित्युपसर्पामि पङ्कजासनवदनपङ्कजराजहंसीं भारतीमिव प्रसन्नप्रवाहां भागीरथीम् ।

कच्छोत्तंसितकल्पवृक्षशिखरोद्भासमानवासन्तिकागन्धोद्गारस्फुरत्सौम्यलहरीशोभमानरोधोन्तरा ।

अस्माकं दुस्सहजन्मसंचरश्रमसिद्धानि शुद्धाकृतिर्दुःखानि कदा नु करिष्यति स्वयं मन्दानि मन्दाकिनी ॥]

विचारणा— (अग्रतो निर्दिश्य) एसा खु सा अम्हाणं आसण्णअरा। ता इमस्सिं सज्जनहिअअसीअलमन्दमारुअन्दोलिअमन्दारदुमकुसुममअरन्दसोरहभरिअमहुमहणपअसरिआपुळिणमाहवीलदावरे खलवअणतिण्हउण्हअरकिरणसन्तावं उवसमऊण खणन्तरे गमिस्ससि। जह्न अ,

**एदे णिब्भरणिग्गअसोरहसुहापब्भारविस्भाइअं माणुल्लुञ्छणमीणलञ्छणमहाधणुक्कवाणुक्करं।**

**छाआलीणमहिन्दवारवणिआधम्मिल्लमल्लोइअं साखग्गेहिं मुअन्ति पुप्फणिअरं रुक्खा मरुक्खोहिआ॥**

[एषा खलु साऽस्माकमासन्नतरा। तदेतस्मिन् सज्जनहृदयशीतलमन्दमारुतान्दोलितमन्दारद्रुमकुसुममकरन्दसौरभभरितमधुमथनपदसरित्पुलिनमाधवीलतागृहे खलवचनतीक्ष्णोष्णकरकिरणसंतापमुपशमय्य क्षणान्तरे गमिष्यसि। यत्र च,

एते निर्भरनिर्गतसौरभसुधाप्राग्भारविभ्राजितं मानोल्लुञ्छनमीनलाञ्छनमहाधानुष्कवाणोत्करम्।

छायालीनमहेन्द्रवारवनिताधम्मिल्लमाल्योचितं शाखाग्रैर्मुञ्चन्ति पुष्पनिकरं वृक्षा मरुत्क्षोभिताः॥ ३ ]

श्रद्धा— जह रोअइ पिअसहीए। [यथा रोचते प्रियसख्यै।] [उभे सललितमासाते]

श्रद्धा— हळा विआरणे, तुमं उण किंणिमित्तं इमं देसं आअदा? [हला विचारणे, त्वं पुनः किंनिमित्तमिमं देशमागता?]

विचारणा— सुणउ पिअसहीए। अज्ज खु विवेअमहाराअस्स ववसाअसेणावइसहाअस्स संणाहं सुणिऊण कुविएण रण्णा महामोहेण बुद्धजिणप्पमुहसिद्धन्तठावणप्पवीणा कुहअवाइणो कुमइगणेहिं सह पुरुसुत्तमपअपदुमणिअमिअचित्तं पुरुसं हालिअजम्बुअदंसणण्णाएण अत्थन्तरप्पसङ्गेण पआरेउं आदिट्ठा उवसप्पन्तित्ति किंवअन्तिं आकण्णअन्तीए भट्टिणीए सुमदीए विपक्खउत्तन्दं एअन्ते सेणावइणो विण्णवेदुं आणत्ता महाराएण विवेएण सहमन्तणप्पउत्तं तं एव्व दट्ठुं उवट्ठिअम्हि। [श्रूयतां प्रियसख्या। अद्य खलु विवेकमहाराजस्य व्यवसायसेनापतिसहायस्य संनाहं श्रुत्वा कुपितेन राज्ञा महामोहेन बुद्धजिनप्रमुखसिद्धान्तस्थापनप्रवीणाः कुहकवादिनः कुमतिगणैः सह पुरुषोत्तमपदपद्मनियमितचित्तं पुरुषं हालिकजन्बुकदर्शनन्यायेन अर्थान्तरप्रसङ्गेन प्रतारयितुमादिष्टा उपसर्पन्तीति किंवदन्तीमाकर्णयन्त्या भर्त्र्या सुमत्या विपक्षवृत्तान्तमेकान्ते सेनापतये विज्ञापयितुमाज्ञप्ता महाराजेन विवेकेन सह मन्त्रणप्रवृत्तं तमेव द्रष्टुमुपस्थिताऽस्मि।]

श्रद्धा— अज्ज उण पिसाअविवाहम्मि गद्दभगाणं संवुत्तं, जं महामोहसमीहिए दुव्वाइणं सण्णाहो। होदु णाम ईसक्करं एव्व परसिद्धन्तणिम्मूलणं महाराअस्स। [अद्य पुनः पिशाचविवाहे गर्दभगानं संवृत्तम्, यन्महामोहसमीहिते दुर्वादिनां संनाहः। भवतु नाम ईषत्करमेव परसिद्धान्तनिर्मूलनं महाराजस्य।]

विचारणा— हळा, विअप्पइप्पमुहेहिं पडिट्ठाविआणं पवलाणं बहूणं पडिपक्खाणं एक्केण णिम्मूळणं तुए कहं आसंसिअं? [हला, बृहस्पतिप्रमुखैः प्रतिष्ठापितानां प्रबलानां बहूनां प्रतिपक्षाणामेकेन निर्मूलनं त्वया कथमाशंसितम्?]

श्रद्धा— जं सच्चं तं एव्व णिच्चं होइ, जं उण मिच्छा तं काळेण अळीअं होइत्ति जणवादसंवाइणा बलवन्तेण पमाणेण। पेक्खिहिसि तुमं एव्व मह वअणसच्चत्तणं।

**दीसन्तो दिअसेसरोव्व बहळं अन्धारपब्भारअं दिप्पन्तो अ दवाणळोव्व विउळं विञ्झाटवीमण्डळम् ।**
**तूरन्तो अ पहञ्जणोव्व तुळिअं सेळेण तूळुक्करं पेक्खन्तो णिहिळं वि दुम्मइमअं भेत्तुं विवेओ पहू ॥ ४ ॥**

ता विवेअविअअकामस्स महामोहस्स कुमइगणसङ्गहणं साअरलङ्घणूसुअस्स उवलसहाअण्णेसणं ।
[यत्सत्यं तदेव नित्यं भवति, यत्पुनर्मिथ्या तत्कालेनालीकं भवतीति जनवादसंवादिना वल्भना मनागेन । भेत्स्यते त्वमेव मम वचनसत्यत्वम् ।

दृश्यमानो दिवसेश्वर इव बहुलमन्धकारप्राग्भारकं दीप्यमानश्च दवानल इव विपुलं विन्ध्याटवीमण्डलम् ।
त्वरमाणश्च प्रभञ्जन इव तुलितं शैलेन तूलोत्करं प्रेक्षमाणो निखिलमपि दुर्मतिमतं भेत्तुं विवेकः प्रभुः ॥

तस्माद्विवेकविजयकामस्य महामोहस्य कुमतिगणसंग्रहणं सागरलङ्घनोत्सुकस्य उपलसहायान्वेषणम् । ]

**विचारणा—** पच्चाइअम्हि पिअसहीवअणेन । संता मे विचिकिच्छा । अविलम्बिअकिअप्पेसणं भट्टिणिं पेक्खामि ।
[प्रत्यायिताऽस्मि प्रियसखीवचनेन । शान्ता मे विचिकित्सा । अविलम्बितकृतप्रेषणां भर्त्रीं प्रेक्षे । ]

**श्रद्धा—** हळा, समाणचित्तउत्तित्तणं सहित्तणं तुए पआसिअं । अहं अ कमलाइं अवचेउं आरद्धा । तुमं वि राअघरं पविसस्सु । [हला, समानचित्तवृत्तित्वं सखित्वं त्वया प्रकाशितम् । अहं च कमलान्यवचेतुमारब्धा । त्वमपि राजगृहं प्रविश । [इति निष्क्रान्ते ।

**[ प्रवेशकः ]**

**( ततः प्रविशति राजा व्यवसायश्च । )**

**राजा—** सेनापते ! कठिनतरकर्मपाशकोटिनिविडयन्त्रितमुधाव्यापारमोमुह्यमानपुरुषमोक्षणव्रतदीक्षितस्य मम स एष समयः सत्त्वमार्गविषयकृताकृतप्रत्यवेक्षणेन कृत्यशेषनिर्धारणस्य । **(मुहूर्तमिव स्थित्वा, सविषादम्)**

**जडमतिबहुलेऽस्मिन् दैवकोपाज्जनित्वा जगति निरपराधे जातनिर्व्याजवैराः ।**
**कति कति कलहार्थं क्लृप्तसिद्धान्तभेदाः प्रलपनमुखभेदान् पाठयन्ति प्रगल्भाः ॥ ५ ॥**

अः कष्टम् ! व्यामोहजनकविविधसमयोपप्लुते जगति कथमियमध्यात्मविद्या प्रतिष्ठास्यति ? (आकाशे) भो भो महामोहापशद, त्रिभुवनसंमोहनेन भवता किं नाम लब्धं लप्स्यते वा ? अपि च,

**सर्वतः कश्मीरादीन् सूरो सागरमेखला । मृतसंजीविनी यत्र मृग्यमाणदशां गता ॥ ६ ॥**

तदहमीदृशोपप्लवशमनाय भगवन्तमेवाभिगच्छामि । **(स्मरणमभिनीय)**

**स्वतःसिद्धं शुद्धस्फटिकमणिभूभृत्प्रतिभटं सुधासध्रीचीभिर्द्युतिभिरवदातत्रिभुवनम् ।**
**अनन्तैस्त्रय्यन्तैरनुविहितहेषाहलहलं हताशेषावद्यं हयवदनमीडीमहि महः ॥ ७ ॥**

अपि च, **समाहारः साम्नां प्रतिपदमृचां धाम यजुषां लयः प्रत्यूहानां लहरिविततिर्बोधजलधेः ।**
**कथादर्पक्षुभ्यत्प्रतिकथककोलाहलभवं हरत्वन्तर्ध्वान्तं हयवदनहेषाहलहलः ॥ ८ ॥**

सेनापतिः— महाराज, सर्वत्र सिद्धारम्भः खल्वसि । अमोघ एव खल्वनरण्यशाप इवारण्यकवादो भवत्प्रभावेन महामोहविध्वंसनवादी । अद्य च,

त्वया त्र्यन्तविज्ञानं पुरुषस्य विभावितम् । श्रद्धावैकल्यमात्रं तु शमनीयमतः परम् ॥ ९ ॥

राजा— (सपरितोषम्) भद्र, साधु संबोधितोऽस्मि भव्यवृत्तेन भवता । त्वत्सहायस्य मे कृत्यशेषमपि कृतप्रायमेव निश्चिनोमि ।

शमदमसुखास्तिष्ठन्त्वेते शतं शतमुत्थिता निरुपधिमहामोहश्रद्धानिवारणलम्पटाः ।

दनुजमथने विष्वक्सेनो हरेस्तदनन्यधीः प्रतिमततमश्छेदे हेतुस्त्वमप्यनघो मम ॥ १० ॥

सेनापतिः— देव, प्रहरणनयेन परेषु प्रयोक्तव्यतया परतन्त्र एवाहं भवतः ।

निष्प्रत्यूहसमुत्थितैरधिगतस्थैर्यैः प्रमाणादिभिः स्वच्छन्दप्रथमानशौर्यविभवः स्वायत्तसिद्धिर्भवान् ।

इत्थं सत्यनुपप्लवं परिपतच्चिन्ताफलस्रोतसः सत्तावस्थितिवृत्तिषु स्वयमहं छायासमस्तस्य ते ॥ ११ ॥

तस्मादहं वा सुमतिर्वा जलोद्धृतमत्स्यन्यायेन भवन्तं विना मुहूर्तमपि न जीवावः ।

राजा— (विचिन्त्य) सेनापते, पश्य पश्य,

असुरादिमोहनविधौ विहिताः प्रमितावतीतसमयाः समयाः ।

तपनापनेयतिमिरक्रमतः प्रचरन्ति हन्त जगदन्तरतः ॥ १२ ॥

एते च मधुमथनभुजबलपरिभ्रमितमन्दरमहीधरमथ्यमानमहार्णवनिर्घोषनिर्विशेषनिरर्थकविविधवाचो वाचस्पतिमपि वनस्पतीकर्तुमुद्युञ्जते वशिका वावदूकाः । तदमी सावधानसंप्रयुक्तारम्भेण प्रकटप्रकाशितसाधनोपालम्भदंष्ट्राङ्कुरेण प्रतिपन्नखरतरतर्कपञ्चकनखरेणारण्यकारण्यवर्तिना प्रमाणपराक्रमकण्ठीरवेण नियतमकुण्ठशक्तिना निरसनीयाः सत्पथविस्रम्भसम्भावनमथनविहितसंरम्भाः प्रचण्डा वैतण्डिकवेतण्डाः ।

सेनापतिः— देव, नियुक्तो हि त्वया वादेन सह वेदान्तसिद्धान्तः प्रतिमतनिर्मूलनाय । तदासीदत्येषा कथासंग्रामसीमा ।

( ततः प्रविशतो गुरुशिष्यवेषधारिणौ सिद्धान्तवादौ । )

गुरुः— आयुष्मन्, अवधारितपरमार्थेन प्रतिभटकथकलङ्काभटहनूमता भवता स्थूणानिखननन्यायेन संचलितनिष्कम्पमध्यात्मतत्त्वमवगच्छामि ।

शिष्यः— ( सप्रश्रयम् । ) भगवन्, दिव्येन यतीन्द्रवेषेण दत्तात्रेय इव संदृश्यसे । योऽसौ महर्षिभिरनुस्मर्यते—

काणादशाक्यपाषण्डैस्त्रयीधर्मो विलोपितः । त्रिदण्डधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ १३ ॥ इति

गुरुः— आयुष्मन्, असुराः खल्वेते बाह्याः कुदृष्टयश्च । तानहं विष्णुरूपमाश्रित्य विजिगीषे ।

शिष्यः— भगवन्, विष्णुरूपी सन्विष्णुभावेन नमस्यः खल्वसि । ततश्च,

उपवीतिनमूर्ध्वपुण्ड्रवन्तं त्रिजगत्पुण्यफलं त्रिदण्डहस्तम् ।
शरणागतसार्थवाहकं त्वां शिखया शेखरशालिनं भजामि ॥ १४ ॥ (इति साष्टाङ्गं प्रणमति)

गुरुः— आयुष्मन्, प्रतिष्ठापितवेदान्तः प्रतिक्षिप्तबहिर्मतः । भूयास्त्रैविद्यमान्यस्त्वं भूरिकल्याणभाजनम् ॥

(इति दिव्यशक्तिमयं दर्भपवित्रं ददाति; शिष्यः तदादाय शिरसि निधाय दक्षिणे हस्ते धारयति ।)

गुरुः— अविश्रान्तश्रद्धाशतकलहकल्लोलविषमास्तवात्रिर्भूयासुर्मनसि मुनिसिद्धादिसुलभाः ।
मधुक्षीरन्यायस्वगुणविभवासञ्जनकृतन्महानन्दब्रह्मानुभवपरिवाहा बहुविधाः ॥ १६ ॥

शिष्यः— (सप्रश्रयम्) अमोघाशिषो भगवतः प्रसादेन सिद्धमेव मे सर्वं समीहितम् । अथ च भगवन्, यदहमिह किंचित्पृच्छामि, तद्यदि श्रावयितुमर्हामि, श्रावयितव्योऽस्मि ।

गुरुः— सम्यगुपसन्नस्य सच्छिष्यस्य समये सति किं न श्रावयितव्यम्?

शिष्यः— भगवन्, विगृह्य कथाकरणं महर्षिभिः प्रतिषिध्यते । वादेन ब्राह्मणं जित्वा हृष्टस्य पापिष्ठपादपत्वप्राप्तिश्च प्रतिपाद्यते । कथमिदानीं विजिगीष्यन्ते विपक्षवादिनः?

गुरुः— (सप्रसादम्) भद्र, साधुबुद्धिना त्वया सम्यगनुयुज्यते । किं तु वर्णाश्रमजातिगोत्रप्रवरकुलचरणदेशकालादि-विषयभेदेन व्यवस्थितैव हि विधिनिषेधमर्यादा । तदहमिदानीं परिगृहीतनियमानुगुणं स्वयं विपक्षनिरसनमकुर्वाणः कौशिक इव राघवं त्वां पुरस्कृत्य कुदृष्टीन्बाह्यांश्च निराचिकीर्षामि । तत्र च,

दूरे भवतु ते वीर जल्पः सह वितण्डया । त्वमेव स्थिरवादात्मा निरुन्धि परिपन्थिनः ॥ १७ ॥

अथवा, त्वया मन्निदेशानुवर्तिना कौशिकनियमितेन राघवेणेव लब्धाधिकारेण यथाविधि वीतरागकथानवसरे वेदेश्वरविदूषकाः सर्वे तत्त्वाध्यवसायसंरक्षणार्थं बलातिबलाभ्यामिव जल्पवितण्डाभ्यामपि जेतव्याः ।

शिष्यः— (साञ्जलिबन्धम्) शिरसा प्रतिगृहीतोऽयं भगवतः समादेशः । अथापि भगवता विश्वाचार्येण भवता कथमिह मितंपचे मयि कथकभार आरोप्यते?

गुरुः— अवधार्यतामेतत् ।

नित्यक्षिप्तपरस्परेषु समयग्रामेषु निष्णातिनः शिष्याः केचन सन्ति नः क्षितितले शिक्षाधिकग्राहिणः ।
तत्र त्वद्भुतनिर्भरप्रसरया बुद्ध्या परिष्कारिणस्त्वत्तः प्रत्ययितो न कश्चिदपरः प्रत्यर्थिभिः प्रार्थितः ॥

शिष्यः— यदादिशति भगवान् । अत्र तु कंचित्सिद्धान्तमनवलम्ब्य न कापि कथा प्रवर्तते । अतः स्वाभिमते कुत्रचिन्मामवस्थापयतु भगवान् ।

गुरुः— भद्र, इह किल सयूथ्यकलहे समानतन्त्रे त्वया स्थातव्यम् । विपक्षविप्रतिपत्तौ तु वेदान्तसिद्धान्ते । तत्रापि पराशरपाराशर्यशुकशौनकबोधायनप्रभृतिभिः परिचितं पन्थानमाश्रित्य परमार्थदर्शिदेशिकदत्तदृष्टिभिरस्माभिः परिमितविशदगम्भीराः पञ्चषाः प्रबन्धाः प्राभन्त्सत । तेष्ववहितचेतसा त्वया प्रतिसंहितपरमार्थेन पारिषदहृदयंगमाः प्रमाणतर्काः प्रयोक्तव्याः ।

शिष्यः— भगवति प्रसेदुषि न क्वचित्प्रमाद्यामि । यतः,

गुरुप्रसदनस्फुरद्गुणगरिम्णि यन्मानसे सकृत्स्फुरति वस्तु तन्न हि किमप्यपभ्रश्यति ।
अपिस्तदितरोऽपि वा यदि गृणाति गत्यन्तरं विकल्प्य तदपि क्षणाद्विलयमभ्युपैति स्वयम् ॥१९॥

गुरुः— भद्र, विश्वव्यामोहनविषमयुक्तिभयात्त्वां नित्यमवधानेन योजयामि । इह हि,

कुटिलमतिभिः क्लृप्ता बाह्यैः कुदृष्टिभिरप्यसौ कथकपरिषद्धौरेयाणामपि क्षणकर्कशा ।
प्रलपनगुणीभूतालीकप्रकाशनपत्रला युवतिहृदयक्रूरा युक्तिर्युनक्त्यमितं भयम् ॥ २० ॥

शिष्यः— भगवन्, मय्यतिस्नेहेन नूनमियमतिशङ्का ।

त्वदादर्शितसर्वार्थे त्वन्निदेशे व्यवस्थिते । कथं कथकमानी स्यात्कश्चिदन्यो मयि स्थिते ॥ २१ ॥

गुरुः— भद्र, इदमपि पुनर्मन्वीथाः ।

शिष्यः— अनुगृह्णन्तु भगवन्तः ।

गुरुः—

संक्षिप्तं विस्तृतं वा सरलसमुचितं सावधानप्रियं वा प्राधान्येन प्रणीतं परफणितिपरिष्कारवृत्त्या स्थितं वा ।
शिक्षासौकर्यतुष्टिप्रचितगुरुजनानुग्रहेद्धं सुधीभिः श्रद्धेयं नाथजुष्टश्रुतियुवतिशिरोभूषणं भाषणं नः ॥ २२ ॥

शिष्यः— किमुच्यते ? उपनिषदुपज्ञभूतानि खलु भगवतो भाषितानि । तथा हि,

अनुदिनमनपायस्नेहदत्तावसेकैः सुमतिभिरनुभाव्यः शोभनायां दशायाम् ।
शरणमुपगतानां प्रीणनार्थं भवद्भिर्भवकलुषनिशीथे भावितो भाष्यदीपः ॥ २३ ॥

अपि च, असत्तामुच्छेत्तुं प्रकटयितुमीशप्रसदनं तमः क्षेप्तुं तत्त्वप्रमितिसुखमुच्छृङ्खलयितुम् ।
अमार्गादाहर्तुं पथि च पदमाधातुमिह नः त्वदादिष्टं शास्त्रं प्रभवति सकृद्भावितमपि ॥ २४ ॥

तथापि पारिप्लवमतिरहमिह किमप्यधिगतप्रमुषितं पृच्छामि ।

गुरुः— किं तत् ?

शिष्यः— आदिश्य स्वयमन्यथा नियमयन्नाथः कथं कल्पितः

गुरुः— अहो नु खलु सूक्ष्मार्थानुयोगकुशलता !

शिष्यः— सामग्रीवशदुर्निवारवृजिने शिष्टा निवृत्तिः कथम् ।

गुरुः— एतदपि सूक्ष्मात्सूक्ष्मतरमनुयुज्यते ।

शिष्यः— स्वेच्छाभावितदुष्कृतस्य च कथं दण्डः स्वयं पातितः

गुरुः— त्रिष्वप्यत्र न काचिदस्ति विहतिः कर्मोपधौ साश्रधौ ॥ २५ ॥

शिष्यः— (सहर्षम्) परिनिष्ठितगहनगम्भीरमिदं पटुमतिनिर्धारणीयं भाषितं भगवतः। इदमेव सभासदः श्रावयामि।

इदं प्रथमसंभवत्कुमतिजालकूलंकषा मृषामतविषानलज्वलितजीवजीवातवः।

क्षरन्त्यमृतमक्षरं यतिपुरंदरस्योक्तयश्चिरंतनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः॥ २६॥

अपि च, चिन्ताक्षेपदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः सिद्धान्ता न समिन्धते यतिवरग्रन्थानुसन्धायिनि।

मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः किं कुल्यां कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम्॥

भगवन्, अपरिमितबहुमतावष्टब्धे जगति परिमितमेतद्भवन्मतमिति पारिषदपार्श्ववर्तिनः केचित्प्रलपन्ति। प्रतिवदामि तावदेतान्। (परिवृत्यावलोक्य च) भो भो देवानांप्रियाः!

कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तरग्रहिलमनसः पश्यन्त्यल्पां यतीश्वरभारतीम्।

विकटमुरभिद्वक्षःपीठीपरिष्करणोचितः कुलगिरितुलारोहे भावी कियानिव कौस्तुभः॥ २८॥

अपि च, स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं कुमतिफणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा।

रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं लवणवणिजः कर्पूरोद्गारं किमत्यभिमन्वते॥ २९॥

(कर्णं दत्वा) किं ब्रूथ? नवीनमेतद्भवतो मतमिति। (सहस्तास्फालनं विहस्य)

किंचित्केनापि दृष्टं प्रतिहतविषयं त्वेन तत्त्वेन तैस्तैर्द्वे चोपादायिषातां द्वितयमपि सदित्यप्रमत्तो न वक्ता।

इत्थं सत्येकभक्तेरितरपरिहृतौ न व्यवस्थानसिद्धिः प्रत्येतव्यं तदर्थं पटुतरमतिभिः प्राक्तनं नूतनं वा॥

किं च, तत्त्वत्वे नूतनं सर्वमायत्यां च पुरातनम्। न दोषायैतदुभयं न गुणाय च कल्पते॥ ३१॥

गुरुः— किमेतैः किंपचानैः? अपरे पुनरर्थसंस्पर्शिदोषवादिनः प्रतिक्षिप्यन्ताम्।

शिष्यः— भगवन्, निरस्तनिखिलदोषगन्धे भवन्मते कथमर्थसंस्पर्शिनो दोषाः स्वप्नेऽपि केनचिदुद्भाव्येरन्? इह हि,

श्रुतिश्रेणीचूडापदबहुमते तावकमते स्वपक्षस्थान् दोषान्वितथमतिरारोपयति यः।

स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलं गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः॥ ३२॥

किं च, अभञ्जनीयः खल्वयमशेषैरपि भगवत्सिद्धान्तः। इह किल मोघप्रलापा एव मूढाः प्रतिवावदूकाः।

निमीलयतु लोचने न हि तिरस्कृतो भास्करः श्रवः स्थगयतु स्थिरं परभृतः किमु ध्वाङ्क्षति।

स्वयं भ्रमतु बालिशो न खलु बम्भ्रमीति क्षितिः कदर्थयतु मुष्टिभिः कथय किं नभः क्षुभ्यति॥

गुरुः— सूनृतमेव सौम्य भाषसे। अद्य खलु सर्वप्रतिकथकसमापनप्रवृत्तस्य ते समापतिं सभ्यं च विमृशामि।

[ध्यानमभिनयति।]

राजा— सेनापते, अयमिहास्मदुपसर्पणावसरः।

सेनापतिः— मह्यमपि रोचते महाराजस्य मनीषितम्। (उभावुपसर्पतः)

शिष्यः—संनिहितः खलु भगवन्, सभापतिः सेनापतिसहायः।

गुरुः— (परिवृत्यावलोक्य, सहर्षबहुमानम्)

उदितः सहसा स एष काले व्यवसायातपसेवितो विवेकः।

विनिवर्तयति स्वयं प्रजानां विचिकित्सारजनीं विलुप्तबोधाम् ॥ ३४ ॥

अयं च, विवेकस्य गुणश्रेयान्व्यवसायश्चमूपतिः। स्वपक्षे तिष्ठमानेभ्यः सूरिभिः सह तिष्ठते ॥ ३५ ॥

राजा— (सविनयम्) उचितमुपचरति विवेक इह ससेनापतिर्भगवन्तम्।

गुरुः— महाराज, सर्वत्र कुशली भूयाः। अपि च,

शाक्यौलूक्याक्षपादक्षपणककपिलामर्त्यवन्द्यप्रधानैरन्यैराम्नायचर्चाकवचधृतिकनद्गोमुखद्वीपिमिश्रैः।

वंहीयः क्षोभितापि श्रुतिरिह बहुधा जायमानेन गोप्त्रा काले कालेऽभिगुप्ता कलहमतितरत्यक्षता रक्षता त्वाम्

राजा— भगवन्, अद्य खलु भवदवलोकनादेव संमुखीभूतसकलमङ्गलानामस्माकमधिकोऽयमाशीर्वादः।

गुरुः— राजन्, विमर्शकाले सुचरितवशात्सेनापतिसेवितः संनिहितोऽसि। तदादिश्यतामयमन्तेवासी समीहित-समर्थनाय सदसस्पतिना महाराजेन।

राजा— अत्र भवदभिमतमादिशामि। (शिष्यमवलोक्य) सौम्य ब्रह्मन्, सम्यगुपसन्नोऽसि सर्वविदं भगवन्तम्। इह च,

स्वयं त्रय्यन्तसिद्धान्तो विभाति गुरुरेष ते। प्रभुः प्रवदतां योऽभूत्स वादस्त्वं मतो मम ॥ ३७ ॥

इदं त्विह भवता प्रथममवधातव्यम्।

शिष्यः— आज्ञापयतु महाराजः।

राजा— सत्त्वस्थान्निभृतः प्रसाधय सतां वृत्तिं व्यवस्थापय त्रस्य ब्रह्मविदागसस्तृणमिव त्रैवर्गिकान्भावय।

नित्ये शेषिणि निक्षिपन्निजभरं सर्वंसहे श्रीसखे धर्मं धारय चातकस्य कुशलिन् धाराधरैकान्तिनः ॥

सेनापतिः— ब्रह्मन्, अवधारितं हि भवता महाराजस्य वचनम्।

शिष्यः—किमन्यदवधातव्यम्?

राजा— परिचिनु निगमान्तभारतीं परिहर बाह्यजनेन संगमम्।

परिचर नियमेन सज्जनान् परिभव बाह्यमुखान्निरोधिनः ॥ ३९ ॥

गुरुः— आयुष्मन्, अवहितमनाः शृणु।

शिष्यः— महानयं प्रसादः।

राजा— ब्रह्मन्,

प्रमाणपथविभ्रष्टप्रधानार्थविमर्दनैः। स्थालीपुलाकनीत्यैव निवर्त्याः प्रतिवादिनः ॥ ४० ॥

न खल्वखिलमपि निघृष्यते सुवर्णखण्डो वर्णनिष्कर्षाय।

शिष्यः— यदादिशति महाराजः। तदहं संधुक्षयामि कथासमरसंनाहाय कौतस्कुतान्  (किंचिदुच्चैः)

जयति सकलविद्यावाहिनीजन्मशैलो जनिपथपरिवृत्तिश्रान्तविश्रान्तिशाखी।

निखिलकुमतिमायाशर्वरीबालसूर्यो निगमजलधिवेलापूर्णचन्द्रो यतीन्द्रः॥ ४१॥

(नेपथ्ये) तर्कव्याकृतितन्त्रशिक्षितधियः पक्षेषु बाह्येष्वपि प्रत्यक्षीकृतपौरुषा वयममी मध्येसभं ब्रूमहे।

वादाटोपमुपेयुषः प्रतिभटानासेतुहैमाचलं तूलायापि तृणाय वा न च तुषच्छेदाय मन्यामहे॥

सेनापतिः—आर्य, श्रूयते किल प्रतिभटवादिनां प्रगल्भवादः।

शिष्यः—(सक्रोधम्) अलमतिगर्वेण।

यतीश्वरसरस्वतीसुरभिताशयानां सतां वहामि चरणाम्बुजं प्रणतिशालिना मौलिना।

तदन्यमतदुर्मदज्वलितचेतसां वादिनां शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम्॥ ४३॥

राजा—भगवन्, अभङ्गुरस्वामिभक्तेरवसरोपपन्नं हनूमत इवेदमार्यस्य विकत्थनम्।

गुरुः— (स्वगतम्) क इवाभिप्राय इह विकत्थनमुद्धाटयतो विवेकस्य? (प्रकाशम्)

श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः। वल्गितं वावदूकस्य कृतिनः किं न शोभते॥ ४४॥

शिष्यः— (सविनयभयं स्वगतम्) अतर्कितोपनतमात्मश्लाघनदोषमपमार्ष्टुमभिष्टवानि देशिकांस्तद्दर्शनं च। (प्रकाशम्)

हृद्या हृत्पद्मसिंहासनरसिकहयग्रीवहेषोर्मिघोषक्षिप्तप्रत्यर्थिदृप्तिर्जयति बहुगुणा पङ्क्तिरस्मद्गुरूणाम्।

दिक्सौधाबद्धजैत्रध्वजपटपवनस्फातिनिर्धूततत्तत्सिद्धान्तस्तोमतूलस्तबकविगमनव्यक्तसद्वर्तनीका॥

किं च, नाथाश्लेषसनाथनश्रुतिवधूवैधव्यखेदच्छिदं प्राचीनां नयपद्धतिं यतिपतिः प्राचीकशन्नैष चेत्।

व्यासो हासरसोचितो विगलितः प्राचेतसश्चेतसः क्लमः केलिशुकश्शुकस्सच मुधा बाधाय बोधायनः

राजा— (सप्रसादम्) अभङ्गुरगुरुभक्तेरार्यस्य क इव न जेतव्यः? तथा हि,

अशिथिलगुरुभक्तिस्तत्प्रशंसादिशीलः प्रचुरबहुमतिस्तद्वस्तुवास्त्वादिकेऽपि।

गुणवति विनियोक्तुं गोपयन् संप्रदायं कृतविदनघवृत्तिः किं न विन्देन्निधानम्॥ ४७॥

शिष्यः—सिद्धान्तबलादेव विजिगीषे। तदत्र संपश्यतां महाराजः।

निराबाधा बोधायनफणितिनिष्यन्दसुभगाः विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः।

अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखैरनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम्॥ ४८॥

किं च, दृष्टेऽप्यह्नुत्यभावादनुमितिविषये लाघवस्यानुसाराच्छास्त्रेणैवावसेये विहतिविरहिते नास्तिकत्वप्रहाणात्।

नाथोपज्ञं प्रवृत्तं बहुभिरुपचितं यामुनेयप्रबन्धैस्त्रातं सम्यग्यतीन्द्रैरिदमखिलतमःकर्शनं दर्शनं नः॥

राजा— किमुच्यते?

[ नेपथ्ये 'तर्कव्याकृति' इत्यादि पुनः पठित्वा सप्रतिज्ञं महान् कलकलः। सर्वे समाकर्णयन्ति।]

(शिष्यः 'यतीश्वर' इत्यादि पुनः पठन्नर्धोक्ते विरम्य राजानमवलोकयति।)

राजा— पठ्यतां पठ्यताम् । [शिष्यः शेषं पठति । ]

राजा— आर्य, सर्वज्ञाद्भगवतः समासादितसर्वविद्यानिधेरत्रभवतः संप्रति विपश्चितामपश्चिमैरेतैरापतद्भिः संव्यवहारेण संशयप्रशमनमिच्छामि ।

शिष्यः— (सगर्वहासम्) निशमयतु निपुणमेतन्महाराजः ।

पर्याप्तं पर्यचैषं कणचरणकथामाक्षपादं शिशिक्षे मीमांसामांसलात्मा समजनिषि मुहुस्सांख्ययोगौ समाख्यम् ।
इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थैरन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयं तनीयः ॥ ५० ॥

किं च, यद्येतं यतिसार्वभौमकथितं विद्याद्विद्यातमःप्रत्यूषं प्रतितन्त्रमन्तिमयुगे कश्चिद्विपश्चित्तमः ।
तत्रैकत्र झटित्युपैति विलयं तत्तन्मतस्थापनाहेवाकप्रथमानहैतुककथाकल्लोलकोलाहलः ॥ ५१ ॥

गुरुः— महाराज, एते मोघप्रलापमुखरसुखदुन्दुभयः कलहकोलाहलकुतूहलिनः कथकाः ।

श्वावराहकलहक्रमादमी संपतन्ति निगमान्तरोधकाः । तानिमान्युगलवादसिद्धये वारयत्वयमसौ चमूपतिः ॥

शिष्य — (सान्तर्हासम्)

अध्यक्षं यच्छ्रुतं वा लघु तदिति भवत्यादिमो वादिमोहस्तत्त्वोदर्का न तर्कास्तदिह जगति किं मेधया साधयामः ।
तिष्ठन्त्वेते लघिष्ठाः कतिचन दधतो मानसे मानसेतुं हंहो सभ्यानसभ्यस्थपुटमुखपुटा दुर्जना निर्जयन्ति ॥

निशम्यतां चेदं सभापतिसेनापतिभ्याम् ।

बाधादिभिः स्वमतहेतुगणे निरस्ते नित्यागमप्रतिहतेषु निजागमेषु ।
प्रागल्भ्यमात्रशरणाः प्रतिवावदूकाः संभूय वादकरणेऽपि न मे प्रभूताः ॥ ५४ ॥

[विहस्य] अहो नु खल्वन्धैरन्धस्य यष्टिः प्रदीयते, पङ्गोर्वा पङ्गुभिरतिवहनम् ! यदेते कर्मान्धकारप्रतिहतमतयः कुमतयो महामोहस्य साचिव्यमाचरन्ति । किंच,

वशिकतटिनीवर्षारम्भप्रवाहविडम्बकैरलघुभिरपभ्रश्यद्गुम्भोपलम्भितडम्बरैः ।
उपकरणयन्त्येते बालानुदग्रकुतूहलानुपलनिकरग्रासप्रायैरुपन्यसनक्रमैः ॥ ५५ ॥

अहहामीषां प्रतिवावदूकानां प्रवादमनुमोदमाना महामोहपक्षपातिनो गर्दभगाने शृगालविस्मयमनुसारयन्ति !

राजा—सेनापते, नियम्यन्तामेते निर्भरनिगमान्तवैरविप्लुतप्रतिपत्तयः प्रत्येककथाप्रवर्तनाय ।

सेनापतिः— नियच्छामि तानेतान्निरर्थकादाटोपात् (परिवृत्यालोक्य) भो भोः तर्कवाद्याः कुदृष्टयश्च,

अलमिह मिथःश्लाघामाद्यन्मितंपचसंमतैरनघपरिषत्प्रत्यादिष्टैरलीकविकत्थनैः ।
अवितथकथाधौरेयाणामनुप्रसृतौ सतां ध्रुवमिह भवद्वृत्तेराविर्भविष्यति पङ्गुता ॥ ५६ ॥

शिष्यः— भगवन्, इ(ह)तः प्रसार्यतां दृष्टिः ।

माहाराष्ट्रीं मागधीं शौरसेनीं लाटीं गौडीमित्थमन्यादृशीं च ।
अङ्गीकुर्वन्त्यागमीकृत्य दत्तां हास्यां भाषां हन्त बुद्धार्हदाद्याः ॥ ५७ ॥

अहं त्वशेषभाषावेदी तत्तदभ्यस्तभाषयाऽपि तार्किकानेतान्प्रतिक्षेप्स्यामि । वदन्ति हि पिशाचानां पिशाचभाषयैवोत्तरं देयमिति ।

**गुरुः**— यथारुचि दैवीमदैवीं वा भाषां पुरस्कुर्याः । अपि तु दैव्येव विश्वहृदयंगमा । महाराजोऽपि प्रायशस्तस्यामेव बहु(लं)ळदत्तदृष्टिः ।

**राजा**— भगवन्, अतिधृष्टोऽयं भवत्प्रसादगोचरो महानुभावः ।

**सेनापतिः**— किमत्र चित्रम् ?

**कथाकलहकौतुकग्रहगृहीतकौतस्कुतप्रथाजलधिसंप्लवग्रसनकुम्भसंभूतयः ।**

**जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासनप्रभावपरिपक्त्रिमप्रमितिभारतीसंपदः ॥ ५८ ॥**

अपि च, **विकल्पाटोपेन श्रुतिपथमशेषं विघटयन् यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।**

**वितण्डाहंकुर्वत्प्रतिकथकवैतण्डपृतनावियात्व्यापारव्यतिमथनसंरम्भकलहः ॥ ५९ ॥**

**शिष्यः**— सभापतिसेनापतिसाक्षिकं प्रवृत्तस्य दयारूपदेशिकदृष्टिदृढदंशितस्य कथाहवेषु कस्त्रासः ? अद्य हि,

**अध्यर्यां तिष्ठति मामिका मतिरसावाजन्मराजन्वती पत्या संयमिनामनेन जगतामत्याहितच्छेदिना ।**

**यत्सारस्वतदुग्धसागरसुधासिद्धौषधास्वादिनां प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥ ६० ॥**

अपि च, वयमेतावन्तमनेहसमनेकसहस्रवैतण्डिकमण्डलमण्डितेषु तुण्डीरचोलपाण्ड्यकेरलकर्णाटनेपालमालवगौडलाटादिकटकेष्वखण्डिताहंकाराः निष्कण्टकेन नीतिघण्टापथेन निगमसञ्चारेषु सञ्चरमाणाः सद्भिरेव जातसख्याः सुख्यामः । किं बहुना ?

**आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धा मतिस्तत्वाव्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतम् ।**

**को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटाशस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥ ६१ ॥**

**सेनापतिः**— किमुच्यते ?

**एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् । न तत्तिसृभिरष्टाभिः सहस्रेणापि कस्यचित् ॥ ६२ ॥**

**अध्यासीनतुरङ्गवक्त्रविलसज्जिह्वाग्रसिंहासनादाचार्यादिह देवतां समधिकामन्यां न मन्यामहे ।**

**यस्यासौ भजते कदाचिदजहद्भूमा स्वयं भूमिकां मग्नानां भविनां भवार्णवसमुत्ताराय नारायणः ॥**

**गुरुः**— महाराज, भव्यभाषितेन भवच्चमूपतिना नियमितास्त एते परमतकथकधौरेयाः प्रत्येकमुपतिष्ठन्ताम् । (**शिष्यमवलोक्य ।**) शृणु सौम्य, श्रुतिशिरःप्रत्यासन्नतया प्रथमसमुत्थितानां सांख्यानां संप्रति स्वमतोपन्यासम् ।

अमी च, **कपिलासुरिपञ्चशिखादिमुनिप्रतिपादितसांख्यमतप्रवणाः ।**

**प्रकृतिं पुरुषं च विभज्य परं पुरुषं न पठन्त्यघरुद्धधियः ॥ ६४ ॥**

**शिष्यः**— (**स्वगतम् ।**) संप्रवृत्तेऽस्मिन्वादे संवननीयाश्चैते प्रथमं सभासदः । (**प्रकाशम् ।**)

**अक्षय्यशान्तिमकरन्दरसप्रसक्तानभ्यर्थये मुरभिदङ्घ्रिसरोजभृङ्गान् ।**
**कामं प्रसीदत यथाऽहमनन्यभावः कर्णामृतानि भवतामवतारयेयम् ॥ ६५ ॥**

(गुरुमवलोक्य सविनयमञ्जलिं बद्ध्वा) भगवन्, भवदाज्ञया प्रतिक्षिपामि तावत्सांख्यान् ।

**प्रधानपुरुषौ यदि प्रकृतियन्त्रितैराहतौ परः किमपराध्यति श्रुतिसहस्रचूडामणिः ।**
**कुतर्कशतकर्कशैर्यदि विभुः प्रतिक्षिप्यते भवत्परिगृहीतमप्यपहरन्तु पाटच्चराः ॥ ६६ ॥**

**सेनापतिः**— देव,

**विश्वपतिमार्यवचसा सांख्याः संमत्य विगतसंरम्भाः । गणयन्ति पञ्चविंशं षड्विंशं सप्तविंशं वा ॥ ६७ ॥**

**राजा**— भगवन्, यदि खल्वेते सेश्वरतामानीताः, भजन्तु तावद्भवत्क्षमागोचराः सांख्यास्त्रय्यन्तपार्श्वम् ।

**गुरुः**— महाराज, मैवं वादीः । किं तु, अभ्युपगतेश्वराणामपि सांख्यानां प्रायिकसंवादयोगसमयसिद्धपरिच्छिन्नैश्वर्येश्वरपक्षप्रणिहितचक्षुषां प्रतिवक्तव्यमयमादिश्यतामौपनिषदवादी ।

**राजा**— आदिष्ट एवायमीदृशेन भगवतो वाक्येन ।

**शिष्यः**— **य एते योगाख्ये कतिचिदपतन्त्रे पठितिनः प्रजल्पन्त्यैश्वर्यं प्रतिफलनकल्पं भगवतः ।**
**स्वतःसिद्धान्बोधप्रशकनबलादीन्गुणगणान्गृणन्तस्त्रय्यन्ताः प्रतिफणितिरेषामवितथा ॥ ६८ ॥**

**सेनापतिः**—देव,

**कृतं सांख्यकृतान्तस्थैः कृपणैरद्य शिक्षितैः । काणादमतभङ्गाय कार्यमार्यस्य शासनम् ॥ ६९ ॥**

**राजा**— नियुक्त एवायं भगवता यथार्हं निगमान्तविपक्षपक्षप्रतिक्षेपाय ।

**शिष्यः**—महाराज, अनुतिष्ठामि यथानियोगम् । इह हि,

**असद्द्व्यसृष्टिप्रभृत्यर्थक्लृप्त्या श्रुतिप्रक्रियाणामधिक्षेपतश्च ।**
**उलूकोपदेशापदेशप्रवृत्तः कथाशेषितोऽसौ कणादप्रणादः ॥ ७० ॥**

(गुरुः सबहुमानमीक्षते । )

**शिष्यः**— (सापहासम्) आकर्ण्यतामिदमत्यद्भुतं महाराजेन ।

**राजा**— किं तत्?

**शिष्यः**— एते किल कणचरणमतानुवर्तिनः परमानन्दलक्षणं परमपुरुषसाम्यमपहाय पाषाणसाधर्म्यलक्षणं मोक्षमाचक्षते । तथा च कुम्भकर्ण एव विजयते, शाप एव तस्यानुग्रहः स्यात् ।

**राजा**— सत्यमेतत् ।

**सेनापतिः**— देव,

**अर्धवैनाशिकास्तावदार्येण विमुखीकृताः । अथ वैनाशिकास्त्वेते विनाश्या वेददूषकाः ॥ ७१ ॥**

**राजा**— (साशङ्कम्) आर्य, पर्याप्तोऽसि तर्केन्द्रजालकोविदानां तथागतानां निरासे ?

शिष्यः— (सामर्षमिव) राजन्, अपर्याप्तास्त्वेते त्वदादिष्टस्य ममैकस्यापि प्रतिक्षेपाय । तथा हि,

**कथयति जडो विश्वं वैभाषिकः क्षणभङ्गुरं परमनुमितं बाह्यं सौत्रान्तिको मतिचैत्र्यतः ।**

**तदिदमनृतं योगाचारस्तथा निखिलं परे स्ववचनहताः सर्वे गर्वं त्यजन्ति ममाग्रतः ॥ ७२ ॥**

तथाहि, **दन्तादन्तिविधानलम्पटधियो दिङ्नागमुख्या जडाः शृण्वन्त्वद्य विपद्यते परमियं शिक्षा भवत्पक्षतः ।**

**बुद्ध्वा बोध्यमुदाहरन्ति विशदं बुद्धादयश्चेज्जितं नो चेद्धन्त जितं पुनस्तदिह नस्तूर्यं तु जोघुष्यताम्**

सेनापतिः— (सश्लाघम्) देव, परिमितगभीरमक्षोभ्यमिदं पारिषदहृदयङ्गममार्यवचनमुपश्रुत्य पलायिताः सौगतापशदाः दिशंदिशं प्रविशन्ति । अपि त्वयं माध्यमिको नाम बौद्धमतनासीरवीरः कथितमपि दूषणमनादृत्य वैयात्यमात्रावष्टम्भेन पाण्डित्यं प्रख्यापयति । तदयं विशेषतोऽप्युन्मूलयितव्यः, यश्चैवमुद्घोषयति—

**भाषा वैभाषिकाणां शुभमनुभवतु स्वस्ति सौत्रान्तिकेभ्यो योगाचाराः प्रयोगं विजहतु किमु तत्किंकरैः शंकराद्यैः ।**

**मिथ्यातत्त्वव्यवस्थाविघटनघटनोद्दण्डशौण्डीर्यचण्डो निस्तत्त्वाद्वैतवादी निरुपधिककथादुर्जयो निर्जिहीते** ॥इति।

राजा— आर्य, विश्वमिथ्यात्वव्यवस्थापनो वैतण्डिकपण्डितंमन्यः शून्यवादी पुनः शून्यतां प्रापयितव्यः ।

गुरुः— भद्र, सावधानमभिदध्याः ।

शिष्यः— किमत्रावधातव्यम्? अयं खलु जननीवन्ध्यात्वप्रतिज्ञानसंवादिभिरयथायथप्रलापैरात्मनोऽपि मौनमाजन्ममरणमुपपादयिष्यति । अपि च,

**परस्परविघट्टनत्रुटिततर्कशस्त्रच्छटातिरस्कृतचमत्कृतिः स्वयमखण्डि वैतण्डिकः ।**

**किमत्र परिशिष्यते किमपि दूषणोद्भावनं स्वतोनिहतमुद्गरप्रहरणप्रयासायते ॥ ७५ ॥**

[नेपथ्ये] पिशाचाः पिशाचाः ।

सेनापतिः— मैवम् । दिगम्बरास्त्वेते सौगतमतनिरसनसंतोषविषादशबलिताः प्रत्यक्षं परोक्षं च प्रमाणमनुरुन्धानाः प्रतारयन्ति पामरान् ।

**शिथिलोदयसप्तभङ्गिशिक्षाविषमोपन्यसनव्यथाविलक्षाः ।**

**मलिनास्त इमे मयूरपिञ्छभ्रमणैरेव विलोभयन्ति मन्दान् ॥ ७६ ॥**

तत्प्रतिक्षेपार्थमयमनुज्ञायतामार्यः ।

राजा— **प्रतिक्षिप्तं विदधतां विहितं प्रतिषेधताम् । क इवात्र प्रतिक्षेपः कार्यः स्ववचनादृते ॥ ७७ ॥**

(गुरुमवलोक्य) भगवन्, अमीषामादित्यस्तम्भनपाषाणस्फोटनप्रतिमाजल्पनादिविप्रलम्भोपायानां भवत्प्रसाद एव प्रतिक्षेपकर्ता ।

गुरुः— महाराज, तथाविधकुहकवृत्तीनां राजभिरेव दण्डो दातव्यः ।

शिष्यः— (सापहासम्)

भक्ष्याभक्ष्यस्वपरसमयस्थापनादूषणादिष्वैकान्त्यं ये जहति विहतिं क्वापि नैते विदन्ति ।
दैवैरेषां निगमपदवीदूषणोदीर्णरोषैर्दत्तो नूनं स्थिरशिरसिजोल्लुञ्छनेनैव दण्डः ॥ ७८ ॥

शेषं तु भगवति महाराजे चायतते ।

**राजा**— सेनापते, आः कष्टममीषामालोकनम्! उत्सार्यन्तामेते दृष्टिगोचरात् ।

**सेनापतिः**— देव, भवत्प्रतापतपनप्रतिहतदृष्टयो दिवाभीता इवानार्याधिष्ठितेषु गिरिगह्वरेषु निभृतं निलीयन्ते ।

**राजा**— के पुनरेते क्षपणकादिवदनैगमिकलिङ्गधारिणः किमप्युग्रं व्रतमास्थाय तापसविडम्बिनस्त्रय्यन्तमुपरुन्धते ? प्रमथगणानुकारिणः केचित् ।

**गुरुः**— एते च नैगमिकधर्मकल्मोपमर्दिनः कडङ्गरीया इव दूरतः परिहरणीयाः ।

**शिष्यः**— स्वयमेवैते दूरीभवन्ति ।

कपिलकणादबुद्धकचलुञ्छनतन्त्रकथाकलकलकोविदेषु कथकेषु गलन्मतिषु ।
मुनिवरसापराधजनमोहनकौतुकिना पशुपतिना यदुक्तमपयान्त्यथ तत्प्रवणाः ॥ ७९ ॥

**सेनापतिः**— देव, अमी पुनरार्यवचनमसहमाना दिगम्बरादिवत्केनापि विप्रलम्भोपायेन स्वसिद्धान्तश्रद्धासंवर्धनाय प्रयतन्ते । अत्र तावदिमां प्रत्यायनामाचरन्ति, यदकाण्ड एव वर्षासमयमादिशन्ति ।

[नेपथ्ये] 'पलायध्वं पलायध्वम्' ।

**राजा**— किं किम् ? **(इत्यवलोकयति)**

**सेनापतिः**— नान्यत्किंचित् ।

अक्ष्णोरञ्जनवर्तिका यवनिका विद्युन्नटीनामियं स्वर्गङ्गायमुना वियज्जलनिधेर्वेलातमालाटवी ।
वर्षाणां कबरी पुरंदरदिशालंकारकस्तूरिका कंदर्पद्विपदर्पदानलहरी कादम्बिनी जृम्भते ॥ ८० ॥

किं च, प्रत्यग्रप्रतिबुध्यमानकलिकानीरन्ध्रनीपाटवीनिःसाधारणनिःसरन्मधुसुधासौरभ्यसारस्पृशः ।
क्रोडादम्बुमुचां क्षरन्ति कतिचित्क्रोडीकृता दन्तिभिः धारासिक्तवसुंधरासुरभयो जञ्झासमीराङ्कुराः ॥

**( सर्वे ससंभ्रमाद्भुतमवलोकयन्ति )**

**राजा**— भगवन्, किमस्त्येषां प्रतीकारः ?

**गुरुः**— किमस्माभिरत्र यतितव्यम् ?

स कैटभतमोरविर्मधुपरागजञ्झामरुद्धिरण्यगिरिदारणस्त्रुटितकालनेमिद्रुमः ।
किमत्र बहुना भजद्भवपयोधिमुष्टिंधयः कथं न भवति स्वयं कपटकर्मनिर्मूलनः ॥ ८२ ॥

**सर्वे— (सहर्षविस्मयम्)** प्रसन्नाः खल्वेता दिशो विदिशश्च ।

**गुरुः**— भक्तजनवत्सले भगवति प्रसेदुषि किं नाम न प्रसीदति ?

राजा— भगवन्, अमी पुनः सात्वतं शास्त्रमधीयानास्त्रय्यन्तवादिभिरैक्यमिवापन्ना बल्बजप्रायबहुविधविद्याजल्पविमुखीकृतमानसा बहिरन्तश्च शुद्धाः श्वेतद्वीपवासिन इव शुभंयवः पुरुषास्तामिमामौपनिषदीं परिषदमुपजिगमिषन्ति।

अपि च, **परमपुरुषप्रत्यासत्त्या विमुक्तपृथग्जनास्तदभिगमनोपादनाद्यैरवन्ध्यमनोरथाः ।**

**नमति दिविषद्वर्गे नाथप्रभावसमीक्षया जहति त इमे मानाटोपं परस्परजीविताः ॥ ८३ ॥**

किमेतन्मते प्रतिवक्तव्यमस्त्यार्यस्य ?

गुरुः— (मूर्धानमान्दोलयन्कर्णौ पिधाय) न खलु न खलु ।

**न बाधः प्रतिरोधो वा वेदसात्वतयोर्मिथः । कुदृशां तद्भ्रमो वार्यः श्रुत्योरिव परीक्षकैः ॥ ८४ ॥**

शिष्यः—तदहं वारयामि । शृण्वन्तु च परमपुरुषप्रणीते पञ्चरात्रतन्त्रे तन्त्रान्तरवत्प्रादेशिकदोषोत्प्रेक्षकाः पण्डितंमन्याः—

**आरोहन्त्वनवद्यतर्कपदवीसीमादृशां मादृशां पक्षे कार्तयुगे निवेशितपदाः पक्षे पतद्भ्यः परान् ।**

**सर्वानुश्रवसारदर्शिसशिरःकम्पद्विजिह्वाशनक्रीडाकुण्डलमौलिरत्नघृणिभिः सारात्रिकाः सूक्तयः ॥**

निरूपितं हि सात्वतप्रामाण्यं निखिलनिगमव्यसनव्यसनिना मतिमन्थाननिर्मथितनिगमसिन्धुसमुदितमहाभारतचन्द्रचन्द्रिकानिरवशेषमुषितभुवनभवनोदरतिमिरेण बादरायणेन भगवता नारायणेन । तत्र च,

**स्वतः सर्वावेक्षी श्रुतिशतशिरस्त्राणचरणः स्वभृत्यान्नस्त्रातुं यदिदमनघं तन्त्रमकृत ।**

**इदं श्रेयः पुण्यं हिततममितीव व्यपदिशन्मुनिः पाराशर्यः प्रकटयति मानं तदखिलम् ॥ ८६ ॥**

सेनापतिः— देव, अपर इवायं पाराशर्यः पञ्चरात्रतन्त्रं प्रतिष्ठापितवान् ।

राजा— भगवन्, गुरुकुमारिलमतानुसारिणः किमेते निरसनीया भवच्छिष्येण ?

गुरुः— महाराज, अमी पुनरागमाभिरक्षणप्रवृत्ता वेदान्तपरित्यागिनस्तोषयितव्या भीषयितव्याश्च ।

शिष्यः— (सापहासम्।)

**निरस्ताखिलदोषेषु निगमान्तेषु सत्स्वमी । कथं सदसि मीमांसाकबन्धमनुरुन्धते ॥ ८७ ॥**

अयं खल्वखिलवैदिकसदःशिखामणीनामध्यात्मविदां निर्णयः, पापवत्परित्यक्तकाम्यधर्मैर्नित्यनैमित्तिकानुष्ठाननिष्णातैर्विष्णुभक्तैर्भवितव्यमिति । अत एव कर्मब्रह्ममीमांसयोरैकशास्त्र्यमामनन्ति सन्तः ।

राजा— (सपरितोषम्) भगवन्, यथाश्रुतं यथाहृदयमुपपाद्य स्वपक्षं रक्षता परपक्षांश्च प्रतिक्षिपता प्रशमितनिगमान्तखेदेन भवदन्तेवासिना स्थूणानिखननन्यायेन स्थिरीकृतमिदं सम्यग्ज्ञानम्। तथाप्यामुक्तनिगमकञ्चुकानामामुक्तबाह्यवर्मनां कथं प्रतीकारः ?

गुरुः— (सान्तर्हासम्)

**नियत्या वैयात्यान्निगमपदवीमुज्झितवतां परेषामेतेषां परिहसनगुम्भार्हवचसाम् ।**

**पुरन्ध्रीसंभाव्यस्वमतरुचिनीरन्ध्रितधियामहंकारं सोढुं प्रभवति कथंकारमवनिः ॥ ८८ ॥**

**शिष्यः**— महाराज, छिन्नमूलाः खल्वेते बाह्यनिरसनेन । तथा हि,

**गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते।**
**क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं का शङ्का शंकरादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥**

अथवा, पारिप्लवविविधपरिकल्पनाकल्लोलकलहजनितसितासितविकल्पविप्लवेन सिद्धिकामजनमोहनप्रवृत्तांस्तानिमान्प्रतिक्षिपामि । [ सहस्तास्फालनं विहस्य ]

**अविद्यामाहात्म्यादनहमिदमर्थं जगदिदं गृणन्त्येते भातं गगन इव गन्धर्वनगरम् ।**
**अवन्ध्यैर्व्याघातैरतिपतितविन्ध्यद्रढिमभिर्निबन्ध्यास्ते वन्ध्यासुतनृपतिवैतालिकगणे ॥ ९० ॥**

अपि च, **निध्यायन्त्वनसूयवः शुभगुणं निर्दोषमाराध्यमित्यध्वा विश्वविशेषशून्यकथकैरप्यादितः स्वीकृतः ।**
**यद्यर्थस्थितिरेतदेकशरणा सम्प्रत्ययायो भवत्यध्यक्षादिविरुद्धनिर्गुणकथानिर्वाहगर्वाहवः ॥ ९१ ॥**

अतः स्थाने खलु मेघनादवदङ्कुरितविश्वव्यामोहनेन शंकरदत्तेन केनापि मायातन्त्रेण समानाधिकरणोपप्लवमाचरतामाचरिततमःप्रवृत्तीनामनवरतकर्बुरप्रकृतीनां कलिब्रह्ममीमांसकानामेतेषां निरासाय लक्ष्मणाचार्यप्रादुर्भावः। हन्त ! परिगृहीतपौण्ड्रकाद्वैतानाममीषां नित्यमुक्तवादोऽपि नित्यमुक्तवादतामापादयति । तथा हि,

**मुक्तस्य नित्यमविशिष्टतनोरपूर्वां मुक्तिं प्रकल्पयितुमात्तविचारयत्नः ।**
**स्वप्नप्रसूनमकरन्दरसस्य मन्ये स्वादुत्वमन्यदुपपादयितुं क्षमेत ॥ ९२ ॥**

आलक्ष्यतामयं रजनिचरवंशबान्धवानां राहुमीमांसकानां सुभगाभिक्षुकन्यायः, यदेते निगमान्तपरित्यागिनः परानधिक्षिपन्ति प्रतिक्षिपन्ति च स्वयमेव निगमान्तान्। अतः सभाकम्पाभावप्रतिपादकजडपुरुषप्रयुज्यमानभसापङ्काभाववचनवदपहास्यवचसाममीषां प्रतिक्षेपेऽप्यपत्रपामहे । श्रुतयस्तु त्रिभुवनसंरक्षणे प्रवृत्ताः प्रतिक्षिपन्ति । यदपि चैतेषां चिदचिदीश्वरयाथार्थ्यतस्कराणामन्तिमयुगमस्करिणां नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयमभिदधति, तच्च तत्त्वातत्त्वविवेकाभावः रागद्वेषादिसाधनसंपत् लौकिकवैदिककर्मानुष्ठानवैमुख्यं बुभुक्षुत्वं चेति यथानुष्ठानं विपरिणामेन परिहसन्ति सन्तः ।

**गुरुः**— भद्र, किमत्र विस्तरेण ।

**शिष्यः**— भगवन् , पक्षान्तरमपि प्रतिक्षिपामि ।

**यदि भास्करयादवप्रकाशौ निगमान्तस्थितिनिर्णयप्रवीणौ । अपरैः किमिवापराद्धमार्यैरयथाभाषणचातुरीधुरीणैः**

अत एव निर्गुणब्रह्मवादिनां प्रच्छन्नबौद्धप्रसिद्धिवदनयोरपि जैनगन्धिवेदान्तिनामधेयमनुशोश्रूयामहे । इदं किल निखिलोपनिषदेकरहस्यम् (दैकरस्यम्) ।

**मिथो भेदं तत्त्वेष्वभिलपति भेदश्रुतिरतो विशिष्टैक्यादैक्यश्रुतिरपि च सार्था भगवती ।**
**इमावर्थौ गोप्तुं निखिलजगदन्तर्यमयिता निरीशो लक्ष्मीशः श्रुतिभिरपराभिः प्रणिदधे ॥ ९४ ॥**

राजा— ब्रह्मन्, तत्त्ववृत्तोभयभ्रष्टपाषण्डगणसंकुलः । कृती भवति कालोऽयं कृतिना संप्रति त्वया ॥९५॥

शिष्यः— महाराज, सर्वमेतद्भगवतः प्रसादेन । अद्य हि,

कणादपरिपाटिभिः कपिलकल्पनानाटकैः कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैस्तदनुसारिजल्पैरपि प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ९६ ॥

किं च, मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभा मुमुक्षामक्षोभ्यां दधति मुनिबृन्दारकगिरः ।
स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिषद्विभीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥ ९७ ॥

सेनापतिः— देव, वशंवदवचोवृत्तिर्वादाहवमहारथः । परिभूतविपक्षोऽसौ पारितोषिकमर्हति ॥ ९८ ॥

शिष्यः— सेनापते,

दयया देशिकेन्द्रस्य दृष्ट्या चास्य महीपतेः । परितोषेण चैवं ते प्राप्तोऽहं पारितोषिकम् ॥ ९९ ॥

राजा— भगवन्, प्रियहितमेवासौ वदति ।

सेनापतिः— ततश्च,

सभाजयितुमिच्छामि प्रत्यक्षितसभाजयम् । एनं भगवतश्छात्रमेकभक्त्या परिष्कृतम् ॥ १०० ॥

शिष्यः— महाराज, भगवन्त एव संभावनामर्हन्ति ।

गुरुः— त्वमपि मन्नियोगेन ।

राजा— भगवन्,

त्रय्यन्तस्थापकोऽयं दृढतरममुना तत्त्वदृष्टिश्च दिष्टा दिष्ट्या चादिष्टमेतद्दिशि दिशि लडहो डिण्डिमस्ताडनीयः ।
शुष्कोपन्यासशिक्षापटिमकटुरटद्वैरिविद्वत्करोटीकुट्टाकक्रीडमष्टापदकटकमसौ वामपादे बिभर्तु ॥ १०१ ॥

[इति कटकं ददाति ।]

शिष्यः— (गुरुमवलोकयति)

गुरुः— अस्त्वेवम् । अलङ्घनीया खलु राजाज्ञा ।

शिष्यः— यदाज्ञापयति भगवान् । (इति कटकमादत्ते)

गुरुः— आयुष्मन्, अवधार्यतामिदमद्यप्रभृति ते कर्तव्यम् ।

सत्कारकीर्तिधनलब्धिषु निर्व्यपेक्षः प्रश्नोचितेषु परया कृपया प्रसीदन् ।
सत्तर्कतन्त्रपरिकर्मितमाशरीराच्छारीरकप्रवचनव्रतमाद्रियेथाः ॥ १०२ ॥

शिष्यः— यदादिशति भगवान् ।

[नेपथ्ये] गम्यतां गम्यताम् । आः कष्टमापतितम् ।

रागद्वेषाभिख्यया ख्यातपूर्वौ मूढावेतौ दानवौ मोहभृत्यौ ।
निष्प्रत्यूहं निर्जिहाते विरक्तिं बन्दीकर्तुं विष्णुभक्त्या समेताम् ॥ १०३ ॥

[सर्वे ससंभ्रममाकर्णयन्ति ।]

राजा— भगवन्, अद्य खलु शान्तिकर्मणि वेतालोदयः संवृत्तः । तत्साधयन्तु भवन्तः समीहितसमर्थनाय । वयमपि वैरिबलनिर्मूलनाय संप्रति यतामहे ।

[इति निष्क्रान्ताः सर्वे ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके द्वितीयोऽङ्कः ।

## तृतीयोऽङ्कः

[ततः प्रविशतो रागद्वेषौ ।]

रागः— सखे, त्वत्सहायस्य मे स्वामिकार्यनिर्वर्तनं सिद्धप्रायमिति निश्चिनोमि ।

द्वेषः— वयस्य, त्वद्विरुद्धविषयविवेकसंरम्भनिरोधेन त्वदेककार्य एव ह्यहमादिष्टोऽसि महाराजेन ।

रागः— सखे, अन्यदपि तावदवसरोचितमाज्ञप्तिगोचरमावेदयामि ।

**विवेककुहनाबलाद्व्यतिहतेषु बाह्येष्वसौ त्रिवर्गपदवी परं शरणमद्य मोहश्रियः ।**
**विरक्तिमिह तापसीं व्यपनयामि दूरादहं विमथ्य विनिवर्त्यतां सपदि विष्णुभक्तिस्त्वया ॥ १ ॥**

संभवति च सर्वथा सर्वतः प्रसारिताभ्यां स्वर्गापवर्गगुणदोषजालाभ्यां तयोरुपरोधः । अहं पुनर्मायासहस्रवेदी मारीचमैथिलीन्यायेन विरक्तिं तावत्तपस्विनीं विप्रलभे । भवतस्तु विष्णुभक्तिविमथने पौलस्त्य एव प्रमाणम् ।

द्वेषः— अथ किम् ?

रागः— यद्यपि त्वय्यन्तवादिना महामोहसौवस्तिकानामग्रगण्या हिरण्यासुरपुरोहिता इव धरण्यामवतीर्णाः कबन्ध-मीमांसकाः प्रतिक्षिप्ताः, तथाऽपि तन्मतमेव सोपपत्तिकमुत्तम्भयन्स्वामिकार्यं निर्वर्तयामि ।

द्वेषः— स्थाने खलु भवतः समारम्भः, यदिह नास्तिक्यसंवर्धकानां महामोहसैनिकधुरंधराणां नासीरविजयपताका निरीश्वरमीमांसा समालम्ब्यते ।

रागः— **अल्पमस्थिरमानन्दमिच्छतो यदि रागिता । अनन्तस्थिरकामस्य विरक्तिः कस्य कीदृशी ॥ २ ॥**

**स्वस्यैवाप्तिः सुखमिति मृषा स्वेतरस्यानुभूतौ कामादन्यः क इव घटते मोक्षनामा पुमर्थः ।**
**तस्मादस्मद्बहुमतनिरध्यक्षमीमांसकोक्त्या (क्त्या) स्वेच्छानृत्यद्बहुगुणनिधिः स्वर्ग एवापवर्गः ॥ ३ ॥**

द्वेषः—किमुच्यते? अयं पुनर्महामोहतन्त्रपारदृश्वभिः परमार्थोपदेशिभिस्सावधाननिपुणनिरूपितसंप्रदायपरंपरासमधिगतोऽर्थः

**प्रपञ्चकृतकञ्चुकं यदि परं महः प्राप्यते न दुःखमपहस्तितं भवति नैकधोपप्लवात् ।**
**अथैकमखिलोज्झितं न खलु भोग्यतामेति तत्ततो निगममस्तकैर्निगदमात्रशेषैः स्थितम् ॥ ४ ॥**

रागः— सखे, साधु भाषितम् । नूनमीदृशेन वचसा दवदहनदन्दह्यमानतरुशिखरकुलायकुहरनिष्क्रान्ता विहङ्गपङ्क्ति-रिव विष्णुभक्तिरपसर्पति । अद्य खल्वनादिभोगवासनाजालजटिलबुद्धेरात्मनः कथं नाम निर्विवेको विवेकः संसार-जिहासां साधयिष्यति ? प्रत्युत दिव्यभौमयुवतिगुणापह्नवकुतूहली तद्गुणैरेव निबिडं निबध्यते । पश्य तावदमृतोद्भवाः परलोकतिलकभूताः पद्मलोचनाः । यासाम्,

**स्मेरेण स्तनकुड्मलेन भुजयोर्मध्यं तिरोधित्सितं नेत्रेण श्रवणं लिलङ्घयिषितं नीलोत्पलश्रीमुषा ।**
**अङ्गं सर्वमलंचिकीर्षितमहो भावैः स्मराचार्यकैस्तन्वीनां विजिगीषितं च वयसा धन्येन मन्ये जगत् ॥**

तिष्ठतु तावदभिनवयौवनविजृम्भणम् । परामृश्यतां पुनर्विभ्रमावेशः ।

**अभिनयति यथार्थान्भ्रूपताका पुमर्थान्गतिरपि गतिमन्यां मन्यते गर्हणीयाम् ।**
**मदकलुषितमन्तर्मन्मथाद्वैतगर्भामुपनिषदमधीते लोचनं लोलतारम् ॥ ६ ॥**

**द्वेषः**— (सहर्षामर्षम्) सखे, विश्वपुरुषार्थविशेषविद्भिस्त्वन्मतप्रतिष्ठापकैः कामकामैरेभिः कक्षीकृतं महानन्दलक्षणं मोक्षतया महर्षिविशेषभाषितं पुरन्दरपुरीसुजिष्याभोगमवधूय विपश्चितामपि क एवायं विप्रतिषिद्धवादः ?

**सर्वाधारः कथं नु स्यात्सर्वदोषविवर्जितः । तथैव सर्वकामार्थी निरपेक्षः कथं प्रभुः ॥ ७ ॥**

**रागः**— सखे, न चैतावदेव ।

**मधुभरितहेमकुम्भीमधुरिमधुर्यौ पयोधरौ सुदृशाम् ।**
**पिशितमिति भावयन्तः पिशाचकल्पाः प्रलोभयन्ति जडान् ॥ ८ ॥**

(आकाशे) किं ब्रूथ ? किं न तथेति ? अहह ! अन्धानां कथमभिलप्यते पयसो नैर्मल्यम् ?

**द्वेषः**— अहो महानयमध्यात्माभिनिवेशो विवेकपरतन्त्राणां वेतालानाम् ! अथवा युक्तमेवैतत् । न खलु बधिराणां कुतूहलमातनोति कोकिलालापः । तिष्ठन्त्वेते । विवेक एव तावज्जेतव्यः । यतः,

**विवेकविजयादेव विद्वत्परिषदो जयः । उपघ्नतरुविच्छेदे न किमुच्छिद्यते लता ॥ ९ ॥**

**रागः**— साधु विचिन्तितम् ।

**द्वेषः**— (सोच्चैर्हासम्)

**अनघगुणौघमेकमवधूतसमाभ्यधिकं स्ववितरणीयसर्वपुरुषार्थमुपास्तिपदम् ।**
**उपनिषदूषरान्तरुपवर्तनधूसरधीर्न खलु विवेक एष मयि तिष्ठति साधयिता ॥ १० ॥**

(नेपथ्ये) कः कोऽत्र भोः ?

**उभौ**— (कर्णं दत्त्वा सभयसंभ्रमम्) आः कष्टमापतितम् ! नरपतिनियोगनिर्वाहकौ कथमावां भविष्यावः ? हन्त विपरिवृत्तमिवास्माकं भागधेयम् ! अद्य हि,

**अतिक्रम्य दुरुच्छेदामास्माकीं गुणवागुराम् । विरक्तिविष्णुभक्तिश्च विवेकस्थानमृच्छतः ॥ ११ ॥**

स चैष नूनं विरक्तिविष्णुभक्तिभ्यां प्रोत्साहितो देव्या सुमत्या दत्तहस्त इतोऽभिसमेति । जितकाशिनश्चामुष्य संनिधाने मन्दभाग्यैर्नास्माभिः स्थातव्यम् । जीवन्तो हि भद्राणि पश्यन्ति । अस्मदवरजाभ्यामपि कामक्रोधाभ्यामविलम्बित-कारिभ्यां विलम्बनीयम् । काले हि सर्वं संपद्यते । न चानेन व्यवसायसहायेन दुर्जयः कश्चित् । एवं च नूनमापत्स्यते राजकृत्यम् ।

धिग्धिग्वासवशम्भलीनयनयोरालोलमालोकितं धिग्धिङ्मान्मथकार्मुकं युधि सदा टङ्कारसाडम्बरम् ।
धिग्धिक्पञ्चमपाठकान्परभृतो धिग्धिक्किमन्यैर्जडैः शृङ्गारागमरङ्गमण्टपनटीं मोहेन्द्रवीरश्रियम् ॥१२॥

अद्य हि, निर्जित्य मोहमसुरेन्द्रमिवामरेन्द्रो बद्धस्य मङ्क्षु पुरुषस्य विमोक्षणेन ।
अश्रूण्यकृत्रिमगिरामभिषङ्गजातान्यानन्दजैर्विपरिवर्तयिता विवेकः ॥ १३ ॥ इति वदन्तौ निष्क्रान्तौ।

इति शुद्धविष्कम्भः ।

---

[ततः प्रविशति विवेकः सुमतिश्च ।]

**विवेकः**— देवि, समाश्वसिहि समाश्वसिहि । प्रयुक्तपाटच्चरभयापनोदनेन विरक्तिविष्णुभक्ती त्वत्सकाशं प्रापिते ।

**सुमतिः**— ( दीर्घं निश्वस्य ) णाह, तह वि अज्ज वि किं होज्जत्ति तरलहिअआ किं भणामि? पच्छण्णआरिणो खु राअद्देसा ओसरं पेक्खन्ति । [नाथ, तथापि अद्यापि किं भवेदिति तरलहृदया किं भणामि? प्रच्छन्नचारिणौ खलु रागद्वेषाववसरं प्रेक्षेते ।

**विवेकः**— भीरु, मा ते भूदिह मनोदौर्बल्यम् । किमस्माकमपि संनिधौ रागद्वेषयोरवकाशः? अपि च,

अनुचितपदवीभिश्चिन्तयित्वा प्रयातान्यलमलमतिमात्रैरद्य बाले विषादैः ।
उपनिषदमुदारामुद्वमन्कापि लक्ष्ये शरणमुपगतांस्त्रायते शार्ङ्गधन्वा ॥ १४ ॥

**सुमतिः**— (सविषादं संस्कृतमाश्रित्य ।) आर्यपुत्र,

सर्गेषु प्रतिसंचरेषु बहुशः स्वर्गे तथा दुर्गतौ जाग्रत्स्वप्नसुषुप्तिमुग्धिमरणावस्थासु दुःस्थासु च ।
दुःख्यन्प्रस्तरबद्धवन्नहुपशुः सुख्यन्नसौ देहभृत् दग्धादग्धसजीवितद्रुमदसादीनो दरीदृश्यते ॥

अपि च, विचित्रजवविश्वकृद्विहतिमारुतप्रेरणाविभक्तभवितव्यताविपिनसिन्धुविस्फूर्तिभिः ।
जटालवृजिनाविले जवनयौवनास्वादने जरामरणभीषणे जगति जन्तुरावर्त्यते ॥ १६ ॥

**विवेकः**— (सानुशयम्) देवि, सत्यमिदमितः पूर्वम् । अद्य खलु अपुनरावृत्तिवर्तनीमारुरुक्षतः पुरुषस्य चिरकालसंचितपुण्यसंचयविशेषमाकर्णय ।

पातत्रासनिरीक्षणप्रशमितस्वर्वासदुर्वासना पुंसः सम्प्रति शेमुषी निरवधिं पुष्णाति तृष्णां परे ।
अर्थित्वे मतिकश्मलप्रचलितेऽप्येवं प्रतिष्ठापिते सामर्थ्यं च समाधिसीम्नि नियतावस्थं व्यवस्थाप्यते ॥

अपि च, प्रतिक्षिप्तावद्यप्रवरगुणनिर्धारणभुवा परप्रेम्णा जुष्टो भवभृदधुना भाग्यवशतः ।
अभिन्नास्वादानाममृतलहरीणामिव धियां विकल्पं विज्ञाता विधिपवनवैषम्यजनितम् ॥ १८ ॥

अयं च परमपुरुषचरणारविन्दमकरन्दमधुकरो बृन्दारकनगरमपि नरकमिव परं निश्चेष्यति । अत्र च,

भवपथकथारागे भग्ने गतागतचिन्तया परमपुरुषप्रेप्सालाभे तदद्भुतबोधनात् ।
गुणगणभिदासंभेदाभ्यामुपस्कृतविग्रहे क्षममिह परं विद्यावर्गे विमोहनिवर्तनम् ॥ १९ ॥

इह च मोहप्रशमनं दिङ्मात्रेणोदाहरामि ।

**समाना मुक्तिश्चेन्न खलु घटते साधनभिदा न चेत्स्वर्गन्यायस्तरतमतयान्याभिमतया ।**

**प्रमाणप्रागल्भ्यप्रणिधिमवधूय प्रलपतामतिक्षीबः क्षोभः स्वमतिविहितैरेव निहतः ॥ २० ॥**

एवमपि ये मुह्यन्ति ते मुह्यन्त्येव । न खलु सहस्रैरपि सलिलकुम्भैर्वलिभुजः प्रक्षाल्यमाणा वलक्षतां प्रतिपद्यन्ते । दुर्वादिगर्वसर्वस्वनिर्वापकैः सर्वज्ञबुद्धिवेदिभिर्वर्णितं निर्विशङ्कमखिलमधिगम्य सर्वेश्वरं निर्विशन्ति सन्तः ।

**सुमतिः**— (सश्लाघम्) णाह, पडिट्ठाविअम्हि दाणिं पमाणप्पणअपेसळेण तुम्हभासिएण । पडिबुद्धजणसंभावणिज्जे पमाणउत्तन्दणिरिक्खणम्मि समब्भहिअदरिद्दं खु तुह माहप्पं । दाणिं किळ,

**कप्पारम्भपअण्डतण्डवकळाकीळन्तकाळन्तअक्खोहुव्वेळकवड्डसिन्धुळहरीधूअन्तचन्दप्पहं ।**

**एक्केक्कक्खरणिय्यणिब्भरसुहासन्दोहसन्तोसिआ अम्मेळन्ति भुअङ्गिआ तुह जसं वेळन्तसेळन्तरे ॥**

[नाथ, प्रतिष्ठापितास्मि इदानीं प्रमाणप्रणयपेशलेन युष्मद्भाषितेन । प्रतिबुद्धजनसंभावनीये प्रमाणवृत्तान्तनिरीक्षणे समाभ्यधिकदरिद्रं खलु तव माहात्म्यम् । इदानीं किल,

कल्पारम्भप्रचण्डताण्डवकलाक्रीडत्कालान्तकक्षोभोद्वेलकपर्दसिन्धुलहरीधूयमानचन्द्रप्रभम् ।

एकैकाक्षरनिर्यन्निर्भरसुधासंदोहसंतोषिता आम्रेडयन्ति भुजङ्गिकास्तव यशो वेलान्तशैलान्तरे ॥]

(विद्यामाहात्म्यमनुचिन्त्य सहर्षरोमाञ्चम्)

**जिम्भाअन्तदइच्चमद्दणदआसल्लोअसोतस्सिणीवीईसीअळसाहुसुद्धसुहआ सोहन्ति विज्जा इमा ।**

**जाणं कं वि भवग्गिदाविअजणो घेत्तूण चिन्ताणिअं मुत्तिं पेक्खइ हत्थमज्झणिहिअं मोहम्मि सन्ते चिअ**

[जृम्भमाणदैत्यमर्दनदयालोकस्रोतस्विनीवीचीशीतलसाधुशुद्धसुभगाः शोभन्ते विद्या इमाः ।

यासां कामपि भवाग्नितापितजनो गृहीत्वा चिन्तानीतां मुक्तिं प्रेक्षते हस्तमध्यनिहितां मोहे सत्येव ॥]

**विवेकः**— किमुच्यते? अवरोपितप्रायः खलु पुरुषस्य चिन्ताभारः । अपि चास्य संसारदोषदर्शनसातत्यसमुत्थितादपि परब्रह्मदिदृक्षासंरम्भजृम्भितं परमवैराग्यमुपधानीभवति । तथा हि,

**निषिद्धं विद्यार्थादधिकमपि काम्यं च विजहत्परप्रीत्यै कर्म प्रतिनियतमादाय मुदितः ।**

**शुभश्रद्धादुग्धोदधिनवसुधोल्लासललिते समाधावाधातुं त्वरयति मुनिः संप्रति मनः ॥ २३ ॥**

अपि च, **विलक्षोपक्षिप्तं विषयरसगन्धर्वनगरप्रशंसायाथार्थ्यं प्रणिदधति चित्तेऽपि तनुभृत् ।**

**मया दत्ते हस्ते मतिकलुषमुल्लङ्घ्य तरसा परब्रह्मैकान्ती भवजलनिधिं गोष्पदयति ॥ २४ ॥**

**सुमतिः**— (सविमर्शम्) तह वि पिआमहप्पमुहे महाजोइजणे वासणादाविअविसअरसबळिसमोहिए, णिसाअरग्गहणकोदूहळप्पसारिअकरस्स बाळिसस्स विअ कहं उण कस्स वि मोक्खो होज्जत्ति विअळिआसं संवीळिअं विअ मह माणसं । [तथापि पितामहप्रमुखे महायोगिजने वासनादापितविषयरसबडिशमोहिते, निशाकरग्रहणकौतूहलप्रसारितकरस्य बालिशस्येव कथं पुनः कस्यापि मोक्षो भवेदिति विगलिताशं संव्रीडितमिव मे मानसम् ।]

**विवेकः**— अयि भीरु, अवधारितपरमार्थाऽपि किंपचानमानसेव किं पुनरप्यतिशङ्कसे । शृणु चैतत्,

**विषमधु बहिष्कुर्वन् धीरो बहिर्विषयात्मकं परिमितरसस्वात्मप्राप्तिप्रयासपराङ्मुखः ।**

**निरवधिमहानन्दब्रह्मानुभूतिकुतूहली जगति भविता दैवात्कश्चिज्जिहासितसंसृतिः ॥ २५ ॥**

निःसंशयः खलु पटुभिरपि विटपमारोहद्भिरप्राप्तानां पचेलिमानां फलानामयतमानस्यापि सुकृतपरिपाकेन पान्थजनस्य पुरतः परिपातः । अपि च,

**विवित्सति यदि स्वयं किमपि सूरिसेव्यं पदं कृतस्य यदि निष्कृतिर्यदि करिष्यते नाहितम् ।**
**निसर्गसुहृदीश्वरो यदि च(ह) लक्ष्यमन्वीक्षते किमत्र परमुच्यते किमिति नात्मविन्मुच्यते ॥ २६ ॥**

**सुमतिः**— णाह, जइ एव्वं तुए दिण्णहत्थो संसारसाअरं अइळङ्घेइ पुरुसो, ता कहं दवदहणपज्जलिअपस्सजुअळ-दारूअरगओव्व कीडो, सारमेअगणपरिगओ व्व सारङ्गो, समीरणन्दोळणडोळाअन्तपोओदरगओव्व सञ्जत्तिअ-सत्थो, महप्पवाहमज्झणिरोहसंभन्तणअणो व्व जम्बुओ, विसअरपरिगहिअवरघुरन्तहिअओ व्व कुडुम्बिअणो, विअडअरभङ्गसंभमसंखुहिअगङ्गाअडवेपन्तसंहणणो व्व साहिमण्डळो, राहवसरणिअरक्खोहिअरअणाअरमज्झ-ट्ठिओ व्व मच्छसङ्घाओ सद्धसगहिओ होइ ? [नाथ, यद्येवं त्वया दत्तहस्तः संसारसागरमतिलङ्घते पुरुषः, तत्कथं दवदहनप्रज्वलितपार्श्वयुगलदारूदरगत इव कीटः, सारमेयगणपरिगत इव सारङ्गः, समीरणान्दोलनडोलायमान-पोतोदरगत इव सांयात्रिकसार्थः, महाप्रवाहमध्यनिरोधसंभ्रान्तनयन इव जम्बुकः, विषधरपरिगृहीतगृहघूर्णमानहृदय इव कुडुम्बिजनः, विकटतरभङ्गसंभ्रमसंक्षुभितगङ्गातटवेपमानसंहनन इव शाखिमण्डलः, राघवशरनिकरक्षोभितरत्नाकर-मध्यस्थित इव मत्स्यसंघातः साध्वसगृहीतो भवति ?]

**विवेकः**— भद्रे, पाण्डित्यमपि निर्विद्य बाल्येन तिष्ठसि, यन्मोक्षमाणमपि मुक्तमिवाभिमन्यसे । पश्य पश्य,

**वर्णितगुणप्रकर्षा वर्णाश्रमनियमदेशकालमुखाः । अनवहितमानसानां भवन्ति नित्यं भयोदयस्थानम् ॥**

अन्येषु तु विशेषं बोधयामि ।

**भयाभयस्थानविशेषवेदिनः प्रमादमुक्तस्य परीक्ष्यकारिणः ।**

**परानुभूतिप्रतिबन्धशङ्कया भयानुबन्धोऽप्यभयाय कल्पते ॥ २८ ॥**

आ मोक्षाच्च विदुषोऽपि निरनुबन्धा भीतिरिति नभःप्रसूनसौरभास्वादः ।

**दिग्देशकालकरणाकरणादिरूपे देहादिके च हितसाधनभावयोग्ये ।**

**दुष्कर्मपङ्क्तिमनुचिन्तयतो विचित्रां किं तद्यदस्य पुरुषस्य न भीतिहेतुः ॥ २९ ॥**

**सुमतिः**— एव्वं किळ सव्वं वि जइ भअट्ठाणं, ता कहं णिब्भअणिप्पाअणिज्जं पणिहाणं संपज्जइ ? [एवं किल सर्वमपि यदि भयस्थानम्, तत्कथं निर्भयनिष्पादनीयं प्रणिधानं संपद्यते ?]

**विवेकः**— भद्रे, सम्यगनुयुक्तं भवत्या । अस्ति खलु सूक्ष्मं किंचित् । तदपि प्रतिपन्नमेव त्वां बोधयामि । प्रतिसं-धीयतामिदं तावत् ।

**सुमतिः**— आणवेदु अय्यउत्तो । [आज्ञापयत्वार्यपुत्रः ।]

**विवेकः**— **प्रवृद्धमतिकश्मलप्रलयपात्रकप्रक्रियां विमुच्य भगवत्कृपां वृजिनसिन्धुकुक्षिंभरिम् ।**

**कदध्वपरिवर्तिभिर्यदिह कर्म निर्मीयते तदस्तु लवणाकरे लवणसेतुराधित्सितः ॥ ३० ॥**

यः पुनरनन्यभावेन भगवदनुकम्पामालम्बते तस्य तु तादृशीं सिद्धिमवधारय ।

**विविक्तनिखिलस्थितिर्विषयवृत्तिनिर्वेदवान्विरक्तिपरिरम्भणग्लपितसर्वदुर्वासनः ।**

**निवृत्तिपथजाङ्घिको निभृतचित्तवृत्तिः परं प्रपद्य मुरभित्पदं भवमतीत्य संसिध्यति ॥ ३१ ॥**

**सुमतिः**— जुत्तं एदं । तह वि पच्चक्खिअपरमत्थं तुमं एव्व परिपुच्छम्मि । णिम्मळगुरुसआसणिद्धारिअणिअमन्तहिअआणं णिट्ठाविअणिहिळपडिपक्खाणं णिस्सेसपसमिअणिज्जरघरवासरसवासणाणं अणालक्खिअदोसगन्धमङ्गळेक्कताणमहुमहणचळणसेवामहाणन्दळाहळम्पडाणं अप्पमाअपरिग्गहिअणिउत्तिधम्माणं असम्भाविअपच्चूहाणं वि महापुरुसाणं केण उण विणिवाएण मोक्खोवाओ सिग्घं ण संपज्जइ ? [युक्तमेतत् । तथापि प्रत्यक्षितपरमार्थं त्वामेव परिपृच्छामि । निर्मलगुरुसकाशनिर्धारितनिगमान्तहृदयानां निष्ठापितनिखिलप्रतिपक्षाणां निःशेषप्रशमितनिर्जरगृहवासरसवासनानाम् अनालक्षितदोषगन्धमङ्गलैकतानमधुमथनचरणसेवामहानन्दलाभलम्पटानाम् अप्रमादपरिगृहीतनिवृत्तिधर्माणामसंभावितप्रत्यूहानामपि महापुरुषाणां केन पुनर्विनिपातेन मोक्षोपायः शीघ्रं न संपद्यते ?]

**विवेकः**— प्रिये, इदमपि ते महामतिभिरवधारणीयमतिगहनमभिदधामि, यतत्सनकसनन्दनसनत्कुमारनारदशाण्डिल्यप्रभृतयः परमैकान्तिनः प्रतिपादयन्ति । आकर्ण्यतामेतदवहितया भवत्या ।

**तिमिं किल तिमिंगिलो गिलति तद्गिलस्तं तथा तमप्यथ च तद्गिलस्तदिह पश्य कर्मक्रमे ।**

**समस्तवृजिनोदधिग्रसनडम्भकुम्भोद्भवं निवृत्तिमपि धर्ममत्त्यनघतत्त्वविन्निग्रहः ॥ ३२ ॥**

अन्यदप्येतादृशमवधारयेथाः ।

**प्रथितं पातकिवर्गं कृतघ्न एको हि कृत्स्नमतिशेते । तमिमं क्रियमाणघ्नस्तमपि दुरात्मा करिष्यमाणघ्नः ॥**

**सुमतिः**— (विचिन्त्य) इइ णाम णिस्समब्भहिअमाहप्पस्स पडिबुद्धअणणिग्गहस्स पहावो दंसिओ । अस्स उण णाह किं णत्थि परिहारो ? [इति नाम निःसमाभ्यधिकमाहात्म्यस्य प्रतिबुद्धजननिग्रहस्य प्रभावो दर्शितः । अस्य पुनर्नाथ किं नास्ति परिहारः ?]

**विवेकः**— अस्ति तु कश्चिदेकः, यदिह पुनस्तत्प्रसादनम् । तथा हि,

**तोयोज्झनेन परितापमुपेत्य जन्तुस्तोयेन जीवति पुनः क्रमयोजितेन ।**

**तद्वन्महत्त्ययजनतस्तमसि प्रविष्टस्तत्संश्रयेण भजते परमार्थदृष्टिम् ॥ ३४ ॥**

अपि च, **बहुजन्मसुकृतसिद्धं ब्रह्मविदपचारदूरगं पुरुषम् ।**

**अभिसरति नित्यरक्ता सत्वरमपवर्गसाधिनी विद्या ॥ ३५ ॥**

सा च, परभक्तिरप्रकम्प्या निवृत्तिधर्मानुबन्धिगुणबन्धैः ।
भवजलधिपोतपात्री जाता वृद्धिं दिने दिने भजते ॥ ३६ ॥

सुमतिः— (सविमर्शम् ।) जुत्तं एदं, जइ दुण्णिवारणिअइवळणिम्मिआ अपक्कणिस्सेसकसाअस्स मोक्खपक्खणिक्खेवजोग्गा अणिममहिमगरिमळहिमवसत्तणेसत्तणपत्तिपाअम्मप्पमुहा परमपुरुसत्थसिद्धिसाहणजोअन्तराआ ण होन्ति । [युक्तमेतत्, यदि दुर्निवारनियतिवलनिर्मिता अपक्वनिःशेषकषायस्य मोक्षपक्षनिक्षेपयोग्या अणिममहिमगरिमलघिमवशित्वेशत्वप्राप्तिप्राकाम्यप्रमुखाः परमपुरुषार्थसिद्धिसाधनयोगान्तराया न भवन्ति ।]

विवेकः— सत्यं देवि, दुर्जया एते दुरन्तवैरिणो योगान्तरायाः । तदेषां संभवे परिहरणादपि संभवस्यैव परिहरणेन निष्प्रत्यूहा भवति नैश्रेयसी सिद्धिः ।

[ ततः प्रविशति भूर्जपत्रभूषितोत्तमाङ्गो दूतः । ]

दूतः— (साञ्जलिबन्धम्) राजन्, अयमहमस्मि देवस्य महाराजस्य महामोहस्य दृष्टिपथमनुज्झन् सर्वत्राप्रतिहतगतिः संवृतिसत्यो नाम दूतः । तदभिवादये सावरोधं भवन्तम् ।

विवेकः— (स्वगतम्) किंनिमित्तमयमुपागतः ? (प्रकाशम्) अस्थानवृत्तिमपहायापरिमितायुर्भूयाः ।

दूतः— ( उत्तमाङ्गादवतारितं दरविकसिताञ्जलिकोशनिहितं भूर्जपत्रमुपदर्शयन् ) इदं किल महाराज, चतुर्दशभुवनचक्रचक्रवर्तिनो द्वापरमन्त्रिनिर्धारितनिखिलकार्यस्य दुर्मतिमतप्रतिष्ठितस्य देवस्य महामोहस्य लोभनाम्ना गणकेन लिखित्वा त्वदर्थं प्रेषितमन्तरङ्गेण मया उपहृतमलङ्घनीयं शासनम् ।

विवेकः— (सानादरावहित्थम्) भद्र, अस्माकमप्यभिमतः खल्वसि । तदिह उपह्वरे त्वमेव वाचय ।

दूतः— यदादिशति महाराजः । (इति विनयनिभृतं वाचयति ।)

एतत्कामादिमान्यस्य महामोहस्य शासनम् । संसारहासभीतानां स्वर्गिणामपि संमतम् ॥ ३७ ॥

विवेकः— ( अपवार्य सान्तर्हासम् ) देवि, किं वयमपि शासनीया दुरात्मनो महामोहस्य ? परचित्तवेदनार्थमिह वाचिकं तावच्छ्रोतव्यम् । भद्र, ततस्ततः ।

दूतः— परोपासितश्रद्धावधिकमतिवृत्तं यदिह ते तदैश्वर्यप्राप्त्यै भवतु बहुमन्येमहि तदा ।

विवेकः— ( अवज्ञां नाटयन् ) प्रिये, आकर्णितः किलायं भिक्षुपादप्रसरणन्यायः ? अथवा, स्वाभाव्यमेव शवमुष्टिवद्गृहीतग्राहिता महामोहस्य ।

सुमतिः— एव्वं एदं । [ एवमेतत् ।]

विवेकः— ततः ।

दूतः— अतिक्रान्तात्रसद्भ्रुकुटिनटनारम्भसमयप्रदीप्तक्रोधादिप्रतिभटनिरुद्धो न भवसि ॥ ३८ ॥

विवेकः— प्रिये स्वधर्मनिरतानस्मान् प्रति सोऽयमाशीर्वादः । अयि मोहदूत, किमस्ति शेषं वाचिकस्य ?

दूतः— अस्ति किंचिदात्मीयबलाध्यक्षकामक्रोधवैभवविषयम् ।

विवेकः— अस्तु को दोषः? शृणुमस्तावत्।

दूतः— **विश्वाधिको विलयमेष्यति कस्य भूम्ना वीरः प्रसिद्धमहिमा विबुधेषु कामः।**

**क्रोधोदितं यदनुभावशेन शंभोः शृङ्गारशीतलमभून्नयनं तृतीयम्॥ ३९॥**

अपि च,

**कामोऽसौ समवर्तताग्र इति हि ब्रूते समीची श्रुतिः कामादेव जगज्जनिस्थितिलयैराद्यः पुमान्क्रीडति।**
**निष्कामोऽपि सकाम एव लभते निःश्रेयसं दुर्लभं कामः कस्य वशे क एष भुवने कामस्य न स्याद्वशे॥**

सुमतिः— महाराअ, किं तुम्हेहिं वि दुज्जओ मअरलञ्छणो? [महाराज, किं युष्माभिरपि दुर्जयो मकरलाञ्छनः?

विवेकः— देवि! मिथ्यादृष्टिप्रियस्य मोहस्य प्रलपिते किं प्रत्युच्यते? अवशिष्टमपि निशमयामः।

दूतः— **यदि कुप्यति कोपाय न कोपमतिवर्तते। अकोपविषयं कोपं कथं कश्चिद्विजेष्यते॥ ४१॥**

तदिदमुभयतस्पाशा रज्जुः।

सुमतिः— णाह! णं कामादो वि कोवो दुज्जओ, जेण कामजअम्मि वि सअं कारणं होइ। [नाथ! ननु कामतोऽपि कोपो दुर्जयः, येन कामजयेऽपि स्वयं कारणं भवति।]

विवेकः— प्रिये! स्थानक्रोधो न खलु दोषाय, योऽसौ कामादिनिरसनार्थतया परमार्थवेदिभिः प्रशस्यते। (दूतमवलोक्य) दूत! श्रुतमिह श्रोतव्यम्। ब्रूहि मद्वचनाद्युष्मत्स्वामिनम्।

**अप्राणितमहामोहमनङ्गीकृतमन्मथम्। विभूतप्रतिघं लोको विवेकं बहु मंस्यते॥ ४२॥**

दूतः— साधयाम्यहम् (इति द्वित्रिपदमतिक्रम्य, स्वगतम्)

**सुप्तप्रबोधनसमुत्सुकया सुमत्या पत्न्या सहाचरितविश्वहितं विवेकम्।**

**जेतुं क एव जगति प्रभवेत्तथाऽपि स्वामी नियोजयति मोह इति स्वयं नः॥ ४३॥**

(प्रकाशम्) महाराज! *त्यजेदेकं कुलस्यार्थे इति नीतिं नातिवर्तेथाः। [इति निष्क्रान्तः।

सुमतिः— अय्यउत्त! जइ मुत्तिसाहणसज्जो पुरुसो मोहप्पउत्तेहिं कामक्कोहलोहमअमच्छरप्पहुदीहिं अहिहूअइ, एआवन्तो तुम्ह परिस्समो विअलो होइ। [आर्यपुत्र! यदि मुक्तिसाधनसज्जः पुरुषो मोहप्रयुक्तैः कामक्रोधलोभमदमत्सरप्रभृतिभिरभिभूयते, एतावांस्तव परिश्रमो विफलो भविष्यति।

विवेकः— देवि! मैवं मन्वीथाः। आशंसेथाः पुनः शोभनमेव।

**त्रय्यन्तैरवधारिते भगवति क्षिप्ते विरोधभ्रमे साङ्गोपायविभागसंभृतमतिः संप्रत्यसौ साधकः।**
**कामक्रोधनिशातकण्टकमिलत्कालुष्यपङ्कच्छटानिर्मुक्तेन सुशीतलेन च पथा निःश्रेयसं प्राप्स्यति॥**

(नेपथ्ये)

**दिव्यवैतालिकौ**— विजयतां देवः।

प्रथमः— रम्या यामवतीपदार्पणपटी रागाब्धिवेलोद्गतिश्चेतोजन्मकदम्बधूलिवितति: शृङ्गारचूडाजपा ।
संमोहद्विपशोणबिन्दुपटली संध्या जरीजृम्भते प्रत्यग्दिग्वनितापयोधरतटीकाश्मीरपङ्कद्युतिः ॥

द्वितीयः— दिनाधिपविनाकृतिव्यसनखिन्नसंध्यावधूविधूतकबरीभरप्रसरकौतुकापादकम् ।
विशृङ्खलकलिन्दजाजलतरङ्गभङ्गावलीमलीमसमिदं तमो जगदशेषमाचूपति ॥ ४६ ॥

विवेकः— (कर्णं दत्त्वा) देवि ! दिवामीतप्रायस्यास्मत्प्रतिपक्षस्य सौप्तिकसंनाहसमयं सूचयतः प्रायेण स्वतो वियातवादिनौ वैतालिकौ । संपश्यतां भवती,

**प्रकाशः संकोचं भजति जगतः सीदति रवौ तमिस्राविस्फूर्तिः स्थगयति मुखं शक्रहरितः ।**
**अवस्कन्दनिशं सुमुखि मधुना साकमधुना विधत्ते दुर्दान्तो विविधमपनीतं रतिपतिः ॥ ४७ ॥**

अपि च, **अश्रान्तसंततिभिराभरणप्रकाशैराम्रेडयन्त्य इव मङ्गलदीपभासः ।**
**अन्तःपुरं तिलकयन्ति समं समन्तादारात्रिकं मृगदृशो नियमं विधातुम् ॥ ४८ ॥**

तदहमिह सान्ध्यं नियममनुपाल्य परब्रह्मप्रवणमानसं पुरुषमभिरक्षामि, भवत्यपि क्षान्तिशान्त्यादिपरिजनसेविता मङ्गलाचरणसौधमधिरुह्य मत्प्रत्यागमनप्रतीक्षा वर्तेथाः । [इति सुमत्या सह निष्क्रान्तः ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके तृतीयोऽङ्कः ।

---

## चतुर्थोऽङ्कः

[ततः प्रविशति कामो वसन्तश्च ।]

कामः— सखे वसन्त !

**इक्षुः पेशलमीदृशं मम धनुः पुष्पाण्यमी सायकास्तन्त्रीमञ्जुलनिस्वना मधुकरश्रेणी शुभा शिञ्जिनी ।**
**भीरुः सन्नबलाजनो मम बलं तथ्यं परं कथ्यते सोऽहं निर्जितशूलभृत्प्रभृतिकः संकल्पसिद्धोदयः ॥**

अपि च, त्वयि संभृतशस्त्रास्त्रे सहाये मम संस्थिते । महता पश्य मोहेन विश्वमेकातपत्रितम् ॥ २ ॥

वसन्तः— किमुच्यते ? कामः खल्वसि ।

**कामंकामं कामपि सिद्धिं करणैः स्वैः कारंकारं कर्म निषिद्धं विहितं वा ।**
**न्यस्यन्ति त्वय्यद्भुतसीम्नि प्रतिबुद्धाः कामोऽकार्षीन्मन्युरकार्षीदिति नाम ॥ ३ ॥**

अपि च, **विषमनयनमुख्यैर्विक्रमक्रीडितं ते सुरपतिभवनानि स्वैरसंचारभूमिः ।**
**उदधिवलयितेयं क्षोणिरुद्यानसीमा कथमिव मदन त्वं वर्ण्यसे कान्तिसिन्धुः ॥ ४ ॥**

कामः— सखे ! सर्वलोकविदितमात्मनोऽपि वैभवमनुचिन्तय । यदेतत् ,

प्रख्यातस्त्वयि संभवः सुमनसां विश्वं त्वया नन्द्यते मुख्यस्त्वं किल षड्विधेषु ऋतुषु ज्योतिस्त्वदेकाश्रयम् ।
यत्र श्रीर्धृतपङ्कजा स च परस्त्वत्संश्रयो माधवः कामस्ते सचिवः क एव भविता कालोत्तमस्त्वत्समः ॥५॥

अपि च, वसन्तस्त्वं वह्निर्मलयपवनः सारथिरसावशोकादिर्ज्वाला मधुकरगणो धूमपटली ।
सुधासूतिः स्नेहस्तदिह जितनिर्वाणवचसो विरक्तिस्ते दाह्यं द्रुहिणगिरिशादेरपि सतः ॥ ६ ॥

वसन्तः— महावीर मकरकेतन! मादृशामतिशयस्त्वदर्थ एव । यथा,

ऋतवो हि मत्प्रधानास्तवैव नानास्त्रशिल्पिनः सृष्टाः ।
विजयसमयं शशाङ्को विश्रमकालं व्यनक्ति दिवसेशः ॥ ७ ॥

कामः— आस्तामयमन्योन्यप्रशंसनविस्तरः । अवधातव्यं राजकृत्ये ।

वसन्तः— यदुच्यते वयस्येन, तदिह समानमा(भा)वयोः समाधिप्रवणपुरुषचेतःक्षोभणे । शृङ्गारोद्दीपनविभावकृत्यं मय्यायत्तम् । भवता पुनरालम्बनविभावसंपत्तिरुपपादनीया ।

कामः— सुहृत्संमतमहमिदानीमाचरामि । अयं खल्वपरिचितशुभाश्रयधारणाभिलाषी पुरुषश्चिरपरिचितसुखालम्बने सुखेन संमुखयितुं शक्यते । अस्ति हि देवासुरसिद्धगन्धर्वविद्याधरकिंनरकिंपुरुषमानुषादिसर्वपुरुषचक्षुःप्रत्यक्षं स्वतःपुरुषार्थभूतं सुलोचनाभिधानं ब्रह्म । न चैतदनुपपन्नम् ।

परमानन्ददायिन्यः प्रजानां सृष्टिहेतवः । ब्रह्मलक्षणशालिन्यो न कथं ब्रह्म योषितः ॥ ८ ॥

वसन्तः— सखे! त्रय्यन्तसंमतश्च त्वदभिमतोऽयमर्थः । स्त्रियो ब्रह्मेति हि प्रथममामनन्ति । उत वा पुमानिति तु वैभवादुक्तिः । अपि च,

अलसललितमन्दं स्पन्दनं लोचनानामकृतकरमणीया वृत्तयो विभ्रमाणाम् ।
अपि तरुणवधूनामाहरेयुर्मुनीन्द्रान् शतमपि च विधूय ब्रह्मणां शाश्वतानाम् ॥ ९ ॥

कामः— (सहर्षम्) सखे वसन्त! अवितथमेवैतदभिलप्यते । ततश्च,

अयमप्सरसां गणः प्रनृत्यन्निशिखासारविकल्प्यमानदृष्टिः ।
अभिगच्छतु मङ्क्षु मत्प्रयुक्तः पुरुषं काङ्क्षितपुण्यहीनयोगम् ॥ १० ॥

वसन्तः— वयस्य पुष्पधन्वन्! त्वदादेशवर्तिनीषु मत्तकाशिनीषु सिद्धं नः समीहितम् । अद्य हि,

स्वादुगीतमधुमोहितश्रुतेश्चारुनृत्तवशवर्तिचक्षुषः । भावभेदभृतकीकृतात्मनो योगिनस्त्यजति यौवतं न धीः ॥

कामः— (विचिन्त्य, सरोषहासम् ।)

यदि मामवमत्य संयतेत व्यवसायान्वयदर्पितो विवेकः ।
वनिताशतवञ्चितस्य पुंसः स्वयमाधास्यति सौभरेरवस्थाम् ॥ १२ ॥

वसन्तः— किमत्राद्भुतम्? विश्वविदितं हि भवतो वीरायितम् ।

विकस्वरसुरद्रुमप्रसवशस्त्रमाध्वीमदभ्रमद्भ्रमरसुन्दरीनिकरसंभृतज्याभृतः ।
प्रहृष्टपरपुष्टप्रियावगवेणुवीणादिभिः क्वणद्भिरुपघुष्यते कुसुमधन्वनो विक्रमः ॥ १३ ॥

तदिह लघुव्यापारलभ्ये वस्तुनि न त्वया त्वरितेन प्रयतितव्यम् ।

मा भूदमोघविशिखं नमितं धनुस्ते मौर्वी च मा भवतु पुङ्खितचित्रपुङ्खा ।
मद्दर्शितैरपि सखे विभियाद्विवेकः शाखानिषङ्गनिहितैः शतशस्त्वदस्त्रैः ॥ १४ ॥

कामः— महति प्रतिपक्षे मैवं मन्दोत्साहेन भवितव्यम् । दृश्यते हि,

मितखद्योतनिष्पाद्ये तमसामपसारणे । सहस्रेण करैः सार्धमुदेति दिवसेश्वरः ॥ १५ ॥

अपि च, तिष्ठतु संग्रामकथा द्यूते पुरुषस्य वादमात्रे वा ।
भवति परिभूतिलेशे कति कति विपदो निदर्शिताः कविभिः ॥ १६ ॥

वसन्तः— किमित्येवमात्मप्रभावमवमत्य परावरविश्वपरिभाविनस्ते कुतश्चित्परिभूतिलेशमाशङ्कसे? न खलु शलभाः सहस्रमपि सहस्रकिरणमभिभवन्ति । अद्य च,

विपुलसुगुमापत्तौ नृत्यद्विहारतुरंगमे मधुमदसमारम्भस्तम्बेरमस्थगितान्तरे ।
रतिरसरथोत्सेधे कश्चिद्विधित्सितसंयमः क्वचन भवतः स्कन्धावारे न जीवति जीवति ॥ १७ ॥

न चेदानीं पुरुषः समाधिसौधमधिरूढः, यतस्ते तस्मिन्मनोरथप्रतिहतिशङ्का । दृश्यते हि,

स्मरति महतामातङ्कानां मनस्कुरुते गृहान्प्रसजति परब्रह्मप्राप्तौ समृद्धिमपेक्षते ।
अभिनिविशते भोगोऽन्वत्यपत्रपते पुनः प्रणिधिरधुना सिद्धापायः सितासितपद्धतिः ॥ १८ ॥

कामः— तदिह सौतिकावसरः संदर्शितः प्रियसखेन । तथा हि,

सोऽयमसमययोगे पुरुषे सर्वास्त्रमोक्षसमयो मे । रथवैगुण्यविलक्षे राधेये फल्गुनस्येव ॥ १९ ॥

वसन्तः— भवतु नामैवं भवतः समीची समीहितसिद्धिः ।

विरक्तिकपटक्रमादृजिनकोटिभिर्दुर्दमे परप्रणिधिकर्दमे पतितुमेकतानः पुमान् ।
त्वदस्त्रगणताडनत्रुटितगर्वनिर्वेदवान्भवप्रभृतिसेवितं भजतु भोगवर्गं पुनः ॥ २० ॥

अपि च, मलयपवनज्योत्स्नामल्लीमधुव्रतकूजितप्रभृतिविजयस्कन्धावारप्रधानपताकया ।
हसितलपितक्रीडाचित्रैरनुज्झदभिख्यया युवतिकथया योगी सन्नप्यसङ्गमुपैति कः ॥ २१ ॥

कामः— सखे! सर्वथा नूनमविचक्षणो विवेकः । यत्सागरतरणगगनातिलङ्घनमरीचिकाचर्वणमहीतलमज्जनादिवदशक्यमेव समाधिलाभमाधिव्याधिशालिनः पुरुषस्य बालिश इव साधयितुमीहते । अपि च,

पुरुषमजहद्भोगश्रद्धापुरस्कृतसंभ्रमं विषयमदिरास्वादक्षीबं विमोचयितुं स्थितः ।
अमृतमिलितद्राक्षावल्लीफलद्रवसंपदाममरतरुणीबिब्बोकानामवैति न वैभवम् ॥ २२ ॥

दृश्यतां पुनरियमुभयतःस्पाशा रज्जुः ।

**विवेकावष्टम्भादुपजनितवैराग्यविभवो यदि क्रुध्येन्मह्यं भवति स (न) कथं क्रोधविजितः ।**

**अथ त्यक्तक्रोधो यदि कथमपक्रामयतु मां मुधा कामक्रोधप्रशमनकथा मूढमनसाम् ॥ २३ ॥**

(ततः प्रविशति विकृतवेषः क्रोधः)

क्रोधः— (ससंभ्रममुपसृत्य ।) स्वस्ति सुहृदे स्वैरसंचारविजितविवेकविभवाय कुसुमधन्वने । कः खल्वसौ विवेकवशवर्ती कामक्रोधप्रशमनकथावृथाजल्पमुपकल्पयति ? (विकटं परिक्रम्य साट्टहासम्)

**अयमहमुद्भटप्रथनचारभटारभटीनटपतिरुत्थितः कथमुदेति विवेककथा ।**

**यदनुविधायिदैत्यमयसंज्वरितासु मुधा सुरसुभटीपयोधरतटीषु पटीररसः ॥ २४ ॥**

कामः— स्वागतं प्रियसुहृदे मत्प्रतिपक्षनियतमन्यवे मन्यवे महारथाय । समागतोऽसि च स्वामिकार्यनिर्वहणसमयमनुचिन्त्य मत्साहायकमनोरथेन । वर्तयसि च स्ववशे वशिनोऽपि महेश्वरादीन् । अहो जितं महाराजेन । किं च,

**मुधारम्भे डम्भे मयि च मदने मुक्तकदने मितोत्साहे मोहे वृजिनगहने व्याप्तदहने ।**

**अवज्वालेशाद्यैरपि खलु भवानिन्धनशतैः प्रदीप्तः प्रत्यञ्चं प्रणिधिमुपरोद्धुं प्रभवति ॥ २५ ॥**

वसन्तः— नन्वसौ पवनपावकसमागमः, यदुत कामस्य तव च संगतम् । तदिह किमिति सामग्रीसंभवे साध्यसंपत्तावुदास्यते ? अनुसरति खलूत्साहमभिलषितसिद्धिः । एतदेव चेदानीमात्मसंभवेन प्रियसुहृदा पुनः पुनरभिहितमभिमतप्रतिलम्भनमनुपश्यामि । यदुत,

**रतिपतिवारयोषिदनुपालितरत्नलतास्तबकविलोभनीयललितस्तनभारनताः ।**

**अमरमृगेक्षणाः परिचरन्तु विरक्तिधनं मदनधनुर्गुणभ्रमरमन्थरतारदृशः ॥ २६ ॥**

कामः— सखे ! कालोचितकार्यप्रतिसंधायकः खलु कालतत्त्वज्ञो वसन्तः । तदेनमेव विबुधपतिनगरवेशनारीपुरःसरं नासीरयोधमहमधिज्यधनुरनुव्रजामि । त्वमपि परितः परिवृत्तदृष्टिः पार्ष्णिमभिरक्षन्सावधानमन्वीयेथाः ।

[ सर्वे तथाऽनुसर्पन्ति । ]

वसन्तः— श्रूयतामयमिह महामोहसमरसैनिकधुरंधराभ्यां मन्मथप्रतिवाभ्यां मामको व्याहारः । अयमेवावसरः संयमारम्भं सौतिकेन संस्थापयितुम्, यत्र समुत्थितं चतुरुदधिबृंहणं चान्द्रमसं महः । अद्य खलु पुरतः सरन्त्यमी मुग्धयुवतिमुखचन्द्रकिंकरस्य कुमुदिनीपतेरुदयवार्ताहराः कतिचन किरणाङ्कुराः । अमी च,

**तिमिमुखपीतमुक्तसितसागरपूरनिभा रजनिविलासहासललिता हरिणाङ्ककराः ।**

**शुभघनसारमिश्रहरिचन्दनपङ्करुचः स्फुटमनुलेपयन्ति पुरुहूतदिशासुदृशम् ॥ २७ ॥**

अपि च, **प्रथमस्य कान्तिमद्रेः पश्यतमेतेन भावितां शशिना । मदजलकलङ्कभाजा करटिन इव कर्णशङ्खेन ॥**

क्रोधः— सखे शम्बरासुरसूदन! सूनृतवादी सोऽयं सुरभिः । अद्य हि,

हरेरिह दिगन्तरे हसितदुग्धसिन्धुद्युतिः श्रियं कुमुदशालिनीं प्रजनयत्यसौ चन्द्रिका ।
मनागिव विवर्तितं मधुरतारकोन्मीलने निशामय निशामुखे तिमिरकन्दलं कुन्तलम् ॥ २९ ॥

कामः—— संभावनीयः खल्वसौ बहुलतरतमःपटलपाटनपटीयस्तरकिरणः सनाक्रान्तपशुपतिजटामण्डलः सखा मे तारकेश्वरः । अयं च,

कुर्वन्कामपि कौमुदीं कुमुदिनीसंमोददानव्रती सान्द्रातङ्करथाङ्गनामतरुणीसंतापचिन्तामणिः ।
शृङ्गारागमदेशिकस्त्रिजगतामानन्दनाडिंधमो रुन्धे सर्वदिशां निरन्तरतमस्तन्द्रालुतां चन्द्रमाः ॥

अपि च, पदे विष्णोरेषा प्रभवमनधिगम्य प्रसृमरा स्फुरत्ताराफेनस्तबकपरिपाटीपरिगता ।
क्षरन्ती पूर्वाद्रेरमरतटिनीसंप्लवसखी तमिस्राकालिन्दीं शबलयति चन्द्रांशुपटली ॥ ३० ॥

सखे क्रोध! पश्य मे सहायसंपत्तिम् ।

ताराकान्तः प्रियसुहृदयं चन्द्रिकेयं वयस्या बाणारम्भाद्बहुमतिपदं बान्धवो मे वसन्तः ।
त्वं च भ्राता विपदुपगमे क्रोध दुर्वारवेगः को वा मह्य कुसुमधनुषे तिष्ठते जीविताथीं ॥ ३२ ॥

क्रोधः—— सखे! अनुकूलो हि विधिः किं नाम नानुकूलयति? अपि च,

विजेतुकामः कामं त्वां निष्काम इति का कथा । त्वन्निवर्तननिष्कामः सकामस्त्वय्यनुज्झिते ॥

कामः—— अलमनेन विलम्बहेतुना व्याक्षेपेण । उपक्रान्तसमाधिरस्माभिरुपसर्पणीयः पुरुषः । (सर्वे तथा कुर्वन्ति)

वसन्तः—— पश्य तमेनं परमपुरुषचरणयुगलनिगलिताशयं परिहृतबहिर्विषयरागं प्रतिपन्नकारिणा विवेकेन प्रचोदितं प्रक्रान्तयोगं पुरुषम् । अयं हि,

भयस्थानग्रन्थान्परिपठति निद्राति च मुहुः स्वमात्मानं पश्यत्युपचरति देहं च विधिना ।
निवृत्तिं दुःखाब्धेरभिलषति रज्यत्यपि सखे द्विधावृत्त्या दुःख्यन्पुरुष इह दोलायत इव ॥ ३४ ॥

कामः—— सखे क्रोध! अद्य खलु संक्षोभणीयदशामनतिक्रान्त इति समर्थितं वसन्तेन । दूरावधूतबाह्याभ्यन्तरवैरिभिरपि दुर्जयास्मत्सहायिन्यनादिसंततिविचित्रप्ररोहा वैषयिकी वासना ।

भवत्वतिपतिष्यतो भवपयोधिमेकान्ततो रतिः सह मुमुक्षया ललितभाषितं योगिभिः ।
तदप्यवसरे क्वचित्सपदि पार्ष्णिमालम्बते ममत्वशतवासनारचितवारवाणं मनः ॥ ३५ ॥

वसन्तः—— इदमप्यपरमवधारणीयमरातिजनभयंकराभ्यां भवद्भ्याम् । सर्वसङ्गनिवृत्तस्यापि संमानागतिः समाधिपरिपन्थिनी । अत एव खल्वनुचिन्तितहिरण्यगर्भवचसः संवर्तभरतविदुरादयो दुरितोच्छेदकारणं जनावमानमिच्छन्त उन्मत्तचर्यामभ्यनैषुः । तदिदानीं यावदयमवमानापेक्षामाददीत, ततः पूर्वमेव संमानभङ्गादिकं द्वारीकृत्य प्रसभं क्षेत्रज्ञे प्रवेष्टव्यं क्रोधेन । अथवा,

शृणोति कथयत्यसौ परिचिनोति संपृच्छते समर्चयति गायति स्पृशति पश्यति स्तौति च ।
इतीव नियतादरो मुरभिदङ्घ्रिसेवारसे न भेत्तुमिह शक्यते स्थिरविवेकदुर्गस्थितः ॥ ३६ ॥

अपि च, वितथपरिग्रहत्यजननिर्वृतबुद्धिरसौ तदितरसंग्रहेऽपि विधिनैव परं नियतः ।
उपनतमप्ययथार्थ्यमुपभोगमपोह्य भजत्यजगरवृत्तिमात्रमवधीरितभूतहतिः ॥ ३७ ॥

कामः—( सविलक्षस्मितम् ) सखे! नूनमप्रगल्भ इव संग्रामसमये साध्वसमवलम्बसे । कालोपपन्नं कार्यं न प्रतिसंधत्से ।

ऋतुश्रेष्ठस्त्वं नः सुहृदमितभोगार्हविभवः स्वयं कामः सोऽहं सुरनरतिरश्चः स्ववशयन् ।
अयं क्रोधः क्रूरप्रकृतिरसहत्वसदहितं त्रिभिः कार्यं द्रौणिप्रभृतिविहितं सौप्तिकमिह ॥ ३८ ॥

वसन्तः— सखे! प्रतिसंहितकार्य एवाहमस्मि । अवस्कन्दसमयमतिक्रामति पुरुषे कथमस्माभिरमोघवृत्तिभिर्भवितव्यमिति तु विमृशामि । पाटच्चरलुण्ठितेषु भवनेषु जाग्रतोऽपि यामिकाः किमुपकरिष्यन्ति ? अयं हि,

प्रचेतुमनघां वृत्तिमपचेतुमपाक्रियाम् । भजते विश्वकर्तारं भिषज्यन्तमिवातुरः ॥ ३९ ॥

क्रोधः— (ससंरम्भम्) श्रोतव्यमेतत्सुरभिणा सुहृदा च कामेन मामकं मनीषितनिष्पादनकौशलम् । यदुत,

जमदग्निमुखान्परित्यजन्परिगृह्णन्दशकंधरादिकान् । विनिपातितवानुपायतः पुरुषानद्भुतपौरुषानहम् ॥

वसन्तः— प्रख्यातमिदमित्थं भवतश्चातुर्यम् । तथाऽप्यत्यन्तवीतरागे क इव तवावकाशः ?

क्रोधः—(हाहाकारमाम्रेडयन् ) अस्त्येव संमतोऽत्राप्यवकाशः । यथा,

पुंसस्त्यक्तपरिग्रहस्य विषयग्राहोज्झितस्याप्यहं कन्थाविष्टरकुण्डिकादिहरणप्रच्छादनाद्याश्रयः ।
अन्तःक्षोभमलीकजल्पमसदारोपस्पृहां पैशुनं संमोहादि च संमुखय्य सहसा दास्ये समाधिक्षयम् ॥

किं च, महेश्वरप्रमुखमहापुरुषचित्तविक्षोभकस्य मे समाहितहृदयसमारम्भविघटने किमत्राश्चर्यम् ? यतः,

विभर्तु विबुधेश्वरं क्षिपतु दानवानीकिनीं भिनत्तु कुलपर्वतान्वनशतानि मृद्नातु वा ।
अयत्नविवृतक्षितिस्तबकशेखरालंकृतः किमद्भुतपदं भवत्ययममीभिरैरावणः ॥ ४२ ॥

कामः— सखे पुष्पाकर! क्रोधोदीरितमप्यवितथमिदमवधारणीयम् ।

निद्रामुग्धनिमीलितेष्वसुलभं निर्धूतनिम्नोन्नतं निद्राणाखिलवर्णभेदनियमं विष्वक्प्रवृत्तोदयम् ।
कः क्रोधोद्भवमुत्सहेत तरितुं कल्पान्तकादम्बिनीकालोद्वेलकलिन्दशैलतनयाकल्लोलकालं तमः ॥

अपि च, वाल्मीकिप्रभृतिभिर्महर्षिभिरप्युद्घोषितं मामकं महिमानं मावमंस्थाः । अहह !

विराधकरिकेसरी त्रिशिखवह्निदग्धार्णवः प्रभूतखरदूषणप्रभृतिनैर्ऋतव्यूहजित् ।
विलूनदशकंधरो मृदितकुम्भकर्णस्तदा मदस्त्रजनिते स्थितः क्वचन लाघवे राघवः ॥ ४४ ॥

वसन्तः— काम ! साधु कृतं भवता ।

कामः— वयस्य ! आत्मानं बहुमन्येथाः । त्वदायत्तवृत्तिना खलु मया सर्वमेतदाचरितम् ।

वसन्तः— हन्त मकरध्वज ! महावीराणामपि भवति वैक्लव्यं भवत्प्रभावेन, यदुन्मत्तदशामप्यधिगच्छन्ति । अथवा,

रागोपलिप्तदृष्टिः प्रलपति मुह्यति विघूर्णते स्खलति । युवतिमदिरामदान्धो युक्तायुक्तं न जानाति ॥

(विचिन्त्य) यद्यपि दुर्जयौ युवां कामक्रोधौ, तथापि किंचिन्मनसि मे परिवर्तते । सहायभूयस्त्वं सर्वेष्वपि कार्येष्वयत्नसिद्धिकारणम् । (पदशब्दं सूचयन्)

धर्मध्वंसधुरंधरः शमदमप्रारम्भसंकम्पः प्रज्ञाप्राशिधिघस्मरः प्राणिद्वयत्प्रत्यूहमृत्युंजयः ।
मुक्तिप्रार्थनमोचनाय महता मोहेन संप्रेषितस्तृष्णागारविलासिनीसहचरो लोभः किलोदीयते ॥

(कामक्रोधौ सहर्षमवलोकयतः)

वसन्तः— विश्वहल्लोभनो लोभ इहाकार्यः ।

कामक्रोधौ— सुष्ठु चिन्तितं सुहृदा वसन्तेन ।

[कामः छोटिकां ददाति; क्रोधः सोद्घोषमनुमोदते]

[ततः प्रविशति लोभस्तृष्णा च ।]

लोभः— महामोहस्याज्ञां शिरसि निदधानः स्रजमिमामहं तृष्णाजानिस्त्वरितमिह लोभः समुदितः ।
प्रदिष्टैस्तत्तादृक्प्रथिमविकटैर्हाटकमयैरखण्डैर्ब्रह्माण्डैर्मम क इव तृप्तिं घटयिता ॥ ४७ ॥

(तृष्णां परिष्वज्य) प्रिये !

अशेषसुरनारीणामाभिरूप्यसमुच्चयैः । अजहद्यौवनां तृष्णे विदधे त्वां विधिः स्वयम् ॥ ४८ ॥

तदिदं निदर्शयामि,

कनककलधौतशैलप्रभृतिभिरपि हन्त पूरणे क्षिप्तैः । तृष्णे भजति समृद्धिं भूयो भूयस्तवोदरे कार्श्यम् ॥

तृष्णा— अय्यउत्त ! तुम्ह वल्लहाए मह रमणिज्जत्तणं सव्वरमणीसमब्भाहिअं त्ति किं अच्चरिअं ? तह वि देवासुरघरगअसअलरअणोवहारेण मह सोभग्गजोग्गाइ हारकेऊरमेहलाणूउराइ तुए करणिज्जाइ । [आर्यपुत्र ! तव वल्लभाया मम रमणीयत्वं सर्वरमणीसमभ्यधिकमिति किमाश्चर्यम् ? तथाऽपि देवासुरगृहगतसकलरत्नोपहारेण मम सौभाग्यसदृशानि हारकेयूरमेखलानूपुराणि त्वया करणीयानि ।

लोभः— प्रिये ! ईषत्करमिदमभ्यर्थयसे । निर्जिताः खलु मया देवासुरकिंनरकिंपुरुषविद्याधरमुनिमनुष्यतिर्यञ्चः, यथा परस्परमेव व्यतिहन्यन्ते, यथा वा तुषकणमपि मेरुं मन्यन्ते । तत्र तावद्धनदविरुदविख्यातस्य त्र्यम्बकसखस्य मत्कृतामवस्थामाकर्णय ।

लब्धं न मुञ्चति विलक्षमतिर्न भुङ्क्ते धत्ते पुनः पुनरसौ महतीं धनायाम् ।
निद्रारसं न लभते महतां निधीनां रक्षापिशाच इव संप्रति राजराजः ॥ ५० ॥

तृष्णा— अय्यउत्त ! तुए अत्थपुरुसत्थसद्धासण्ठाविअहिअए तेळ्ळोक्के विवेअपरिग्गहिअस्स पुरुसस्स का उण दसा ?

[आर्यपुत्र त्वया अर्थपुरुषार्थश्रद्धासंस्थापितहृदये त्रैलोक्ये विवेकपरिगृहीतस्य पुरुषस्य का पुनर्दशा ?]

लोभः— प्रिये! विमर्शनीयमेतत् । तस्य पुनः समाधिकौतुकं प्रशमयितुं महाराजेन महामोहेन समादिष्टौ कामक्रोधौ मदागमनकाङ्क्षिणौ तिष्ठतः । इमौ तावदुपसर्पावः । (उपसृत्य) लोभनामाहमभिवादये ज्यायांसौ कामक्रोधौ ।

तृष्णा—– सुण्हा एसा पणमइ गुरुअणं । [स्नुषैषा प्रणमति गुरुजनम् ।] [इत्युभौ प्रणमतः ।

कामक्रोधौ— दीर्घायुषौ भूयास्तम् ।

वसन्तः— अहो निदाघपवनदवाग्नीनामिव भवतां समागमः! किं न सेत्स्यति राज्ञो महामोहस्य? मा भूद्विवेकतो भवत्पत्नीनां रतिजिघांसातृष्णानां माङ्गल्यभूषणवैकल्यम् । [सर्वे परस्परमाश्लिष्यन्ति ।

कामः— अपि स्वागतमस्मदुपजीव्यमर्थपुरुषार्थमभिरक्षते लोभाय?

लोभः—– अथ किम् । अनुग्रहपदं खल्वहं भवताम्?

क्रोधः—– अपि कथममोघवृत्तिरपवर्गोदन्तवैदेशिकस्त्वमवधत्से स्वामिकृत्यम्?

लोभः—– युष्मदवष्टम्भेन सर्वत्रामोघवृत्तिरस्मि । पश्य सुयोधनादिवन्मत्परिगृहीतस्य लोकस्येदानीमद्वितीयां द्वितीय-पुरुषार्थनिष्ठाम् ।

क्षुद्रक्षोणिरजःकणस्थिरतृषः क्षुभ्यन्ति पृथ्वीभृतस्तप्येत स्वपदाय कः क्वचिदिति त्रस्यन्त्यमर्त्येश्वराः ।
भिक्षाकेऽपि केषुचित्क्वचिदुपक्षिप्तेष्वधिक्षेपतः पक्षे दुर्मतिभृत्ययोरिह जगत्तिष्ठत्यसूयेर्ष्ययोः ॥

अपि च, अटन्ति हरितो दश स्थपुटयन्ति विश्वंभरां पठन्ति धनिनां चटून्परपरिच्छदं बिभ्रति ।
तरन्ति जलधिं प्लवैः समरमारभन्ते मुधा दुरन्तधनदोहलग्रहिलचेतसो देहिनः ॥ ५२ ॥

वसन्तः—– आयुष्मन् महामोहामात्यधुरीण! पुनस्तृष्णासहायस्य ते पूर्वापरपुरुषार्थसाधके स्वयं च सर्वचित्तसाक्षिकं स्वादुतयोपलभ्यमाने सर्वराजन्यसेवनीयचरमोपवेदसिद्धे प्रत्यक्षपुरुषार्थे कः प्रत्यूहः? अयं च,

कालप्राप्ताद्धर्मतोऽधर्मतो वा कक्षीकार्यः कामतन्त्रप्रधानैः ।
लाभे गुप्तावप्रदानव्रते वा त्वय्यायत्तो ह्यर्थनामा पुमर्थः ॥ ५३ ॥

शृण्वन्तु सर्वे भवन्तो मामकमनुयोगम् । विवेककवचदुर्भेदविज्ञानो विपश्चित्तमः कथंकारमवस्कन्दनीयः?

कामः—– सखे! एवमहमेतदध्यवस्यामि । अहं तावदग्रेसरो गच्छामि । भवद्भिस्तु पक्षद्वयं पार्ष्णिं च परिपालयद्भि-रन्तरा निवेश्य तृष्णामनुप्लवैर्भवितव्यम् । तदनेन दुर्भेदेन व्यूहेन विवेकस्य स्वकुलविध्वंसनमनोरथप्रत्यूहीभविष्याम इति । (तथा व्यूह्य सर्वे पञ्चषाणि पदानि परिक्रामन्ति)

कामः—– (सरभसपुङ्खितशरं पौष्पं धनुरान्दोलयन्) पश्यत तावदिदानीमधिज्यधन्वनो मे ललितघोराणामिषूणां लक्ष्यलाभम् ।

प्रणिधानविशेषभावितात्मा करणग्रामनिरोधनिष्प्रकम्पः ।
निभृतश्वसनो निवृत्तिधर्मा पुरुषस्त्यक्तपरिग्रहोऽयमास्ते ॥ ५४ ॥

वसन्तः—– (सूक्ष्ममवलोक्य) हन्तावहितैरस्माभिर्भवितव्यम् । अत्र हि,

त्रितमसि पदे विधास्यन्मायाजलधेः समुद्धृतं पुरुषम् ।
विमृशति किमपि रहस्यं सुमतिसहायो विवेक एकान्ते ॥ ५५ ॥

क्रोधः— (सभ्रुकुटीभङ्गम्) भो वसन्त! विमृश्यतां किमपि दुरात्मना विवेकेन। पुरुषस्तावत्पुरस्कृतमन्मथानामस्माकमभिमतं नातिवर्तते। यतः,

अनवसमाधिसंपदुदरंभरिरात्मभवः प्रबलमहोर्मिजालभरिते दुरिताम्बुनिधौ।
जडमतिजन्तुजातमुपजातविहारमसौ सुखबडिशावकृष्टमुपदंशदशां नयति ॥ ५६ ॥

पश्यतु भवानेतस्य पुरुषस्य भावनाविशेषम्।

स्वसंवोधः सौधः शुभगुणगणो मण्डनविधिः समाधिः संभोगो रहसि जपशैली रतिकथा।
सुषुप्ते लोकेऽद्य श्रुतिपरिषदन्तःपुरगतो मुनिः शान्तिव्याजान्मुखरयति शृङ्गारनिगमम् ॥ ५७ ॥

वसन्तः— (स्वगतम्) आशामात्रकृतेयमन्यथाकल्पना। (प्रकाशम्) सखे! प्रबलप्रतिपक्षसंनिधौ किमनेन प्रगल्भभाषितेन?

लोभः— सखे वसन्त! प्रिया तावन्ममैषा प्रतिपक्षप्रतिक्षेपभीता प्रत्याश्वासयितव्या। (तृष्णामवलोक्य) सुमुखि तृष्णे! महावीरव्यूहमध्यगता महत्यपि प्रतिपक्षे मा भैषीः।

तृष्णा— सअलसुरासुरमहिअमाहप्पेसु तुम्हेसु जीवन्तेसु णिच्चं णिब्भअम्हि। [सकलसुरासुरमहितमाहात्म्येषु युष्मासु जीवत्सु नित्यं निर्भयाऽस्मि।]

कामः— (सान्तस्त्रासं परिवृत्यावलोक्य) पश्चात्पदानि प्रतिक्षेप्यन्तामस्माभिः। अद्य हि,

अनिद्राणप्रज्ञासहजबलधीराद्भुतगतिस्तितिक्षासंतोषस्थिरतरतनुत्राणघटितः।
प्रयुक्तं केनापि प्रणवरथमास्थाय पुरतो विवेकः प्रत्युद्यन्विघटयति मे व्यूहघटनाम् ॥ ५८ ॥

[ सर्वे भयं नाटयन्ति। ]

वसन्तः—

युष्मासु त्रिषु कस्यचिद्यदि विपत्संपत्स्यते केनचित्त्यक्षत्येव हि भक्तजीविततया मोहः स्वयं जीवितम्।
सद्यश्चैनमनुम्रियेत नियतं तद्वल्लभा दुर्मतिस्तत्संप्रत्यपसर्पणं क्षममितः क्षिप्रं विवेकास्पदात् ॥ ५९ ॥

लोभः— अराजकैरस्माभिरत्र न योद्धव्यम्। मन्त्रयिष्यति च राजा स्वयमेव कृत्यशेषम्।

क्रोधः— (सनिर्वेदम्) धिग्धिक्! किमियता कालेनास्माभिराचरितं राजकृत्यम्!

लोभः— सखे!

अतिक्रामन्कालस्तपनरथवेगेन महता न रोद्धुं शक्येत प्रतिवहन(वात्यावि)वातूलरहितः।
गतस्रोतोरोधे न खलु यतितव्यं कृतधिया तदारम्भः श्रेयानुपरितनभीतिप्रतिभटः ॥ ६० ॥

तदवायुस्तावदस्माभिरभिरक्षणीयम्, सर्वत एवात्मानं गोपायेदिति हि श्रूयते।

कामः— समयोचितमिदं समर्थ्यते लोकवृ(चान्त)त्तवेदिना लोभेन।

**आधे(दे)यो न हि सौप्तिकप्रणिहितैरस्माभिराकस्मिकः पातः कुद्धविवेकलक्षणमहापातालगर्तोदरे ।**
**सद्यः संप्रति डम्भदर्पकुहनासूयादिदत्तक्षणः प्रत्यर्थिप्रतिरोधकर्मणि महामोहः प्रवर्तिष्यते ॥ ६१ ॥**

तद्वयमिदानीं भिन्नदिक्काः प्रतिष्ठेमहि । आत्मार्थे पृथिवीं त्यजेदिति हि वदन्ति । [इति निष्क्रान्ताः सर्वे ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके चतुर्थोऽङ्कः ।

## पञ्चमोऽङ्कः

[ततः प्रविशति डम्भः कुहना च ]

**डम्भः**— अहहारे त्वां धर्मपत्नि कुहने ! संबोधयामि । त्वं हि मे तारेव बृहस्पतेः अहल्येव गौतमस्यास्पृष्टपुरुषान्तरा क्षणविरहाक्षमा सहधर्मचारिणी ।

**कुहना**— जं बम्हणेसरो भणइ । तह वि ळज्जामि णिद्दिट्ठादो णिदंसणादो । अरुन्धई विअ वसिट्ठस्सेत्ति वअणिज्जं घरसामिणा । जाहे अहं तक्करेहिं किदवेहिं गामणीहिं णरिन्दामच्चेहिं पासण्डीहिं अण्णेहिं वि तारिसेहिं पत्थिदम्हि, ताहे वि ता तुमं एव्व सुमरिऊण सेवम्मि । [यद्ब्राह्मणेश्वरो भणति । तथाऽपि लज्जामि निर्दिष्टान्निदर्शनात् । अरुन्धतीव वसिष्ठस्येति वचनीयं गृहस्वामिना । यदाहं तस्करैः कितवैर्ग्रामणीभिर्नरेन्द्रामात्यैः पाषण्डिभिरन्यैरपि तादृशैः प्रार्थिताऽस्मि, तदाऽपि तांस्त्वामेव स्मृत्वा सेवे । ]

**डम्भः**— (सान्तर्हासम्) अत एव सर्वलोकपतिव्रता खल्वसि । अद्य पुनरनुगतानपि मे गार्हपत्यादीन् यतः कुतश्चिदानीतैरपि शुष्मभिः समादधानया यज्ञपत्न्या त्वया न कदाचिदपि मामकमग्निहोत्रं विच्छिद्यते । पर्वकालेषु च अनाविष्कृतपुष्पया त्वया दर्शपूर्णमासौ च नित्यमनुवर्त्येते । निर्वर्त्यते च पिण्डपितृयज्ञादिकम् । का कथा प्रायश्चित्तस्य?

**कुहना**— सन्तं पावं; सन्तं पावं । जाअम्मि खु विच्छेए समाहाणिज्जं । ण खु काहे वि अम्हघरे अग्गीणं विच्छेओ । पसण्णाहिं खु कुळदेवआहिं णिच्चं रक्खिज्जन्ति अम्हाणं अग्गिणो । तह उप्पण्णं खु पुप्फं अणाविक्करणिज्जं । पत्तो वि अ पव्वसु ताहिं एव्व कुळदेवआहिं विळम्बीअदि पुप्फसमओ । [शान्तं पापम्, शान्तं पापम् । जाते खलु विच्छेदे समाधानीयम् । न खलु कदाऽप्यस्मद्गृहेऽग्नीनां विच्छेदः । प्रसन्नाभिः खलु कुलदेवताभिर्नित्यं रक्ष्यन्तेऽस्माकमग्नयः । तथा उत्पन्नं खलु पुष्पमनाविष्करणीयम् । प्राप्तोऽपि च पर्वसु ताभिरेव कुलदेवताभिर्विलम्ब्यते पुष्पसमयः । ]

**डम्भः**— साधु कुहने ! साधु । अस्मत्सहधर्मचारिणी खल्वसि । बहु मन्ये त्वां ब्राह्मण्यप्रतिष्ठापिकां यज्ञपत्नीं परमश्रोत्रियधर्मपुत्रीम् । नित्यमेव खल्वशनायोदन्याभ्यामातुरस्य मे हरिवासरेषु मृष्टमपि भोजनमनाविष्कुर्वाणया त्वया प्राप्यते द्वादशीव्रतम् । प्रख्याप्यते च प्रतिगृहं साधनसंपत्तिसंभ्रमेण । किं तु किंचिद्रहस्यमुपदिशामि । सन्तीदानीमन्तिमयुगभूमिकाभेदा इव केचिदवधीरितसकलधर्माः प्रव्रजितवेषभाजः प्रकटितमायाविलासाः पूर्वदेवाः । ते च रावणधनंजयन्यायेन भवतीं जिघृक्षेयुः । अतो मत्समीपं कदाचिदपि नातिवर्तेथाः । न च परमब्राह्मणं मां मुहूर्तमपि

त्वदन्याः परिचरितुमर्हन्ति । अहं पुनरधुना दिव्यादिव्यसर्वभोगसार्वभौमस्य राज्ञो महामोहस्यानुचितमाचरन्तमातताथिनं विवेकमभिचरितुं देव्या दुर्मत्या प्रार्थितोऽस्मि । यथा 'वत्स डम्भ! विश्वधर्मोपप्लावकेन त्वया विवेकः प्रध्वंसनीयः' इति । ततश्चाहं नित्यनिःस्पृहोऽपि दाक्षिण्यपरवशतया 'षट्स्वनभिचरन्पतेत्' इति महर्षिभाषितं चानुवर्तमानः कामप्यलक्ष्यां देवतामारिराधयिषुरास्थितनियमोऽस्मि । तन्मे दिव्यगङ्गाजलप्लुतलोकपालपुरोहितोपनीतानि पारिजातपुष्पफलान्युपाहर ।

**कुहना**— हद्धि हद्धि! सअलाअमसारगहणविसारदो विवेओ समदमप्पमुहेहिं अमच्चअणेहिं संरक्खिओ कहं अभिचरिज्जइ? तारिसेसु पवुत्तो अभिआरो कत्तुणो एव्व बाहं आवहइत्ति सुणीअदि । [हा धिक् हा धिक्! सकलागमसारग्रहणविशारदो विवेकः शमदमप्रमुखैरमात्यजनैः संरक्षितः कथमभिचर्यते? तादृशेषु प्रयुक्तोऽभिचारः कर्तुरेव बाधामावहतीति श्रूयते ।]

**डम्भः**— अयि मुग्धब्राह्मणि! अविचारितास्मद्वैभवा किं भाषसे?

**विद्याश्चतुष्कसहिता विदिता द्विसप्त क्षिप्रं चतुर्गुणितचन्द्रकलाः कलाश्च ।**
**काले च साधु विहिताः क्रतवः सहस्रं धर्मध्वजाश्च भुवनेषु मया निबद्धाः ॥ १ ॥**

अयि परमधार्मिकसहधर्मचारिणि! आस्तामिदं तावद्विद्याचारमाहात्म्यम् । निःस्पृहत्वमपि निपुणमवधारय ।

**निर्जित्य क्षितिमण्डलं भृगुपतिर्मह्यं प्रदातुं पुनः प्रह्वः प्रार्थयत न्यषेधि च मया विश्वं तृणीकुर्वता ।**
**अस्मद्वैभवदृष्टिसंभृतचमत्कारैरमर्त्यैश्वरैर्दत्तौ धिक्कृतवानहं शमधनः स्वर्गापवर्गावपि ॥ २ ॥**

**कुहना**— (सविमर्शम्) एव्वं णाम महप्पहावाणं तुम्हाणं विवेअभिआरो किं सेणो, अण्णारिसो वा जो वि को वि? जत्थ अहं सहधम्मआरिणी होम्मि । [एवं नाम महाप्रभावाणां युष्माकं विवेकाभिचारः किं श्येनः, अन्यादृशो वा योऽपि कोऽपि? यत्राहं सहधर्मचारिणी भवामि ।]

**डम्भः**— अयि महाश्रोत्रियधर्मपत्नि! महानुभावानामस्मदन्तेवासिनामत्यन्तरहस्यमिदमावेदयामि । सखीभ्यस्तृष्णादिभ्योऽपि नैतद्ब्रूयाः । न खलु श्येनादिवद्विशेषतो विहितोऽयमभिचारः । किं तु,

**ये तु धर्मतयाऽधीतास्ते सर्वे मत्परिग्रहात् । अविशेषेण गच्छन्ति विवेकस्याभिचारताम् ॥ ३ ॥**

**कुहना**— सुट्ठु चिन्तिअं । को उण इमस्सिं परपीडणजण्णे तुम्हाणं उवदेसं कुणुज्ज? [सुष्ठु चिन्तितम् । कः पुनरस्मिन्परपीडनयज्ञे युष्माकमुपदेशं कुर्यात्?]

**डम्भः**— अहह! अयि मुग्धे! सर्वज्ञस्य मे किमन्येनोपदेष्ट्रा? सर्वेऽपि हि पण्डितंमन्या मामेवाश्रित्य संशयं प्रशमयन्ति । अथापि मयेदानीं साक्षिमात्रतया स्थापितः कश्चिदुत्कृष्टसर्वजनतिरस्कारको गर्वो नाम सर्वजनहृदयसंवादी महामोहसमयमहोपाध्यायः । तस्य चेदानीमागमनं प्रतीक्ष्यास्मिन् सिद्धाश्रमे नवकृत्वः पुण्याहपूते संभृतसंभारः सप्तर्षिभिः प्रदिष्टां ब्रसीमधितिष्ठामि ।

कुहना— जुत्तं आअरिअं। कज्जसिद्धी अ तुम्ह करगआ होज्ज। [युक्तमाचरितम्। कार्यसिद्धिश्च युष्माकं करगता भूयात्।]

डम्भः— (निमित्तं सूचयन्) असत्कुलधर्मपालिनि कुहने! स्पन्दते मम दक्षिणं चक्षुः। अद्यैव च सुहृत्समागमः संपत्स्यते। (पुरस्तादवलोक्य) कः खल्वसौ ज्वलत्प्रभाकञ्चुकितदुर्निरीक्ष्यमूर्तिर्महात्मा मध्यमं लोकमवतीर्यास्मदाश्रमाभिमुखमागच्छति?

[ततः प्रविशति परिगृहीतपृथुलपादुकः प्रतिक्षणविक्षिप्यमाणविकटभुजदण्डो दृढतरदण्डावलम्बितप्रतिज्ञापत्रिकापताको दर्पः।]

दर्पः— अहं किल राज्ञा महामोहेन प्रकृष्टजनतिरस्काराय प्रणिहितः सकललोकतारतम्यदिदृक्षया परिक्रान्तः पितामहगृहान्मध्यमलोकमवतरन्नाचक्रवालमवलोकितदिशाचक्रवालः पुरंदरपुरोगमैर्लोकपालैरभ्यर्चितः सुरभिमदिरासुधाचन्द्रपारिजातमणिवरवितरणमहावदान्येन मन्दरमन्थमथनसंक्षोभसर्वंसहेन मधुकैटभमथनबन्धुना सिन्धुना समाहृतं हारोपहारमाबिभ्राणः प्रत्यागतोऽस्मि भारतं वर्षम्। अद्य च,

**त्रयोदशमिवादित्यं रुद्राणां द्वादशं तथा। मन्वीत नियतं लोको वसूनां नवमं च माम्॥ ४॥**

(विचिन्त्य सरोषहासम्) अहो नु खलु जगतो मौढ्यम्! येषामस्मदनुचरप्रतिनिधिपर्वण्यप्यवस्थानमपहास्यम्, तेऽपि मत्साम्यमाधिक्यं वा प्रतिलब्धुं मोघवृत्तिं मनोरथमारोहन्ति। इह हि,

**छन्दश्छन्दितबुद्धयः पदविदः कल्पे विकल्पत्यजः शिक्षाशिक्षितमानसा विगणितज्योतिर्गणावृत्तयः।**
**निर्णीतार्थनिरुक्तयस्त्रिविधया मीमांसया मांसला नृत्यन्तो नयविस्तरेषु सुधियः सर्वे मया खर्विताः॥**

(आकाशे) रे रे बालिश! किं ब्रवीषि? कुतस्तवेयं शिक्षा कीदृशी च परिचितिरिति? (सहस्तास्फालनं विहस्य)

**विधिमन्तरेण विहगेन कुतः पयसोरशिक्ष्यत विवेकविधिः।**
**कति वा दिनानि वद पर्यचिनोत्कलशीसुतः कवलयञ्जलधिम्॥ ६॥**

आस्तां तावद्विश्वतोमुखीयमास्माकी विद्या। अभिजनवृत्ताभ्यामप्यहं निःसमाभ्यधिकः। तथा हि,

**मद्वंशोद्भवयाजनार्हपुरुषाभावादमुष्मिञ्जगत्यागोत्रप्रथमादनश्वरतया प्रख्यातमस्मत्कुलम्।**
**अप्रत्यक्षमनक्षपीडनविधिप्रागल्भ्यतः स्थापितं विष्वग्वृत्ति तपः परं किमपि मे विश्वाधिकं के विदुः॥ ७॥**

(पुरस्तात्पश्यन्) अह ह!

**बहव इह नरश्छात्रा बाह्याः कुदृष्टय इत्यमी मिषति विबुधस्तोमे मेरुं विगूहयितुं क्षमाः।**
**प्रबलकुहनागम्भीराभिः प्रलोभनयुक्तिभिर्जडबधिरपङ्ग्वन्धप्रायं जगज्जनयन्ति च॥ ८॥**

अथवा, **अनपह्नुतवद्भिरद्य यावत्प्रतिपक्षानिह किं प्रमाणवर्गैः।**
**स्ववशे विनिवेशयामि विश्वं मणिमन्त्रौषधिवश्चनोपजापैः॥ ९॥**

किमाह कश्चित्—प्रतिष्ठिते प्रमाणवर्गे कथं कैश्चिदेवं पाटच्चरवृत्तिः प्रतिपत्तव्येति? (सरोषहुंकारम्) पश्य, अरे ब्राह्मणा

पशद! सार्वलौकिकं गगन(तल)मलिनिमप्रत्यक्षं किं न प्रामाणिकैः परिभूयते ? अपि च,

षड्भिः पूर्वप्रणीतैरलमिह समयैः श्रद्दधानप्रमाणैर्वस्तुस्थित्यैकरूप्ये मतिविहतिहते कस्य कीदृग्व्यवस्था ।
अक्षुभ्यद्द्वित्रकक्ष्याव्यवहरणसहानसदुन्नीतनीत्या सिद्धान्सिद्धान्तभेदान्मदुपहितधियः प्रत्यवस्थापयन्तु ॥

(अपसव्यं पश्यन्) एते मगधकलिङ्गान्ध्रद्रमिडकर्णाटकेरलकोङ्कणादयो जनपदाः । अहह !

अष्टाचत्वारिंशतं बौद्धभेदान्नीचोक्त्याहं हेलया निर्मिमाणः ।
अध्यासीनो बोधिवृक्षस्य मूलं विद्यादर्पं वैदिकानामहार्षम् ॥ ११ ॥

ततः प्रभृति सुगृहीतनामानो नाममात्रनिःशेषितविपक्षाः सप्तद्वीपनिहितजयस्तम्भाः संचरन्त्यस्माकमन्तेवासिनः । अपि च,

अद्वैतं क्वचिदर्पितं क्वचिदिह द्वैतं मया साधितं द्वैताद्वैतसमाहृतिः क्वचिदसौ दुःस्था व्यवस्थापिता ।
तत्तद्भक्तिसुधाग्रहोदितकथाकल्लोलतो वादिनां मन्ये संप्रति मल्लमेषसमरप्रेक्षारसं प्राप्नुमः ॥ १२ ॥

(परिवृत्यावलोक्य) एते पुनर्यवनतुरुष्काद्युपप्लुताः प्रत्यन्तदेशाः । इह च,

वादद्यूतपणं प्रकल्प्य किमपि क्षिप्ताभिमानः क्वथन् कश्चिद्वैदिकपद्धतिं द्विजपतिः क्षिप्रं मया त्याजितः ।
अर्हद्बुद्धबृहस्पतिप्रभृतिभिः क्लृप्तान्कृतान्तक्रमानन्योन्यव्यतिहारितानपि पठन्व्यामोहयत्यर्भकान् ॥ १३ ॥

अमी च पशुमृगपक्ष्यादिकल्पैरनार्यैरधिष्ठिता नास्मद्दृष्टिगोचरतामर्हन्ति । एतेष्वनिश्चिताक्षराः कक्षावलम्बितपुस्तका विस्तारितकूर्चभाराः केचिदेते विपश्चित इवाभान्ति । आः प्रतारितोऽस्मि गाढमापातदृष्ट्या । तथा हि,

अनियतबहुजल्पैरल्पबोधावलिप्तैरवमतगुरुवर्गैरत्रिवर्गापवर्गैः ।
अभिनयविधुताङ्गैरङ्गुलीनृत्तसारैरलमिह जडभूभृत्पीठमर्दैरमीभिः ॥ १४ ॥

(उत्तरतो दृष्टिं दत्त्वा) कश्चिदिहासौ काश्मीरतो वा जलंधराद्वा दक्षिणाभिमुखः समायाति । एतस्मात्तावत्प्रिययोरवस्थानं परिपृच्छामि । भद्र सुब्राह्मण ! किं जानासि दुर्मतिसमादेशादद्रिराजपरिक्रमणाय प्रस्थितयोरस्मद्द्रुहिण्योरीर्ष्यासूययो-रधुनातनं वृत्तान्तम् ? (कर्णं दत्त्वा) किमाह ? ते किल सुमतिसखीभिर्मैत्रीकरुणामुदितोपेक्षाभिः प्रतारिकाभिः कस्यां चित्तवृत्तिपथसुरङ्गायां निरुद्धे इति । (सक्रोधम्) आः पापोऽयमलीकवादी ब्राह्मणवेतालः । रे रे दुरात्मन् बैधवेय श्रोत्रियब्रह्मराक्षस ! कथं सर्वलोकाभिसरणेऽप्यस्मत्सहधर्मचारिणीत्वमनुज्झन्त्योर्महाभागयोरनयोरेतादृशमत्याहितं संभवि-ष्यति ? (निर्वर्ण्य) प्रागप्यवगतोऽयं पर्वतीयैर्व्याधपतिभिः प्रतिजनपदं प्रणिधिभावेन प्रेषितः पर्यटनशीलः कश्चि-त्पान्थः । (सपरिहासम्) अहो देशकालविशेषसंभवोऽयं दोषसमवायः । यथा,

श्वश्रूरस्य दिगम्बरव्रतव्रती संबन्धिनः सौगता माता चास्य पिता च पाशुपतिनौ वैशेषिको देशिकः ।
जाया तिष्ठति सांख्ययोगसमये चार्वाकशिष्यः सखा मिथ्याचारसमाह्वयः स्वयमसौ विप्लावको वैदिकः ॥

तदयं मिथ्याचारनामा व्याधप्रणिधिरलीकवादी चासंभाष्यो मादृशैर्महात्मभिः । एतदवलोकनदोषपरिहाराय दिवाकर-मात्मानं वा पश्यामि । (विकटं परिक्रम्य) अहह महानद्योरिह गङ्गायमुनयोरमी मध्यमा जनपदाः । एतेषु चाव-

धीरितबृहस्पतिप्रज्ञानामस्माकमनन्तसिद्धान्तस्रष्टिकबुरमुपन्यासं प्रजापतिपशुपतिदत्तवरोऽपि कः पुनः प्रत्येष्यति ? कुतः पुनरनुवादादयः ? इह चापवर्गमार्गनिरोधोद्यतेनास्मत्स्वामिना समाहूतैरपरान्तवासिभिर्म्लेच्छभूपतिभिरधरोत्तरीकृता राजधान्यः। चरन्ति चात्र केचिदमी चक्रवर्तिनो डाम्भिकानाम्। एते च,

**अयाचन्तः किंचित्स्वयमुपनतेऽनादरगिरो धनायाशैलूषीसहचरितसाकूतगतयः।**
**निवृत्त्याख्ये धर्मे स्थितिमभिनयन्तो निरुपधिं नमस्यन्ते सद्भिर्नवमरसनाडिंधमदृशः॥ १६॥**

अपि च, हन्तैतत्कलेरनङ्कुशमाधिराज्यं; महामोहस्य वा तपसां परिपाकः।

**स्वतन्त्रवरवर्णिनीसुरतकेलिसौत्रामणीरसार्पितमनोभवां रहसि निर्विशद्भिः क्षपाम्।**
**दिवा विविधभूमिकाविहितकञ्चुकैर्वञ्च्यते वियातकितवैरिदं वितथदत्तचित्तं जगत्॥ १७॥**

अत्र चामी म्लेच्छाधिष्ठितं देशमपरित्यजतां बहिरावरणमात्रसंरक्षितवर्णाश्रमधर्माणामनन्यगतिकानां द्विजानामग्रहाराः। एतेषु च,

**संस्काराः परमुत्सवैकवपुषः संध्या विनोदावधिः सावित्री जनवादजर्झरतनुः शौचं नटप्रायिकम्।**
**इत्थं मोहमहीपतेरभिमते विश्वं विपर्यस्यतः कालस्यैष कलेरलेपकमतव्यक्तक्रमः प्रक्रमः॥ १८॥**

अहो नु खल्वयमपि महानत्र धर्मक्रमः।

**तरुणाकृतयः कचेषु कृष्णास्त इमे दम्पतयः सहैव साध्यम्।**
**इतरेतरदैवतं भजन्ते मदनोपज्ञमजस्रमग्निहोत्रम्॥ १९॥**

अपि च, **प्रतिवीथिकमाश्रयन्त एते कुहनासूक्तिमयीं कुसीदवृत्तिम्।**
**अपरीक्षितशिष्यमद्य सर्वे शुकवद्ब्रह्म पठन्ति शुद्धवेषाः॥ २०॥**

(अन्यतोऽवलोक्य) एते चित्रार्पितमुक्तपुरुषसंनिभाः पुराणमठभित्तिकोणमाश्रित्य जोषमासते। (सूक्ष्मं निर्वर्ण्य) अहहामी दीर्घतरदर्भपूलपूरिताङ्गुलीविवरेण दक्षिणकरेण नासिकां कवलयन्तः प्राणसंशयेनापि प्राणसंयमनमभिनयन्ति। (सहस्तास्फालनम्)

**अपटुफणितिभावाद्विभ्रतो मौनमुद्रामनितरशरणत्वादादृतान्योन्यसंधाः।**
**अगतिविहितभिक्षावृत्तयः केचिदेते चिरविधृततुरङ्गब्रह्मचर्या महान्तः॥ २१॥**

[सोपक्रोशं हस्तौ विधून्वन्]

**अनल्पमदपित्तलैरनुपरुद्धमानग्रहैरजल्परणकर्कशैरपरिदृष्टतर्कक्रमैः।**
**अतथ्यनियमस्थितैरनतिवृत्तडम्भोद्यमैरशिक्षितचमत्कृतैरलमसद्भिरेतादृशैः॥ २२॥**

(अन्यतो दृष्टिं प्रसारयन्) अमी पुनरमुष्टिमेययज्ञोपवीतसंछन्नवक्षसः करावलम्बिताक्षमालाः करचरणनयननासादिषु मन्त्रवर्णान्निरन्तरं न्यस्यन्तस्तीर्थयात्रोत्सुकपथिकसार्थयातायातपद्धतिपरिसरप्रतिष्ठापितं चेलाजिनकुशोत्तरमासनमधितिष्ठन्ति। हन्तैषां महायोगिनामत्यद्भुतं नैरपेक्ष्यम्, येन स्वयमप्यन्तर्हसन्ति। यतश्च,

डम्भस्येव ध्वजममितया मण्डितं दर्भमुष्ट्या द्राघीयांसं कमपि पुरतः संप्रतिष्ठाप्य दण्डम् ।
पादोपान्तप्रणिहितधनान्प्राणिनो भक्तिनम्रान्नावेक्षन्ते कितवमुनयो नामतस्तीर्थपादाः ॥ २३ ॥

अहहामी निरन्तरमान्तरं ध्यानमभिनयन्तः पुरः प्रतिष्ठापितां देवतामपि नोद्वीक्षन्ते । अभ्यर्णमागतानप्याचार्यमाता-पितृप्रमुखानर्धनिमीलितेन लोचनेनावलोकयन्तोऽप्यनवलोकनं नाटयन्ति ? का कथा प्रणामादीनाम् । एतेषु च,

शमदमवृत्तसमाधिषु निःस्पृहभावे च नैष्ठिका डम्भाः । अयुतायुतांशकक्ष्यामडम्भडम्भस्य नार्हन्ति ॥

अयं पुनररिहानुपतितमार्जारधूर्तवकवृत्तीनां त्रयीविद्यातपस्विनामग्रगण्यो महातपाः,

शिक्षाविशेषनिभृताकृतिरूर्ध्ववाहुः प्रक्रीडयन्निव निजां तपसि प्रतिष्ठाम् ।
दर्भावृते क्षितितले निहितैकपादश्चित्रं सजीवमिव तिष्ठति डाम्भिकेन्द्रः ॥ २५ ॥

इतश्चायमेतादृशो यायजूकः,

अलिकचिबुकनासाजानुवाहूदरांसैर्विवृतनतिविशेषो मृत्तिकालेपचिह्नैः ।
कनकगिरिमिवेच्छन्कश्चिदग्नीन्समिन्धे मुकुलितनयनार्धो मूर्तिमानेष डम्भः ॥ २६ ॥

( परिवृत्यावलोक्य ) अहो नु खलु काषायदण्डमात्रशरणानां कलियुगसंन्यासिनां नैरपेक्ष्यम् ।

भिक्षेति शिष्यजनरक्षणदक्षिणेति शाटीति शाश्वतमठोपधिकल्पनेति ।
ग्रन्थोपसंग्रहणमूल्यमिति ब्रुवाणाः संन्यासिनोऽपि दधते सततं धनायाम् ॥ २७ ॥

(सहर्षम्) नूनमीदृशपुरुषावष्टब्धे जीवलोके सिद्धप्रायं समीहितं महामोहस्य । अथाप्येतदिह सितासितनदीसंभेदे विवेकस्थानमिव किंचिदाभाति । यदुत,

आचारोदधिसैकतप्रतिनिधिर्मृत्पिण्डकूटः क्वचित्पापच्छेदनशस्त्रजालपरुषः कुत्रापि दर्भोत्करः ।
पूजाशेषितपुष्पपल्लवफलस्तोमः स्फुरत्यन्यतो मन्ये कस्यचिदेतदाश्रमपदं मान्यं महायोगिनः ॥

अत्र च, विरुद्धमतिकर्दमं विषयवृत्तिविन्ध्याटवीं त्रिवर्गमृगतृष्णिकां त्रिगुणवागुरायन्त्रणाम् ।
निवर्त्य नियमक्रमैः स्फुरति मुक्तवल्कोऽप्यसावपत्यमथ वाऽग्रजः सवितुरेष तातोऽपि वा ॥२९॥

उपसर्पामि तावदेनम् । ( इत्याश्रममासीदति। निमित्तं सूचयन् सहर्षम्) नूनमिह मे प्रियासमागममत्यासन्नमभि-व्यनक्ति दर्शितस्पन्दलास्यं दक्षिणं चक्षुः ।

[ततः प्रविशति प्रव्रजितवेषधारिणी असूया ।

**असूया**— अहं हि विवेकपरिपन्थिचूडामणेर्महाराजस्य महामोहस्य देव्या दुर्मत्या विश्वजनहृदयविस्रम्भकवेषपरिग्रहेण विदुषां चित्तमुपप्लावयितुमादिष्टा परिक्रान्तचतुर्दशभुवना प्रयागतीर्थमवगाह्य प्रतिगताऽस्मि भगवतो धर्मध्वजाख्यस्य कुलपतेराश्रमम् । निपुणमिहापि गुणवद्विषये दोषानुद्घाटयितुं चारतन्त्रं तन्त्रयितव्यम् । (स्वसामर्थ्यं बहुमत्य)

मयि दत्तावधानायां विश्वदोषापहारिणा । न शक्यमीश्वरेणापि निरवद्येन वर्तितुम् ॥ ३० ॥

निरङ्कुशाः खलु मत्परिगृहीताः पुरुषा नित्यमविद्यमानमपि दोषं विद्यमानवदापादयन्ति । किमुत विद्यमानम् । तथा हि,

**निरवधिगुणग्रामे रामे निरागसि वागसिस्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।**

**वरतनुहृतिं वालिद्रोहं मनागपसर्पणं परिमितगुणे स्पष्टावद्ये मुधा किमुदासते ॥ ३१ ॥**

(परिक्रम्य) क एते प्रत्यासन्नसुरसरिदनूपनीपवनमहीतलनिहितयोगासनाः स्थिरतरपर्यङ्कबन्धबन्धुरनिभृतोन्नततरर्जुकायाः मुण्डजटिलशिखाजटा मुनयः । (निर्वर्ण्य) हन्त विदितमेतत् ! (सान्तर्हासम्)

**स्तनभरनतमन्तर्ब्रह्म संचिन्तयन्तः पुलकितनिभृताङ्गाः पुष्पबाणागमस्थाः ।**

**विजितकरणवर्गा विश्रुतात्मान एते मुषितनिखिलधर्मा मुक्तभावं भजन्ते ॥ ३२ ॥**

नामतश्चैतान्निर्दिशामि ।

**श्रद्धायाजी षड्रसब्रह्मवादी कामैकान्ती काकिणीनिष्कदासः ।**

**मार्जाराणां कुक्कुटानां बकानां छात्रा एते सिद्धचार्वाकतन्त्राः ॥ ३३ ॥**

स्वस्ति चैतादृशां स्वोपकारमात्रसंरम्भाय । दृश्यते हि,

**नवदलपुटे कल्प्या यस्य प्रभोरपि तल्पधीर्नटपरिबृढो यस्याधस्ताच्छ्रमं शमयिष्यति ।**

**वटविटपिनस्तस्याङ्कूरानतुत्कटपल्लवानस्थपुटचटसापेक्षी भिक्षुः प्रतिक्षणमीक्षते ॥ ३४ ॥**

(आकाशे कर्णं दत्त्वा) किं ब्रूथ भिक्षवः ? प्रव्रज्यापरिग्रहः परिवदनं चेति विप्रतिषिद्धमिति ? ही ही ! निगृहीता एव यूयं स्ववचनविरोधेन । प्रव्रजिताः खलु भवन्तोऽपि स्वगृहेभ्यः, परिवदन्ति च मामिति । (अन्यतोऽवलोक्य) अयमपरः कश्चिदिह रौक्मकुण्डलदण्डकमण्डलुमण्डितः कटितटनिबिडनिगुम्भितदर्भरज्जुः अष्टगयाश्राद्धभोजननिरन्तराध्मातकुक्षिरनवरतविरचितहुंकारभर्त्सितपुरोवर्तिजन इतस्ततो दत्तदृष्टिस्तृणीकृतजगत्त्रयस्त्रैविष्टपैरपि दुष्प्रवेशं धर्मध्वजस्य कुलपतेराश्रममुपजिगमिषति । इमं तावदाश्रमद्वारोपरोधेन तस्थुषी विशेषतो विविदिषामि ।

**दर्पः**— (उपसृत्य प्रश्रयमभिनयन्) अयि भगवति ! भारतकथाप्रसिद्धवैभवा प्रव्रजिताश्रमाधिदेवताकल्पा प्रत्यायितयोगसिद्धिः * सुलभेव संदृश्यसे । तदहमिह ग्रामकुलगोत्रादिभिर्विशेषतस्त्वां विजिज्ञासे ।

**असूया**— भद्र ! अन्तिमाश्रमप्रविष्टैरवक्तव्यं पृच्छसि । अप्रणम्य तु मां कथं यूपवत्तिष्ठसि ?

**दर्पः**— वयःकर्मविद्यादिभिरधिकोऽहम्, आश्रमाधिका तु भवती । इह तु नन्तृनन्तव्यभावे संदिहानस्तिष्ठामि ।

**असूया**— अथ तर्ह्यस्मिन्नाश्रमे योऽसौ कुलपतिरशेषधर्मविदास्ते, तमेव धर्मसंकटं पृच्छावः ।

**दर्पः**— यदभिमतं भवत्यास्तदभ्युपगच्छामि । तिष्ठत्वयं विमर्शः । किं तु किंचिदन्तर्वर्तते ।

**भवतीं संनिवेशेन भाववीक्षितचेष्टितैः । अनुभूतचरीं मन्ये वेषस्तु विषमस्तव ॥ ३५ ॥**

**असूया**— अहमपि दृष्टपूर्वमिव भवन्तं भावयामि । तिष्ठत्वयं विमर्शः । परमहंसपरिव्राजकैरपि महानुभावैर्वृत्तवृद्धेति क्रियासमभिहारेण वन्दितपादां महाभागां मामप्रणम्य दीपदण्डवत्तिष्ठतः पाण्डरपटस्य ते प्रायश्चित्तं ब्राह्मणेन विधा-

* सुलभाया उपाख्यानं महाभारते शान्तिपर्वणि ३२५ तमाध्याये सुलभम् ।

पयितुं तव च शुद्धिमापादयितुमिच्छामि ।

**दर्पः**— (स्वगतम्) परिगृहीतान्त्याश्रमा प्रगल्भमिव किमपि प्रजल्पति। (प्रकाशम्; सविचिकित्सम्) अस्तु तदसावाश्रमस्वामी प्रष्टव्यः । [इत्युभावुपसर्पतः । डम्भः उभौ दृष्ट्वा मौनव्रतमभिनीय पत्नीं चेष्टया चोदयति ।]

**कुहना**— (ससंभ्रममुपसृत्य) भद्द बम्हण! भअवइ सण्णासिणि! तुम्हेहिं अम्हघरवइसआसादो दूरे ठादव्वं। दीहमग्गागमणदूसिआणं तुम्हाणं अकिअमज्जणाणं अच्चासत्ती दूरपरिहरणिज्जा। मन्तसिद्धिपरिपन्थिणी अ तुम्हाणं छाआ महाजोइविग्गहे मा होज्ज। णं खु महप्पाणो वि मुणिअणा दूरे पणमन्ति। तेहिं वि उवणीअं भाईरही-सलिलं ण काहे वि घरसामी हत्थेण गेण्हइ। [भद्र ब्राह्मण! भगवति संन्यासिनि! युवाभ्यामस्मद्गृहपतिसकाशाद्दूरे स्थातव्यम्। दीर्घमार्गागमनदूषितयोर्युवयोरकृतमज्जनयोरत्यासत्तिर्दूरपरिहरणीया। मन्त्रसिद्धिपरिपन्थिनी च युवयोश्छाया महायोगिविग्रहे मा भूत्। एनं खलु महात्मानोऽपि मुनिजना दूरे प्रणमन्ति। तैरप्युपनीतं भागीरथीसलिलं न कदाऽपि गृहस्वामी हस्तेन गृह्णाति।]

**दर्पः**— अतिमहानयमपूर्वदम्पत्योर्युवयोर्धर्मनियमः। अपि च वयमाप्लुता गङ्गायमुनासंगमे पुण्यतमैश्च मन्त्रैः पुनः पुनः प्रोक्षिताः। आदित्यवत्तेजस्विनां स्वयंप्रकाशविग्रहाणामस्माकं किं त्वया च्छायोपलभ्यते? लभ्यते तु परं निरयपातः। अहह सर्वलोकसंभावितं सर्वाधिकं मामतिथिमिमां च परमहंसपरिव्राजिकामन्योन्यमनन्तृनन्तव्यभावसंशय-निर्मोचनाय समधिगतावनादृत्य नूनममौ ते पतिराश्रमापस्मारो मौनव्याजेन स्वमौढ्यमेव प्रच्छादयति।

(डम्भः सभ्रूक्षेपं हुङ्करोति।)

**कुहना**— (सरभसमुपसृत्य करतलेन मुखं पिधाय) महप्पहाव धम्मध्धअ! वाअणिअमं जोग्गेण कम्मणा मोक्कूण जोग्गाणं अइहीणं जोग्गं पडिवअणं दाअव्वं। [महाप्रभाव धर्मध्वज! वाङ्नियमं योग्येन कर्मणा मुक्त्वा योग्ययोरतिथ्योर्योग्यं प्रतिवचनं दातव्यम्।]

**डम्भः**— (प्राणसंयमनमभिनीय प्रणवमुद्घोष्य स्वगतम्) अकामोपनतमिदमसंभाप्यसंभाषणम्। (प्रकाशम्) रे रे व्रात्यब्राह्मण मूढजनमूर्धाभिषिक्त! स्वमौढ्यप्रच्छादकं मां (मूढं) प्रख्यापयसि। दिष्ट्या खलु मया तपःसंक्षयभीरुणा नैतावन्तं कालं शप्यसे। शप्ताः खलु मया कति कति भस्मसात्समपद्यन्त। अविदितपूर्व दुराचार! दूरं गच्छ गच्छ। मा ते भून्मम दृष्टितेजसा भस्मीभावः।

**दर्पः**— (सक्रोधम्) रे रे मूढ! द्विजातिरिति जातिबहुमानादेव मया पादेन शिरसि न ताड्यसे। अपि च,

**तुण्डीरं मण्डलं मे कुलपतिरपि च स्कन्दभूपालवन्द्यः क्षेत्रं सत्यव्रताख्यं क्षितितलतिलकं क्षुद्रकाश्चयग्रहारः।**
**प्रख्यातः शिष्यभूम्ना दिशि दिशि भवता कूपकूर्मोपमेन स्थाता वादाहवेषु स्थविर कथमहं न श्रुतो नापि दृष्टः॥**

(विहस्य) अहो महाडाम्भिक! अविदितमदीयाचार! किमिति दुराचार इत्युपक्रोशसि? अथवा कः खलु मया विना मत्प्रभावज्ञः? यस्य मे महायोगिनोऽपि अभिजनविद्यावृत्तेषु षोडशीमपि कलां नार्हन्ति, किमुत पृथग्जनाः। अत एव हि श्रोत्रियानपि त्रिवर्षपूर्वान् नमस्करोमि। किं न वेत्थ मामकं धर्मप्रवर्तनाभिसन्धिम्?

**रथ्याग्राद्विशङ्क्यमानजरठासंबन्धिसंभाषणात्त्यक्ता हन्त पतिव्रता गुणनिधिः सत्रासमम्बा मया।**

**विख्यातश्च विवाहतश्च विदिताद्‌आचारतश्च क्षितौ कूटस्थाभ्यधिकस्य मे किमधिकः को वा समः कथ्यते॥**

डम्भः— रे ब्रह्मबन्धो, दुर्विनीत, दुराग्रह! यद्येवं त्वमास्थितसमाचारः किं न परिव्राजिकां प्रणमसि? पितरमिव सर्वलोकाभ्यर्चितं विदितसकलवेदितव्यैर्महात्मभिरप्यविदितवैभवं त्रिवर्षपूर्वं श्रोत्रियं मां, धर्मपत्नीं च मम पतिव्रता-वृत्तिनियमेन प्रत्यक्षितपरावरतत्त्वैरपि पितामहादिभिः क्रियासमभिहारेण कृतनमस्कारां किं नाभिवादयसि?

दर्पः— हे धर्मध्वज! आत्मश्लाघापातकिन्! अद्य खलु पूज्यपूजाव्यतिक्रमेण कपूयां योनिं प्रतिपत्स्यसे; श्वयोनिं वा चण्डालयोनिं वा। अहमपि सर्वलोकसंचारी त्वदभ्यर्चकं क्वापि कमपि न पश्यामि। (सोच्चैर्हासम्) भो जडवञ्चक!

**प्रजानां पतयो दृष्टाः पशूनां बृहतामपि। न च त्वमधिकस्तेभ्यो न चास्मान्बहुमन्यसे॥ ३८॥**

नूनमधिकजनपरिवादेन सहसैव निरयं गमिष्यसि।

कुहना— भअवइ! एसो दुब्बम्हणो महेसिपरिवाएण विणासं पडिवज्जइ। [भगवति! एष दुर्ब्राह्मणो महर्षिपरि-वादेन विनाशं प्रतिपद्यते।]

असूया— अयि धार्मिकपत्नि! दुर्ब्राह्मणीव किमिति नामाभ्यागतमतिथिमधिक्षिपसि? किं तु अन्योन्यपरिवादिनावेतौ महानुभावौ क्षणमावाभ्यां क्षन्तव्यौ।

डम्भः— (सक्रोधम्) रे रे वाचाटवायस! सारमेय इव वृथा पर्यटनशीलोऽसि। तथा हि,

**जातिमात्रशरणा बहिष्कृताः केचिदादृतजघन्यवृत्तयः। रोषणा विपरिधाविनो मुधा हेपयन्ति जनमुज्झितह्रियः**

दर्पः— (सहस्तास्फालनं विहस्य) यथावस्थितवादिने मह्यं मर्कट इव किमिति कुप्यसि?

डम्भः— रे रे स्तम्भ इव वृथास्थूलस्त्वं विश्ववृत्तान्तं न जानासि?

**मयि चरति कदाचित्सत्यलोकोपकण्ठे सपदि सनकमुख्यैः साकमभ्युज्जिहानः।**
**सविनयनिभृताङ्गः सम्भ्रमः क्षालितेन स्वयमुदवहदर्घ्यं पाणिना पद्मयोनिः॥ ४०॥**

**कति कतीह पुरातनतापसाः कमलसंभववंशसमुद्भवाः।**
**अतितरन्ति महान्त्यपि पातकान्यहह मामकपादजलाप्लुताः॥ ४१॥**

कुहना— सच्चं एदं, दिट्ठं मए वि सहधम्मआरिणीए। [सत्यमेतत्, दृष्टं मयाऽपि सहधर्मचारिण्या।]

दर्पः— (स्वगतम्) नूनमयमार्यो डम्भः, इयमपि कुहना। न खल्वन्येषामीदृशं चारित्रमतिवदनं वा संभवति। तदेता-वेवासद्बन्धुभूतावभ्युपगमयामि। (प्रकाशम्) भगवति विश्ववेदिनि! युक्तिसिद्धमिह किमपि भगवत्यै निवेदयामि।

**परधनहरणप्रवीणभावा कुटिलमतिः कुहनैव सेयमार्या।**
**पशुवधपरिशेषनामयज्ञः स्ववशजनः स्वयमेव डम्भ एषः॥ ४२॥**

तत्कथमेतत्सकाशाद्धर्मसंकटं मोक्ष्यावः।

**असूया**— अहमप्येवं संभावयामि ।

**दम्भः**— (सान्तर्हासम्) युवामप्यहं युक्तितः स्थापयामि ।

**ध्रुवमत्र गुणोत्तरापवादी ध्वनिसारः स्वयमागतोऽसि दर्पः ।**
**परिकल्पितवीतरागवेषा तव भार्येव भवेदसावसूया ॥ ४३ ॥**

(नेपथ्ये) गृहपतिरतिथिश्च सत्यवादिनावेतौ गौडलाटधार्मिकौ ।

[सर्वे सप्रत्यभिज्ञं परस्परमवलोक्य संतोषमभिनयन्ति]

**दम्भः**— (सानन्दम्) सखे दर्प ! अभिव्यञ्जिता वयमशरीरिण्या भारत्या ।

**दर्पः**— अवितथवादिनी खल्वेषा । तदार्येणापराधो मामकः क्षन्तव्यः ।

**दम्भः**—मयाऽपि खल्वपराद्धम् ।

(दम्भदर्पावन्योन्यमञ्जलिं बध्नीतः; निबध्नीतश्च प्रियवचनम् । असूयाकुहने गाढं मिथः श्लिष्यतः ।)

**दम्भदर्पौ**— यथामनोरथमिह वयं यदृच्छया देव्या समागताः । अभिगन्तव्यस्त्वनन्तरं समये महाराजः ।

[ततः प्रविशति महामोहो दुर्मतिश्च ।]

**महामोहः**— (विचिन्त्य) प्रिये ! महासाहसिकस्य कुलघ्नस्य विवेकस्य विध्वंसने कृतप्रतिज्ञेन मया समाधिसाकाङ्क्षपुरुषसंक्षोभणाय प्रेषिताः सिंहवनगुप्तिन्यायेन परस्पराभिरक्षिताश्च कामक्रोधादयः कालोपपन्नकातर्यकलुषिताः सैकतसेतव इव भग्नव्यूहाः प्रतिनिवृत्य कथमप्यसन्मुखमवलोकयितुमक्षमाः प्रतिदिशं प्रस्थाय प्रायोपवेशमास्थिता इत्युपश्रुतमस्माभिः । तदिह भवत्या तत्रेयमी रतिजिवांसातृष्णास्तत्सकाशं गमयित्वा मामकास्ते मन्त्रिणः समाश्वासयितव्याः ।

**दुर्मतिः**— अय्यउत्त ! पुव्वं एव्व ताओ ताणं समीवं गमिआओ । [आर्यपुत्र ! पूर्वमेव तास्तेषां समीपं गमिताः ।]

**महामोहः**— साधु, प्रिये साधु ! यदसद्वल्लभोचितमनुष्ठितं भवत्या । प्रत्याश्वस्तास्ते समरसमये समाह्वातव्याः ।

**दुर्मतिः**— एव्वं एव्व । [एवमेव ।]

**महामोहः**— (विषादातिशयं नाटयन्) प्रिये ! अद्य यावदप्रतिहतकीर्तिरपत्रपेऽहमसदृशेन दुरात्मना विवेकेन सह विवादः संवृत्त इति । यथा त्वं नारीषु निःसमाभ्यधिका, तथाऽहं पुरुषेषु । यतः,

**सुरदनुजगणाः स्वमूर्ध्नि नित्यं निदधति शासनपत्रिकां मदीयाम् ।**
**प्रतिफलितलिपिप्रकारदीव्यन्मणिमकुटांशुमषीरसानुलिप्ताम् ॥ ४४ ॥**

अपि च, **वर्गः स्वर्गसदां मया नियमितः क्षोणीभृतः किं पुनः पद्माम्भोनिधिपर्वतेषु निहितास्तिस्रो मया मूर्तयः ।**
**विश्वं कर्तुमकर्तुमन्यथयितुं मद्भूरमोघक्रमा सोऽहं कस्य वशे क एष न च मे किं कस्य वा कथ्यते ॥**

(स्वगतम्) किं तावदद्य केनापि हेतुना प्रदीप्यमाने विवेके प्रतिविधातव्यम् ? अस्तु, नन्वहं महामोहः। (प्रकाशम्) प्रिये ! यद्यपि सर्वत्र मया प्रवर्तिताः समयभेदाः कैश्चिदौपनिषदापशदैरहस्करकिरणा इव घनैः किंचिदन्तर्धापिताः, यद्यपि च कामादयश्चिकीर्षितवैकल्यजनितवैलक्ष्यवशादनालक्ष्या गूढमासते, तथाऽपि भेदमभेदं च वस्तूनां

पूर्वपक्षसिद्धान्तौ च सर्वत्र विपर्यस्य विश्वं व्यामोहयामि। अथ वा पुनरहमहङ्कारादिसंमतमचरमप्रमाणप्रधानमलौकिकार्थकल्पनादुर्व्यसनहीनमर्थकाममात्रपुरुषार्थद्वयमवितथं सिद्धान्तं गम्भीरयुक्तिभिरुत्तम्भयन्वृथोत्साहमेव जडमतिं विवेकं विधित्सामि। अहह,

पृथिव्यापस्तेजः पवन इति तत्त्वानि मिलितैरमीभिश्चैतन्यं भवति मदशक्त्यादिनयतः।
किमात्मा दृष्टोऽन्यः किमुत वपुषि ध्वंसिनि सुखं तदेतद्वागीशः समतनुत लोकायतमतम्॥ ४६॥

उपनिषदपि खलु बलवदभिमतसमयबलीयस्त्वमभिसंधाय व्यवस्थापयति 'असुराणां ह्येषोपनिषत्' इति। तदिह त्रय्यन्तवादिभिरुपनिषत्प्रामाण्यसमर्थनमप्यस्माकमरातिकरलिखितविजयपत्रायते। अपि च,

स्वमतविपरीतमन्यैः क्रोशति हृदये विधीयते स्वैरम्। अमरगुरुशिक्षितार्थैरस्मत्सार्थैर्यथाहृदयम्॥

दुर्मतिः— अय्यउत्त! पच्चक्खमत्तप्पमाणो बुहप्फइसिद्धन्तो बहुप्पमाणसाहिअपरोक्खविसआणं बहूणं इदरसिद्धन्ताणं पुरओ कहं ठाइ? [आर्यपुत्र! प्रत्यक्षमात्रप्रमाणो बृहस्पतिसिद्धान्तो बहुप्रमाणसाधितपरोक्षविषयाणां बहूनामितरसिद्धान्तानां पुरतः कथं तिष्ठेत्?]

महामोहः— प्रिये! नूनं स्वमतप्राबल्यबुभुत्सया परिपृच्छसि। तदेतदाकर्ण्यताम्,

परमनुगुणयन्तः पण्डितंमन्यवर्गानवितथमिव जल्पन्त्यागमाः किंचिदेते।
विबुधगुरुमतेऽस्मिन्व्यक्तमुत्तभ्यमाने मुषितनिखिलसारा मौनमुद्रां भजन्ते॥ ४८॥

न खलु सहस्रमपि प्रतिसूर्याः कदाचिदपि सूर्यमभिभवन्ति।

दुर्मतिः— अय्यउत्त! पबळअमे इमस्सिं पुरन्दरपुरोहिअमए का मुत्ती को वा भोओ का वा देवआ? [आर्यपुत्र! प्रबलतमेऽस्मिन्पुरंदरपुरोहितमते का मुक्तिः, को वा भोगः, का वा देवता?]

महामोहः— श्रूयतां तावदवहिततया।

शरीरप्रलयो मुक्तिर्भोगस्तु रतिरुत्तमा। देवतास्तत्प्रदायिन्यः स्त्रियस्तारुण्यभूषणाः॥ ४९॥

एवं च देवि! परमार्थदर्शिन्यास्तव प्रत्यक्षत एवैते परिप्रश्नाः प्रत्युक्ताः। अपि चास्माकं विवेकरूपवैरिविजये एतासामेव प्रत्यक्षदेवतानां प्रसादः प्रधानकारणम्।

दुर्मतिः— होदु णाम पसादो इत्थिआणं सळ्ळावजोग्गाणं सचेअणाणं देवआणं। तेण कहं विवेओ विजेउं तिरिज्जइ? [भवतु नाम प्रसादः स्त्रीणां संलापयोग्यानां सचेतनानां देवतानाम्। तेन कथं विवेको विजेतुं तीर्यते?]

महामोहः— इत्थं नाम,

अपि तपसि रतानामप्यधीतागमानामपि यमनियमाद्यैरन्वहं शिक्षितानाम्।
शिथिलयति समाधिं शिल्पिहस्तानपेक्षं वरतनुमयचित्रं वासनाभित्तिलग्नम्॥ ५०॥

पठन्ति चौपनिषदाः परिहृतविषयानुरागतया परमपुरुषमुपसन्नस्यापि जक्षणादिकमक्षीणविहृतिशालिनीभिरुपभोगं चेति महदिदं सारस्यम्। न खलु वृश्चिकभयात्पलायमानैराशीविषमुखे निपतितव्यम्। अपि च,

**तमिस्राशीतांशुस्तबकवियदावर्तघटितैः प्रक्लृप्तानां रम्भामणिमुकुरतूणीरनलिनैः ।**

**स्मरन्तः के धैर्यं दधति युवतीनामभिमुखं स्मरस्कन्धावारप्रचलितपताकाप्रतिभुवाम् ॥ ५१ ॥**

अहह! अनादिशुद्धतया संमतानां वैकुण्ठवैमानिकानां वैनतेयादीनामाजानसिद्धाः कति कति विलासिन्यः श्रूयन्ते । श्रूयते किल सकलसंसारनिवर्तकः सर्वेश्वरो लक्ष्मीभूमिनीलानायकः । तदिह कामपुरुषार्थप्रतिक्षेपकैः कापेयवृत्तिभिः प्रतिभटनगरदिधक्षानिक्षिप्तेन पावकेन स्वनगरमपि दंदह्यते । यश्चासौ मोक्षप्रद इति मुमुक्षुभिरुद्घुष्यते, स च,

**सत्त्वप्रवर्तकः सन्सह प्रियाभिः पुराणपुरुषोऽपि । बहुमुखभुजंगसङ्गी विहरति विविधासु राजधानीषु ॥**

ततश्चार्वाकपक्षप्रतिक्षेपो दिव्यदम्पतिसमर्थनं चेति शतप्रदानप्रतिक्षेपिणो महाप्राज्ञस्य पञ्चविंशतिप्रदानवचनवदपहास्यम् ।

किं च, **मूढग्राह्यान्मोक्षधर्मप्रबन्धान्निर्मातॄणां निष्प्रमादप्रयुक्तः ।**
**भोगप्राप्त्यै कल्पते भूरिभूम्नां ब्रह्मादीनां ब्रह्मचर्यप्रयासः ॥ ५३ ॥**

(कर्णं दत्त्वा) किं ब्रवीति कश्चित्?

**दाम्पत्यं सहजं समस्तजगतां पित्रोस्तदिच्छावशात्कामिन्यादिविभागक्लृप्तिरपि तत्कैंकर्यसिद्ध्यै नृणाम् ।**
**इत्थं शेषमशेषमद्य तु भवत्सारस्यसंवर्धकं वैरस्यं विदधाति हन्त विदुषां वैरोचनं दर्शनम् ॥ ५४ ॥**

(सक्रोधम्) कः कोऽत्र भोः! उत्सार्यतामसौ दृष्टिगोचराद्दैष्टिकदिवाभीतः । (इत्यवज्ञां नाटयति ।)

**दुर्मतिः**— अय्यउत्त! मम किळ णिहिलाओ कामिणीओ दासीओ । ताहिं एव्व तुह विवेअविअओ त्ति सम्पण्ण-बहुमाणम्हि । (विचिन्त्य) पच्चक्खसिद्धपरमाणन्दजुवइसम्भोअप्पहाणं तुह सिद्धन्तं मुअन्तो किं त्ति ठिरप्फहाणेसु तेसु तेसु मएसु पउराअरा जणा होन्ति? [आर्यपुत्र! मम किल निखिलाः कामिन्यो दास्यः । ताभिरेव तव विवेकविजय इति संपन्नबहुमानाऽस्मि । प्रत्यक्षसिद्धपरमानन्दयुवतिसंभोगप्रधानं तव सिद्धान्तं मुञ्चन्तः किमिति स्थिरप्रधानेषु तेषु तेषु मतेषु प्रचुरादरा जना भवन्ति?]

**महामोहः**— प्रिये! अविचारितप्रवृत्तोऽयमास्तिकवेतालानामन्धपरम्परान्यायः ।

**अमरगुरुप्रणीतमनपायमपोह्य मतं विविधकुतर्कजालकलहायितकौतुकिनः ।**
**कपिलहिरण्यगर्भकणभोजनबुद्धजिनप्रभृतिसमर्थितेषु समयेषु भजन्ति रतिम् ॥ ५५ ॥**

अपि च, **चरमितरदप्यशेषं चन्द्रकनयतः स्वभावचित्रमिदम् ।**
**किं वा निरूपणीयं कण्टकतैक्ष्ण्यादिकारणं कविभिः ॥ ५६ ॥**

इत्थं नाम दुस्त्यजः स्वभाववादः । कार्यकारणभावश्च काकतालीयन्यायमनुसरति । एवमपि,

**अतत्त्वदिति वा न तत्त्वदिति वा वृथोद्यत्कथाकनत्कथककत्थनक्रमविकल्पितप्रक्रमा ।**
**जगद्विपरिवर्तिनी जनपदेषु जोघुष्यते कुतर्कशतशर्करानिकरकर्कशा पद्धतिः ॥ ५७ ॥**

इत्थमुपप्लुतेऽपि जगति,

चिरसेवनतोषितेन धात्रा निपुणस्थानविदा निवेदितार्थः ।
असुरोपनिषद्रहस्यमग्र्यं प्रथयामास विरोचनः प्रजानाम् ॥ ५८ ॥

अत्र च, करणविलयरूपा मुक्तिरित्युक्तमार्यैर्वितथमिति मयाऽन्यद्वार्तिके विन्यवेशि ।
स्तनयुगलबृहत्त्वस्थापनीयस्वभूम्ना बहुगुणविभवेन ब्रह्मणा भोगसाम्यम् ॥ ५९ ॥

**दुर्मतिः**— अय्यउत्त ! एव्वं तुम्हेहिं रक्खिज्जन्तं जीअलोअं पीडेन्ति णिक्कारणविद्देसा परसिद्धन्तपरिवाडीपक्खपडिआ ।
[आर्यपुत्र ! एवं युष्माभी रक्ष्यमाणं जीवलोकं पीडयन्ति निष्कारणविद्वेषाः परसिद्धान्तपरिपाटीपक्षपातिताः ।]

**महामोहः**— भवतु किं नश्छिन्नम् ? न खलु पाटच्चराः प्रकृतिं मुञ्चन्ति । न चाप्रमत्तमतयस्तैरुपहन्यन्ते ।
पठन्तस्त्रय्यन्तान्परिहसनकाकुं विदधतां भजन्तस्ताटस्थ्यं परिभवितुमिच्छन्तु महतः ।
उदन्तः शान्तानामयमिति च जल्पन्त्वभिमतं किमन्तर्दुर्दान्तैः कृपणकथकैरेभिरिह नः ॥ ६० ॥

(विचिन्त्य) प्रिये ! अद्य तावदस्मत्सिद्धान्तपुनःप्रतिष्ठापनपटीयांसः पुरुषा गवेषणीयाः । कः कोऽत्र भोः !

**डम्भादयः**— (त्वरितमुपसृत्य) अमी वयमागताः । (इत्युपसीदन्ति ।)

**महामोहः**— स्वागतं स्वकुलहितैषिभ्यो भवद्भ्यः ।

**डम्भदर्पौ**— (सप्रश्रयम्) महाराज ! त्वत्प्रसादात्सर्वत्राप्रतिहतगतयः समागताः स्मः । किं कर्तव्यमनेन किंकरजनेन?

**महामोहः**— कामादीनामिदानीं का वार्ता ?

**डम्भः**— (स्वगतम्) किं राज्ञे विज्ञापयामि ? (प्रकाशम्) देव दुर्मतिवल्लभ ! 'सत्यं राजसु शोभते' इति प्रियेतरदपि दृष्टं ब्रवीमि । वेद्मि कामस्य लोभस्य चाहमधुनातनीमवस्थाम् । तयोश्च,
अनन्तविषयस्पृहाजलधिसंप्लुते मानसे वसन्तसमये स्थिते मलयमारुते जीवति ।
सकृद्विहितसौप्तिकप्रतिनिवृत्तिवैलक्ष्यतः प्रसुप्त इव हन्त न स्पृशति पञ्चबाणः शरान् ॥ ६१ ॥

अन्यस्मिन्नपि कैमुत्यसिद्धमावेदयामि ।
पुरुषस्य विवेकविप्रलम्भात्स्वशरीरेऽपि विरज्यमानबुद्धेः ।
कृपणप्रतिनन्दनीयवृत्तिः किमिवालम्बनमाश्रयेत लोभः ॥ ६२ ॥

**दर्पः**— देव दुर्मतिपण्डित ! अहं पुनः क्रोधस्य सांप्रतिकीमवस्थितिमद्राक्षम् । 'याथातथ्येन पण्डितम्' इति नीतिमनुसरन् यथानुभूतमेवावेदयामि । यथासौ,
द्विसप्तदलपत्रलद्रुहिणसृष्टिभङ्गक्रियापुरस्कृतयुगक्षयभ्रुकुटिताण्डवाडम्बरः ।
विरक्तिविषवल्लरीव्यतिकरेण रोषः स्वयं सुषुप्त इव वर्तते सुभटकेलिसौवस्तिकः ॥ ६३ ॥

**महामोहः**— (सविषादं विहस्य) अहो विवेकस्य कुलघातिनो दुर्मन्त्रितमेतत् ! यथासौ सर्वत्र निरवकाशः स्यात्तथाऽस्माभिरवहितैर्विश्वमिदमधर्मेण व्यापनीयम् । स्वकुलसंरक्षणप्रवृत्तानामस्माकं स्वयमधर्म एव धर्मः । पठन्ति चैतिह्य-

सिकाः——'स एव धर्मः सोऽधर्मस्तं तं प्रति नरं भवेत्' इति । एवमुपप्लुतावस्थानो विवेकः स्वयं चानतिप्रबलः सुखेन साधनीय । अथ वा कोऽयं विवेकः । न खलु शाकुटस्य लवने शङ्कुलायाः कियानिव भारः । न चेषीकातूलमिन्धनयितुं वह्निना संरभ्यते । (विमृश्य) प्रिये कुलधर्मपालिनि! त्वदभिमतवृत्तेरुत्तमगुणस्य मे पश्य यावज्जीवं प्रारब्धकर्मापरित्यागम् ।

**कामस्ताम्यतु कोपलोभसहितः काले समभ्येतु वा रक्षःसंयति रावणस्थितिमहं व्यङ्क्ष्ण विवेकाहवे ।**

**कालस्त्वेष रथो भवत्विह कलिस्त्वं सारथिर्दुर्मते डम्भः संप्रति जैत्रदुन्दुभिरसौ दर्पस्तथा कङ्कटः ॥**

**डम्भः**—— महाराज! स्वायत्तसिद्धेस्तव किमायत्तमस्मासु?

**कस्तुभ्यं रणरङ्गखेलनकलामातिष्ठते तिष्ठते कश्च प्रेप्सति कामतन्त्रनियतस्वैराय वैरायितम् ।**

**येन क्षोदयितुं क्षमां प्रभवति क्षेप्तुं कुलक्ष्माभृतः पातुं सप्त सरस्वतोऽपि भवता साकूतमालोकितः ॥**

तथाऽपि वयं त्वदादिष्टास्त्वदधीनवृत्तयो यथासामर्थ्यं यतिष्यामहे । कपयोऽपि काकुत्स्थस्योपकुर्वन्ति । वल्लवाश्च वासुदेवस्य साह्ये संनह्यन्ति ।

**महामोहः**—— अभिमतमेव युष्माकमहमादिशामि——

**डम्भ त्वमद्य नियतो निजधर्मगुप्त्यै पुण्यापगापरिसरान्पुनराश्रयेथाः ।**

**गाढोपलक्षितविरक्तिमदेषु (गर्व)दर्पस्तन्वीत वाससमनघेषु तपो(ध)वनेषु ॥ ६६ ॥**

**डम्भदर्पौ**—— स्वीकृतोऽयं स्वामिसमादेशः । [इति सभार्यौ निष्क्रान्तौ ।

**महामोहः**—— (स्वगतम्) किं नामारातिविहतावाद्यं साधनम् । ननु प्रत्यवमृष्टम् ।

**प्रज्वलति जाठराग्नौ क्षिपन्यथावच्चतुर्विधं हव्यम् । प्राणाग्निहोत्रमेकं परिपालयिताऽसि दुर्मतिसहायः ॥**

ततश्च जात्याश्रयनिमित्तदुष्टैरिष्टैरेव द्रव्यैर्मृष्टाहारविहारे(र) दृष्टचेष्टे पुरुषे कथमिव विवेकस्य विजयाशंसा । (प्रकाशम्)

**अलं मेरुस्तोमैरलमपि च कैलासनियुतैरलं द्वीपैरष्टादशभिरखिलैर्वाऽपि भुवनैः ।**

**अखण्डैर्ब्रह्माण्डैरपि न खलु तृप्तिर्भवति मे विरुन्धानध्वंसं त्वभिनिविशते संप्रति मनः ॥**

**दुर्मतिः**—— अमच्चा एव्व पुणो अराइविद्धंसणे पेसणेण अणुग्गहणिज्जा । [अमात्या एव पुनररातिविध्वंसने प्रेषणेन अनुग्रहणीयाः ।

**महामोहः**—— प्रिये! कृत्याकृत्यवेदिनी खल्वसि । अहमपि तथा मन्त्रयामि । तदाहूयतामन्तःपुरे कश्चिदन्तरङ्गपरिजनः ।

**दुर्मतिः**—— हळा दुव्वासणे! इदो होहि । [सखि दुर्वासने! इतो भव ।]

**[ ततः प्रविशति दुर्वासना । ]**

**दुर्वासना**—— एसाहं उवट्ठिअम्हि । आणवेदु महाराओ राइणी अ । [एषाऽहमुपस्थिताऽस्मि । आज्ञापयतु महाराजो राज्ञी च ।

**महामोहः**— भद्रे! ब्रूहि मद्वचनादधिगतगणितविद्यान्करणाधिकारिणः। आदिशति भवतो महाराजाधिराजपरमेश्वरो दुर्मत्या सह महामोहः। कामक्रोधलोभमदमात्सर्यडम्भस्तम्भेभ्यः सप्तभ्यः सचिवेभ्यः सप्त मुक्तिक्षेत्रतया प्रसिद्धा राजधान्यः ससागराश्च सप्त महाद्वीपा दत्ता महामोहेनेति लिख्यताम्। अपि च,

**स्वकीयाख्यामात्रच्छुरणपरिणद्धद्वयभरान्बहिष्कृत्येदानीं विजहदधिकारान्क्रतुभुजः।**

**यदृच्छावाक्येऽपि व्यवहरतु लोकोऽयमखिलो नमःस्वस्तिस्वाहास्वधमिह महामोहविषयम्॥** इति।

**दुर्वासना**— जं आणवेइ भट्टा भट्टिणी अ। [यदाज्ञापयति भर्ता भर्त्री च।] [इति निष्क्रान्ता।

(नेपथ्ये) विजयतां देवः।

**भुक्तिक्षमं समयमेकरुचिं वितन्वन्पुंसां निजप्रतपनेन गतिप्रतीपः।**

**आशाविशेषमपरं प्रतिपत्स्यमानो मोहेश्वर त्वमिव भाति मयूखमाली॥ ७०॥** इह च,

**उपहरति सूपकर्ता महतो मोहस्य दुर्मतिप्रेष्यः। वलरिपुवरुणगृहाभ्यां स्वाद्यं धारान्तमुचितमाहारम्॥**

**महामोहः**— (कर्णं दत्त्वा) प्रिये! प्राणशब्दाभिलप्यानां सर्वशरीरव्यापिनीनां सर्वसिद्धान्तसंमतानां देवतानां समर्चनसमयमावेदयति वैतालिकः। तत्प्रविशावः शुद्धान्तम्। [इति निष्क्रान्ताः सर्वे।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके पञ्चमोऽङ्कः।

---

## षष्ठोऽङ्कः

---

[ततः प्रविशति कञ्चुकी]

**कञ्चुकी**— अहं हि देवस्य महामोहस्य दर्पसंभवः स्तम्भो नाम सदागमप्रतिरोधकः प्रतिहारी। मम च,

**वलिभिरविरलाभिर्वर्ष्म सोपानकल्पं द्रुतपदमधिरूढा दुर्निवारा जरेयम्।**

**तदपि नियतिभूम्ना तादृशी वेत्रयष्टिस्सहचरति मयाऽसौ शैशवे संगृहीता॥ १॥**

किं च, **निश्शङ्कसंचरणविघ्नविधायिनीभ्यां निष्पीडितोऽस्मि जरसा च नृपाज्ञया च।**

**मध्योपलक्षितमनोरथभङ्गदीना वाञ्छा न शाम्यति वयः सकलं प्रशान्तम्॥ २॥**

आस्तां तावदशेषसाधारणगतिर्जरा। "न हि जानपदं दुःखमेकश्शोचितुमर्हति" इति नीतिविदः। नृपाज्ञा तु निष्ठुरतरा।

**तरतु त्रिवित्सयाऽब्धिमधिरोहतु शैलतटीं धमतु च धातुवर्गमभिगच्छतु शस्त्रमुखम्।**

**तदिदमरुन्तुदं यदुत बद्धवधाय भिया धनमदमेदुरक्षितिभृदङ्कणचङ्क्रमणम्॥ ३॥**

आः! कष्टम्। **प्रत्यङ्गकंपपरिणर्तितकञ्चुकेऽस्मिन् पर्यासरूढपलिते परतन्त्रपिण्डे।**

**अक्षीणरागमजरामरजीविताशं मामेव हन्त हसतीव ममान्तरात्मा॥ ४॥**

(सनिःश्वासं विचिन्त्य) निरधिकारतैव नूनं सुखस्याधिकारः। अथ वा किमनेन महामोहपरवशस्य मे मुधा निर्वेदेन। स्वतन्त्रस्य तीक्ष्णदण्डस्य स्वामिनः प्रेषणे स्थातव्यम्। अतिनिपुणपरिजनोचितं च नित्यमाचरितव्यम्। अद्य खलु देवो महामोहश्चारचक्षुषा विपक्षवृत्तान्तं दिदृक्षमाणः विपक्षभूमिषु कल्मषप्रवर्तनाय सर्वधर्मनिर्मूलने कलौ प्रस्थापिते, प्रतिबलभेदनोपायकोविदं पाकशासनादिषु पशुपक्ष्यादिषु च अविशेषेण निरङ्कुशगतिं विघ्ननामानमपसर्पमपसर्प्य, सदसद्वा किं वदिष्यतीति संदेहडोलाधिरोहतरलिताशयस्तत्प्रत्यागतिमावेदितुमावेदयितुं च मामादिक्षत्। स चायं विघ्नः सत्वरपरिक्रान्तयमनियमादिस्थानपञ्चकः तत्रतत्र सन्निहितैः कुशलाचारैः सर्वतः प्रतिहतगतिः संप्रति संयमारम्भसंभृतसंरम्भं स्यन्दनेन सह देवं विवेकं देवयानेन दृष्ट्वा प्रत्यागतः स्वामिसंदर्शनसमयप्रतीक्षः समया शुद्धान्तमवतिष्ठते। यथादृष्टार्थवादी चासौ। तथा चेदानीं तदुक्तमध्यक्षेण संवदति। यदुत,

**मनोरथरथारूढो विवेकस्तर्कसारथिः। दिदृक्षुः संयमस्थानं इतस्समभिवर्तते ॥ ५ ॥**

तदहमपि यथादिष्टमाचरामि। [इति निष्क्रान्तः।

**शुद्धविष्कम्भः।**

**[ततः प्रविशति यथानिर्दिष्टो विवेकः]**

**विवेकः**— अये सूत! आहार्यहेतुमुखेनापि अन्ततस्सूनृतवादिना निष्प्रतिघवृत्तिना नियमभूयिष्ठेन परानुकूल्यजातदनिष्टप्रसङ्गकेन तद्विपर्ययपर्यवसायिना त्वयाऽसौ मे मनःपूर्वो रथस्सुपथा संचरते।

**तर्कः**— देव! अहमपि खलु त्वदायत्तप्रसरः। अपि च,

**स्वपक्षपरपक्षादीन् विविङ्क्ते यदि न त्वया। कृत्याकृत्यविवेकान्धः किं करिष्यति पूरुषः ॥ ६ ॥**

**विवेकः**—वयं खलु सूत! इदानीं वशीकृतसर्वेन्द्रियस्य पुरुषस्य धारणादिसिद्धिसाधनस्थानमन्वेषयन्तः सर्वलोकपरिक्रमणेन मध्यमलोकावलोकनाय मेरुशिखरमधिरूढाः। (समन्ततोऽवलोक्य)

**स्फुरदपरिपाटीचारुशैले विशाले गुरुणि धरणिचक्रे चक्रवालाद्रिनेमौ।**
**दधति जलधयोऽमी सप्त संपूर्णवृत्ताः प्रचितविविधपट्टस्पष्टसङ्ख्यामभिख्याम् ॥ ७ ॥**

इदं हि त्रिगुणमरुकान्तारगतागतखेदनिर्वेदविधुराणां कामकामानां किमपि विश्रमस्थानम्। अयं च,

**भुजगपतिनालविधृते भूपद्मे कर्णिकारूपः। विलसति केसरभूधरपरिवृततनुरत्र काञ्चनक्ष्माभृत् ॥ ८ ॥**

असाविह समन्ततो निपतदलिपटलविरुतमुखरपरिसरा प्रफुल्लवकुलमुकुलप्रणालिकामुखगलितमधुरमधुधाराधोरणीपूर्यमाणमूलालवाला प्रत्यासीदति विबुधसिन्धुसविधवनतरुवाटिका। इह च,

**निष्प्रत्यूहसमुन्नमन्मदसिराकण्डूलगण्डस्थलीहेलाधूननधूतभृङ्गपटलीमूर्च्छन्मृषाचामरः।**
**मन्दान्दोलितमन्दराचलतटीनिष्ठ्यूतधातुच्छटासिन्दूरद्युतिबन्धुरो विहरति स्तम्बेरमग्रामणीः ॥९॥**

अपि च, **क्षरत्यारादैरावणकरटिशुण्डाचुलकिता कथंचित्सन्तानद्रुमकिसलयापादितलया।**
**स्मरस्मेरोत्कण्ठाविहरदमरीलोलकबरीजरीजृम्भन्माला मधुलहरी वातलहरी ॥ १० ॥**

तर्कः— (स्वगतम्) रत्नसानुरामणीयकलग्नचित्तं महाराजं प्रक्रान्ते संत्वरयामि। (प्रकाशम्) देव! किमसौ केसराय-माणकेसरशैलपरिवृतकाञ्चनशिखरिकर्णिकास्थितेन भवता सर्वतः समीक्षितः क्षितिपद्मः ?

विवेकः— सत्पथप्रवर्तिना भवता प्रदर्शितः समीक्षित एव सामस्त्येन, प्रस्तुतानुगुण्याय तु प्रतीकशो विवेक्तव्यः।

अथवा, द्विसप्तभुवनात्मकद्रुहिणगह्वरप्रेक्षणे क्षितिस्तु परिशिष्यते तदिह सर्वधर्मास्पदे।

त्रिवर्गपुटभेदनत्रिदशयोग्यवर्षत्यजं प्रवर्तय रथोत्तमं सपदि भारतैकोन्मुखम् ॥ ११ ॥

तर्कः— यदाज्ञापयति देवः। [इति वेगतो रथं प्रवर्तयति।]

विवेकः— अये! तिष्ठ तिष्ठ। यावदनङ्गविजयिनो भवानीपतेरावासः कलधौतगिरिरवलोक्यते।

[ तर्कः रथवेगं स्थापयति ]

विवेकः— (परितो दत्तदृष्टिः परामृश्य)

विजितमनोभवेन विभुनाऽधिगतोऽपि सदा निरुपधिसंयमस्य न पदं कलधौतगिरिः।

गजमुखगण्डशैलघनदानकलिन्दसुतालहरिझलंझलाबहलकज्जलकम्बलितः ॥ १२ ॥

तर्कः— (अग्रतो रथं प्रवर्त्य) पश्य देव! गन्धर्वयूथसेवितं गन्धमादनम्।

विवेकः— (सकुतुकं दृष्ट्वा)

एतं गिरिवरं सूत मन्ये विश्वमनोहरम्। आगामिस्वर्गसृष्टीनामादिकन्दमिव स्थितम् ॥ १३ ॥

अयमपि सिद्धैरासेव्यमानो न साधकानामावासः। अपि च,

सहचरदिव्यभव्यशबरीकबरीविकसन्मदनमहेषुजालमधुसौरभसारभृतः।

इह मरुतो वहन्ति मददन्तुरदन्तिघटाकरटकटाहवाहिवनशीकरशीफरिताः ॥ १४ ॥

तर्कः— इतस्तर्हि दिव्ये तपोवने दीयतां दृष्टिर्देवेन।

विवेकः— ( दूरतः पश्यन् ) स्वकल्पितरघूद्वहप्रथनकेलिगाथाशतप्रयुक्तिपथशिक्षणप्रवणसिद्धबृन्दाश्रितः।

क इत्थमुपसर्पति स्थिरकठोरवीरव्रणः कपिः कदलिकावनं कनकशैलशृङ्गाकृतिः ॥

तर्कः— अवधारयतु देवः।

परिणतफलग्रासश्रद्धाजिघृक्षितभास्करः पवनगरुडस्पर्धादानप्रवीणजवोल्बणः।

दशमुखपुरीदाहोत्सिक्तस्ववालधिवैभवः रघुपतिरणारम्भक्रीडारथोऽयमुपस्थितः ॥ १६ ॥

विवेकः— (सादरचमत्कारमवलोकयन्) अयमिह श्रोतृजनकर्णामृतायमानं वर्णनातिशायिवैभवं किमपि गायति।

भगवति भरद्वाजे भुक्तिस्तथा शबरीगृहे प्रभुरनुसृतो विश्वामित्रः प्लवङ्गपतिस्तथा।

भृगुपतितपो लूनं दृष्टिः खगस्य च दक्षिणा जयति ललितोत्तुङ्गा वृत्तिर्दशास्यरिपोरिति ॥ १७ ॥

(विमृश्य) विजिताक्षतया विज्ञातस्याप्यमुष्यानवरतजोघुष्यमाणदुन्दुभिवीणावेणुमृदङ्गैरङ्गीकृतलास्यताण्डवैरनुपमगान्धार-ग्रामगीतरसिकैर्गन्धर्वदंपतिभिरावृतस्य सत्त्वोत्तरेऽपि तपोवने संयमसिद्धिं न श्रद्दधे। पश्यामि च सरसगीतास्वाद-

समाकृष्टावस्थितमपूर्वं सजीवं चित्रम्। इह च,

**परिणमति जनानां संविदानन्दरूपा निखिलमपि विहाय स्निह्यतीवात्तराग(न्तरङ्ग)म्।**

**स्वरपरिणतिचित्रां मूर्च्छनां भूषयद्भिः श्रुतिसुरभिततन्त्रीझंकृतैस्स्वैरगीतैः ॥ १८ ॥**

अशक्यश्च संनिधौ परित्यागस्संयमारम्भविरोधिनां विषयाणाम्।

**अहत्वा विक्रीणन्निह मदनहस्ते त्रिभुवनं वरस्त्रीमञ्जीरध्वनिरपि किमालोकितमुखैः।**

**यदृच्छासम्पन्नो यमिनमनवं मुक्तमपि वा विकर्तुं पर्याप्तो विजितकलहंसीकलरवः ॥ १९ ॥** अपि च,

**कठिननियमोऽपि पुरुषः सहसा नवनीतकुंभवद्भवति। वरयुवतिवह्निकुण्डे सन्निहिते सपदि लीयमानमतिः॥**

तर्कः— अस्त्वेवम्। तथाऽपि सर्वधातुरत्नचित्रितं सर्वौषधिसंभवस्थानं सर्वोर्वीधरसमधिकमहिमवन्तं हिमवन्तमवलोकयतु देवः।

**एष मैनाकजनको धरणीधेनुतर्णकः। त्रिदशाचलजामाता त्र्यम्बकश्वशुरो गिरिः ॥ २१ ॥**

विवेकः— (सर्वतो दृष्टिं प्रसार्य) इयं हि भगवती भागीरथी। अत्र च,

**वाहिन्यः कति सन्ति वन्यमहिषश्रेणीविषाणाहतिक्षुभ्यद्दुर्दमकर्दमाङ्कपयसस्तत्संमितिं क्षाम्यति।**

**वारिक्रीडितवल्गिताङ्गचलभिच्छुद्धान्तसीमन्तिनीवक्षोजक्षरदङ्गरागसुभगोत्सङ्गा न गङ्गापगा ॥२२॥**

**अयमिह विषयस्तपोधनानां न भवति संयमिनां निवासयोग्यः।**

**हरिचरणनदीनिपातघोषैः मुखरितकाननगह्वरो हिमाद्रिः ॥ २३ ॥**

(ससंभ्रमाद्भुतम्) अये! कथमिहाचिन्तितोपस्थितं घ्राणस्पर्शनोन्मादनम्। इह हि,

**उद्यानायातविद्याधरमिथुनरतिश्रान्त्यपक्रान्तिहेतुः तिम्यद्गात्रस्तुषारैः त्रिदशयुवतिनिश्वासविश्वासभूमिः।**

**नीहारत्विङ्कुलङ्कप्रतिवदनपदन्यस्तकस्तूरिकोद्यन्नेपालीगण्डपालीपरिमललुलितः स्पन्दते मन्दवातः ॥**

अतस्त्वरितमार्यावर्ताय प्रवर्त्यतां रथः। अत्र च,

**नवयौवनदुर्मदान्धनारीदुरितोपप्लवदूषिताऽपि जातिः।**

**अनपायपतिव्रताप्रवाहैः अधुनाऽपि प्रलयं न याति सत्सु ॥ २५ ॥**

तर्कः— प्रविष्टमिदं विविधतीर्थतपोवननिरन्तरं विन्ध्यहिमवतोरन्तरम्। अत्र च तीर्थयात्राचरितार्थस्सार्थवाहसार्थश्चिरतरोपोषितस्य चक्षुषः परां पारणां पूरयन् अनवधिकधर्मलाभसन्तोषेण गन्धसिन्धुरस्कन्धमधिरूढ इव ततस्ततः प्रसर्पति। (सर्वतोऽवलोक्य सविषादम्) हन्त! निरङ्कुशकलिविलसङ्कुचितनिगमवर्त्मनि चास्मिन् देशे प्राच्योदीच्यपाश्चात्यपाषण्डिगणकरम्बिते भग्नचरणत्रये च भगवति धर्मे प्रायशः परीक्ष्यमाणं न किंचित् स्थानमवशिष्यते। तथाऽपि मुरभिदवतारमुषितकलुषोऽयं संदृश्यतां साकेतजनपदः।

**अयोध्या दिव्येयं वहति सरयूरत्र विरजा विभोरेते यूपा विधिनियमनिर्मुक्तपशवः।**

**अकुण्ठस्वातन्त्र्यः स्वपदमधिरोहन्नवसरे सहानैषीद्देषः स्थिरचरमशेषं रघुपतिः ॥ २६ ॥**

विवेकः—(सर्वतो दृष्टिं प्रसार्य)

उपवनशुकवृन्दैरुद्गृणद्भिस्त्रिवेदीं प्रतिकलमनुमेयप्राच्यधर्मानुबन्धम् ।

चिरगतजनघोषं तीरमेतत्सरय्वाः रघुकुलनृपतीनां शोभते रत्नयूपैः ॥ २७ ॥

(सहर्षपुलकोद्गममनुस्मृत्य)

विषयिभिरसौ वक्त्रैर्घोरं मनो रजनीचरं प्रशमयति यो युञ्जानानां प्रबोधशरोत्करैः ।

जनकसुतया देव्या जुष्टो दिशत्यभयं सतां दशरथसुतो देवः श्रीमान् दयामृतवारिधिः ॥ २८ ॥

(सकौतुकमञ्जलिं बध्नन्)

नमस्तस्मै कस्मैचन भवतु निष्किंचनजनस्वयंरक्षादीक्षासमधिकसमिन्धानयशसे ।

सुराधीशस्वैरक्षणकुपितशापायुधवधूदृषत्त्वादुर्जातप्रशमनपदाम्भोजरजसे ॥ २९ ॥

(विचिन्त्य) अये सूत अयमप्यद्य पाषण्डिमण्डलप्रचारखण्डितकार्तयुगधर्मो निवृत्तिधर्मनिष्ठैरनिष्ठुरबुद्धिभिः परित्यक्तो देशः ।

तर्कः— देव! प्रतिपद्यतामियं तर्हि प्रादुर्भावभूमिरपरा ।

विवेकः— (मथुरां पश्यन्) अत्र खल्ववतीर्णमवनिभारमपजिहीर्षता सपर्यङ्केन वासुदेवेन । (सहर्षम्)

नाथायैव नमःपदं भवतु नश्चित्रैश्चरित्रक्रमैः भूयोभिर्भुवनान्यमूनि कुहनागोपाय गोपायते ।

कालिन्दीरसिकाय कालियफणिस्फारस्फटावाटिकारङ्गोत्सङ्गविशङ्कचङ्क्रमधुरापर्यायचर्यायते ॥ ३० ॥

(सर्वतोऽवलोक्य सहर्षम्) निरङ्कुशाः खल्वत्र भगवतः परिहसनवृत्तयः । स खलु,

हर्तुं कुंभे विनिहितकरस्स्वादु हैयङ्गवीनं दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।

पायादीषत्प्रचलितपदो नापगच्छन्न तिष्ठन् मिथ्यागोपस्सपदि नयने मीलयन्विश्वगोप्ता ॥ ३१ ॥

अपि च, वासो हृत्वा दिनकरसुतासंनिधौ वल्लवीनां लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।

सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने कामी कश्चित्करकमलयोरञ्जलिं याचमानः ॥ ३२ ॥

हन्त सूत! मुरभिदुपभुक्तमुग्धगोपिकावृत्तान्तमुद्घाटयति संप्रति मथुरा ।

इमामधर्मेण विभाव्य विप्लुतामुदन्वता द्वारवतीमिवाधुना ।

न भावये संयमसंपदास्पदं न कालतः कस्य गुणव्यतिक्रमः ॥ ३३ ॥

तर्कः— (रथं प्राङ्मुखयित्वा) देव! परमपुरुषप्रादुर्भावपवित्रीकृतक्षेत्रद्वयविप्लवे क्षेत्रान्तरेषु का प्रत्याशा? तथाऽपि स्वाभाविकसुदर्शनचिह्नभूषितशिलाकलापसूचितभगवदभिमानविशेषः प्रागुत्तरः प्रेक्ष्यतां देशः ।

पुनरुपजनिभीतैः पुण्डरीकादिभिस्तैः चिरपरिचितपूर्वं श्रीहरिक्षेत्रमेतत् ।

सकृदपि विमलेऽस्मिन्मज्जतश्चक्रतीर्थे भवजलनिधिगर्तात् क्षिप्रमुन्मज्जनं स्यात् ॥ ३४ ॥

विवेकः— (दूरतः पश्यन्) पुण्यतमोऽप्यसौ भूभागः नेदानीं मम चेतसे रोचते । यतः,

अयमुपहतस्सालग्रामोपलान्तरवस्थितद्रविणकणिकालुब्धैर्देशो मलिम्लुचलुब्धकैः ।

बहुगुणपरब्रह्मप्रेक्षासुधाब्धिमनोरथैः मुहुरुपनतप्रत्यासेधैर्मुमुक्षुभिरुज्झितः ॥ ३५ ॥

**तर्कः**— इदं तर्हि भागीरथीतरङ्गधौतपर्यन्तभागभावितनियमैः परमर्षिभिरुप(सेवितं)शोभितं भवत्कटाक्षपात्रं भवतु वारानसीनामकनदीद्वयपरिगतोपकण्ठं वसुमतीललामभूतं वाराणसीक्षेत्रम् ।

**विवेकः**— (सबहुमानमवलोक्य)

लब्ध्वा तु मूर्तिमधरीकृतपूर्वरूपां रत्या समेत्य च रथाङ्गभृतः प्रसादात् ।
धर्मोपरोधमिह नेच्छति पुष्पधन्वा त्रैयम्बकात्प्रच(कि)लितो नयनात्तृतीयात् ॥ ३६ ॥

अपि च, इह पुरुषमजानतां पुराणं नियतिवशेन निमीलतां दयालुः ।
उपदिशति पतिस्स्वयं पशूनामुपनिषदामपि दूरगं रहस्यम् ॥ ३७ ॥

अद्यत्वे पुनरतिचिरसमुपचितदुरितावलीमलीमसैरनाघ्रातभागवतधर्मैरवैदिकयवनतुरुष्काद्यभिन्नजातीयदेशाधिपतिसन्निधानलुप्तशौचाचारैः पुरुषैरविशेषितत्रिचतुरसाधुसमेतामेतां वाराणसीं समाधिसौधाधिरोहणसोपानभूतधारणाध्यानसिद्धिस्थानमिति न मन्यते चेतः । तथा हि,

सा काशीति न चाकशीति भुवि सायोध्येति नाध्यास्यते साऽवन्तीति न कल्मषादवति सा काञ्चीति नोदञ्चति ।
धत्ते सा मथुरेति नोत्तमधुरां नान्याऽपि मान्या पुरी या वैकुण्ठकथासुधारसभुजां रोचेत नो चेतसे ॥३८॥

(विचिन्त्य) अहो दुर्विलसितं महामोहस्य ।

विटविदूषकगायकवैशिकैः विषमितेव विभाति वसुंधरा ।
क्वनु निवेशमुपेत्य परं पदं विमृशता भवितव्यमिह क्षणम् ॥ ३९ ॥

**तर्कः**—देव, भवन्तमन्तरेण को नाम सदसत्परीक्षार्हः ? आस्तामयमाजानशुद्धोऽप्यन्तिमयुगसंक्षोभगलितसौभाग्यो मध्यमदेशः । दक्षिणापथस्तु निरीक्षणीयः । तत्र हि मरुद्वृधादिमहानदीसेवितेषु श्रीरङ्गादिषु तेषुतेषु स्थानेषु नारायणपरायणा महान्तस्सांप्रतमपि संभवन्तीति पौराणिकाः पठन्ति ।

**विवेकः**—सूत, प्रमाणानुगुणवृत्तिः खल्वसि । किंत्ववधारितधर्मविप्लवमनार्यजनभूयिष्ठम् अचिरादेव विन्ध्याचलपरिसरमतिलङ्घयेम । पश्य,

मिषतो विलोभयन्ती मृगतृष्णाभिस्तरङ्गिताभिरसौ ।
मरुभूमिरुज्झितरसा दुर्जनपरिषदिव दूरपरिहार्या ॥ ४० ॥

अयं चात्र हुतवहज्वालामध्यमध्यासीन इव दृश्यते पथिकः । आः कष्टम् !

अतिमथनगृहीतानन्धकूपस्य पान्थः कतिचन जलबिन्दून् कुण्डिकापीतशेषान् ।
करचरणकपोलेष्वर्पयन् गाढतापः कथमपि मरुभूमिं क्रामति क्लान्तदेहः ॥ ४१ ॥

अपि च, अत्र कतिचिदभिगतकुसीदवृत्तयः कृच्छ्रलब्धधनमुदितकृपणतरमानसाः कीकटाः पुरुषाः ।

न धर्ममनुवर्तन्ते न कामं नापुनर्भवम् । अर्थमेकमुपाश्रित्य दुःखमेवोपभुञ्जते ॥ ४२ ॥

एष चैषामाधिपत्यमारूढो नवधनमूढः ।

प्रलपति घूर्णते स्खलति मुह्यति हुङ्कुरुते न च पदवीमवैति न च धाम न च त्रपते ।
विकृतिशतप्रसूतिविषमाशयदोषभुवा धनमदिरामदेन धमतीव धरावलयम् ॥

अपि च, अभिजनवयोविद्यावृत्तैरकिल्बिषकर्बुरैरतिशयभृतस्तृप्यन् मत्वा तृणाय महीयसः ।
नवधनमदक्षीबः क्षुद्रो नटप्रकृतिः क्रमात् नरकिगणनालेख्यारूढिं न किं प्रतिपत्स्यते ॥ ४४ ॥

हन्त, निरर्थिका खल्वीदृशपुरुषसृष्टिरीश्वरस्य । अथवा महीयसामुपकाराय ।

विदधातु धाम तमसा कृतेन किं यदि वा न वेत्ति न विधिर्न वा वयम् ।
प्रथमोपकारि चरमं यतस्ततः प्रतियोगिनो भवति तस्य सार्थता ॥ ४५ ॥

तर्कः— (रथवेगमभिनीय,)

अतिक्रान्तो विन्ध्यः शबरगणभूयिष्ठगहनः पुरस्तात्किष्किन्धावनमथ च पश्चादपसृतम् ।
असह्यप्रारम्भा परिपतति सह्याद्रिशिखरात् असौ कावेर्याख्या सरिदमरसिन्धोरधिगुणा ॥

विवेकः— (परितोऽवलोक्य सविषादम्)

इमां मधुरपानीयां दक्षिणापथजाह्नवीम् । चोरैः परिवृतां मन्ये विद्यां कुमतिविप्लुताम् ॥ ४७ ॥

इह हि परित्यक्तपरिग्रहा अपि परिसरभाजः पाटच्चरगणजनितरणरणकचटुलचेतसः प्रवातकदलीन्यायेन वर्तन्ते । अपि च, अमी कलियुगधर्मसंचया इव कतिचन पुरुषा वसुमतीसुतनुहारायमाणानग्रहारानुपघ्नन्ति । तथा हि,

मुक्ताहारानिषेविता अपि न तद्वृत्त्यै दिशन्त्यन्तरं बन्धे गाढविमर्दनेऽपि न जहत्यन्योन्यसंपीडनम् ।
उष्णे शीतलतामुपेत्य शिशिरे प्राप्ते भजन्त्युष्णतां कामान्तःपुरचेटिकाकुचतटीकाठिन्यवन्तः खलाः ॥

तर्कः— अयं पुनरमुष्याः परिसरे पुरुहूतपुरोहिताभ्यधिकबुद्धिभिः पुराणपुरुषचरणारविन्दमधुकरायमाणमानसैः मनीषिभिरधिष्ठितो यदुकुलसार्वभौमस्य भगवतः परिग्रहात् प्रख्यातगुणसमाख्यः यादवाचलो नाम पर्वतोत्तमः । इह च,

कपर्दिमतकर्दमं कपिलकल्पनावागुरां दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ४९ ॥

अपि च, बादरायणादिभिरभ्यर्चिते दक्षिणबदरिकाश्रमे नारायणगिरौ,

लक्ष्मीकौस्तुभलक्षणेन वपुषा वाचं विनैव स्वयं श्वेतद्वीपनिवासिनामिव दिशन् सन्तोषमन्तर्मुखम् ।
विद्यावीचिसहस्रसंभ्रममिलद्दुग्धार्णवाडम्बरे स्थानं संयमिसार्वभौमविजयस्थाने विधत्ते विभुः ॥

अमुं च, कटाक्षलहरीमहःकवलितामृतस्तोमया विलोचनयुगश्रिया विवृतसर्वदानव्रतम् ।
शुकादिभिरुपासितं शुभचरित्रभाजो जनाः समस्तभयवारणं शरणयन्ति नारायणम् ॥ ५१ ॥

विवेकः— (सकौतुकमवलोक्य सविमर्शम्) सूत ! सह्यपर्वतप्रत्यासत्तेरसह्यपवनसंक्षोभसंत्रासितस्य दुर्बलबुद्धेः कथमलावकाशः ।

यद्वा तावदयं भवेदधिगुणो वासो यदुक्ष्माधरः कर्णालङ्कृतिविभ्रमं भजति यः कर्णाटदेशश्रियः ।
अन्यान्यप्यरविन्दलोचनपदानुध्यानमेधाविनां स्थानान्यालप कौतुकं मम पुनः सर्वत्र निर्वर्तते ॥

तदन्यतो रथं प्रवर्तय ।

**तर्कः**— (तथा कृत्वा) देव ! दृश्यतामसौ दंभोलिदारुणपरशुदारितदुष्टराजन्यरुधिरभरभरितबहुमहाह्रदतर्पितपितृगणस्य पात्रसात्कृतभूमण्डलस्य भगवतो भार्गवस्य दिव्यप्रायो निवासदेशः । अत्र हि,

नाहं नापि च मत्सुतो न च सुराः सर्वे न चामी सदा ध्यानारोपितचेतसो मुनिगणा जानन्ति विष्णोः पदम् ।
इत्थं नाभिसरोजशायिपृथुकव्याहारमाकर्णयन् शेते पन्नगसार्वभौमशयने श्रीपद्मनाभः श्रिया ॥ ५३ ॥

**विवेकः**— (दृष्ट्वा सहर्षमञ्जलिं बध्नन्)

क्रोधाग्निं जमदग्निपीडनभवं संतर्पयिष्यन् क्रमात् अक्षत्रामपि संततक्ष य इमां त्रिस्सप्तकृत्वः क्षितिम् ।
दत्त्वा कर्मणि दक्षिणां क्वचन तामास्कन्द्य सिन्धुं वसन् अब्रह्मण्यमपाकरोतु भगवानाब्रह्मकीटं मुनिः ॥

(विचिन्त्य) अयं खलु मलयाचलवासिना महर्षीणां निवृत्तिधर्ममुपदिश्य यथाधिकारं परिमितमतीनामिह प्रवृत्तिधर्मं प्रवर्तयन्नास्ते । अपि च,

बुभुक्षाभिक्षाकब्रुवपठितमिथ्यागुणगणा मुमुक्षूनक्षुद्रानिह मुहुरुपघ्नन्ति परुषैः ।
कदध्वोपानीतद्रविणकणदुर्मानमदिरागुणक्षैब्यक्षुभ्यन्मतिकलहकाकोलकलुषैः ॥ ५५ ॥

**तर्कः**—मलय एव तर्हि विलोक्यतां देवेन ।

विन्ध्यस्तम्भप्रकटमहिमा विश्वगाचान्तसिन्धुः कुंभीसूनुर्दनुजकबलग्रासदीप्तोदराग्निः ।
नाकाधीशं नहुषभुजगीकारदुर्वारशक्तिर्ब्रह्मापत्यं मुनिरिह वसन् राजते मुक्तकल्पः ॥ ५६ ॥

**विवेकः**— (उत्कमुपलालयन्) स कथमस्माभिः सुप्रेक्षः ?

निरवधिमहिमा निरुद्धविन्ध्यो निगममहार्णवनित्यकर्णधारः ।
सुचरितमिव नः स्वयं स काले कतकनिभांशुरुदेति चेत्समीक्ष्यः ॥ ५७ ॥

**तर्कः**—देव ! तस्येदमाश्रमपदम् ।

तापोन्मुक्तं दिवसमखिलं शर्वरी नातिशीता शाखारूढाः स्वयमिह शुकास्तत्त्वविद्यां पठन्ति ।
सिंहैस्सार्धं विहरति गणः सैन्धुरः शान्तवैरः तन्नः पुण्यैरिव परिणतं स्थानमेतत्समाधेः ॥ ५८ ॥

अमी च कुम्भसंभवानुगामिनामन्येषामपि महर्षीणामाश्रमाः ।

इह प्रशान्तेषु तपोवनेषु प्राधीत वेदान् प्रतिपन्नदीक्षान् ।
अन्वासते वह्निमतो यथार्हं छायाः सजीवा इव धर्मदाराः ॥ ५९ ॥

**विवेकः**—(सर्वतो निर्वर्ण्य) हन्त !

एलालिङ्गितचन्दना वनभुवो मुक्ताप्रसूतिर्नदी तांबूलीपरिणद्धपूगपटली कच्छोपकण्ठस्थली ।
काले दक्षिणमारुता विदधते कामाग्निसंधुक्षणं कुञ्जान्यत्र च भुञ्जते युवतिभिः स्वर्लोकभृङ्गारिणः ॥

अतो मनुष्यभोग्यमिदं भौमं त्रिविष्टपम्। अत्र चैवं मनोहरतरे मन्मथकथापराङ्मुखा महर्षयश्चरन्तीत्याश्चर्यमेतत्। वयं पुनरन्यदास्पदमन्वेषयेम।

तर्कः—देव! आलक्ष्यतामयमदूरादेव नलसेतुसंदर्शनोत्सुकमुनिजनगतागतविभवताण्डवितवैभवः पाण्ड्यदेशः। अत्र च,

सारस्सारस्वतानां शठरिपुफणितिश्शान्तिशुद्धान्तसीमा मायामायामिनीभिः स्वगुणविततिभिर्बन्धयन्तीं धयन्ती पारं पारंपरीतो भवजलधिभवन्मज्जनानां जनानां प्रत्यक्प्रत्यक्षयेन्नः प्रतिनियतरमासन्निधानं निधानम्॥ ६१

त्रिवेकः— (सहर्षभक्तिपुलकोद्गमम्)

निरञ्जनमयं जनः किमपि नेत्रमुन्निद्रयन् नमस्यति शठद्विषे नरकवैरिजीवातवे।

अगस्त्यगिरिनिम्नगासुभगवीचिकासोदरस्वलक्षणसरस्वतीसुरभिकेसरश्लाघिने॥ ६२॥

तर्कः— अन्यदपि किंचिदिहावलोकनीयं महाराजेन।

अग्रे पश्य वृषाचलं क्षितिभृतामग्र्यं यदग्रे हरेः मञ्जीरोदकमाबिभर्ति महतीं मन्दाकिनीसंपदम्।

नृत्यच्चन्दनगन्धवाहनियतव्यालोलचूडाटवीशाखाताडितचन्द्रमश्च्युतसुधाधाराभिसंवर्धितम्॥ ६३॥

त्रिवेकः— अहहाल सर्वतः प्रसर्पिणी खल्वियं वृषगिरिपतेरनुकम्पा। (साञ्जलिबन्धम्)

त्वया जुष्टस्तुष्टिं भजति परमेष्ठी निजपदे वहन्मूर्तीरष्टौ विहरति मृडानीपरिबृढः।

बिभर्ति स्वाराज्यं वृषशिखरिशृङ्गारकरुणे शुनासीरो देवासुरसमरनासीरसुभटः॥ ६४॥

(दक्षिणतोऽवलोक्य)

नलहस्तनिवेशितै(रुदग्रै)रदभ्रैर्हिमवन्मन्दरमेरुविन्ध्यशृङ्गैः। हरिचक्रपदक्रमैरसीदन्नुदधेरूर्मिगणं रुणद्धि सेतुः॥

(विमृश्य) नलसेतुनिबन्धनयन्त्रितधरणीधरशिखरनिकरास्फालनमुखरतरदक्षिणोदन्वदूर्मिघोषजर्झरितजानपद(जन)कर्णरन्ध्रे नास्मिन्नपि देशे समाधिसंभवं संभावयामि। तदितः प्रागुत्तरं तु रथः प्रवर्त्यताम्।

तर्कः—(तथा कृत्वा) देव! इयं पुनरविरलनालिकेरपङ्क्तिपरिवृतक्रमुकनवकुहलिकापरिमलानुरञ्जितपान्थजनहृदया चोलभूमिः

विवेकः— (परितोऽवलोक्य सोद्वेगम्)

इतस्त्वरितमन्यतः प्रहिणु सारथे! मद्रथं यदत्र कवयश्चरन्त्यपटुचित्तपाटच्चराः।

द्रुतप्रचरणक्वणद्द्रुहिणसुन्दरीनूपुर(स्वन)ध्वनिप्रचयसूचनासुभगसूक्तिविस्फूर्तयः॥ ६६॥

इह खलु संयमसिद्धिमिच्छतः पुरुषस्य सिद्धमपि विनङ्क्ष्यति। तथा च वृद्धिमिच्छतो मूलस्यापि नाशवदपहास्यता।

तर्कः— (अग्रतो निर्दिश्य) देव! कथमिह निखिलनिगमहृदयान्तरङ्गमभङ्गुरप्रसरया भगवदनुकम्पया तरङ्गितविविधवैभवं रङ्गमपि नावलोकयसि।

त्रिवेकः— (विलोक्य) सूत! अनवरतविकसितकह्लारपरिमलानुबन्धादुल्लोकमहिमशालिनीभिः चोलभूपवनलहरीभिः चुलकितसर्वेन्द्रियप्रवृत्तिना परमापातदृष्टिवि(भ्रा)भ्रान्तेन न खलु मया (द्रा)प्रागेव सम्यगवधारितम्। (सान्तस्तोषम्)

निरातङ्कं रङ्गाध्युषितललितोदारपुलिनां चिरक्लिष्टा दृष्टिश्चुलुकयति मे चोलतटिनीम् ।
यदृच्छानिद्राणत्रियुगशयनीयद्विरसनप्रतिच्छायान्तर्वत्पृथुमधुरवीचीपरिगताम् ॥ ६७ ॥
(साञ्जलिबन्धम्) घनकह्लारसौधभरितां परितापहरां नयनमहश्छटां मयि तरङ्गय रङ्गपते ।
दुरितहुताशनस्फुरितदुर्दमदुःखमषीमलिनितविश्वसौधदुरपह्नववर्णसुधाम् ॥ ६८ ॥
अपि च, दास्यं लास्यवताऽनुमत्य मनसा रङ्गेश्वर त्वत्पदे नित्यं किंकरवाण्यहं न तु पुनः कुर्यां कदर्याश्रयाम् ।
मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमानाक्षरे भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥
(विचिन्त्य) अये सूत ! अस्तु तावदिदमाद्यं स्थानम् । किमन्यदप्यावेदयिष्यसि ?
तर्कः— (उत्तरतो निर्दिश्य) देव ! इदं पुनः इहाखण्डभुवनशिखण्डकायमानं तुण्डीराभिधानं मण्डलम् । अत्र च,
किमपि विबुधमुख्यैः सेवितं क्षेत्रमेतद्भवभयशमनार्हं भाति सत्यव्रताख्यम् ।
निजसुतहयमेधे यत्र दिव्येन पुंसा क्षितिकलुषमशेषं क्षेप्तुमाविर्बभूवे ॥ ७० ॥
अयं खल्वेतद्देशवासिनामन्ववायसिद्धो निर्णयः ।
आत्मैक्यं देवतैक्यं त्रिकसमधिगतातुल्यतैक्यं त्रयाणामन्यत्रैश्वर्यमित्याद्यनिपुणफणितीराद्रियन्ते न सन्तः ।
त्रय्यन्तैरेककण्ठैस्तदनुगुणमनुव्यासमुख्योक्तिभिश्च श्रीमान्नारायणो नः पतिरखिलतनुर्मुक्तिदो मुक्तभोग्यः ॥
इति । इह च मुनिपरिषदनुगृहीतो मुक्तप्रायः कश्चिदाधित्सितवह्निमनुजानाति ।
इह बहुविधिसिद्धैः शोधकैरिन्द्रियेशं प्रणिपतनमुखैश्च प्राज्यभक्तिः प्रसाद्य ।
प्रभुतरपरिपूतः कर्मयोग्यः प्रजानाम् अनुपधिसुहृदग्नीनाद(धीथा)धानो यजेथाः ॥ ७२ ॥ इति ।
विवेकः— (सहर्षबहुमानमञ्जलिं बद्ध्वा)
द्विरदशिखरिसीम्ना सद्मवान् पद्मयोनेः तुरगसवनवेद्यां श्यामलो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥ ७३ ॥ (मुहूर्तमनुचिन्त्य)
संसारावर्तवेगप्रशमनशुभदृग्देशिकप्रेक्षितोऽहं संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य शान्ताभिसन्धिः ।
निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्रार्थ्य संरक्षकं त्वां न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥
(सूतमवलोक्य) दृष्टमेव खलु निखिलं द्रष्टव्यम् ?
तर्कः— इतश्च दीयतां दृष्टिर्देवेन । अयं खल्वधिगतपरावरतत्त्वयाथार्थ्यैः महात्मभिः अध्यक्षितमिव परमपदमनेकदेशदर्शनप्रयासपरिश्रान्तयोरावयोर्विश्रान्तिभूमिरिव भगवता स्वयमेव निर्मितो दूरादवलोक्यमानविकटतरहाटककूटविराजमानदशदिशावकाशः कलिबलप्रसारितसकलसङ्कटप्रशमनो वेङ्कटाद्रिरालक्ष्यते ।
पारे श्रृङ्गमिहादिपूरुषपदप्रस्यन्दिपाथस्विनीपाथःपातपरंपराद्भुतमहारण्ये शरण्ये सताम् ।
पाराशर्यविवेकपक्त्रिमधियस्सत्त्वाश्च तत्त्वं परं पश्यन्तः प्रचरन्ति हन्त सुखिनः सर्वेऽपि निर्वैरतः ॥ ७५ ॥

इह खलु कश्चिदनादिपापवासनाजलधिकुक्षिंभरीमादिपूरुषकृपां भगवतीमनवरतमभिष्टौति ।

मृदुहृदये दये मृदितकामहिते महिते धृतविबुधे बुधेषु विततात्मधुरे मधुरे ।
वृषगिरिसार्वभौमदयिते मयि ते महतीं भवुकनिधे निधेहि भवमूलहरां लहरीम् ॥ ७६ ॥ इति ।

अन्यदप्येतदनवरतमावर्तयति ।

निषादानां नेता कपिकुलपतिः काऽपि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति ।
अमीषां निम्नत्वं वृषगिरिपतेरुन्नतिमपि प्रभूतैः स्रोतोभिः प्रसभमनुकम्पे समयसि ॥ ७७ ॥

विवेकः— (सबहुमानमवलोक्य साष्टाङ्गं प्रणमति)

सूतः— (सर्वतो निर्दिश्य)

श्रीरङ्गं वृषभाचलः करिगिरिर्दृष्टानि देव त्वया दीप्यन्ति द्रमिडेष्वमी च कतिचिद्देशाः प्रजेशार्चिताः ।
प्रत्यग्रोदितघोरपश्चिमयुगप्रक्षोभविक्षोभकेष्वेतेषु क्वचिदस्तु संयमविधिस्वास्थ्यं त्रिवर्गत्यजः ॥ ७८ ॥

विवेकः— सूत ! सांप्रतमेव त्वया सांप्रतं प्रदर्श्यते । स्मर्यते च मुनिभिः—" निगृहीतेन्द्रियग्रामो यत्र यत्र वसेन्नरः । तत्र तत्र कुरुक्षेत्रं नैमिशं पुष्कराणि च ॥" इति । अपि च,

परिक्रान्ता पृथ्वी प्रणिधिपदमन्विष्य बहुधा कलिक्षोभग्रस्ते जगति न गतिः क्वापि सुलभा ।
अथाऽपि द्रष्टव्यं पुनरिह किमप्यादिमयुगक्रियायोग्यं किंचित् कथमपि मया स्थानमनघम् ॥ ७९ ॥

संभवन्ति च सर्वत्र श्रेयसामन्तरायाः । शमयितव्याश्च ते सर्वनिर्वोढारमेकमेव शरणमुपगच्छद्भिः । अपि च स्वयमेवाह भगवान्— " मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते " इति । अथ वा,

बहिर्भूतैरेतैर्विविधविनिपातस्थपुटितैः यदृच्छासंवादप्रचितगुणविख्यातिभिरलम् ।
प्रतिक्षिप्तावद्यं प्रवरगुणभूयिष्ठमधुना नियच्छाम्यन्तःस्थं किमपि यमिनः संयमपदम् ॥ ८० ॥

किं च, पुरुषस्य पुराणस्य पुंसश्च शरणार्थिनः । अपृथक्सिद्धयोरेकमदूष्यं स्थानमान्तरम् ॥ ८१ ॥

इदमपि सारथे ! मन्वीथाः ।

शुद्धाचारतपोवनैकनियतः प्रज्ञानशैलाश्रितः पद्माकान्तपदस्पृहासुरनदीनित्याभिषेकोज्ज्वलः ।
अध्यात्मश्रुतिचिन्तनेन तपसा निर्धूतदोषः पुमान् कस्मै कुत्र गमिष्यति स्थितमिदं कस्मै च निर्देक्ष्यति ॥

अपि च, गङ्गासेतुसरस्वतीरविसुतागोदावरीनर्मदातुङ्गाशोणमरुद्वृधाप्रभृतिभिः तीर्थैरलं प्रार्थितैः ।
नित्यासन्नमशेषपापशमनं निःश्रेयसप्रापकं ग्रीष्मे शीतमिव ह्रदं बहुगुणं ब्रह्म प्रविष्टो मुनिः ॥८३॥

तद्वयं शुभाश्रयनिर्धारणेन धारणादिकक्ष्यासु विशदतमां वृत्तिं पुरुषस्य विभावयामः । [इति ससूतो निष्क्रान्तः ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके षष्ठोऽङ्कः ।

## सप्तमोऽङ्कः

[ ततः प्रविशति संस्कारः ]

**संस्कारः**— अहं खलु अनुभवामुष्यायणः संस्कार(पर)नामा देवस्य विवेकस्य शिक्षितसकलविद्यः शिल्पी। देवशिल्पिनं विश्वकर्माणम् असुरशिल्पिनं मयं च विजित्य विश्रमाभिलाषी चिरमस्वाप्सम्। तावच्चेदमन्तरमासाद्य महामोहप्रयुक्ताभ्यां मधुकैटभाभ्यामिव महाबलाभ्यां मध्यमचरमगुणाभ्यां सत्त्वमित्रमसाविति जिघांसितः। नूनमप्रबुद्धतैव पुरुषेषु प्रतिपक्षजनस्य हस्तावलम्बः। ततश्चाहं प्रतिबोधितः सहसैव परमपुरुषदयाचोदितया देव्या सुमत्या सहजदृष्टिसदृशदृष्टिसंज्ञाभ्यां दासीभ्याम्। तदिह निरवकाशतया ततस्ततः पलायिते प्रतिपक्षे केनापि हेतुना विश्वचित्रं दिदृक्षमाणस्य महाराजविवेकस्य सेनापतिन व्यवसायेन स्वामिसंमतमादिष्टोऽस्मि। यथादिष्टं च तदाहितदृष्टिरन्वतिष्ठम्। अवसरानुकूलवृत्तीनां खल्वधिकारिणामाधिपत्यं प्रतितिष्ठति। ततश्च,

**विदुषश्चिन्त(ना)नां शक्त्या चित्रभित्तिं वितन्वता। शुद्धाशुद्धविभागार्हं विश्वं विलिखितं मया॥ १॥**

(सर्वतोऽवलोक्य) अहह! सहस्रेष्वपि शिल्पकर्मसु किंचिदेव कदाचिदतिशेते। इह च,

**श्लक्ष्णं स्थानं सान्द्रलग्नो विलेपः सूक्ष्मा रेखाः सुस्थितः सूत्रपातः।**
**स्निग्धो वर्णस्तत्तदर्हो विशेषः शङ्के पक्वं शिल्पविद्याफलं नः॥ २॥**

अपि च, आजानसिद्धशक्तीनामभ्युच्चयो हि शिक्षाप्रकर्षः। वदन्ति हि— "प्रतिनियतैव हि वस्तुशक्तिः" इति। यद्वा भवतु नामैतत्साधारणं सर्वशिल्पिनाम्। मम पुनरालेखनीयानां भगवदवताराणां प्रसादादद्य यावददृष्टचरमीदृशं हस्तकौशलमुपलभ्यते। किं प्रतिपत्स्यते देवः। निरङ्कुशाः खलु राजानः परिजनकृत्येषु; यथाक्रमं प्रसीदेयुरुपेक्षेरन्वा। अथ वा न खल्वयमसमीक्ष्यकारी नयपथनियतवृत्तिरस्मत्स्वामी। तदहं देवस्य विवेकस्य देव्याः सुमतेश्च सबहुमानप्रसादेन धन्यो भविष्यामि। अत्र च,

**विश्वप्रीणनविश्वकर्मरचनाचातुर्यकातर्यदैः शिल्पैः कल्पयतीव मण्डनमसौ चेतःस्थितेर्मण्डपः।**
**रत्नस्तम्भभुवोऽपि रुग्मय इमे सोपानगोपानसीमध्यं यत्र गवाक्षयन्ति विहितप्रत्यग्रचित्रक्रमाः॥ ३॥**

(नेपथ्ये) कः कोत्र भोः!

**संस्कारः**— (श्रुत्वा सहर्षम्) किमासीदति शिल्पशालां व्यवसायदत्तहस्तः सुमतिसहायो विवेकः। तदहं यथोचितपरिजनकृत्ये वर्तिष्ये। [इति निष्क्रान्तः।

शुद्धविष्कम्भः।

[ततः प्रविशति विवेकः सुमतिर्व्यवसायश्च।]

**व्यवसायः**— इत इतो देवः। इयं सा सर्वाश्चर्यसमुच्चयालोकनकुतूहलाहूतपुरुहूतपुरपुरन्ध्रीपरिष्कृतखल्लूरिकोपान्तभागा बहिरन्तश्च लम्बितामन्दमकरन्दपरिमलमन्दारदामचित्रिता चित्रशाला। यत्र च परस्परप्रतिफलनादलिखिताऽपि भित्तिः लिखितेवावभासते। [सर्वे प्रवेशं नाटयन्ति।

व्यवसायः— (चित्रशालां दर्शयन्) आलोकयतु देवो देवी च । इह हि,

**परिचयमहिमानं प्राप्य संजातभूमा दिविषदनुविधेयो दिव्यसंस्कारशिल्पी ।**

**व्यलिखदनघरूपं विश्वमेतद्यथावत् चिरगतमपि दृश्यं चिन्तनाचित्रभित्तौ ॥ ४ ॥**

अपि च, **प्रमाणप्रत्ययादत्र कल्पितान्यविकल्पतः । अपि भूतानि भावीनि भवन्तीव भवन्ति नः ॥ ५ ॥**

राजा— (विश्वतो दृष्टिं प्रसारयन्) देवि ! दृश्यतामिदमपूर्वमद्भुतम् । यस्य पुनः स्वेन विना नोपमानान्तरमुपलभामहे । अस्ति किंचित् । तथा हि,

**परिमितमपरिमितानामास्पदमेतत्प्रपञ्चचित्राणाम् । दहरगगनाभिधानं दिव्यं पुरुषं निदर्शयति ॥ ६ ॥**

(विमृश्य) अथ वा, जठरविवरविन्यस्तसमस्तवस्तुजातस्य कल्पान्तबालस्य कल्पयति कल्पनाम् । अपि च,

**नैतद्बाह्यैस्तूलिकावर्णकाद्यैः क्लृप्तं चित्रं किंतु सन्तोषलिप्तम् ।**

**नानाकारां भावनामेव शिल्पी शिल्पव्याजान्नूनमत्रोज्जगार ॥ ७ ॥**

सुमतिः— णाह ! अचिंतणिज्जमाहप्पस्स ईसरस्स विअ तुह सत्तीए इअरदुघ्घटं सव्वं संवटइत्ति किं अच्चरिअं । [नाथ ! अचिन्तनीयमाहात्म्यस्य ईश्वरस्येव तव शक्तेरितरदुर्घटं सर्वं संघटत इति किमाश्चर्यम् ।]

राजा— अत्र किल विश्वतश्चित्रे विश्वचित्रे,

**अशुद्धसृष्टिविषयं भागं भवभृदाश्रयम् । अधिकप्रतिकोटिस्थं दृष्टिस्तव दिदृक्षते ॥ ८ ॥**

अत्र च, **प्रवर्तयितुमिच्छतः प्रगुणवृत्तिमन्तर्दृशं गुणत्रयविचित्रिता यवनिकेयमाच्छादिका ।**

**तदत्र भवदुर्ज्वरज्वलनजन्मभूमौ त्वया दिदृक्षणमितः परं दृढविलक्षया त्यज्यताम् ॥ ९ ॥**

व्यवसायः— देवि ! सम्यगिदमादिष्टं देवेन । तथा हि,

**विविधविषयद्वीपारोहावरोहविसंस्थुलस्थितिभिरमुकैरन्योन्यस्मादुपस्थितसाध्वसैः ।**

**कमठमकरग्राहप्रायैरबुद्धिभिराश्रितः त्रिगुणजलधिर्न द्रष्टव्यस्समीहितसंयमैः ॥ १० ॥**

सुमतिः— अय्यउत्त ! ठिरणिबद्धाहिं वासणाहिं आकिट्टा वि मह दिट्ठी दाणिं तुह णिओएण पच्चाणिज्जइ । [आर्यपुत्र ! स्थिरनिबद्धाभिर्वासनाभिराकृष्टाऽपि मम दृष्टिरिदानीं तव नियोगेन प्रत्यानीयते । ]

व्यवसायः— इतस्तर्हि शुद्धसृष्टिमये भगवतो विभूतिभागे देवेन देव्या च दत्तदृष्टिभ्यां भवितव्यम् । अत्र च,

**परव्यूहव्यूहान्तरपदविभक्तेषु बहुषु त्रिधाम्नो रूपेषु स्थितिमनधिगम्यापि मनसः ।**

**अवैजात्यं बृन्दारकनरतिरश्चामभिनयत्यमुष्मिन् दृष्टिस्ते भवतु विभवव्यक्तिनिवहे ॥ ११ ॥**

राजा— देवि ! उचितमेवोत्प्रेक्षितं सेनापतिना । परिचितसजातीये ह्ययत्नलभ्यो भावबन्धः ।

व्यवसायः— देव ! अवताररहस्यवेदिनाम(प्य)पुनर्जननेन परप्राप्तिरपि गीयते स्वयमनघोपदेशेन परमपुरुषेण । अपि च,

**ईक्षणध्यानसंस्पर्शप्रमुखैः पोषयन्प्रजाः । मत्स्यकूर्मविहङ्गादिविग्रहः प्रेक्ष्यते प्रभुः ॥ १२ ॥**

अत्र च, अनासीद्दोषो जहदवधिषाड्गुण्यजलधिः विहारस्वाच्छन्द्यात् विभुरिह दधानो विभवताम् ।
तिरश्चामप्येतैः कमठकिटिपाठीनपतगप्रकारैराकारैः परिवृढतमत्वं द्रढयति ॥ १३ ॥

**राजा**— अपारकारुण्यसंभवो ह्ययमशेषजनसंरक्षणाभिलाषिणः परमपुरुषस्यावतरणगणः । तथा हि,

प्रणतदुरितप्राणाकृष्टिप्रयोगपटीयसः प्रथितविविधप्रादुर्भावात्प्रभोरनुभावतः ।
जगति वलवन्मोहद्रोहाद्यमित्रशतावृते जनिपथमहापान्थास्सर्वे जना जितकाशिनः ॥ १४ ॥ अपि च,
त्रातुं जगन्ति कृपया कल्पेकल्पे भवन्ति दिव्यानि । चरितानि चक्रपाणेः प्रवाहवृत्त्या परस्परप्राश्चि ॥ १५ ॥

**व्यवसायः**— (किञ्चिद्विस्मयावेशमभिनयन्)

मयस्त्वष्टाऽन्यो वा विपुलमहिमा विश्वसृडपि स्वशक्त्येदं चित्रं किमपि न विधातुं कृतमुखः ।
अखण्डब्रह्माण्डप्रथमतरशिल्पी स भगवान् स्वयं पद्मजानिर्व्यलिखदिह शिल्पं स्वविषयम् ॥ १६

अत्र च जलधिमधिकरणीकृत्य दर्शितास्त्रयोऽवताराः । तत्र तावदिममवलोकयतु देवो देवी च । इदं हि,

निर्मग्नश्रुतिजालमार्गणदशादत्तक्षणैर्वीक्षणैः अन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूहतरङ्गरिङ्गणमिथःप्रत्यूढपाथश्छटाडोलारोहसदोहलं भगवतो मात्स्यं वपुर्दृश्यते ॥ १७ ॥

**राजा**— देवि ! पश्य पश्य । त्वदक्षिसारूप्येणाभिव्यक्तं)प्यमभिव्यनक्ति भगवतो रूपम् ।

**सुमतिः**— (दृष्ट्वा स्वगतम्) माणुसस्स जोइणो माणुससरिच्छे चित्तसंगो संपाअणिज्जो । (प्रकाशम्) अय्यउत्त ! एदेन विअ तुए साअरणिमग्गा विअ मोहन्धआरणिमग्गा वेदा उद्धरिऊण रक्खिज्जन्ति । किं णाम परमपुरुसस्स एआरिसाइ रूवन्तराइ वि होन्ति । [मानुषस्य योगिनः मानुषसदृक्षे चित्तसङ्गस्संपादनीयः । आर्यपुत्र ! एतेनेव त्वया सागरनिमग्ना इव मोहान्धकारनिमग्ना वेदा उद्धृत्य रक्ष्यन्ते । किं नाम परमपुरुषस्यैतादृशानि रूपाण्तरान्यपि भवन्ति । ]

**व्यवसायः**— भवन्त्येव । तेष्वेतदेकमवलोक्यताम् ।

आखण्डलीयमजरामरमाधिराज्यं त्रैयम्बकं सुभगशेखरमुत्तमाङ्गम् ।
औदन्वतं प्रियतरं स्वगृहं यतोऽभूत् स्वाधार एष कमठो विधृताद्रिमन्थः ॥ १८ ॥

इयं चात्र तद्विषया शिल्पिनैव लिखिता श्लोकाक्षरावली ।

अव्यासुर्भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा निद्राणस्य परस्य कूर्मवपुषः निश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयःप्रेङ्खोलपर्यङ्किकानित्यारोहणनिर्वृतो विहरते देवस्सहैव श्रिया ॥ १९ ॥

**राजा**— स्वकारणभूतमेनमप्रत्यभिजज्ञिवांसं प्रजापतिं प्रति पूर्वमेवाहमिहासमिति वादी सोऽयं पुरुषः ।

**सुमतिः**— अय्यउत्त ! लच्छिसयंवरणजोग्गतारिससोउमल्लणिहिणो कहं एआरिसं कठिणत्तणं आसी । [आर्यपुत्र! लक्ष्मीस्वयंवरणयोग्यतादृशसौकुमार्यनिधेः कथमेतादृशं कठिनत्वमासीत् । ]

राजा— किं किं न कारयति कार्यगौरवम् ।

व्यवसायः— देव ! अत्यद्भुतेयं भगवतः कूर्मरूपस्य अमृतमथनारम्भभाविन्यवस्था । यथा,

**क्वचिद्ग्राहाधीशः क्वचिदमरदन्तावलपतिः क्वचित्प्रालेयांशुः क्वचिदमृतविच्छर्दितमिति ।**

**अतिक्षोभे सिन्धोरयमनघनिद्रो धृतगिरिः विषादं देवानां विघटयति वैकुण्ठकमठः ॥ २० ॥**

सुमतिः— अय्यउत्त ! तुमम्मि विअ इमम्मि वि अमिअलाहभारो पडिट्ठिओ । [आर्यपुत्र ! त्वयीवास्मिन्नप्यमृतलाभभारः प्रतिष्ठितः ।

राजा— प्रिये ! मम खल्वीदृशभारवहने त्वमप्यर्धभागिनी ।

व्यवसायः— इतश्च दीयतां दृष्टिर्देवेन ।

**आरादाकर एष कौस्तुभमणेर्वारी मरुद्दन्तिनः क्रीडाशेखरशिल्पकृत्पुरभिदो गञ्जागृहं पाशिनः ।**

**प्राचीनाङ्कुरपालिका सुरतरोरालक्ष्यतामद्भुतः स्वैराहारमहानसः सुमनसां शुद्धान्तशय्या हरेः ॥२१॥**

राजा— (सकौतुकमवलोक्य) देवि ! दृश्यतां स एष त्रिगुणपरिणतिरूपोऽपि परमपुरुषपरिग्रहात् परिशुद्धतरः पारावारः । अपि च सुरभिसुरद्रुमचिन्तामणिप्रभृतिपात्रसात्करणजनितहर्षप्रकर्षताण्डवोद्यत इवायमकूपारस्तरङ्गमण्डलेन ।

सुमतिः— एव्वं एव्व इमं पेक्खंताणं वि हिअअं । [एवमेवेमं प्रेक्षमाणानामपि हृदयम् ।]

व्यवसायः— निशाम्यन्तामिह ।

**इतरेतरसन्निकर्षवन्तः क्रमनिम्नोन्नतयो महोर्मिभेदाः। परितो वितताः पयःपयोधेः स्फटिकारोहणविभ्रमं वहन्ति**

अपि च, **इयमत्र विश्वजननी समुत्थिता कमला विकासिकमलोदरस्थिता ।**

**मुरमर्दनस्य भुजमध्यपीठिकामधिरुह्य रक्षति जगन्ति वीक्षणैः ॥ २३ ॥**

राजा— (विलोक्य सानन्दम्)

**कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा नित्यामोदा निगमवचसां मौलिमन्दारमाला ।**

**संपद्दिव्या मधुविजयिनः सन्निधत्तां सदा मे सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २४ ॥**

(अञ्जलिं बद्ध्वा) **सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते सिद्धिक्षेत्रं शमितविपदां संपदां पादपद्मम् ।**

**यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २५ ॥**

(सुमतिं विलोक्य) देवि ! इयं सा निखिललोकजननी जलधिराजदुहिता जनार्दनवल्लभा देवी । दुस्सहापराधभीतानामपि यत्पुरस्कारेणायमसौ भगवानधिगम्यतमो भवति । अत्र च,

**सैवाकृतिस्तव त एव गुणानुभावाः स्यादेव सागरसुता लिखिता त्वमेव ।**

**शिञ्जानमञ्जुमणिनूपुरमेखलस्ते सञ्चार एष चतुरो यदि नान्तरायः ॥ २६ ॥**

सुमतिः— अय्यउत्त ! एदेण विअड्ढवअणेण अप्पाणं एव्व सिरिवल्लहसरिच्छं पआसेसि । [आर्यपुत्र ! एतेन विदग्धवचनेन आत्मानमेव श्रीवल्लभसदृक्षं प्रकाशयसि । ]

व्यवसायः— देवि! पठन्ति खल्विमं भवद्भ्यां प्रतिपादितमर्थं पौराणिकाः— "देवतिर्यङ्मनुष्येषु पुंनामा भगवान् हरिः। स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥" इति।

राजा— सेनापते! उभयोर्विभूतिभूतमुभयविधं जगदित्युक्तं भवति।

व्यवसायः— एवमेतत्।

राजा— साधारण्ये सत्यपि स्वेच्छयैव द्वेधा विश्वं यद्विभूतिर्व्यभाजि।
चूडाभागे दीप्यमानौ श्रुतीनां दिव्यावेतौ दंपती मे दयेताम् ॥ २७॥

आस्तां तावदेतत्। अपरमप्यैश्वरं रूपमभिपश्येम।

व्यवसायः— प्रदर्शितमिदं लक्ष्मीधरं रूपम्। भूधरमपि प्रदर्शयामि।

प्रवर्धमानात्प्रलयाम्बुराशेराविर्भवन्नादिवराह एषः। दंष्ट्रानुषक्तां धरणीं दधानो जम्बालरेखामिव केलिलग्नाम् ॥

राजा— अहो महत्तरमद्भुततरं च महीधरमिदं रूपम्। (अञ्जलिं बद्ध्वा सहर्षभक्तिरोमाञ्चगद्गदम्)

क्वापि कल्पान्तवेशन्ते खुरदघ्ने समुद्धृताम्। वहते मेदिनीमुस्तां महते पोत्रिणे नमः ॥ २९ ॥

अपि च, नम इदमजहत्सपर्याय पर्यायनिर्यासितश्रमदमितपयोधिवेलाविलोलाय कोलाकृते।
पृथुविकटविटङ्कनिष्कम्पविष्कम्भविश्वंभराभरभरणधुरीणघोणापरीणाहकोणाय ते ॥ ३० ॥

अयं खलु, गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृतब्रह्माण्डः प्रलयोर्मिघोषगुरुभिः घोणारवैर्घुर्घुरैः।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिः ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥

(देवीमवलोक्य, सप्रणामम्)

पूर्वं वराहवपुषा पुरुषोत्तमेन प्रीतेन भोगिसदने समुदीक्षितायाः।
पादाहताः प्रलयवारिधयस्तवासन्नुद्वाहमङ्गलविधेरुचिता मृदङ्गाः ॥ ३२ ॥

अपि च, संभावयन्मधुरिपुः प्रणयानुरोधात् वक्षस्थलेन वरुणालयराजकन्याम्।
विश्वंभरे बहुमुखप्रतिपन्नभोगः शेषात्मना तु भवतीं शिरसा दधाति ॥ ३३ ॥

सुमतिः— जह एसो महावराहो पळअण्णवणिमग्गं भूमिं उद्धरइ, तह अय्यउत्तो वि संसारसाअरणिमग्गं पुरिसं उद्धरिज्ज। अण्णं वि भणामि। दिढअरदढग्गदारिअहिरण्णक्खवक्खअडकठिनकवाडसंपुटोट्टिअघणसोणिअणईपवाहघणघणाअंतघोणन्तरस्स जण्णवराहस्स विअ अय्यउत्तस्स जण्णणेउणं दट्ठुं उक्कण्ठिअम्हि। [यथैष महावराहः प्रलयार्णवनिमग्नां भूमिमुद्धरति, तथाऽऽर्यपुत्रोऽपि संसारसागरनिमग्नं पुरुषमुद्धरेत्। अन्यदपि भणामि। दृढतरदंष्ट्राग्रदारितहिरण्याक्षवक्षस्तटकठिनकवाटसंपुटोत्थितघनशोणितनदीप्रवाहघणघणायमानघोणान्तरस्य यज्ञवराहस्येवार्यपुत्रस्य जन्यनैपुणं द्रष्टुमुत्कण्ठिताऽस्मि।]

व्यवसायः— देवि! सेत्स्यति खलु मङ्गल्यनिधेः भवत्या मान्यं समीहितम्।

राजा— सेनापते ! अपरमपि एतादृशमभिपश्येमाद्भुतं रूपम् ।

व्यवसायः— अस्तु तर्ह्ययमसौ प्रह्लादपरिरक्षिता दिव्यनरसिंहो देवो दिदृक्षितव्यः । तेन चासौ जिघांसितो हिरण्याक्षानुजन्मा हिरण्यो नाम दानवेन्द्रः ।

कल्पान्तपावकनिभैस्तपसां प्रपञ्चैरुष्णालुरस्य समुपेत्य किल प्रसन्नः ।
दत्ते वरेऽभिलषिते प्रतिपन्नभीतिस्सौवस्तिकत्वमगमत्स्वयमेव वेधाः ॥ ३४ ॥

अपि च, दूरे हन्त गिरां दुरासदयशोदुर्वारगर्वानलज्वालालुण्ठितजम्भकण्टकवलारण्यो हिरण्योऽसुरः ।
यस्यास्थानिकपादपीठविलुठत्कोटीरकोटीरवैः स्वच्छन्दप्रसरं स्तुवन्ति चरितं सेवासु देवासुराः ॥

अनेन च परमपुरुषप्रशंसी कुमारः प्रह्लादस्सोपालम्भमधिक्षिप्तः क्वनु ते पुरुषोत्तम इति पृष्टस्सर्वत्रेति प्रत्यवादीत् ।

राजा— ततस्ततः ।

व्यवसायः— किमत्र हरिरित्यथ प्रकटितोपहासक्रमं हिरण्यकरघट्टितात्सपदि जृम्भितः स्तम्भतः ।
पुरस्स्फुरति संभ्रमस्फुटसटाच्छटाच्छोटनत्रुटद्घनघनारवद्विगुणबृंहितस्सिंहराट् ॥ ३६ ॥

अयं च, विदारयति दारुणैर्वलभिदस्त्रभङ्गोद्भटां सटाविधुतिसंभ्रमभ्रमितसप्तलोकस्थितिः ।
कुलाचलशिलातलद्रढिमडम्बरस्तम्भिनीं प्रभुर्द्विषदुरःस्थलीं नखरशृङ्गदम्भोलिभिः ॥ ३७ ॥

राजा— (सविस्मयम्) अहो महानयमद्भुतनरसिंहः ।

दम्भोलिश्रेणिदीव्यत्खरनखरमुखक्षुण्णदैतेयवक्षोनिष्ठ्यूतासृक्स्रवन्तीभरितदशदिशादर्शितापूर्वसन्ध्यः ।
स्वामिध्वंसप्रकुप्यत्सुररिपुपृतनास्तोमरूपं स एष ब्रह्मस्तम्भैकचन्द्रो बहुभिरिह करैरन्धकारं निरुन्धे ॥

तदहमिह महामोहनिरसनाय दुरितभङ्गमाशासे ।

विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थलीनिरर्गलविनिर्गलद्रुधिरसिन्धुसन्ध्यायिताः ।
हरन्तु मदघं रमासहचरस्य लीलाहरेरहंप्रथमिकामिथःप्रकटिताहवा बाहवः ॥ ३९ ॥

व्यवसायः— देव ! इयं पुनरस्मदभिमतमर्थमभिमुखयन्ती स्वयमेव भगवता भावनामालनिर्मितेव सुभगविन्यासशालिनी निखिलभयनिर्मूलिनी श्लोकाक्षरपरंपरा । यथा,

प्रह्लादह्लादनानि प्रणतसुरजनप्राणनप्रीणनानि प्रत्यूढस्थेमभीमप्रलयघनघटाघोषणाडम्बराणि ।
क्षुभ्यत्सप्ताम्बुधीनि क्षुरपरुषनखक्रीडितक्षुण्णशत्रोरसद्भीतिव्यपोहं विदधतु नृहरेरट्टहासाद्भुतानि ॥

राजा— (सहर्षमवलोकयति)

व्यवसायः— देव ! इयं च काचित् । यथा,

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैरव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा यादृच्छिकाद्वेधसां या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥ ४१ ॥

**सुमतिः**— अय्यउत्त ! एसो हिरण्णो विअ महामोहासुरो पुरिससीहेण तुए पसमणिज्जो । [आर्यपुत्र ! एष हिरण्य इव महामोहासुरः पुरुषसिंहेन त्वया प्रशमनीयः । ]

**व्यवसायः**— देव ! कालोपपन्नमिह कर्तव्यं स्मारयति देवी । तदिह नातीवेदानीमत्र निहितदृष्टिभ्यां भवितव्यम् । तथाऽपि संक्षेपेण तु किंचिद्दर्शयामि । अयमिहासुरापहृतत्रैलोक्यप्रत्यानयनेन देवगणसंतोषणाय प्रवृत्तो दिव्यवामनः । अमी च........इत्यर्धोक्ते

**राजा**— तिष्ठ तिष्ठ सेनापते ! यावदेतस्मादपि दिव्यवामनात् किमपि मङ्गलमाशासे । (सहर्षम्)

**व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटः त्रैयक्षं मकुटं पुनन्नवतु नस्त्रैविक्रमो विक्रमः ।**

**यत्प्रस्तावसमुच्छ्रितध्वजपटीवृत्तान्तसिद्धान्तिभिः स्रोतोभिस्सुरसिन्धुरष्टसु दिशासौधेषु दोधूयते ॥४१॥**

**सुमतिः**— देव ! अस्स विअ तुम्ह वि पडिहअपडिपक्खस्स भाईरईव्व जसप्पवाहो पडिदिसं संवड्ढइ । [देव ! अस्येव तवापि प्रतिहतप्रतिपक्षस्य भागीरथीव यशःप्रवाहः प्रतिदिशं संवर्धते । ]

**व्यवसायः**— अमी च भृगुरघुयदुवंशसंभवाः प्रबलतरदुष्टनिरसनेन परित्रातलोकत्रयास्त्रयो रामाः । एष पुनरेतेषु बहुमुखपुण्यजनबाधनेऽपि परित्रातपुण्यजनो मध्यमो रामः । अनेन किल कोसलसुताकुमारभावकञ्चुकितकारणाकारेण, कौमारकेलिगोपायितकौशिकाध्वरेण, रणाध्वरधुर्यभव्यदिव्यास्त्रशालिना, प्रणतजनविमतविमथनदुर्ललितदोर्ललितेन, मैथिलनगरसुलोचनालोचनचकोरचन्द्रेण, दिनकरकुलकमलदिवाकरेण, खण्डपरशुकोदण्डप्रकाण्डखण्डनशौण्डभुजदण्डेन, भृगुपतिसुगतिविहतिकरनतपरुरिषुपरिघेण, पितृवचनपरिपालनप्रतिज्ञावज्ञातयौवराज्येन, दण्डकतपोवनजङ्गमपारिजातेन, खरतरखरतरु(षण्ड)खण्डनचण्डपवनेन, द्विसप्तरक्षस्सहस्रलवनविलोलनमहाकलभेन, महितमहामृथदर्शनमुदितमैथिलीदृढपरिरम्भणविरोपितविकटवीरव्रणेन, मारीचमायामृगचर्मपरिकर्मितनिर्भरदर्भास्तरणेन, गृध्रराजदेहदिधक्षालक्षितभक्तजनदाक्षिण्येन, अवन्ध्यमहिममुनिजनभजनमुषितहृदयकलुषशबरीमोक्षसाक्षिभूतेन, प्रभञ्जनतनयभावुकभाषितरञ्जितहृदयेन, तरणिसुतशरणागतिपरतन्त्रितस्वातन्त्र्येण, विपुलभुजमूलनिबिडनिपीडितरावणरणरणकजनकचतुरुदधिविहरणचतुरकपिपतिहृदयविशालशिलातलदारणदारुणशिलीमुखेन, विमतसहोदररक्षःपरिग्रहसंरम्भविजृम्भितसर्वेश्वरभावेन, सकृत्प्रपन्नसंरक्षणदीक्षितसत्यव्रतेन, कपिकुलकरतलतुलितगिरिनिकरसाधितसेतुपथसीमासीमन्तितसमुद्रेण, लङ्कावरोधवेपथुलास्यलीलोपदेशदेशिकेन, विशङ्कटविशिखविताडनविघटितमकुटविह्वलविश्रवस्तनयविश्रमसमयविश्राणनविख्यातविक्रमेण, कुम्भकर्णकुलगिरिदलनदम्भोलिना, मघवजिदभिहननकृदनुजसाक्षिकराक्षसद्वन्द्वयुद्धेन, निखिलजगदनवरतभयजनकदशलपन(मुख)लपनदशकलवनजनितकदनदलितरजनिचरयुवतिजनविलपनवचनविख्यापितपारम्येण, विभीषणवशंवदीकृतलङ्कैश्वर्येण, पुष्पकरभसगोष्पदीकृतगगनमहार्णवेन, प्रतिज्ञार्णवतरणकृतक्षणभरतमनोरथसिंहासनाधिरूढेन, दिव्यभौमायोध्याधिदैवतेन, जानकीसहधर्मचारिणा, सर्वधर्मसमाराधनीयेन, सनातनधर्मेण, साकेतजनपदजनिधनिकजङ्गमतदितरजन्तुजातदिव्यगतिदानदर्शितनित्यनिस्सीमवैभवेन, भगवता, भक्तजनाभिरामेण, श्रीरामेण विश्वमेतत्सनाथीकृतम् ।

**राजा**— (सहर्षविस्फारिताक्षमवलोकयन्)

पारावारपयोविशोषणकलापारीणकालानलज्वालाजालविहारहारिविशिखव्यापारघोरक्रमः ।
सर्वावस्थसकृत्प्रपन्नजनतासंरक्षणैकव्रती धर्मो विग्रहवानधर्मविरतिं धन्वी स तन्वीत नः ॥ ४३ ॥

सुमतिः— देव ! णळसेतुकत्तुणा इमिणेव्व धम्मसेतुसंठावएण तुए वि धम्मिअजणो किअत्थीकरिज्जइ । [देव ! नलसेतुकर्त्राऽनेनेव धर्मसेतुसंस्थापकेन त्वयाऽपि धार्मिकजनः कृतार्थीक्रियते ।]

व्यवसायः— देव ! अयं पुनराप्रादुर्भावमनुगतपररूपः समस्तनिगमान्तसारभूतगीतोपनिषदाचार्यो भगवान्वासुदेवः ।

कंसध्वंसैकवीरो दनुजभटहतक्षोणिदुर्जातबन्धुर्गोपीनां प्राणमित्रं गुरुसुतपुनरुज्जीवनोदारकीर्तिः ।
नाथो वृष्ण्यन्धकादेर्नरकपुरवधूपत्रभङ्गापहारी पाञ्चालीवल्लभानां प्रथनमुखसुहृत्पञ्चमाम्नायसारः ॥४४॥

अमुना किल पूतनाशकटयमलार्जुनारिष्टप्रलम्बधेनुककालियकेशिकुवलयापीडचाणूरमुष्टिकादिदुष्टजनमर्दनेन गोपालकुलवर्धनाय समुद्धृतो गोवर्धनः ।

राजा— (सहर्षमवलोक्य)

निकटेषु निशामयामि नित्यं निगमान्तैरधुनाऽपि मृग्यमाणम् ।
यमलार्जुनदृष्टबालकेलिं यमुनासाक्षिकयौवनं युवानम् ॥ ४५ ॥

व्यवसायः— इयं पुनरिह वासुदेवस्य वामतो वर्णपरम्परा ।

जयति ललितवृत्तिं शिक्षितो वल्लवीनां शिथिलवलयशिञ्जाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णोः अधरमणिसुधायामंशवान्वंशनालः ॥ ४६ ॥ इयं चापरा,

फक्कत्कौरवपत्तनप्रभृतयः प्रास्तप्रलम्बादयः तालाङ्कस्य तथाविधा विहृतयस्तन्वन्तु भद्राणि नः ।
क्षीरं शर्करयेव याभिरपृथग्भूताः प्रभूतैर्गुणैः आकौमारकमस्वदन्त जगते कृष्णस्य ताः केलयः ॥ ४७ ॥

सुमतिः— अय्यउत्त ! अवणिभारुद्धरणप्पवुत्तं जउधुरंधरं विअ तुमं वि संसइभअभरनिस्सेसद्धंसणसण्णद्धं अइरा एव्व किअकज्जं पेक्खिस्सिम्हि । [आर्यपुत्र ! अवनिभारोद्धरणप्रवृत्तं यदुधुरन्धरमिव त्वामपि संसृतिभयभरनिश्शेषध्वंसनसन्नद्धमचिरादेव कृतकार्यं प्रेक्षिष्ये ।]

व्यवसायः— सत्यमेतत् । आलक्ष्यतामयमखिलदोषनिर्मूलनः कल्की ।

राजा— (विलोक्य)

भाविन्या दशया भवन्निह भवध्वंसाय नः कल्पतां कल्की विष्णुयशस्सुतः कलिकथाकालुष्यकूलङ्कषः ।
निःशेषक्षतकण्टके क्षितितले धाराजलौघैर्ध्रुवं धर्मं कार्तयुगं प्ररोहयति यन्निस्त्रिंशधाराधरः ॥ ४८ ॥

व्यवसायः— देव ! इत्थं किल भगवतः कतिचिदवतारभेदाः । कति कति भवन्ति भूता भाविनश्च भगवतः स्वच्छन्दावताराः । अमीषां चातिशयवर्णने निगमान्तवेदिनोऽपि निवृत्तव्यापाराः । अपि च,

इच्छामीन विहारकच्छप महापोत्रिन् यदृच्छाहरे रक्षावामन रोषराम करुणाकाकुत्स्थ हेलाहलिन् ।
क्रीडावल्लव कल्कवाहनदशाकल्किन्निति प्रत्यहं जल्पन्तः पुरुषाः पुनन्ति भुवनं पुण्यौघपण्यापणाः ॥

तेषु चैतेषु भगवदवतारेषु निराशिषः पुरुषस्य यथाभिमतमेकमालम्बनं निर्धारणीयं महाराजेन ।

राजा— सेनापते ! साधीयः संचिन्तितम् । तदहं संप्रति,

**विशुद्धे विश्वरूपस्य यत्र क्वचन विग्रहे । समाधिजननीं पुंसः साधयिष्यामि भावनाम् ॥ ५० ॥**

न चात्रास्माकमतिभारः । यतः,

**पदकमलनतानां भासमानः प्रमाणैः प्रणिहितरुचिभेदः प्राच्यसंस्कारशक्त्या ।**

**प्रभुरयमनुकम्पानिघ्ननिर्विघ्नलीलः परिकलयति रूपं भावनालम्बनार्हम् ॥ ५१ ॥**

तदिह कृतं शिल्पदर्शनेन । दीयतां शिल्पाधिकारिणस्संस्कारस्य अस्मत्प्रसादोचितं पारितोषिकम् ।

व्यवसायः— यदाज्ञापयति देवः ।

राजा— सेनापते ! बलवदभियुक्ता वयं संत्वरेमहि समनन्तरकरणीयाय । [इति निष्क्रान्तास्सर्वे ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके सप्तमोऽङ्कः ।

---

## अष्टमोऽङ्कः

---

[ततः प्रविशति अभिनिवेशः]

अभिनिवेशः— (स्वसामर्थ्यं बहुमत्य)

**हृष्यन्ति व्यसनेषु सत्सु मुधारब्धेषु मत्प्रेक्षिताः प्रारब्धं न परित्यजन्ति च मुहुः प्रत्यूहवात्याहताः ।**

**नानादुःखभयानकेऽपि न जहत्यर्थे पुमर्थे रतिं मोहस्याभिनिवेश एकदृगहं कोशाधिकारे स्थितः ॥**

अपि च, लोभोऽपि महामोहसर्वस्वभूतो मामेव दर्शितसौभ्रात्रं सहायीकृत्य सर्वत्र विजयते । यतः,

**अवसादप्रसङ्गेषु स्वयमुत्तम्भनोद्यतः । अहमार्यस्य लोभस्य भ्राता चरमसंभवः ॥ २ ॥**

अहो महत्सांपरायिकमुपस्थितमास्माकस्यान्ववायस्य । यदिह विवेकेन प्रथममध्यात्मविद्यामशिक्षि पुरुषः । यच्चासौ मतान्तरदौर्बल्यप्रकाशनेन परब्रह्मप्रकाशके शास्त्रे प्रशमितश्रद्धावैकल्यः । यदपि च सपरिकरे मोक्षोपाये संमुखीकृतः, विमुखीकृताश्च कामक्रोधादयः, विसृष्टं च किमपि संयमस्थानम्, अवधारितं च धारणायाश्शुभमालम्बनम्, आरिप्सितश्च शमदमवैराग्यादिपरिकर्मितस्सालम्बनो महायोगः । (दीर्घं निश्वस्य सविषादम्)

**विजिग्ये यैरिदं स्त्रीभिः विजिताभिर्जगत्त्रयम् । त एव सुभटाः ख्याताः स्त्रीभिरेव जिगीषिताः ॥३॥**

(नेपथ्ये) अलिअं एव्व भणइ भावो । जं इत्थिआहिं एव्व जिईसिआ महामोहसैणिअधुरंधराइत्ति । [अलीकमेव भणति भावः, यत् स्त्रीभिरेव जिगीषिता महामोहसैनिकधुरन्धरा इति । ]

अभिनिवेशः— (कर्णं दत्वा, सरोषहासम्) काऽसौ रण्डा, या मामप्यलीकवादिनं मन्यते ।

(पुनर्नेपथ्ये) एदेण वि तुह अळीअभासिअं पडिट्ठाविअं। जं उण अग्गिसक्खिअं तुए गहीदपाणिं परपुरुसदंसण-विमुहिं मं रंडेत्ति भणसि। [एतेनापि तवालीकभाषितं प्रतिष्ठापितम्। यत्पुनरग्निसाक्षिकं त्वया गृहीतपाणिं परपुरुष दर्शनविमुखीं मां रण्डेति भणसि।]

अभिनिवेशः— किमसावस्मद्द्रोहिनी दुर्वासना। शान्तं पापम्, शान्तं पापम्। अद्य पुनरियमुपसृत्य क्षान्तपरिवादा सत्यवादिनं मां संभावयतु।

[ततः प्रविशति दुर्वासना]

दुर्वासना— अय्यउत्त! इयम्हि। अहं दुम्मइचळणसेवारसपरवसहिअआ अण्णाअलोअवुत्तंदा पुच्छम्मि। के पुरुसा काहिं इत्थिआहिं जिईसिआ। [आर्यपुत्र! इयमस्मि। अहं दुर्मतिचरणसेवारसपरवशहृदया अज्ञातलोकवृत्तान्ता पृच्छामि। के पुरुषाः काभिः स्त्रीभिर्जिगीषिताः।]

अभिनिवेशः— प्रिये! कामो जुगुप्सया, कोपस्तितिक्षया, लोभस्तुष्ट्या, अहङ्कार आत्मविद्यया, एवमन्येऽपि।

दुर्वासना— किं उच्छाहमेत्तेण कज्जं संघटइ। हदासा खु एदा सळहीओ विअ अप्पविणासणे सअं पउत्ता। [किमुत्साहमात्रेण कार्यं सङ्घटते। हताशाः खल्वेताः शलभ्य इवात्मविनाशने स्वयं प्रवृत्ताः।]

अभिनिवेशः— अहमप्येवमध्यवस्यामि। अथापि यदृच्छादेवी किमाचरेदिति दुरवधरम्। शलभीनिपाते प्रदीपोऽपि कदाचिद्विनाशमधिगच्छति।

दुर्वासना— (सविषादम्) जइ एव्वं महामोहपेरंताणं अम्हपहूणं विणासो होज्ज। [यद्येवं महामोहपर्यन्तानामस्मत्प्रभूणां विनाशो भवेत्।]

अभिनिवेशः— (सभ्रूक्षेपं विचिन्त्य) प्रिये! मया जीवितव्यमेव सर्वदा। अत्र चोपायमेवमुत्पश्यामि। भोगसंचय-रूपात् महामोहकोशगृहात् निर्गत्य मुमुक्षापुरस्कारेण विवेकमाश्रितः समाध्यभिनिवेश इति सविशेषगृहीतनामकः चिरं जीविष्यामि।

दुर्वासना— णाह! अहं उण तुम्ह पिआ कहं होम्मि। [नाथ! अहं पुनस्तव प्रिया कथं भवामि।]

अभिनिवेशः— प्रिये! किं भीरुरसि? त्वमपि दुरन्वयं परित्यज्य मामेव परिचरन्ती सुसङ्गता चिरं जीविष्यसि।

दुर्वासना— महंतो पसाओ अय्यउत्तस्स। जं चिरसेविअस्स रण्णो महामोहस्स विणासेवि सअं जीविऊण जीविअसमं मं च रक्खिदुं अहिणिविससि। [महान् प्रसाद आर्यपुत्रस्य। यच्चिरसेवितस्य राज्ञो महामोहस्य विनाशेऽपि स्वयं जीवित्वा जीवितसमां मां च रक्षितुमभिनिविशसे।]

अभिनिवेशः— न केवलं जीवितसमा त्वम्; जीवितेश्वरी खल्वसि!

दुर्वासना— धण्णिआ खु एसा संवुत्तम्हि, जं एव्वं संभावेसि। [धन्या खल्वेषा संवृत्ताऽस्मि, यदेवं संभावयसि।]

अभिनिवेशः— (सर्वतोऽवलोक्य विचिन्त्य साशङ्कम्) पश्यामि दारुणान् दिव्यान्तरिक्षभौमानुत्पातान्।

**गृध्रास्तोरणशूलशृङ्गमभितोऽगृह्णन्नभोमण्डलीं वात्यामण्डलखण्डितध्वजपटीशून्यानि सैन्यानि नः ।**
**शूलप्रासकृपाणमुद्गरधनुःक्रूरैर्मुहुः किंकरैः दृश्यन्ते परिवारिता इव दिशस्संवर्तसंवर्तकैः ॥ ४ ॥**

आः कष्टं ! **निवृत्तिधर्मः पर्येति नाम्ना लोकेषु नारदः । अयं च तुम्बुरुस्तौ च प्रणिधी मोहवैरिणः ॥५॥**

तयोरपि प्रविष्टश्चायं त्रिभुवनविदूषको नारदः श्वेतवायस इव राजधानीम् । कलहकुतूहलं च तस्य स्वलक्षणम् । विप्रलम्भकवशंवदश्च वीराभिमानी देवो महामोहः । न जाने भवितव्यतावैभवेन किं भविष्यति ? अथ वा यदेव भविष्यति तदेव तथा । आत्मच्छायेव खलु नियतिरलङ्घनीया । अहह ! महामोहविजयलक्ष्मीः ! नूनमिदानीं संशयमापन्नाऽसि । **(नेपथ्ये)**

**छत्रैरुत्तभ्यतां द्यौर्दश झटिति दिशश्चामरैरान्नियन्तां संवर्तोदन्वदूर्मिध्वनिमुखरमुखस्ताड्यतां वाद्यवर्गः ।**
**काल्यन्तां लोकपालाः क्षणरुचिपटलीविभ्रमैर्हेमवेत्रैः क्रुद्धः सन्नह्यतेऽसौ घटयितुमचिरादाहवं मोहवीरः ॥६॥**

**अभिनिवेशः**— **(कर्णं दत्त्वा)** किं देवो महामोहः स्वयमेव समराय सन्नह्यति ? **(सभयविषादम्)** प्रिये ! महदत्याहितम् ।

**अमुष्मिन् दिवसे श्वो वा नूनं नियतिवैभवात् । अमोहमविवेकं वा जगदेतद्भविष्यति ॥ ७ ॥**

तदसावस्माकमवधानस्य प्रधानसमयः । अद्य खलु विविधभोगभाण्डागारलुण्टाकानां संसारकण्टकानां विवेकसैन्यनासीरवीराणाम् अतिधीराणां शमदमादीनां प्रचारमुपरोद्धुं पदवीषु प्रतिपदमयःशङ्कवः प्रतिष्ठापनीयाः । अन्यदपि चैवं समयोचितं सर्वमनुष्ठातव्यम् । **[इति सभयसंभ्रमं सभार्यो निष्क्रान्तः ।**

**मिश्रविष्कम्भः ।**

**[ततः प्रविशति महामोहो दुर्मतिर्नारदश्च ।]**

**महामोहः**— भगवन् ! धन्याः खलु वयमिदानीं संवृत्ताः । यद्भगवतः पितामहस्य प्रियसुतेन चतुर्दशभुवनवैचित्र्यदर्शिना सकललोकपालमौलिमालोपलालितपादपङ्कजेन भगवता संभावितेयं मायाभिधाना मदीया राजधानी ।

**नारदः**— राजन् ! अनितरसाधारणं भावत्कमा(भवत्कर्मा)श्चर्यमनुभवितारो वयमेव धन्याः ।

**महामोहः**— देवि ! दीयतामस्मै देवर्षये पाद्यमर्घ्यं मधुपर्कश्च ।

**दुर्मतिः**— **(सविनयमुपसृत्य)** भअवं ! इदं पज्जं, इदं अग्घं, इमो महुपक्को । [भगवन् ! इदं पाद्यम्, इदमर्घ्यम्, अयं मधुपर्कः ।]

**नारदः**— **(हस्तेन वारयन्)** संपन्नो ममासौ सत्कारः । अद्य खल्वौपवस्तं मया व्रतमङ्गीकृतम् । यावदिह तुलसीवनवासिनीं द्वादशीं संभावयामि, तावन्न किंचित्कुतश्चित्प्रतिगृह्णामि ।

**महामोहः**— भगवन् ! अत्यद्भुतमनोहरोऽयं भवत्स्वभावः । तथा हि,

**लास्यान्विता च ललिता च गतिस्त्वदीया मञ्जुस्वना बहुगुणा च विभाति वीणा ।**
**देहश्च दर्शयति चान्द्रमसीमभिख्यां प्राप्तोऽसि नस्त्वमिह भोगसमृद्धिहेतुः ॥ ८ ॥**

**नारदः**— **(स्वगतम्)** मूढस्वभावोऽसौ विश्वमपि विपरीतं कल्पयति । हन्त विजितमसन्मनोरथेन । **(प्रकाशम्)** महाराज !

त्वमेव खल्वत्यद्भुतः । यदुत पुष्करपलाशवन्निर्लेपस्वभावं पुरुषमनन्तान् भोगाननुभावयसि । अपि च,

**प्रत्यूढोत्सेकनम्रप्रतिभटमकुटीपादपीठीसनाथं दुर्दान्तद्वेषिदन्तावलरदनपदं भाति भद्रासनं ते ।**

**त्वत्सन्नाहप्रसङ्गप्रथमदुहितरं भीतिमेवाश्रयन्ते लोकालोकोपरोधप्रतिहतगतयो लोकपालावरोधाः ॥**

(नेपथ्ये) भो भोः प्रतिहारिन्! अयमहमागतो देवस्य विवेकस्य दृष्टप्रत्ययो नाम दूतः । आवेद्यतां महाराजाय ।

[ प्रविश्य ]

**प्रतिहारी**— देव ! प्रतिरुद्धप्रवेशस्तिष्ठति बाह्यद्वारे विवेकदूतः ।

**महामोहः**— प्रवेश्यताम् ।

**प्रतिहारी**— यदादिशति देवः । [इति निष्क्रान्तः ।

[ततः प्रविशति दूतः]

**दूतः**— (मोहसमीपे नारदमवलोक्य स्वगतम्) अयमसौ चण्डालसदनवापिकायां चन्द्र इव प्रतिबिम्बितस्समीक्ष्यते देवर्षिर्विप्रलम्भकचक्रवर्ती । अस्त्वसावपि साहायकमाचरिष्यति ।

**नारदः**— (दूरतो दूतं निर्दिशन्) महाराज !

**चलघुरुघुरुमालाश्लेषवाचालजङ्घः शर इव निरपायश्चारुचण्डातकश्रीः ।**

**अयमिह रुचिराभिः स्रग्भिरुन्नद्धमौलिः त्वरितमुपसमेति स्वेदभिन्नस्सुगन्धिः ॥ १० ॥**

तदयं कोऽसाविति विचारणीयः, उपचरणीयश्च ।

**महामोहः**— आस्तामुपचारः, विचारणीयस्तावत् ।

**दूतः**— (उपसृत्य) इदं महाराजस्य शासनम् । (इति भूर्जपत्रं दर्शयति)

**महामोहः**— (अपवार्य) किं महामोहोऽपि केनचिच्छासनीयः ?

**नारदः**— महाराज ! किं परीक्षया परिजनोपचाराणाम् ।

**महामोहः**— भद्र ! असंस्तुतयुष्मद्द्वीपलिपयो वयम् । तत्स्वयमेव वाचय ।

**दूतः**— (उद्घाट्य वाचयति) "स्वस्ति श्रीश्वेतद्वीपविहारमण्टपिकामातस्थुषा विबुधमहितवृत्तिना महाराजविवेकेन महामोहाय संदिश्यते । प्रसिद्धं खल्विदम्— "नीचाः कलहमिच्छन्ति सन्धिमिच्छन्ति साधवः" इति।

**महामोहः**— किमतः ? स्वनैच्यमेवैतेन सूचयति ।

**दुर्मतिः**— भद्द, तदो तदो ! [ भद्र ततस्ततः । ]

**दूतः**— ततश्च,

**दीयन्तामिह दक्षिणापथभुवो यावत्कलेरत्ययस्तत्र स्थावरतिर्यगंशमखिलं भुङ्क्ष्व त्वमप्यक्षतः ।**

**इत्थं नाम कुलक्षयोपशमनोपाये त्वया तस्थुषा सन्धिस्सत्यगिरामतुच्छमनसामच्छात्मनामस्तु नः ॥ ११ ॥**

**महामोहः**— (सहस्तास्फालनं विहस्य) तदिदं सहस्रकिरणस्य तेजोवरदानम्, वैश्रवणस्य वा किमप्यैश्वर्यप्रदानम्, यदा-

जानसिद्धनिरवधिकवैभवस्य मे विक्लवेन विवेकेन विभूतिभागभोगलेशाभ्यनुज्ञानम् ।

**नारदः**— (सान्तर्हासं स्वगतम्) हन्त, समापतति मम चक्षुषोः पारणा। सर्वदा चाहं विवेकमहामोहयोः सन्धिं प्रतिरोत्स्यामि । (प्रकाशम् । मूर्धानमान्दोलयित्वा सविषादम्) अहह,

**भ्रूभङ्गेषु पृथग्विधेषु बलिनो यस्यायतन्ते जगत्यासंसारमलङ्घ्यशासनगतेराजन्मधीरात्मनः ।**
**ब्रह्मस्तम्बभटस्य मुक्तजनकद्रोहस्य मोहस्य ते तस्यासीदितरेण सन्धिवचनं किं कस्य वा कथ्यते ॥**

**दुर्मतिः**— अय्यउत्त ! एव्वं मे ळाअकज्जं पडिभाइ । संधिव्ववदेसेण अम्ह सआसं आसाइज्ज विवेओ । तासौ जीवग्गाहं गहिअ दिढपीडणिज्जो होज्ज । [आर्यपुत्र ! एवं मे राजकार्यं प्रतिभाति । सन्धिव्यदेशेनास्मत्सकाशमासाद्यतां विवेकः । तत् सजीवग्राहं गृहीत्वा दृढपीडनीयो भवेत् ।]

**महामोहः**— (सोच्चैर्हासम्) मुग्धे ! स्वप्नेऽप्येवंविधं कातर्यवचनं मा वोचः । नन्वहं महामोहः ? किमिदानीमन्यमिव मामभिमन्यसे ! अथ वा, न हि कदाचिदपि परिस्फुरन्ति प्रमदानां राजकार्यगतयः । प्रिये ! शृणु चैतन्महामोहस्य वीरव्रतम् ।

**क्रकचैः कृत्तदेहोऽपि दीपितोऽपि दवाग्निना । न सूच्यग्रं प्रदास्यामि न सन्धास्यामि केनचित् ॥ १३ ॥**

अथ वा, **नाहमस्मि महामोहः न च विश्वं जितं मया । विभूतिरमिता यस्य विभक्तव्यपदास्पदम् ॥ १४ ॥**

**नारदः**— (स्वगतम्) कलहकौतुकिनामस्माकं तपांसि परिणमन्ति । ननु स्वात्मावधिर्महामोहस्य शवमुष्टिवद्गृहीतग्राहिता । (प्रकाशम्) देवि ! दुर्मते ! परमकृत्यमध्यवसितं प्रियतमेन ते, अथ तु निर्धारणीयः सन्देशवाक्यशेषः ।

**महामोहः**— (अनादरातिशयं नाटयन्) किं नःश्छिन्नम् । श्रुणुमस्तावत् । ततस्ततः,

**दूतः**— ततश्च यदि नस्सन्धिः, यथास्थानं पुनरवस्थास्यामहे । यदि विग्रहः, तदा तु—

**निष्कामक्रोधलोभं निपतितकुहनाडम्भदर्पाभिमानं निर्धूतेर्ष्याभ्यसूयामदविहृति जहन्मत्सरस्तम्भजाड्यम् ।**
**अद्य श्वो वा त्रिदध्यादपि चरमयुगे विश्वमक्षुद्रसत्त्वं वेलातीतप्रसर्पन्मधुमथनदयादत्तसेको विवेकः ॥ १५ ॥**

**महामोहः**— (सरोषसंरम्भं दन्तान्कटकटापयन्) भगवन् ! आः कष्टम्, अश्रुतपूर्वमिदं श्रुतम्, वाचिकशेषस्तु भवतु वा मा वा । कः कोत्र भोः ! हन्यतामयं वार्ताहरः ।

**नारदः**— राजन् ! दूतः किल ।

**महामोहः**— तर्हि व्यङ्गीकृत्य निष्कास्यताम् ।

**दूतः**— स्वयमहमपसर्पामि । (इति तिरस्करिणीमास्थाय, स्वगतम्) विदितवृत्तान्तशेषः प्रतिगमिष्यामि ।

(नारदः अनाहितदृष्टिरवलोकयन् इङ्गितेन दूतमभिनन्दति ।)

**महामोहः**— (सक्रोधनिर्वेदं समधिकताम्राक्षः पादेन पादपीठमाहत्य दन्तेनाधरमापीडयन्)

**धिग्ब्रह्माण्डकरण्डगह्वरकुटीकर्पूरपूरं यशः धिक्शक्रत्रिदशेन्द्रफालफलकस्पष्टोपमृष्टं पदम् ।**
**धिग्दोर्विक्रममद्भुतं मम पुनर्धिग्नादमेवास्तु धिक्सोढा वैरिकथामपि स्वयमहं नीचाय मह्यं नमः ॥ १६ ॥**

(विचिन्त्य सनिःश्वासम्) प्रिये! विपक्षप्रतार्यमाणं पितरमनुचिन्त्य भृशं दूये।

गतजलसेतुबन्धगजयूथपशौचकथागगनतलानुलेपगणिकापरिणीतिनिभैः।
व्यथितमतिर्विवेकहतकस्य विचारशतैः कुलपतिरद्य नः कथमसौ भविता पुरुषः॥ १७॥

नारदः— महाराज! किमत्र चिन्त्यते। न कुतश्चिदप्ययमन्यथा भविष्यति।

महामोहः— (सक्रोधकम्पम्) भगवन्! अतिपापीयान्खल्वसौ अशेषभोगनिर्मूलनोद्यतो विवेकहतकः। (आकाशे लक्ष्यं बद्ध्वा) आः पाप! दुराचार! विश्वविद्वेषदूषित! मूढ! विवेकापशद!

मोघारम्भक्षपितमनसा मोहवीरस्त्रिलोकीवेलाभेदस्वरसरसिको विभ्रमप्राणमित्रम्।
ब्रह्मस्तम्बप्रसृतनिगमस्तोमशाखाविभङ्गक्रीडाचण्डः कृपण भवता किं न दृष्टः श्रुतो वा॥ १८॥

नारदः— महाराज! न श्रुतं, न दृष्टं वा केन भवदपदानम्? आसंसारं प्रसिद्धवैभवः खल्वसि।

महामोहः— (सक्रोधं) भगवन्निदमपि भवन्तमनुसारयामि।

पुरा किल निराकृतस्वपरभेदनिर्धारणे रणे विहरता मया रदनयन्त्रितश्चन्द्रमाः।
अपर्वणि सुपर्वणामधिपतेस्समक्षं क्षणात् अरुन्तुदविधुन्तुदग्रहणवेदनामन्वभूत्॥ १९॥

नारदः— (सान्तर्हासं स्वगतम्) किमसावुन्मत्तदशां प्राप्तः। यदयं जरद्गवादिवाक्यवदपार्थं किमपि जल्पति। उपस्थित-महाविपत्तिरपि दुर्मतिमेव पुरस्कृत्य शृङ्गारगर्ते निमज्जति। (प्रकाशम्) महाराज! सोऽयमिदानीं पश्चिमे पारावारे सान्ध्यं नियममिव चिकीर्षुः अम्बरतलादवलम्बते मयूखमाली। तदहं साधयामि कालोचितकर्मणे। [इति निष्क्रान्तः।

महामोहः— प्रिये! संप्रति संसारसन्ततिनिदानभूतसम्भोगारम्भसमयसूचिका प्रजापतिपरिभुक्तपूर्वा प्रवर्तते पितृप्रसूरियमपरा सन्ध्या। इह च,

क्षीयन्ते सवितुः क्षणात्क्षितिधरैरुत्तंसिता दीप्तयः श्रूयन्ते यजतां तृतीयसवनब्रह्मप्रणादोर्मयः।
लीयन्तेपतगाः कुलायतरुषु प्रत्युद्व्रजत्पोतकाः स्त्यायन्ते च तमश्छटास्तत इतः श्रीकण्ठकण्ठत्विषः॥ २०॥

अपि च, कादम्बन्ति जलाशयेषु विततः कालाम्बुदन्त्यम्बरे मातङ्गन्ति महीधरेषु मधुपस्तोमन्ति मल्लीषु च।
स्पृष्ट्वा निश्चिनु पाणिना कुवलयापीडन्ति ते कुन्तले धम्मिल्लन्ति निशामुखेषु सुमुखि स्त्यानास्तमःपङ्क्तयः॥

दुर्मतिः— अय्यउत्त! पबलतमेहिं विवेअप्पमुहेहिं पक्कन्तजुत्थस्स तुह संभोअसमअवण्णणं किं अणएण पउत्तं, अहवा अइधीरत्तणेण। [आर्यपुत्र! प्रबलतमैर्विवेकप्रमुखैः प्रक्रान्तयुद्धस्य तव संभोगसमयवर्णनं किमनयेन प्रवृत्तम् अथ वा अतिधीरत्वेन।]

महामोहः— अयि महावीरपत्नि! किं बिभेति भवती कृपणाद्विवेकहतकात्? किं न वेत्थ?

वश्यं तिष्ठति षड्विधं मम बलं मायाविनस्सैनिका मोहस्सोऽहमभङ्गुरो मुनिमनःप्रक्षोभदक्षोदयः।
आस्तामन्यदनङ्गतन्त्रनिपुणैरङ्गीकृतस्सांप्रतं सेतुर्घोरविवेकसिन्धुतरणे शृङ्गारदेवार्चनम्॥ २२॥

अथवा किमिहान्येन दैवतेनार्चितेन मे । त्वामेव शरणं यामि कामतन्त्राधिदेवताम् ॥ २३ ॥

तदेतां रात्रिं वासगृहे त्वया सह निर्वेष्टव्यमखिलं निर्विश्य प्रभाते संयतिष्ये शत्रुविजयाय । [इति सभार्यो निष्क्रान्तः ।

[ततः प्रविशति नभोयानेन तन्त्रीविनोदतरलकरपल्लवो नारदस्तुम्बुरुश्च । ]

नारदः— सखे! सुप्रभातं त्रैलोक्यस्य । यन्महामोहविजिगीषया सत्यसन्धो विवेकः सपदि संयतिष्यते । अहह! सूच्यते संप्रति विवेकाभ्युदयः । यतः,

इदं पुरः स्वयमुदयक्षमाभृतिप्रबोधनं प्रबलतमोविमोचनम् ।
विवेचितस्थिरचरभेदमद्भुतं त्रयीमयं किमपि महो विजृम्भते ॥ २४ ॥

तुम्बुरुः— भगवन्! वयमिव नूनं महासमरसंदर्शनकुतूहली त्वरितमुत्तिष्ठते मयूखमाली । अद्य हि,

प्राचीनाचलतुङ्गशृङ्गनिकटप्रक्रीडदैरावणक्षोभोदीरितधातुधूलिपटलीपर्यायधुर्योदयाः ।
व्योमारण्यतमालवीथिमलिनामुन्मूलयन्तस्तमीमुन्मीलन्त्यरविन्दगर्भसुहृदो भानोरमी भानवः ॥२५॥

नारदः— सखे! सुव्यक्तमिव विवेकवैभवं सूच्यते । तथा हि,

दिवि च भुवि च विष्वग्दृष्टिरोधे निसृष्टं मुकुलितनिखिलाशामण्डलं मोहवृत्त्या ।
मलिनमतिमहीयो मङ्क्ष्वमोघैः करौघैः कबलयति तमिस्रा कश्मलं रश्मिमाली ॥ २६ ॥

तदिह रामरावणरणावलोकनरसश्चिरान्निवृत्तोऽपि नियतिवृत्त्या पुनरिदानीमस्माकं प्रादुर्भविष्यति । यदिह महामोह-डम्भदर्पादयः विवेकव्यवसायादिभिः योत्स्यन्ते । अद्य चातिगाढवैरमूलस्य आहवानोकहस्य फलं हस्तापचेयं भविष्यति विवेकस्य । तथा हि,

द्वेधा कल्पितदेवदानवचमूनासीरमासीदतोरारब्धे तु विवेकमोहनृपयोरायोधनैकोत्सवे ।
वैलक्षण्यनिरूपणप्रहरणो बिभ्रत्प्रमाकङ्कटं जेताऽसौ जगदन्धकारमितरं देवो विवेकेश्वरः ॥ २७ ॥

ततश्च, विद्याभेदैरुपचयवतां वेदकल्पद्रुमाणां व्यक्तोल्लासद्विजपरिवृढव्याप्तशाखाशतानाम् ।
श्रेयोमार्गप्रतिभयजितः श्रीविवेकस्य मौलौ भूयो भूयस्सपदि भविता भूयसी पुष्पवृष्टिः ॥ २८ ॥

तुम्बुरुः— भगवन्! अव्यवस्थिता हि युद्धसिद्धिः । तत् कथमेवं संप्रधार्यते ?

नारदः— कथ्यते न मया मिथ्या किं वा संद्रक्ष्यसे स्वयम् । दर्पणं किमपेक्षन्ते कङ्कणस्य निरीक्षणे॥२९

(नेपथ्ये महान् कलकलः; उभौ सचमत्कारकौतुकमाकर्णयतः)

नारदः— (सहर्षम्) सखे! आगतोऽयमनेकधा कर्णास्वादः । यदुत,

पणवमड्डुकमदलझर्झरीमुरवडिण्डिमदुन्दुभिसंभवः । त्रिदिवगोपुरसन्धिविभेदनः प्रसभमुत्पतति ध्वनिरद्भुतः ॥

तुम्बुरुः— (सहर्षकौतुकम्) अहो समरारम्भस्य दर्शनीयता! अत्र हि,

नीरन्ध्रं व्योमरन्ध्रं भवति कुलगिरिस्तोमतुङ्गैश्शताङ्गैर्जाघट्यन्ते मदान्धा दिशि दिशि करिणः कल्पजीमूतकल्पाः
घोराणां घोटकानां खुरपुटरटितैः त्रुट्यतीव त्रिलोकी प्रत्युड्डीयन्त एते प्रतिहतिषु मिथः पत्तयो दत्तवेगाः ॥

अपि च, महानयं प्रवृत्तश्शस्त्रसंपातः। एकीभूते एव च मिथः प्रतिरोधाद्विवेकमोहवाहिन्यौ। निर्वर्त्यते चायमाकालिको निशीथः। यतः,

सूचिभेद्यतिमिरोपलंभने मेदिनीरजसि मेघमेदुरे। श्रूयते कलकलैर्महीयसी वाहिनी रणखलापवाहिनी ॥ ३२

किं च, क्षतजमधु रणस्थैर्दत्तमुत्तम्भिताग्रध्वजपटपुनरुक्तस्वर्धुनीकैरनीकैः।

पलभुज इह जाग्रन्नन्दथूनां वधूनां पृथुकरटिकरोटीकर्परैरर्पयन्ति ॥ ३३ ॥

नारदः— न तृप्यत्यद्य मे किमिदमिति कुतूहलोल्लसितं चक्षुः।

पत्तीनुद्यद्विपत्तीन्त्रुटितपृथुशिरःकन्धरान्सिन्धुरेन्द्रान् वाहानाकीर्णदेहान्व्यतिहननमिथःखण्डिताङ्गान्शताङ्गान्।

शस्त्राशस्त्रिप्रसङ्गप्रभवचटचटारावघोरप्रचाराः कुर्वन्त्युद्दामगर्वाः कृतिन इह रणे विक्रमैरक्रमेण ॥ ३४ ॥

अपि च, एतस्य संभृतविवेकविमोहभूम्नः सेनायुगस्य समराङ्गणसंभ्रमेण।

प्रायेण संप्रति विकल्पितया स्ववृत्त्या डोलाधिरोहणरसं लभते जयश्रीः ॥ ३५ ॥

तुम्बुरुः— (सबहुमानम्) अयमिह कश्चित् क्रव्याददिम्भः डिम्भमाकर्षन्नित्थं भाषते।

शोहइ शुमइशहाए ईलिअलोहाइमाळणशमत्थे। एशे अ शुळहशोळहळुहिळशुहाशाळशीअळे शंखे ॥ इति,

[शोभते सुमतिसहाय ईदृशलोभादिमारणसमर्थः। एष च सुलभसौरभरुधिरसुधासारशीतले सङ्ख्ये ॥]

इयं च काचन पिशाची संतोषादेवमाह—

पणममि त्रिवेअदेवं पकुविदपतिपक्खपडिमहणपहणम्। सोणिअणवमहुणिवहे सुज्जं व समग्गळग्गपडिमाणम्

[प्रणमामि विवेकदेवं प्रकुपितप्रतिपक्षप्रतिमथनप्रधनम्। शोणितनवमधुनिवहे सूर्यमिव समग्रलग्नप्रतिमानम् ॥]

नारदः— (दूरतो निर्दिशन्) सखे! द्वन्द्वयुद्धमिह नूनमुपक्रम्यते। तत्र हि,

अभिलाषरथारूढस्सुभटो लोभलुब्धकः। एकस्त्वरितमाधावत्येकलव्य इवापरः ॥ ३४ ॥

तुम्बुरुः— अहह!

दुरध्वविहृतिक्षमो दु(रुपरोध)रपनोददुर्वासनासहस्रपृतनौघवानभिनिवेशसत्सारथिः।

विरुद्धमतिशस्त्रिकाविषमदत्तमूर्छादशालुठत्प्रतिभटः परिभ्रमति लोभवीरो युधि ॥ ३९ ॥

नारदः— (सान्तर्हासम्)

द्रविणपरिणामरूपं जगदिदमविभज्य दत्तमप्येषः। बध्नन् कुसीदकुहनां बहुगुणयितुमीहते भूयः ॥ ४० ॥

तुम्बुरुः— भगवन्! दृष्टमिदानीमप्यस्य दुश्शकदुरन्तविवेकविजिगीषोद्योगेन।

नारदः— सखे! आश्चर्यमाश्चर्यम्। अदोषागमसमयेऽप्यमृतकिरणसंदोहेन संप्लुतमिव त्रिभुवनमखिलमवलोक्यते। नूनं कयाचिदवदातप्रकाशया देवतया प्रादुर्भूतया भवितव्यम्। (सूक्ष्मं निर्वर्ण्य) आलक्षितोऽयमाश्चर्यसंभवः। यथा,

सैषा पञ्चमुखी तुष्टिश्शेषसृष्टिरिवापरा। अतर्कितमुपस्थाय ग्रसते लोभमूषकम् ॥ ४१ ॥

तुम्बुरुः— (सहर्षम्) भगवन्! संप्रति लोभविध्वंसेन लुप्तलोकायतमिव लोकमवलोकयामि । अद्य हि,

प्रशस्तिं विन्दन्ति प्रशमरसदिव्यामृतरसप्रलीनोदन्यानां परिषदि न संपत्तिसरितः ।
अमित्रोपक्षेपक्षणविगलदात्मीयपृतनादृढामर्दत्रस्यद्द्रमिडभटजङ्घाजवभृतः ॥ ४२ ॥

अपि च, प्रशमितलोभमिदानीं प्रौढविवेकप्रयुक्तया तुष्ट्या । धनमनघनीतिसिद्धं जातं सर्वत्र दत्तमुक्तफलम्

नारदः— नन्वसावपरीक्षितलोकवृत्तान्तानामविवेकिनामेव लुप्तसर्वगुणो लोभः ।

ब्रह्मायुतायुतविभूतिरपि ह्यपूर्णः कल्पायुतायुतशतायुरपि व्यतीयात् ।
नागायुतायुतसहस्रबलोऽपि बाध्यः किं तद्भवेद्यदिह किंचन लोभयोग्यम् ॥ ४४ ॥

अद्य तु लोभविध्वंसादवधीरितलाभान्तरा परिहृतप्रत्यूहा बुद्धिः परमपुरुषपदकमलपरिचरणमेव परं धनमभिनिविशते

अपि च, नलनहुषमुखानां नाकलोकेश्वराणामपि नलिनभवानामसद्ग्राह्यभूम्नाम् ।
अगणितमुपनन्त्रीमापदं प्रेक्ष्य बिभ्यत्क्वचिदिह न विधत्ते कौतुकं जातु कश्चित् ॥ ४५ ॥

किं च, अपैति पुरुषायुषं निमिषनिर्विशेषं नृणां तृणाग्रजलबिन्दुवत्प्रतिकलं गलन्ति श्रियः ।
तथापि नृपमन्दिरप्रघणसीम्नि संक्षीयते महानहह देहिनां द्रविणमोहदाहज्वरः ॥ ४६ ॥

तद्वयं च नैराश्यमेव परमं सुखमुपतिष्ठामः । ततश्च,

उत्तालद्विपकर्णतालतरलप्रस्थानदुःस्थासिकानित्यातङ्कतरङ्गितं विजहतस्त्रैविष्टपानां पदम् ।
प्रत्यूढापदनन्तसंपदुदयं पद्मापतेस्तत्पदं प्रत्यादिष्टपुनर्भवं परिहृतात्वयं प्रपद्येमहि ॥ ४७ ॥

तुम्बुरुः— (ससंभ्रममवलोक्य) भगवन्! अयमिह पुनः कश्चिदसह्यवेगो महावीरः प्रशिथिलसङ्घटितपलायमान लोभवाहिनीं मुखरितहरिता घोषेण मुहुर्मुहुः प्रत्याश्वासयन् मुग्धामध्याप्रगल्भाभिः वरूथिनीभिरुपगतो विवेकाभिमुख उपसर्पति । कतमः, कीदृशो वा सोऽयमिति न विजानामि ।

नारदः— सखे! महितमधुप्रदिष्टमधुदिग्धविचित्रशरः परभृतवन्दिमान् भ्रमरसंहतिगीतगुणः ।
मलयमरुत्सखो मकरलक्षणकेतुरसौ धृतधनुरभ्युपैति मदनः प्रमदापृतनः ॥ ४८ ॥

पश्य पश्य सखे! प्रसूनबाणस्य पारिपार्श्विकसमृद्धिम् ।

काचित्क्रीडति पद्मिनीह पुरतः काप्यन्यतश्चित्रिणी शङ्खिन्यप्यपरत्र काचिदितरा हस्तिन्यसावन्यतः ।
तस्यैतस्य समृद्धिमेति सरसप्रेक्षानिरूढोद्यं चित्रं मन्त्रिचतुष्टयं त्रिभुवनावस्कन्दिनो धन्विनः ॥

तुम्बुरुः— भगवन्! अत्यासन्नवृत्तिरयमसौ विवेकरथस्य । अपि च,

ऋतुस्नाता नृत्तग्लपिततनुरध्वश्रमवती मदक्षीबा क्रुद्धप्रसदनवती भिन्नघटिता ।
इदंपूर्वेत्येवंविधयुवतिवर्गेण सहितो युयुत्सत्युन्मत्तः स्मर इह विवेकेन महता ॥ ५० ॥

नारदः— (सहासम्) किमस्यानेन दुर्भेदयुवतियूथव्यूहकल्पनेन ।

स्वायत्तसिद्धविभवस्य समग्रशक्तेः स्वच्छन्दचेष्टितभृतः स्वयमेव योद्धुः ।

किं मुग्धया किमिह मध्यमयाऽऽत्मयोनेः किं प्रौढयाऽपि जरठापि हि जैत्रमस्त्रम् ॥ ५१ ॥

(नेपथ्ये) विवेकपरिषत्पुरस्कृतविरक्तिवाराङ्गनाकचग्रहविचक्षणप्रथितगर्वदोर्विक्रमः ।

रतिप्रियतमः स्वयं रणविहारमारिप्सते विमुक्तिपुरवर्तनीविपरिवर्त(र्ति)नीतिस्थितिः ॥ ५२ ॥

उभौ— (कर्णं दत्त्वा) विकत्थनमिदं युयुत्सतो विषमास्त्रस्य । (पुनर्नेपथ्ये)

स्वभर्तव्यं भार्यादुहितृपितृपुत्रप्रभृतिकं विसृज्य प्रव्रज्यामुपनिहितवत्यै भवभृताम् ।

अमुष्यै किं कुर्मो निरवधिकनैर्घृण्यवपुषे नियत्यै भूयिष्ठं भवतु भगवत्यै नम इदम् ॥ ५३ ॥

नारदः— सखे! विडम्बयति चासौ विषयरसवैमुख्यकारिणीं नियतिम् ।

तुम्बुरुः— भगवन्! पश्य पश्य। मुषितव्यवसाय इवासौ संप्रति समीक्ष्यते मुखवैमुख्येन । परिजनश्चास्य साङ्ग्रामिक्यां सिद्धौ साशङ्क इवाभाति । यदुत,

मधुसमयावरोधवदनासवदोहलिनां वकुलमहीरुहामलघुभिस्सुमनोभिरिमाः ।

मदनधनुःप्रकाण्डगुणनिस्त्रुटनावसरप्रतिनिधिशिञ्जिनीं प्रजनयन्त्यभितः प्रमदाः ॥ ५४ ॥

नारदः— सखे! प्रहसनविनोदमात्रप्रस्तावकमिदमखिलं प्रायशः प्रभूतव्यवसायसंपदो विवेकस्य । अपि च, महतो विवेकाद्बिभ्यदप्ययमपरावर्ती मन्मथः प्रवर्तते । तथा हि,

जगत् क्षिपति चापले ललितचापलेखा(युधो)धरो युनक्त्यपथि वाहयन्युगलदेहयन्त्रद्वयम् ।

त्रिवर्गवडिशामिषग्रसनवेधतो बाधते स एष दृढसाहसः सकलजन्तुचिन्ताभटः ॥ ५५ ॥

अद्य च निरन्तरपरिणमदविद्यया कयाचन शिल्पविद्यया दुर्निरूपघटनया विवेकयूथविघटनमसौ विधातुमभिलषति ।

ततश्च, रथवारणवाजिभिः प्रहृष्यन् महिलारत्नसमूहनेन सिद्धैः ।

मकरध्वज एष पुष्पधन्वा रणमभ्येति रतिप्रियापदानः ॥ ५६ ॥

तुम्बुरुः— भगवन्! असहायशूरोऽयं विभ्रममात्रबलाभिरबलाभिरेव संहतान्विवेकव्यवसायशमदमादीन् विजेतुमभिलषति

अपि च, अङ्कुरत्स्मितमकेवलेक्षणं भङ्गुरभ्रुवदनं नतभ्रुवाम् । अश्विताधरमवञ्चितादरः पञ्चबाणसुभटः प्रतीक्षते॥

नारदः— सखे! तथैव खल्वेतमपि विजेतुं विश्वजिद्विवेको विरक्तिनामानं स्त्रियमेव प्रत्यस्त्रतया प्रयुङ्क्ते ।

(नेपथ्ये) भोगेषु यौवतानां योगेषु लभेत सारमर्थानाम् । कन्देषु कन्दलीनां स्तम्भेषु च क इव राजरम्भाणाम्

[उभौ सादरमाकर्णयतः; पुनर्नेपथ्ये]

अदभ्रजघनस्तनप्रभृतिमांसविस्फूर्जितप्रसक्तत्रिकटव्रणप्रतिपदज्ञया प्रज्ञया ।

स्त्रियस्त्रिगुणवीचिमद्गरलवीचिकाश्चिन्तयन्नसभ्यपरिपाटिकां पठति गाढमूढो जनः ॥ ५९ ॥

नारदः— सखे! श्रूयते किलायमायोधनाभिमुखहृदयाया विरक्तेरालापः ।

तुम्बुरुः— (सभयसंभ्रमम्) भगवन्! अतिपतति चासौ विरक्तिमपहस्तयितुकामः कामः। (क्षणमिव निर्वर्ण्य) अहह,

स्वामित्रमुपधात्रयप्रथितशुद्धिलोभात्मकं झटित्यलघुतुष्टिकुक्ष्यनलदग्धमित्याकुलः।
विरक्तिरणदेवताविपुलदृष्टिवैश्वानरं प्रविश्य मकरध्वजः पुनरनङ्गतामागतः॥ ६०॥

अपि च शृङ्गारोऽप्ययमनङ्गसमरनासीरयोधी सर्वतो भङ्गमनुभवन् अभङ्गुरमहिमशालिना विरक्तिवैभवेन विलयमधिगच्छति। इह च,

निःसंबोधमशेषतो वितनुते देवासुरान्तःपुरं कर्णेषु प्रचिनोति कामपि सुधां कामागमद्रोहिणाम्।
क्षिप्रक्षोभितचक्रवालशिखरिप्राकाररिङ्गत्टच्छृङ्गाघातनिरोधपिण्डितपटुश्शृङ्गारभङ्गारवः॥ ६१॥

नारदः— हन्त जुगुप्सनीयाः संप्रति योषितः संवृत्ताः।

तुम्बुरुः— उचितमेवैतत्।

महेन्द्रप्रतिनन्द्यानां वपुरप्सरसामपि। त्वगसृङ्मांसमेदोस्थिमज्जाशुक्लमयं न किम्॥ ६२॥

किं च, वर्ष्मेदं सप्तधातु त्रिविधमलमयं योनियुग्मप्रसूतं चातुर्विध्योपपन्नस्थिरचरविविधाहारसारात्मकं च।
इत्थं त्वेऽनन्तदोषाकर इति मुनिभिर्घोषिता योषिदाख्या मीमांस्या मांसरेतोरुधिरकफवसानिर्मिता चर्मभस्त्रा।

ततश्च, गर्हणीयबहुदोषगर्हिते योषितां वपुषि तोषितात्मनः।
नारकेऽप्यमितदुःखकारके रौरवे भवतु गौरवेण धीः॥ ६४॥

भगवन्! य एतावन्तं कालमत्यन्तबहुमतिपदम्, स एवेदानीमत्यन्तजुगुप्सनीयः संवृत्तः सर्वलोकमौलिधार्यसायकः सयूथो मन्मथः। (सनिर्वेदमिव निश्वस्य)

परिचरति तत्रासौ पार्श्ववर्ती वसन्तः किमपि मधुकरीभिर्गीयते नाम जैत्रम्।
तदपि मदन दैन्यं प्रापितस्त्वं नियत्या क इव कथय दैवं पौरुषेणोपरुन्ध्यात्॥ ६५॥

भगवन्! अभङ्गुरा खलु देवी नियतिः।

संभोगैकान्त्यवादी निरयभयकथाभङ्गसङ्गी निकामं शस्त्रच्छिन्नार्धदेहद्वयघटनभवद्दिव्यदांपत्यशिल्पः।
प्रख्यातातिक्रमोऽसौ परपुरुषवशैर्गोपकन्यासहस्रैरेकस्त्रैलोक्यवीरः स्मर इह मृदितः क्वावतिष्ठेत कोपः॥

नारदः— सखे! मा नाम सहसा कोपमेवमवमंस्थाः। अयं किल पुरस्ताल्लोभस्य कामस्य च विनिपातमसहमानः क्रोधस्समुत्पत्य विश्वलोकप्रथितकीर्तिं विवेकमास्कन्दितुमीहते। तथा हि,

क्षुदिन्धनवसुन्धराधरधुरन्धरः किं मृषा तृषारभसचूषणक्षपितपञ्चपाम्भोनिधिः।
हठत्रुटितहाटकाचलतटीबृहत्कुण्डलः प्रसर्पति रणाङ्गणं प्रथित एष कोपासुरः॥ ६७॥

तुम्बुरुः— (सभयसंभ्रमम्) अतिघोरचेष्टितः खल्वसावशेषविध्वंसनतर्षवानमर्षः। तथा हि,

अपि वैरवरूथिनीमशेषामपि शैलानपि सागरानपि क्ष्माम्।
ग्रसितुं प्रभवत्ययं प्रदीप्तः प्रथितः कोपतनूनपादनूनः॥ ६८॥

नारदः— सखे! पश्य पश्य।

जिघांसाजानिनाऽनेन स्थिरत्रसमिदं जगत्। वध्यघातकभावेन विभज्य विनियुज्यते ॥ ६९ ॥ अपि च,

करचरणनखरदन्तप्रभृतिकमपि जगति सहजमितरदपि। प्रतिघसुभटस्य विश्वं प्रहरणमथवा विहर्तुमुपकरणम्

अत्र पुनरसह्योत्थानममर्षमुपशमयितुमप्रधृष्योदयां क्षान्तिं पुरस्कृत्य निस्तरङ्गजलधिरिव निरूढधैर्यस्तिष्ठति विवेकः। इह च,

रुन्धानस्सिन्धुघोषप्रथनमनिभृतं क्रन्दयन्क्ष्माधरेन्द्रान् भिन्दानस्स्कन्धभेदान्सुरपथरथिनां शुष्मणस्सारथीनाम्

शुद्धालोकेन सद्य क्षयमुपगमितः क्षान्तिमन्दस्मितेन क्षुभ्यद्द्वैधात्रसौधध्वनिगुणितरवः कोऽपि कोपाट्टहासः ॥

अमी च, कुलशिखरिगरिष्ठाः क्षोणिधृत्यर्हकुंभाः कुलिशकठिनदन्ताः क्ष्वेलसङ्घातघोराः।

कतिचन रणरङ्गे कन्तुकीकृत्य मुक्ताः न जहति भयमस्मादन्तिमं दन्तिमल्लाः ॥ ७२ ॥

तुम्बुरुः— भगवन्! अपि विश्वमिदं दिधक्षतोऽस्य त्रिपुरारातिमुखेषु लब्धभूम्नः।

मदहस्तिघटावमर्दलीलां मशकामर्शनमात्रमित्यवैमि ॥ ७३ ॥

भगवन्! अयमसाविदानीममर्षस्य संप्रति संवर्तधाराधरगर्जितगम्भीरभैरवप्रसृतिस्त्रिभुवनमपि बधिरयति कुलगिरिकुहर-भरितप्रतिनिवृत्तः संहताकृतिः सिंहनादः। तदाकर्णनसमयसमुत्थितया निष्प्रतिक्षेपया क्षमया निरुध्यमानः स्तब्ध-वृत्तिरयं संदृश्यते कोपः। तथा हि,

अयमिह क्षमया दलितः क्षणात् प्रतिमुखोऽपि पराङ्मुखवद्द्रवन्।

स च न याति न तिष्ठति च ह्रिया भवति सप्रतिघः प्रतिघः परः ॥ ७४ ॥

(क्षणं निर्वर्ण्य) हन्त भगवन् पश्य पश्य! अपरावर्त्यपि कोपः पश्चादाकृष्टपाद इव भाति।

नारदः— (सान्तर्हासम्) क्वचिदतिसङ्कटविषये सुभटानां संमतोऽयमपसर्पः ॥ ७५ ॥

तुम्बुरुः— (सहर्षसंभ्रमम्)

यस्य त्रासनतर्जनप्रभृतयः क्रूरोद्धता वृत्तयः यस्योन्मेषनिमेषयोस्त्रिभुवनं निद्राति जागर्ति च।

आबध्यैनमवैधहिंसनमहासंरम्भसंभावितक्रीडोड्डामरबाहुदण्डलडहं क्रोधं निहन्ति क्षमा ॥ ७६ ॥

अपि च, गुरुवधमुखक्रूरक्रीडाकठोरपराक्रमः प्रथितमहितध्वंसो दक्षाध्वरप्रभृतिष्वसौ।

स्वयमिह सुखारातिः स्वर्गापवर्गविघातकः क्षणरुचिपदं क्षान्त्या गच्छत्यमर्षहुताशनः ॥ ७७ ॥

नारदः— सर्वगुणातिशायिनी खल्वियं क्षान्तिः। यत्र किंचिदपि स्वावष्टब्धं केनाप्यवधेन योजयति। तथा हि,

विबुधमहिते मेरावैरावणः करटी मुहुः कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम्।

भजतु च तटक्रीडां पीडाभिसन्धिरसौ दृढं न तु मलिनता नापि क्षोभः क्षमाभृति संभृतः ॥ ७८ ॥

तुम्बुरुः— भगवन् दुर्जयोऽसौ कोपः। कथं नाम विजितमिति विस्मयाविष्टं चेतः।

नारदः— न वयमिह विस्मयामहे। यतः

**न शापो नाभिचरणं न वह्निर्न विषं तथा । नास्त्राणि न च शस्त्राणि यथा तीक्ष्णतमा क्षमा ॥ ७९ ॥**

ततश्च, **अहार्येण कदाप्यन्यैरसंहार्येण केनचित् । तितिक्षाकवचेनैव सर्वं जयति संवृतः ॥ ८० ॥**

तथा हि, **प्रतिघोऽयमसह्यविस्फुलिङ्गैः प्रलयोदीर्णहुताशनप्रकाशः ।**

**अमृतोदधिसंप्लुतिप्रथिम्ना क्षमया क्षिप्रमभूदसावलक्ष्यः ॥ ८१ ॥**

(विचिन्त्य) कथमिह विवेकभूभृतः सांग्रामिकविहारशेषः संपत्स्यते । अथ वा,

**मदनक्रोधलोभानां निपाते मोहभूपतिः । योधयिष्यति यं कंचित् स्वयं वा योद्धुमर्हति ॥ ८२ ॥**

**तुम्बुरुः**— भगवन्! अलङ्घनीयस्वभावः खल्वभिनिवेशः । येन प्रत्यक्षितबलपराक्रमेऽपि विवेके प्रतिहतमनोरथस्यापि महामोहस्य पुनर्विजिगीषा विजृम्भते । श्रुतं किल महाभारते— "हते भीष्मे" इत्यादि । (अन्यतो निर्वर्ण्य)

**कामादिनिधने दृष्टे कैमुत्यमपरामृशन् । क इवासीदति क्षुद्रः कश्चिदेष रणाङ्गणम् ॥ ८३ ॥**

**नारदः**— सखे ! प्रख्यातनामा खल्वसावगणितपरहृदयशल्यः शल्य इव सन्नह्यति । तथा हि,

**अवधीरयिता महत्तराणामवलेपोऽयमयन्त्रितस्वभावः । परकीर्तिवधूनिराचिकीर्षासुभगंभावुकबाहुरुज्जिहीते ॥**

सर्वथा तावन्मोघोद्योग एव भविष्यत्ययमपि मोहसचिवः । तथा हि,

**दर्पस्येह दृढप्रतिष्ठितमदोदग्रैर्विवेकाग्रतो डिम्भक्षोभकडम्भरस्थपुटितारम्भैरलं सम्भ्रमैः ।**

**मृग्यं केसरिणो विधित्सितरणे रङ्कौ परं कौतुकं क्रीडाखण्डितचण्डवारणघटातन्त्रस्वतन्त्रश्रियः ॥**

**तुम्बुरुः**— (साश्चर्यम्) भगवन्! किमयमिदानीं मेघनाद इव तिरस्करिणीं विद्यामास्थितः, यदसाविदानीमेवास्माभिः दृष्टः, क्षणान्तरे न दृश्यते ।

**नारदः**— (सहर्षं विहस्य) तस्यैव मेघनादस्य लक्ष्मणेनेव परप्रयुक्ता खल्वियमस्य तिरस्करिणी ।

**अभिजनधनविद्यावृत्तदाक्ष्यादिरूपैः उपधिभिरयमेकोऽनेकधा जृम्भमाणः ।**

**पृथुमहिमविवेकप्रेक्षणादुत्पतन्त्या प्रसभमधिकदृष्ट्या प्रापितो वीरशय्याम् ॥ ८६ ॥**

**तुम्बुरुः**— (ससंभ्रमाद्भुतम्)

**कावैषा कलियुगताटकेव भीमा धिक्कष्टं कृतकलहेयमभ्यसूया ।**

**आसीदत्यभिपतति स्वयं विवेकं तामेतां द्यति मुदिता समग्रभूमा ॥ ८७ ॥**

**नारदः**— (सहर्षम्) दर्पनिधनमसहमानेयमसूयाराक्षसी देहिनीव भैमरथी रणमुखमागत्य दैवयोगेन दीर्घनिद्रामासादिता

**तुम्बुरुः**— अहो दुर्निरोधा खलु भगवती भवितव्यता ।

**आत्यन्तिकीमभिजनादिभिरप्रधृष्यां तृष्णादिभिः प्रियतमाभिरिहोपगूढाः ।**

**दर्पादयः क्षितितले दधति प्रसुप्तिं वीराः स्वयं विधिवशादुपशान्तवैराः ॥ ८८ ॥**

**नारदः**— सखे! न खल्विदमद्भुतम् यन्निरवधिकपौरुषाणामप्यनतिक्रमणीया नियतिरिति । एतस्यैव खल्वियमुदाहृतिः

इतरेतराभ्यधिकभीमविक्रमाः पुनरुच्यमानमधुकैटभादयः ।
प्रविशन्त्युदग्रविगलन्मदग्रहाः त इमे विपत्तिमिह मोहमन्त्रिणः ॥ ८९ ॥

(अन्यतोऽवलोक्य) अहो महदिदमापतितमिदानीमप्रतिद्वन्द्वं द्वन्द्वयुद्धम् । इह हि,

अतिबलेन विवेकमहीभृता निरवशेषितमन्त्रिगणः क्षणात् ।
अहह मोहमहीपतिराहवे सपदि राघवशत्रुरिवोत्थितः ॥ ९० ॥

अत्र चायमहितबलनिर्मूलनसमुन्मीलितसमरसंरम्भः स्वयमिह समायाति सुरगणसंस्तूयमानवैभवः सुमतिवल्लभः । अयं हि, मर्यादातीतवादद्विरदमृगपतिर्वक्रतर्काद्रिवज्रः प्रत्यग्वैमुख्यतूलप्रलयदिनमरुद्भ्रान्तिवीरुद्दवाग्निः । कामक्रोधाहिताक्ष्र्यः कलिकलुषकथाकालरात्रिप्रभातं मोहावश्यायभानुर्विहरति समिति व्यक्तवेगो विवेकः॥

तुम्बुरुः— (सहर्षाद्भुतम्) भगवन्! इदं पुनरिह महामोहस्य मौलिताडनम् । अत्र हि,

निरुद्धरिपुडम्बरो निगमघोषनिष्पादितप्रतिश्रुतिरनुद्रुतप्रलयसिन्धुधीरध्वनिः ।
त्रिवर्गपुटभेदनप्रथमकम्पकर्णेजपो विवेकसुभटाग्रतो विजयदुन्दुभिस्ताड्यते ॥ ९२ ॥

नारदः— सखे! नूनमिदानीमत्यासन्नो विवेकस्य मनोरथलाभः । अत्र हि,

दुराशादुर्मानच्छलनमदमात्सर्यकुहनापरीवादद्रोहप्रभृतिपरिवारस्तुतगतिः ।
मनीषासारथ्यप्रमुदितविवेकप्रतिमुखं महामोहः क्रुद्धः स्वयमयमुपायाति समरम् ॥ ९३ ॥

अपि च, प्रत्यासन्नं प्रतिभटमिह प्रत्युदेता विधत्ते गाढामर्षस्फुरणकुटिलान् कार्मुके दृष्टिपातान् ।
दूरोद्भूतस्वपरनियतिं दुर्मतिं प्रेक्षमाणो रागाभिख्यं दुरितजलधिं गाहते मोहवीरः ॥ ९४ ॥

तुम्बुरुः— (सभयसंभ्रमाद्भुतम्) भगवन्! अतिघोरवृत्तिरसौ रथयूथवीथिकापथेन रणाङ्गनमवतीर्णः ।
उद्भटकबन्धताण्डवमुन्मदभारुण्डतुण्डहृतमुण्डम् । रणभूमिमण्डलमसौ मण्डलमिह चरति मोहदण्डेशः ॥
अपिच पातालक्षिप्तसिन्धुः प्रशकलितकुलक्ष्माभृदुत्कीलभूमिर्निर्धूतादित्यचन्द्रद्युतिगणनिबिडध्वान्तनीरन्ध्रदिक्कः
वेधस्सौधप्रभेदी विघटितपवनस्कन्धपर्यस्ततारः प्रारब्धोऽसौ विवेकप्रतिरथिनि महानाहवे मोहवेगः ॥

नारदः— (सहर्षसंभ्रमम्) सखे! दिष्ट्या वर्धसे । पश्य पश्य ।

अप्रत्यूढचरः सुरासुरगणैरक्षोभितो राक्षसैरद्य प्रत्यवरुद्धवैरिसमरोत्सेके विवेकेश्वरे ।
स्वस्थप्रत्ययितव्यदोषमलिनस्वर्वासदुर्वासनामूलच्छेदविलीयमानमहिमा मोहस्य मोघस्स्यदः॥ ९७॥

अहह, विवेकाशनिवेगेन महामोहविषद्रुमः । पतितः क्ष्मातले दिष्ट्या द्वितीय इव कैटभः ॥ ९८ ॥

तुम्बुरुः— हन्त!

जागर्त्यद्भुतमुद्भटं यदधुना वीरव्रतैकव्रती विष्वग्वृत्तिविवेकदेवविशिखस्कन्धैरवस्कन्दितः ।
मोहः प्रापितमूर्छनो मुनिगणप्रद्विष्टदैत्यप्रियो धिक्कष्टश्रुतिघट्टितश्रुतिरसौ बुद्ध्वा पुनर्युध्यते ॥ ९९ ॥

नारदः— (सहर्षसंभ्रममुत्तरीयाजिनमुद्धून्वन्) अहह निपातितः पुनरसौ निष्प्रतिघवृत्तिना महामोहस्सुमतिवल्लभेन ।

जितं कार्तयुगैर्धर्मैर्जितं शमदमादिभिः । महता यद्विवेकेन महामोहः पराहतः ॥ १०० ॥

भवतु सब्रह्मता । भवतु सब्रह्मता । (सर्वतः परिक्रामति ।)

तुम्बुरुः— (सहर्षम्)

निखिलसुभटश्लाघारेखाविलङ्घनजाङ्घिको निरवधिबलो मोहः क्रीडन्ननुत्तरणे रणे ।

विविधनिगमग्रामस्थेयाद्विवेकमहीभृतो विपदमधुना वीरादस्मादिदंप्रथमां गतः ॥ १०१ ॥

अपि च, दिनकर इव दीव्यन् दृष्टशक्तिस्तथाऽसौ मुनिपरिषदभीष्टे मोहभङ्गे विवेकः ।

समतनुत यथैकः साधुपीडोद्यतानां रजनिचरपतीनां राघवो दीर्घनिद्राम् ॥ १०२ ॥

(नेपथ्ये) हा महाराअ, हा दुम्मइजीविएसर, हा णिहिळजणमोहण, कहिं गओसि ? बंदिग्गाहं गहिआहिं णूणं संभरिअगुरुवेराहिं बंदिग्गाहं गहीदो मम णाहो ताहिं तिअसमहिळाहिं । [हा महाराज! हा दुर्मतिजीवितेश्वर! हा निखिलजनमोहन ! कुत्र गतोऽसि ? बन्दिग्राहं गृहीताभिर्नूनं संभृतगुरुवैराभिर्बन्दिग्राहं गृहीतो मम नाथस्ताभिस्त्रिदशमहिलाभिः ।

नारदः— सखे ! हन्त हन्त ! प्रतिबुद्धा दुर्मतिस्सोरस्ताडनं स्वयं विलपति ।

(पुनर्नेपथ्ये) बाहिअजणेहिं सत्थं दीहमग्गं तुए पक्कंतेण दीणदसासंतत्तो दइअजणो णाह किंति संचत्तो ? [बाह्यजनैस्सार्धं दीर्घमार्गं त्वया प्रक्रान्तेन दीनदशासंतप्तो दयितजनो नाथ किमिति संत्यक्तः ।]

नारदः— सखे ! अश्रुतपूर्वमिदमाकर्णितम् ।

तुम्बुरुः— भगवन् ! अयं खलु सुरासुरसमरनाटकसूत्रधारस्य भगवतस्सूत्ररचनापरिपाकः ।

नारदः—

हतजीवजीवितेशां विषादमूर्च्छादिलुप्तनिश्वासाम् । तृष्णादयस्सकुल्या दुर्मतिमभितो निपत्य विलपन्ति ॥

(निष्प्रतिघातः) दुष्परिहरः खल्वसौ दारुणो नियतिपरिणामः । यतः,

आकर्ण्य चामरभृताममराङ्गनानां मञ्जूनि तानि मणिकङ्कणशिञ्जितानि ।

शृण्वन्नसौ विलपितानि निजप्रियाणां मोहः प्रयात्यपुनरुन्मिषिताय निद्राम् ॥ १०४ ॥

तुम्बुरुः— भगवन् ! महाप्राणोऽसावद्यापि निद्राति मूर्छति निमिषति वेति संशयडोलामधिरूढोऽस्मि ।

नारदः— भवतु दृष्टं तावदेतावत् । शिष्टमपि यथागमं द्रक्ष्यावः । अयं पुनरत्र मधुकैटभादिमहासुरनिरसनप्रकाशितप्रभावो महापुरुष इव विजितमहामोहो विबुधपतिभिरभिष्टूयते सुमतिपतिः ।

तुम्बुरुः— भगवन् ! इदमस्य विक्रमप्रीणितवियच्चरगणप्रयुक्तं वीराभिषेकमङ्गलम् । यदेतत्,

अमुष्य दृढविक्रमद्रुतनिपीतमोहाम्बुधेर्विवेकनृपतेरसौ विनयसंनते मूर्धनि ।

परप्रणिधिपक्त्रिमस्थिरसुखापवादोद्गतिप्रतिप्रसवसौरभा पतति पुष्पवृष्टिर्दिवः ॥ १०५ ॥

नारदः— सखे! संप्रति चिरप्रार्थितमहासमरसंदर्शनेन सन्तोषितं चक्षुः। तदिह भवता परिविवाहयिषितहर्षप्रकर्षेण विश्वेषु भुवनेषु विवेकविजयो विश्रावयितव्यः। अह तु प्रशमितप्रतिपक्षं स्ववशीकृतहृषीकगणं सुमतिसहायं महाराजं समयोपनतसार्वभौमपदाभिषेकं सौस्नातिकवृत्त्या संभाव्य समाधिसप्ततन्तुसाहाय्यकेन संतोषयितुमात्मानमिच्छामि।

[इति निष्क्रान्तौ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके अष्टमोऽङ्कः।

## नवमोऽङ्कः

(नेपथ्ये) मोहाकूपारकुक्षिंभरिरयमनघो मुक्तिवीरुत्प्ररोहः प्रज्ञासौधैकदीपः प्रतिसमयकथातूलवातूलवेगः।
दुःखद्वारोपरोधस्थिरतरपरिघो दूरतः प्रत्युपैति क्रूरक्रोधाशुशुक्षण्युपशमनसुधासारसेको विवेकः॥

चूलिका।

[ततः प्रविशति राजा व्यवसायश्च।]

राजा— (सहर्षबहुमानम्) सेनापते! अद्य खलु मया त्वत्पुरस्कारेण निर्जितः सर्वदोषप्रसूतिः मधुकैटभादिभिर्महासुरैः महद्भिरपि देवैः दुर्जयो महामोहः।

व्यवसायः— देव! वयं हि भवतो वाहनादिवदुपकरणमात्रम्, प्राधान्यं तु सर्वत्र भवत एव। अनुस्मरतश्च ते तादृशं समरविहारमद्यापि विस्मयाविद्धं मे मानसम्। तदा खलु,

न भ्रूरभज्यत न च भ्रुकुटी निबद्धा नैवारुणं प्रकृतितो नयनाञ्चलं ते।
कुत्राभवन्निति न वेद्मि भवत्प्रतीपाः चण्डद्युतावुदयतीव तमःप्रबन्धाः॥ २॥

किं च, त्रिगुणात्मिकया तिरस्करिण्या स्थगयामास शुभं य एष मोहः।
स बभूव तदा त्वदाभिमुख्ये दिवसारोपितदीपनिष्प्रकाशः॥ ३॥

अद्य तु, लम्बालकैरविरलक्षरदश्रुपूरैः म्लानैरपत्रतिलकैर्वदनारविन्दैः।
शंसन्ति शौर्यविभवं भुजशालिनस्ते मोहावरोधसुदृशो मुषिताङ्गरागाः॥ ४॥

विवेकः— (सान्तस्तोषम्) स्वयंप्रवृत्तस्वतन्त्रकृत्ये किं परतन्त्रानस्मान् प्रशंससि? तथा हि,

वायुर्दोधूयते यद्यदयमुडुगणो बंभ्रमीति द्रुतं खे तेजो जाज्वल्यते यद्यदपि न जलधिर्माधवीं दोधवीति।
भूर्यद्वा बोभवीति स्थिरचरधृतये तच्च तादृक्च सर्वं स्वायत्ताशेषसत्तास्थितियतनपरब्रह्मलीलोर्मिचक्रम्॥

किं च, यथाधिकरणं प्रभुर्यजनदानहोमार्चनाभरन्यसनभावनाप्रभृतिभिस्समाराधितः।
फलं दिशति देहिनामिति हि संप्रदायस्थितिः श्रुतिस्मृतिगुरूक्तिभिर्नयवतीभिराभाति नः॥ ६॥

ततश्च, प्रभुणैव सर्वजगदुद्भवस्थितिप्रलयप्रवाहपरिरब्धकेलिना।
अहमस्त्रमन्त्रपरिमृष्टदर्भवद्गमितः स्ववध्यनिधने निमित्तताम्॥ ७॥

व्यवसायः— देव ! विक्रमादपि गरीयांस्तवासौ विनयगरिमा । (साद्भुतरोमाञ्चम्) देव !

दर्पोदग्रनियुद्धताम्रकभुजानिर्घातपातोदितस्फारासृक्परिवाहगद्गदरवो मोहः पतन्नग्रतः ।

अद्यापि स्मृतिमभ्युपैति मथनक्षोभक्षरद्वैरिकस्रोतःसंप्लुतमन्दरक्षितिधरक्षेपक्षणाक्षेपकः ॥ ८ ॥

इह पुनरिदानीं विश्वविख्यातवीरायितस्य ते विभूतिसमुचितं किमपि मङ्गलमाचरणीयम् । अद्य तु,

युक्तायुक्तवितर्कदक्षमतिभिर्युष्मद्भटैरुद्भटैर्निर्धूताखिलशल्यकण्टकततिर्नैश्रेयसी पद्धतिः ।

मोहध्वंसधुरन्धरस्य तव तु त्र्यन्तपीठे महत्यासीदत्यभिषेकमङ्गलविधेरभ्यर्हितोऽयं क्षणः ॥ ९ ॥

राजा— सेनापते ! मैवं वादीः । अनिष्पन्नसमाधौ पुरुषे कथमहमभिषेक्तव्यः । तथा हि,

करणहरिणश्रेणीदूरापकर्षणदारुणां कलुषतपनस्फायन्मायानिदाघविजृम्भिताम् ।

विषमविषयास्वादोत्कण्ठामयीं मृगतृष्णिकां मुनिरतिपतन्मुक्तिद्वारं गवेषयते मुहुः ॥ १० ॥

प्रक्रान्तमाला खल्विदानीं परब्रह्मोपलब्धिः । परिनिष्पत्तिस्तु दुर्लभेति परिपश्यामि । तथा हि,

कथमद्य निरालम्बं कर्मशृङ्खलितः पुमान् । आरोहतु दुरारोहं समाधिगगनस्थलम् ॥ ११ ॥

(विचिन्त्य) अस्त्वेवं तावत्—

सत्त्वोदग्रसमग्रनन्दथुभुवस्सालम्बनध्यानतः शुद्धे चेतसि यद्यपि प्रभुरिहादृश्यो दरीदृश्यते ।

प्रत्यग्वस्तुविशेष्यवर्ष्मणि पुनस्तस्मिन् दृढप्रेक्षिते नाथस्सोऽहमहं स इत्यपि गिरो नाध्यासमध्यासताम् ॥

व्यवसायः— देव ! अद्यापि कथमध्यासः । पुरुषः खल्विदानीं स्वशरीरे स्वात्मबुद्धिं विहाय स्वात्मनि परशरीरत्वबुद्धिमनुरुन्धे ।

राजा— हन्त ! सिद्धप्रायमपि सर्वं सान्तश्शल्यमिवाद्य संदृश्यते । तथा हि,

तत्त्वज्ञाने विशुद्धे शमयति दुरितारम्भमात्मावधाने व्यक्ताकृष्टेतराक्षे विरमति च मनोवानरे चापलात्स्वात् ।

भस्मच्छन्नाग्निकल्पः परपरिभवनाद्यागमे दीप्यमानः श्लक्ष्णस्संस्कारसारश्शिथिलयति शनैरुज्जिहानं समाधिम्

अपि च, क्रमपक्त्रिमकर्मजागरूकस्थिरसंस्कारनिरुध्यमानचित्तः ।

सरति प्रणिधातुमेकतानो बहिरर्थान्विवशः पितामहोऽपि ॥ १४ ॥

तथाऽपि स्वतन्त्रानुग्रहदत्तहस्तेन मया कदाचिदपि न स्खलितव्यम् । संभावितस्खलितं च सिषाधयिषितम् ।

बहुरपि लघुः प्रत्यक्चि(त्ता)न्ता बहिर्विषयाटवीविहृतिचटुलं चेतो रोद्धुं कथं प्रभविष्यति ।

अनिभृततटक्रीडोत्कण्ठाविजृम्भितसंभ्रमे कलभचरणे लूतातन्तुः कथं निगलायते ॥ १५ ॥

व्यवसायः— महाराज ! किमिह पुनः प्रत्यूहशङ्कया ।

स्वयमिह विपदो वा स्वप्नवत्संपदो वा नियतिविपरिवृत्तौ नेमिवृत्त्या भवन्त्याम् ।

शतमपि विशयानां शस्त्रवच्छातयन्ती नयनिगमसमीची नव्यतिस्ते मतिस्ते ॥ १६ ॥

राजा— सेनापते! सिद्धमपि सर्वं साध्यशेषावमर्शनादसत्कल्पमिवाभाति। अद्य हि,

**अपि निर्मुक्तजीवानां कामादीनां बलीयसाम्। अविद्या कर्मसंज्ञा तु मृतसंजीविनी स्थिता ॥ १७ ॥**

व्यवसायः— महाराज! त्वत्प्रसादादेषाऽपि न स्थास्यति।

राजा— (सानुशयम्) अहितनिग्रहवन्या हन्त संतन्यमाना कथमियमपचेतुं कल्पकोट्याऽपि शक्या।

व्यवसायः— इत्थमेव—दहति निरवशेषं देवसंभूतिरेनां युगपदिह समिद्धो योगकल्पान्तवह्निः ॥ १८ ॥

न च तदुत्पत्तिरपि कथं भवित्रीति शङ्कनीयम्। यत ईदृगवस्थः पुरुषः—

**सत्कारकालकूटं तरुणीकुणपं सभाभुजङ्गीं च। परिहरति राजधानीकुम्भीपाकं च गुप्तमाहात्म्यः ॥ १९ ॥**

अपि च, **मुकुन्दे निक्षिप्य स्वभरमनघो मुक्तवदसौ स्वतन्त्राज्ञासिद्धां स्वयमविदितस्वामिहृदयः।**

**परित्यागे सद्यः स्वपरविविधानर्थजननादलङ्घ्यामा गोक्षादनुसरति शास्त्रीयसरणिम् ॥ २० ॥**

ततश्च, **अनघमतिरनुज्झन्नाश्रमादिव्यवस्थां हरिचरणसपर्यास्वादतुष्टो मनीषी।**

**अवतरति विरक्त्या गाढमालिङ्गितोऽसौ मुषितनिखिलखेदे मुक्तिघण्टापथेऽस्मिन् ॥ २२ ॥**

इदमपि यथावत्प्रतिसन्धातव्यम्।

**संसाराख्यज्वलनमसितीभूतसंजीवनार्हा धर्मोत्पत्तिप्रथितविभवा धार्यमाणा गिरीशैः।**

**गम्भीरत्वादकलुषगतिर्गम्यतीर्थोपपन्ना गङ्गेवान्या पुरुषजलधिं गाहते विष्णुभक्तिः ॥ २२ ॥**

अपि च, शान्तमेव रसमेकं शरणयतो मनीषिणः पुनरपि संप्रति रसान्तराण्यपि पुष्णातीव विष्णुभक्तिः।

तथा हि, **जुगुप्सां देहादौ विषयरसभोगेषु हसनं प्रकोपं निद्रादौ परपरुषवादादिषु भयम्।**

**शुचं योषालासे फलपरिणतौ विस्मयमपि प्रयच्छत्युत्साहं दुरितविरतौ ब्रह्मणि रतिम् ॥**

न चात्र महाराजेन संस्कार(शेषितस्य)शेषतस्समाधिप्रत्यूहः शङ्कनीयः। यतः,

**पृथुकतरुणप्रायावस्थाव्यवस्थितसंचया बहुलनिगमप्रत्यादिष्टा बहिर्मुखवासना।**

**पटुतरदृढप्रत्याहारक्रियापरिपक्त्रिमा ज्वलति महति ज्योतिष्यन्तर्लयं प्रतिपत्स्यते ॥ २४ ॥**

अद्य च, **प्रत्यक्त्वसतत्त्ववेदनसुखप्रत्यूहसिद्धिप्रदैः क्षुद्रैः केवलकालयापनपरैरन्यैरनाकृष्टधीः।**

**मुक्तिद्वारकवाटिकाविघटनध्वानप्रतिश्रुन्निभैरध्यक्षीकृतसत्पथैर्मुनिरसौ मन्त्रैर्धृतिं विन्दति ॥ २५ ॥**

राजा— सेनापते! संप्रधारयताऽपि त्वदुक्तं त्वराधिक्यात्प्रचलितेनेव मया नानुभूयते। यावदिह पुरुषस्य निःश्रेयसोपायमविकलं न निष्पादयामि, यावद्वा प्रियाप्रियेषु सुकृतदुष्कृते न संक्रमयामि, न तावन्निद्रामाद्रिये। अद्य तु,

**कामातङ्कमतीत्य कोपदहनं निर्वाप्य चित्तस्पृहावेतालीं व्यवधूय बान्धवकथागर्तं समुत्तीर्य च।**

**सङ्गोत्तंसितवासनासहचरस्संसारकाराकुटीनिष्क्रान्तिक्रमपादुकां तनुमनुद्विग्नो मुनिः क्षाम्यति ॥**

व्यवसायः— महाराज! मैवमाशङ्केथाः।

स्वापोद्बोधव्यतिकरनिभे भोगमोक्षान्तराले कालं कंचिज्जगति विधिना केनचित्स्थाप्यमानाः ।
तत्त्वोपायप्रभृतिविषये स्वामिदत्तां स्वनिष्ठां शेषां कृत्वा शिरसि कृतिनः शेषमायुर्नयन्ति ॥ २७ ॥

ततश्च, सिद्धप्रायसमीहितस्य वितथोदर्को वितर्कः पुनः स्थूलाभ्यूहविसंस्थुलस्थितिमतामत्के चमत्कारिणः ।
दूरीकृत्य बलात्त्वया रिपुचमूदुर्वारदर्वीकरान् किंचिन्न्यूनमनोरथेन कृतिना किं नाम संचिन्त्यते ॥

राजा— (विचिन्त्य) अस्तु तावदेवम्—

विमुक्तिपथदेशिकैर्वितथवृत्तिवैदेशिकैर्विमृष्टशुकशौनकप्रभृतिभाषितैरुज्झितम् ।
भिषज्यति भवं प्रभौ पितरि शेषिणि श्रीपतावपथ्यविनिवर्तकं किमपि भद्रमभ्यर्थये ॥ २९ ॥

अद्य च, जननविलयवृत्त्या जाङ्घिकस्यास्य जन्तोः समयमवमृशन् नस्तिष्ठति श्रीसहायः ।
प्रभुरयमनुकम्पानिघ्ननिर्विघ्नलीलः प्रजनयतु समाधिं स्वात्मनैव स्वल(क्ष्य)क्षम् ॥ ३० ॥

तद्वयमत्यासन्नेन महोदयेन पुरुषमभिनन्दयितुं प्रतिष्ठेमहि । (नूपुररवमाकर्ण्य) का पुनरिहेदानीं चरणकमलकलहंसायमानमणिनूपुररवेणामृतमिव शृण्वतां कर्णेष्वभिवर्षति ?

(नेपथ्ये) भट्टिणि ! दिट्ठिआ वड्ढसि । मोहं जेऊण पडिणिवुत्तो महाराओ । ता इदो इदो भट्टिणी । [भर्त्रि ! दिष्ट्या वर्धसे । मोहं जित्वा प्रतिनिवृत्तो महाराजः । तदित इतो भर्त्री ।

राजा— (कर्णं दत्वा) सेनापते ! तदिदं प्रणिधानसिद्ध्या पुरुषमभिनन्दयितुं प्रतिष्ठमानानः प्रथमोपस्थितं मङ्गलम् । यदसावभिमुखमायाति मङ्गलदेवतेव महागुणा देवी ।

[ततः प्रविशति सुमतिः चेटी च ।]

चेटी— भट्टिणि ! एसो महाराओ सेणावइणा सह इदो भट्टिणीए आअमणं पडिवाळअंतो चिट्ठइ । ता तुरिअं एव्व उवसप्पदु भट्टिणी । [भर्त्रि ! एष महाराजस्सेनापतिना सह इतो भर्त्र्या आगमनं प्रतिपालयन् तिष्ठति । तस्मात् त्वरितमुपसर्पतु भर्त्री ।]

सुमतिः— (उपसृत्य) जेदु महाराओ ।

गअणंमि अच्चराणं जएण तुंहाण जणिअतोसाणम् । वीणा मे पिअमहुरं पहरिसगीअं सुणावेइ ॥

[जयतु महाराजः ।

गगनेऽप्सरसां जयेन युष्माकं जनिततोषाणाम् । वीणा मे प्रियमधुरं प्रहर्षगीतं श्रावयति ॥]

राजा— देवि ! जितं मया, यस्य भवत्या जयशब्दः प्रयुज्यते ।

व्यवसायः— देवि ! किमत्राश्चर्यम् , यत् त्वत्प्रियेण जितं जेष्यते चेति? कस्तावदतः परं निस्तार इति तु निर्धारणीयम् ।

सुमतिः— सेणावइ ! कज्जसेसणिव्वहणम्मि णिव्वूढसमरकज्जो महाराओ एव्व पमाणम् । [सेनापते ! कार्यशेषनिर्वहणे निर्व्यूढसमरकार्यो महाराज एव प्रमाणम् ।

राजा— देवि ! मैवं मय्येव भारमारोपयेथाः । अस्ति खलु सर्वधुरीणः (कश्चित्) सर्वजगदन्तर्यामी पुरुषः । तथा हि,

**आधेयत्वप्रभृतिनियमैरादिकर्तुः शरीरं सत्तास्थेमप्रयतनफलेष्वेतदायत्तमेतत् ।**

**विश्वं पश्यन्निति भगवति व्यापकादर्शदृष्टे गम्भीराणामकृतकगिरां गाहते चित्तवृत्तिम् ॥ ३२ ॥**

व्यवसायः— एतदेव तत्त्वम् । तथाऽपि तन्निबन्धनं किंचिदहमध्यवस्यामि । कर्मनिगलयन्त्रितस्य हि पुरुषस्य कालक्षेपरहितकल्याणनिर्वहणाय कश्चित्समाधिकदरिद्रः समाधिराधातव्यः । तदुपसंपत्तये चासौ समयनियतसाधिष्ठसूक्ष्मसन्मन्त्ररहस्यवेदिना पुनरपि दिव्येन केनचिद्देशिकेन दत्तदृष्टिर्भावयितव्यः ।

राजा— एतदेव ममापि हृदये वर्तते । संपत्तिस्तु परस्मिन्नेव समायतते ।

सुमतिः— (अग्रतोऽवलोक्य) अय्यउत्त ! अअण्डचन्दोदयो विअ अइविशदो कोवि पआसो अग्गदो दीसइ । [आर्यपुत्र ! अखण्डचन्द्रोदय इवातिविशदः कोऽपि प्रकाशोऽग्रतो दृश्यते ।]

राजा— सेनापते ! किमिदमैन्द्रजालिकमिव किमप्यतर्कितोपस्थितमनिर्धारितकारणममृतपारावारपूरपर्यायप्रसरमाप्लावितदशदिशावकाशमवदातमनोहरमदृष्टपूर्वं धाम ।

व्यवसायः— नूनं नारदेन भगवता समागतेन भवितव्यम् । न ह्यन्यस्य कस्यचिदास्थितश्वेताद्वैतमेतादृशं तेजः ।

(नेपथ्ये) **अधराहितचारुवंशनालाः मकुटालम्बिमयूरपिञ्छमालाः ।**

**हरिनीलशिलाविभङ्गनी(शी)लाः प्रतिभास्सन्तु ममान्तिमप्रयाणे ॥ ३३ ॥**

राजा— अहो नु खलु भगवतो महामुनेः प्रपञ्चितपरमपुरुषभावनाविशेषा विपञ्चीनिनादकर्बुरा विश्रमगीतिः ।

सुमतिः— अय्यउत्त ! एदेण खु आअदेण इसिणा तुम्ह जाव संवाओ होज्ज । अहं दाव सहीअणसहिदा सळ्ळवंती तव समीहिदे तुरम्मि । [आर्यपुत्र ! एतेन खल्वागतेन ऋषिणा तव यावत् संवादो भवेत् ; अहं तावत् सखीजनसहिता संलपन्ती तव समीहिते त्वरे । [इति निष्कान्ता ।

[ततः प्रविशति नारदः ।]

नारदः— अहो नु खलु महाराजोऽयमनादिसंसारसागरनिमग्नं पुरुषमाध्यात्मिकविज्ञानगोतमारोप्य बहुविधबाह्यकुदृष्टिजलजन्तुभिरनुपप्लुतेन सुपथा समाधिपारसंनिकर्षमानीय (सान्निध्यविशेषे)साध्यशेषे संत्वरमाणस्तिष्ठति । अद्य किल,

**सुमतिबहुमतेन स्वात्मना सत्त्वधाम्ना बहिरबहिरुदीर्णे वारिते वैरिवर्गे ।**

**जनयति पुरुषस्य ज्यायसीं चित्तवृत्तिं समविषमविभेदी सार्वभौमो विवेकः ॥ ३४ ॥**

ततश्च, **तितिक्षुर्द्वन्द्वानि द्रुतमतिरयत्नोपनतभुक्परित्याज्यत्यागी भ्रमर इव सारग्रहरुचिः ।**

**कृतज्ञः प्राप्तव्ये नियतधृतिरेकान्तरसिको मुमुक्षुस्संधत्ते मुनिरनिभृतं ब्रह्मणि मनः ॥ ३५ ॥**

राजा— (त्वरितमुपसृत्य) भगवन् ! अद्य खलु धन्या वयमनुगृहीताः स्मः ।

**अयमहमभिवादये भवन्तं (विविध)सकलसुरासुरबृन्दवन्दनीयम् ।**

**विधिवशपरिभूतमोहपक्षो विनयपरिष्कृतसंनतिर्विवेकः ॥ ३६ ॥**

नारदः— आयुष्मन्! अप्रतिहतमनोरथः पुरुषमपवर्गे स्थापयेथाः। अवधूतमहामोहेन भवता नूनमन्तरितोऽयमन्तिमयुगारम्भः। किं तु

वीरश्रीरतिवेलविक्रमभवद्दोश्शृङ्गनिश्शृङ्खलक्रीडादत्तकृतार्थतापरवती न त्वत्परं प्रेक्षते।
अद्यत्वे पुनरद्भुतप्रणयिनी दृष्टिस्त्वया पात्यतामन्तर्द्रष्टुमनन्यदृष्टमनघं त्यक्तावधिं शेवधिम्॥ ३७॥

राजा— भगवन्! किमस्ति कश्चिच्छत्रुशेषः, यतोऽस्माभिस्सावधानैर्भवितव्यम्?

नारदः— न कश्चिदस्ति। तथाऽपि नीतिप्रधानेन भवता नित्यं विमृश्यते। अद्य तु,

समग्रबलयोगेन समरे पातितास्त्वया। कामक्रोधादयो वीराः स्वर्गस्त्रीभिः स्वयंवृताः॥ ३८॥

किंच, तत्त्वबोधजनके तत्राहवे मोहवीरविजयेन मोहिताः। अप्रविष्टसमराः प्रदुद्रुवुर्हर्षशोकभयचापलादयः॥

तथाऽपि किंचिदिह चिन्तनीयम्। इह हि,

त्रैगुण्याम्भोधिवेलावनतृणविषयग्रासदुर्वासनोद्यद्धोगैदंपर्यपर्याकुलितमनुयुगोत्कण्ठितोदग्रवृत्तिम्।
भूयो भूयः स्वचक्रे भ्रमयति नृपशुं गाढबन्धोपरुद्धं कालोऽसौ कर्ममालाघटितभवघटीयन्त्रतन्त्रस्वतन्त्रः॥

राजा— अत एव खल्वहमनेहश्चक्रभ्रमणादह्नाय बहिर्भावयितुमभिवाञ्छामि। तथा हि,

कालावर्तान् प्रकृतिविकृतीः कामभोगेषु दोषान् ज्वाला(व)गतप्रतिमदुरितोदर्कदुःखानुभूतिम्।
याथातथ्यं स्वपरनियतं यच्च दिव्यं पदं तत् काराकल्पं वपुरपि विदन् कस्तितिक्षेत बन्धम्॥४९॥

अत्र तु भगवता निस्समाभ्यधिकनिवृत्तिधर्मात्मना निपुणमसन्मनीषिते साहायकमाचरणीयम्। निजदुरितनिदाघनिष्टसजन्तुसंजीविनी खलु भव्यवृत्तीनां भवादृशां वागमृतवृष्टिः।

लुप्तदृष्टिभिरलब्धदेशिकैर्लोकवेदपदवी दुरत्यया। तत्प्रसीद भगवन् मदीक्षितं पुण्डरीकमिव पाहि मन्त्रतः॥

व्यवसायः— स्वधर्म एव भगवता श्रुतिशिरसि गीतः सूचितोऽसौ देवेन।

नारदः— अस्मदभिमतमेव समादिष्टं महाराजेन। यतिष्ये चाहं (यथासारम्) यथावसरम्।

अधिकमिह मुमुक्षोरागमग्राह्यवर्गात् स्वयमिह गुरुभक्त्या दर्शितं स्वानुभूतौ।
प्रथयति मयि सौम्य त्वन्निदेशेन (लग्ने) मन्ये सपदि भवति चित्ते गाढलग्नस्समाधिः॥ ४३॥

तदिह यदभ्यर्थिता वयं भवद्भ्यां किमपि करणीयम्, तत्साधयितुमितस्साधयामः। [इति सहर्षनृत्तगत्या निष्क्रान्तः।

राजा— सेनापते! संप्रति सिद्धप्रायं समाधिमुत्पश्यामि। अस्ति (किंचित्) तावत्।

षडङ्गमथवाऽष्टाङ्गं समाधिमविरोत्स्यतः। अवलम्बनमक्षुद्रा दयैका दानवद्रुहः॥ ४४॥

तयैव गाढावलम्बितोऽसौ पुरुष इदानीमालक्ष्यते। तथा हि,

विषयमदिरामुग्धैस्त्यक्तस्स एष पृथग्जनैः क्वचन समये यत्रैकाग्र्यं क्वचिच्च तदास्पदे।
निभृतकरणग्रामस्तृप्यन्निरुद्धमरुद्गणः परमिह परे धाम्नि प्रत्यङ्मुखः प्रतितिष्ठति॥ ४५॥

अपि च, **पुलकमुकुलोत्तुङ्गैरङ्गैरुदश्रुभिरीक्षणैरयमनुभवत्यन्तर्दृष्टिस्समाधिरसं पुमान् ।**

**ध्रुवमिह महानन्दब्रह्मोपलम्भनलक्षणे महति विभवे निष्प्रत्यूहा मनोरथपद्धतिः ॥ ४६ ॥**

व्यवसायः— देव! अहमप्येवमवगच्छामि ।

**तृणक्षोदं क्षेप्तुं प्रलयपवनो न प्रभवति क्षमस्तन्निर्दग्धुं यदनभिमतौ कालदहनः ।**

**तदर्वाचस्सर्वानजहदवधिद्वन्द्वनियमान् विदन्नासौ तृप्यत्यथ च न विषादे निपतति ॥ ४७ ॥**

अपि च, **तुलायन्त्रोदन्तक्रमघटितनिम्नोन्नतिभृतौ गुणौ मृद्रक्रूरौ युगपदधरीकृत्य मुदितः ।**

**मुनिर्मुक्तिद्वारं मुरमथनधीसन्ततिसुधानिधिप्रादुर्भावं भजति पुरुषः सत्त्वमनघम् ॥ ४८ ॥**

तदहं निष्पन्नकल्पमेवास्य समाधिमभिमन्ये । अस्य च,

**स्वफलेन तुलारूढः समाधिर्मुक्तिसाधकः । न्यूनाधिकसमत्वेषु विकल्पायैव कल्पते ॥ ४९ ॥**

राजा— सेनापते! अपावृतार्धमहमिह मुक्तिद्वारमभिमन्ये । अद्य पुनरत्यासन्नमनोरथैरस्माभिरवहितैरास्थेयम् ।

**अविकलबहुमत्या सेवितोऽहं सुमत्या नियतिमनतिलङ्घ्यां निर्ममः सान्त्वयामि ।**

**त्वरयितुमिह देवीं त्वन्मते विष्णुभक्तिं गणयितुमपि सिद्धिं गच्छ सेनापते! त्वम् ॥ ५० ॥**

व्यवसायः— यदादिशति देवः । [इति निष्क्रान्तः ।

राजा— (पुरस्तादवलोक्य) सुमतिनिकेतनमेतत् (स्वयंप्रभमासीदामि) स्वयमासीदति । (सहर्षबहुमानम्)

**वलदर्शनमण्टपं श्रुतीनां बहुभिर्भावितवैभवं प्रमाणैः । अवधूतरजस्तमस्कमेतत्सुमतेस्सत्त्वमयं विभाति सौधम् ॥**

(विलोक्य) कासाविह विशुद्धसुधासन्दोहसौम्यस्वभावा श्वेतद्वीपदेवतेव संदृश्यते । (किंचिदुपसृत्य) प्रत्यभिजानाम्येनाम् । परिणतिविशेषादसावन्येव भाति ।

**इयमखिलपुमर्थप्रार्थनाकल्पवल्ली सितमतिभिरनन्यैः सेविता सिद्धवृन्दैः ।**

**द्युतिभिरविरलाभिर्द्योतयन्ती दिगन्तान् विशति सुमतिसौधं विष्णुभक्तिर्विशुद्धम् ॥ ५२ ॥**

तदहमप्यत्र प्रविश्य यावत्पुरुषं कृतकृत्यं कृतार्थं च निर्धारयामि, तावदवहितः सहधर्मचारिण्या देव्या सुमत्या सह नैश्रेयसीं नियतिमास्थाय निवत्स्यामि । [इति सविमर्शं निष्क्रान्तः ।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके नवमोऽङ्कः ।

---

## दशमोऽङ्कः

---

[ ततः प्रविशति विष्णुभक्तिः । ]

विष्णुभक्तिः— (आलम्बनविशेषाधीनमात्मनो वैभवं निर्वर्ण्य)

**अहं वैकुण्ठदास्यैकलास्यलीलाविनोदिनी । विश्वकिल्बिषसंहारविभ्रमारभटी नटी ॥ १ ॥**

किं च, अम्बा मे पुरुषस्य बुद्धिरनघा तातस्स धर्मोत्तरः संतुष्टिस्सहजा क्षमा प्रियसखी सद्वृत्तिराज्ञाकरी ।
त्वय्येव स्वयमसि विश्ववृजिनप्रध्वंसनं क्रीडितं साऽहं प्राणिमि विष्णुभक्तिरचला संतिष्ठते संसृतिः ॥

अपि च प्रत्यक्षितपरावरतत्त्वैर्महर्षिभिर्भगवतैव च गीतं परमार्थभूतमन्यमप्यर्थमनुकथयामि ।

निरुध्य तरसा मरुत्करणमण्डलीं कुण्डलीं विचिन्त्य विगणय्य वा धमनिधातुमर्मादिकम् ।
किमत्र निगमत्रयस्थितिमताऽपि वा लभ्यते मयि स्थितिरवस्थिता यदि किमुच्यते मुच्यते ॥३॥

यश्चासौ निवृत्तिधर्मकाष्ठारूपो नैश्रेयसो योग उच्यते, सोऽपि मदनु(रो)वेधादेव महतीं सिद्धिमापादयति । अद्य च,

मुमुक्षुत्वे सिद्धे मुषितमतिमोहस्य मुरभित्समाधिः संरोहन्नुपहरति सर्वाघविरतिम् ।
परस्तादास्थेयं यदिह विदुषाऽनिष्टजनुषा फलार्थं तत् किं वा फलमिति वितर्कः श्रमफलः ॥ ४ ॥

(विचिन्त्य) कीदृशी पुनरिदानीं किंकर्तव्यता? इयं तावत्,

अघपरिणमितैरमित्रभेदैः करणकलेवरपुत्रदारकाद्यैः ।
ग्रहिल इह मयैव मोचनीयो मुरभिदनुग्रहलीलया मुमुक्षुः ॥ ५ ॥

अत्र चैतदभिनिष्पन्नम् ।

भवरोगैकभिषजा विवेकेन विपश्चिता । शमं दोषगणो नीतः शारीर इव मानसः ॥ ६ ॥

अयं च क्षेत्रज्ञ इदानीमपुनर्भवयोग्यामवस्थामारूढः । तथा हि,

कामादिकेष्वपगतेषु कथावशेषं संप्रत्यसौ शमदमादिगुणोपपन्नः ।
मैत्रीदयादिपरिकर्मविभूषितेन श्रद्धाधनेन मनसा लभते समाधिम् ॥ ७ ॥

अपि चास्य परश्शतप्रत्यूहशालिन्यपि पश्चिमयुगे परमपुरुषचरणयुगलपातिव्रतीप्रभावेन प्रथमयुग इव परम्परितवृद्धिरिव संदृश्यते समाधिसिद्धिः । तथा हि,

कलया विहितोदयः कयाचित् प्रतिपच्चन्द्र इवैष विश्ववन्द्यः ।
उपयाति दिनेदिने समृद्धिं पुरुषो विष्णुपदाश्रितः सितात्मा ॥ ८ ॥

स्वतस्सिद्धस्वच्छस्थिरमधुरचिन्तासुरसरित्प्रवाहोपश्लिष्टात्प्रणिधिमुखभागादवतरन् ।
चिदानन्दोदन्वत्यनघगुणरत्नौघभरिते निमज्जत्यन्यस्मिन्नयमपुनरुन्मज्जनमिह ॥ ९ ॥

संप्रत्येतस्य संभृतसमाधेरुत्तरपूर्वाघाश्लेषविनाशकरणाय विवेकव्यवसायादिभिरुपचि(कीर्षे)क्रंसे ।

(नेपथ्ये) लुलितभुवनपद्मां लुम्पतो वासतेयीमुदयशिखरिमध्यादुज्जिहानस्य भानोः ।
अपतमसि पदेऽस्मिन् वैष्णवे दृश्यमारादिह भवति पताकास्थानकं धाम पूर्वम् ॥ १० ॥

**विष्णुभक्तिः**— (कर्णं दत्वा) सुप्रभातं प्रख्यापयत्यसौ सुमतिपतेर्विवेकस्य वैतालिकः । अपि च निमित्तान्यपि नैश्रेयसीं सिद्धिं सूचयन्ति ।

त्रिभुवनमिदं शान्तक्षोभं समाधिरनाकुलः प्रसृमरसुधाधाराकारा प्रसीदति शेमुषी ।
स्फुरति च मुहुर्दष्टिस्सव्या तदप्यपरिस्फुटं तदिह महतीं सिद्धिं मन्ये झटित्युपतस्थुषीम् ॥ ११ ॥

तदयमवसरस्समीहितसमर्थनस्य । ततश्च,

वैकुण्ठकृपया देव्या मदभीष्टे व्यवस्थितम् । प्राध्वं संकल्पमार्ताण्डं प्रवर्तयितुमुत्सहे ॥ १२ ॥

न च प्रभूतसंरम्भयाऽपि मया भगवत्कृपामनालम्ब्य प्रारिप्सितपरिसमाप्तिस्सुप्रापा । तथा हि,

शरणागतरक्षणैकदीक्षः समये तत्परिपन्थिनो निरुन्धन् ।
प्रभुरायतते परः कृपायां सचिवास्तस्य च सर्व एव देवाः ॥ १३ ॥

अतस्तामेव तावदापतिष्ठे । अद्य च प्रत्यक्षितेव मे भाति पद्मापतेरनुकम्पा । (साञ्जलिबन्धम्)

त्वयि बहुमतिहीनः श्रीनिवासानुकम्पे जगति गतिमिहान्यां देवि संमन्यते यः ।
स खलु विबुधसिन्धौ सन्निकर्षे वहन्त्यां शमयति मृगतृष्णावीचिकाभिः पिपासाम् ॥ १४ ॥ अपि च,

त्वद्दृष्ट्या सकृदीक्षिता दिविषदः स्वं स्वं पदं भुञ्जते भोगानत्र च भूभुजामभिमतान् पुष्णासि तृष्णाधिकान् ।
किंचोदञ्चदनुग्रहाकृपणतामालक्ष्य वैलक्ष्यतो नैराश्यप्रमुखानि सौति भवती निर्वाणपर्वाण्यपि ॥१५॥

अद्य पुनर्मातेव स्तनन्धयानामस्माकमभिरक्षणे पक्षपातिनी भवती ।

फलवितरणदक्षं पक्षपातानभिज्ञं प्रगुणमनुविधेयं प्राप्य पद्मासहायम् ।
महति गुणसमाजे मानपूर्वं दये त्वं प्रतिवदसि यथार्हं पाप्मनां मामकानाम् ॥ १६ ॥

(पुरस्तादवलोक्य; सहर्षम्) अयमसाविह विवेकमहाराजागारपूर्वभागे दनुजमथनदयानियुक्तो नृत्तोद्यत इवावतिष्ठते निखिलनिगमनैगमिकविद्यैकराशिर्विहङ्गराजः । प्रसीदति चासौ मे पन्नगरिपुः ।

आनेतुमात्मरभसेन समीहमानो रक्षोन्मुखं नतगृहेषु रमासहायम् ।
प्रायः प्रभोस्तदपृथक्स्थितिवृत्तिशक्तिं संकल्पमप्युपहरिष्यति तद्रथोऽसौ ॥ १७ ॥

तदेनमभिष्टौमि ।

नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने । श्रुतिसिन्धु(रसो)सुधोत्पादमन्दराय गरुत्मते ॥ १८ ॥ अपि च,

क्षुण्णक्षोणीधराणि क्षुभितचतुरकूपारतिम्यद्रुन्ति त्रुट्यत्तारासराणि स्थपुटितविबुधस्थानकानि क्षिपेयुः ।
पातालब्रह्मसौधावधिविहितमुधावर्तनान्यस्मदार्तिं ब्रह्माण्डस्यान्तराले बृहति खगपतेरर्भकक्रीडितानि ॥१९

दण्डकेन चैनमण्डजनाथमनुनाथेय ।

गरुडमखिलवेदनीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठपीठीकृतस्कन्धमीडे स्वनीडागतिप्रीतरुद्रासुकीर्तिस्तना- भोगगाढोपगूढस्फुरत्कण्टकव्रातवेधव्यथावेपमानद्विजिह्वाधिपाकल्पविष्फार्यमाणस्फटावाटिकारत्नरोचिश्छटाराजिनीराजितं कान्तिकल्लोलिनीराजितम् ।

जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन् दिवौकस्पतिक्षिप्तदम्भोलिधाराकिणाकल्प कल्पान्तवातूलकल्पोदयानल्प-वीरायितोद्यच्चमत्कारदैत्यारिजैत्रध्वजारोहनिर्धारितोत्कर्ष संकर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादिमूर्ते न कश्चित्समस्ते नमस्ते पुनस्ते नमः ।

नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेलपाथोधिवीचीचपेटाहतागाधपातालभाङ्कारसंक्रुद्धनागेन्द्रपीडासृणीभावभास्वन्नखश्रेणये चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यमध्यात्मविद्या विधेया विधेया भवद्दास्यमापादयेथा दयेथाश्च मे ।

मनुरनुगतपक्षिवक्त्रस्फुरत्तारकश्चित्तभानुप्रियाशेखरस्तावकस्त्रायतामायतान्नस्त्रिवर्गापवर्गप्रसूतिः परव्योमधामन् वलद्वेषिदर्पज्वलद्वालखिल्यप्रतिज्ञावतीर्ण स्थिरां तत्त्वबुद्धिं परां भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा सुधाकामहीनामहीनान्तक ॥

इदं च श्रुतमनुचिन्तयामि ।

**व्यक्तौ सन्नाहसंकल्पौ विश्वगोप्तुरिमौ हरेः । प्रथितावागमग्रामे पक्षीश्वरसुदर्शनौ ॥ २० ॥**

**(सर्वतोऽवलोक्य)** अहो नु खलु विष्वक्प्रकाशा दिशो विदिशश्च । तदासीदतीव दयावल्लभस्य देवस्य संकल्पः ।

**[ ततः प्रविशति संकल्पः । ]**

संकल्पः— **(आत्मानं निर्वर्ण्य)**

**यस्मिन्विस्मयनीयभूमनि मनागुन्मीलितेनैकधा सिध्यन्त्यस्य सितासितस्य जगतः स्वर्गापवर्गादयः ।**
**ऐशस्सोऽहमवासरात्ययभवन्मायामहायामिनीसत्ताशेषसुषुप्तबोधनपटुः संकल्पसूर्योदयः ॥ २१ ॥**

आदिष्टस्सोऽहमनघपरविद्याप्रसादितया प्रदित्सितपारितोषिकया सकलगुणसेव्यया देव्या भगवदनुकम्पया । यथा मदधीनवृत्तिना मोहादिविजयिना विवेकेन जनितभूमा विनिष्पन्नसमाधिः पुरुषः त्वयैव मोचनीय इति । अहं तु सर्वदा निखिलजगदम्बायास्तदनुकम्पायाः प्रियमाचरामि । न च (मया साधुपरित्राणे तद्विरुद्धनिरसने) तदनुरोधिपरित्राणे तद्विरोधिनिरसने च दुष्करं किंचित् । अहं हि,

**अचरन्मधुकैटभान्पयोधीन् अहिरण्याक्षहिरण्यविप्लुतां द्याम् ।**
**अदशाननकुम्भकर्णघोषां पुनरुर्वीमपि विक्रमैरकार्षम् ॥ २२ ॥**

आस्तामेतत् । अद्य तु,

**अनिदंप्रथमां निद्रां विनिवर्त्य क्षणादहम् । अनिदंपश्चिमां पुंसो जनयिष्यामि जागराम् ॥ २३ ॥**

तदर्थमपि तावदिदमिदानीमाददीय । यदुत,

**मयि विनिहितभारं मध्यमे वृत्तिभेदे स्थिरमनसमुपायापायरथ्यानिवृत्तम् ।**
**मुरमथनसमीक्षाशेखरेण स्वभूम्ना मुषितनिखिलदोषं मोचयिष्यामि जीवम् ॥ २४ ॥**

**(परिक्रम्य)** क्व पुनरिदानीं मत्समर्थनीयसाध्यसाकाङ्क्षा महाभागा निखिलपापनिराकरिष्णुः विष्णुभक्तिः, यत्प्रीण-

नार्थोऽयमस्माकमारम्भः। (पुरस्तादवलोक्य) इयं सा,

**नियतपुलकिताङ्गी निर्भरानन्दबाष्पा गलितनिखिलसङ्गा गद्गदस्तोत्रगीतिः।**

**अमृतलहरिवर्णा हर्षनृत्तोपपन्ना विगतनरकभीतिर्विष्णुभक्तिर्विभाति ॥ २५ ॥**

अपि च, **नियताक्षहयं सैषा स्फुरत्प्रशमपत्तिकम्। मनोरथमधिष्ठाय विष्णुभक्तिरिह स्थिता ॥ २६ ॥**

**विष्णुभक्तिः**— (सहर्षसाध्वसम्) देव! इयमहमस्मि। (इति गद्गतस्वरा दूरतः साष्टाङ्गं प्रणमति।)

**संकल्पः**— (सत्वरादरोदात्तगतिरुपसृत्य सहस्तालम्बमुत्थापयति।)

**विष्णुभक्तिः**— देव! नन्तव्योऽसि मया त्वं नाथसंकल्पः। (इति पुनःपुनः प्रणमति)

**संकल्पः**— भद्रे! अलमेतावता। महायोगेश्वरि! महाप्रभावा खल्वसि। तदिह नामयति भवती मामप्यनेन नमसा।

**विष्णुभक्तिः**— देव! धन्येयं खल्विदानीमहमस्मि। याऽहमिह निरङ्कुशैश्वर्यशालिना भवतैवं संभाव्ये।

**संकल्पः**— भद्रे! परावरनिखिलतत्त्वान्तरात्मना भगवताऽपि संभावनीयां त्वामहं संभावयामीति किमत्र चित्रमवगच्छसि? यदीदृशी भवती,

**शमधननिधिस्संविद्वल्लीसमग्रफलोदयः श्रु(ति)तपरिणतिश्शुद्धिस्थेमा सुखप्रतिभूरसि।**

**भवभयतमःप्रातस्सन्ध्यापरात्परदीपिका भगवति हरौ भक्तिर्दिव्या परिष्कृतिरात्मनः ॥ २७ ॥**

अपि च, **जनन्या सर्वलोकानां विष्णुवल्लभया तया। कृपया कल्पितस्सोऽहं त्वद्भ्रूविभ्रमकिंकरः ॥ २८ ॥**

तदादिशतु भवती मामभिमतसाधनाय।

**विष्णुभक्तिः**— अहो देव! पारतन्त्र्यपरिग्रहोऽपि स्वातन्त्र्यकाष्ठैव भवतः। तदहमिदानीं भवतैव भावनीयं प्रहर्षपरवशा प्रत्यभिज्ञापयामि। अद्य हि,

**प्रकृतः क्रियया धिया च योगः परमैकान्त्यपरिष्कृतस्य पुंसः।**

**निधिदर्शनवन्निरूढहर्षं प्रणिधत्ते विशदं परप्रकाशम् ॥ २९ ॥**

अयं तावदिदानीमान्तरस्य योगस्य परिपाकः। बाह्यस्य चैतादृशीं दशामनुभवति पुरुषः।

**सिद्धे महति पाण्डित्ये सनिर्वेदश्चतुर्विधे। प्रणवद्विचतुष्काद्यैः प्रशान्तैरेव मोदते ॥ ३० ॥**

**संकल्पः**— अहो! वैभवमकम्पनीयभगवदनुकम्पासंभृतमहिम्नो विवेकस्य। यदयमिह कर्मशृङ्खलैर्निगलितः करणकलेबरकारागृहे निरुद्धगतिरन्तर्लुठन्नपि निर्मोचितमोहमहाग्रहो निवृत्तिधर्मकाष्ठां प्रापितः। अथवा भवत्या एवायं प्रभावः

**विष्णुभक्तिः**— देव! विश्ववेदिना भवता विवेके मयि च किमिति वैभवमारोप्यते? पश्यतु भवानेतत्,

**स्वमायाशैलूषीविहरणपरिश्रान्ततनुभृत्परित्राणोद्योगप्रवणकरुणावेशविवशः।**

**प्रतिक्षेप्तुं तापान् प्रचुरयमपर्यन्तमहिमा हिमानीमानीय स्वपदनतिमेनः प्रणुदति ॥ ३१ ॥**

ततश्च, **उपायः स्वप्राप्तेरुपनिषदधीतः स भगवान् प्रसत्त्यै तस्योक्ते प्रपदननिदिध्यासनगती।**

**तदारोहः पुंसस्सुकृतपरिपाकेन महता निदानं तत्रापि स्वयमखिलनिर्माणनिपुणः ॥ ३२ ॥**

अपिच, ग्रस्ते पित्तेन चित्ते गलकुहरमुखे संनिरुद्धे कफेन व्याप्ते वातेन गात्रे विलपति लपने कान्दिशीके हृषीके।
जङ्घाले जीवितांशे जिगमिषति बले जन्तुमुद्भ्रान्तबन्धुं कस्त्रातुं चक्रहस्तादपर इह दयादत्तदृष्टिः क्षमेत॥
संवेद्मि च भगवद्दृष्टस्य सर्वविद्भिरपि दुरूहां सांपरायिकीं संपदम्। यथा,

कालोपयातकमलापतिदृष्टिपाताद्दूरापनीतदुरितादिपरिप्लवोऽसौ।
सुप्तोऽपि जागरमुपैत्यपुनर्निमेषं स्वान्तेन निष्प्रतिघमुक्तिमनोरथेन॥ ३४॥

अत्यद्भुतप्रेक्षणीयमिदं त्वदनुग्रहसुधासारचातकव्रतिनः पुरुषस्येदानीमवस्थानम्। अयं हि,

कलत्रसुतसोदरप्रभृतिकल्पनाबर्बरैरशक्यविनिवर्तनैरहितशृङ्खलैर्यन्त्रितः।
निसर्गसुहृदि प्रभौ निहितगुप्तिभारः पुमानुपस्थितमुपस्थितं हितमशेषमुद्वीक्षते॥ ३५॥

अतः परं तु भवन्नि(र्दिष्ट)ष्टमेव भव्यमवधारयामि।

संकल्पः— यदिह भवत्या प्रख्याप्यते, प्रत्यक्षयामि तावदेतदखिलम्।

दुरितजलधिद्वीपप्राये सुखे विगतस्पृहा पुरुषविषये यत्त्वं ब्रूषे पुरस्कृतगौरवम्।
हिततमतया दुर्लङ्घेऽस्मिन् क्रियापरमुत्तरं तदपि किमपि प्रत्युक्तं नः प्रतीक्षणमर्हति॥ ३६॥

यद्यसावनादिभवरसभोगवासनापाशपरवशः पुरुषः सत्यलोकप्रभृतिषु संसारमरुकान्तारपथिकपानीयशालासु विश्रममभिकाङ्क्षेत्, तदा कथमहमेनमस्थाने सपदि मोक्षयेयम्।

विष्णुभक्तिः— (कर्णौ पिधाय करकमले धून्वाना) मा मैवमाशङ्कनीयं मदेकसाक्षिकमनोरथे महात्मनि पुरुषे भूतभाविसमस्तवस्तुसाक्षात्कारिणा भवता। इदं च विज्ञापयामि।

अपि पद्मयोनिरवशो भजते मधुकैटभादिजनिता विपदः।
इति दृष्टदोषनिवहः पुरुषो न वहेत नाकनरकेषु रतिम्॥ ३७॥

(अपि च,) अमृतस्यन्दिनं कंचित्कृष्णमेघं द्विजः स्मरन्। उदन्यया न वेशन्तमुदन्वन्तं च वीक्षते॥३८॥

तदसौ झटिति निस्त्रुटितनिगलयुगलः त्वया विधातव्यः। अहं त्विदानीममिनिर्वर्तिताभिगमनादिनियतिरहिंसादिमयीमष्टपुष्पीमुपादाय त्वत्प्रभावनष्टाश्लिष्टपूर्वोत्तरपुण्यपापराशिमनन्ययाजिनमनन्यध्यायिनं च पुरुषमासन्नमुक्तिलाभव्यवसायजनितनिरवधिकप्रमोदमनुमोदितुं त्वदेकान्तिना विवेकेन सह त्वरितमागमिष्यामि। [इति निष्क्रान्ता।

संकल्पः— (परितोऽवलोक्य) अयमसावनवधिकस्वमाहात्म्यगोपनप्रदर्शितबालभावः प्रशान्तमधुरगम्भीराकृतिः परब्रह्मसमाधिप्रारम्भभावितममन्दमानन्दमनुभवन् पुलकितनिखिलगात्रविडम्बितकदम्बगोलकमलनालः पुण्यतमदर्शनः पुरुषः। अहो महदिदमाश्चर्यम्।

शृङ्गारवीरकरुणाद्भुतहास्यभीतिबीभत्सरौद्रविषयानतिवर्तमानः।
तत्त्वावलोकनविभावसमेधितात्मा शान्तो रसः स्फुरति मूर्त इवैष धन्यः॥ ३९॥

अपि च, **अङ्गान्यस्य मुहुर्मुहुः पुलकितान्यन्तर्मुखं मानसं चिन्ता च द्रुतशर्कराप्रतिनिधिश्शीताश्रुणी लोचने ।**

**मायासारथिगीतयोपनिषदा दृष्टक्रमं द्रागसौ मन्ये याति मनोरथेन पुरुषो वैकुण्ठघण्टापथम् ॥४०**

तमेतं सर्वधर्मक्षेत्रगिरिनगरतीर्थाश्रमारण्यसारसमाहारमिवैकत्र संभृतमसदागमनप्रतीक्षमकालक्षेपेणोपसर्पामि । अथवा अन्तर्हितः क्षणमस्याभिप्रायमवधारयामि ।

**[ ततः प्रविशति श्रद्धादत्तहस्तः प्रशान्तमधुरवेषः पुरुषः । ]**

**पुरुषः**— (**स्वावस्थां परामृश्य सनिर्वेदम्**) हन्त ! निरन्तरदुरन्तदुरितकान्तारजाङ्घिकस्य मम दुःसहदुःखजालजटिला जन्मसन्ततिरनन्ताऽतिक्रान्ता । अतः परमपि पूर्वावस्थानिर्विशेषपुनर्भवपरम्पराहेतुभिरपरिमितैः कर्मसंचयैरावृतोऽह-मवसरप्रतीक्षया भगवदनुकम्पया कथंचिन्निवृत्तिधर्मे निवेशितः प्रबलतमविवेकवैभवप्रतिक्षिप्तमोहपक्षोऽपि परप्राप्तिविरहा-द्वसीदामि । (**दीर्घं निश्वस्य**)

**चिरपरिचितदेहाद्यर्थचिन्तानुवृत्त्या नियतिमनुसरन्त्या नित्यडोलायितात्मा ।**

**अयमहमिह मन्दद्योतखद्योतकल्पः कतिकति दिवसानि क्षीणशक्तिः क्षिपेयम् ॥ ४१ ॥**

अपि च, **न मुक्तो न च बद्धोऽहं यथा पश्चाद्यथा पुरा । कृपणः किं करिष्यामि न करिष्यामि वा स्वयम् ॥**

अस्ति वा कश्चिदनिदंप्रथमनिरवधिककारुण्यराशिरभङ्गुरस्वातन्त्र्यः पथ्यप्रवृत्तावपथ्यपरिहारे च प्रभुरेकः प्रमाणम् । तदाहितमतिस्तदेकाधीनप्रवृत्तिश्चाहं प्रतिबुद्धोऽस्मि । (**विचिन्त्य मुहूर्तमिव स्थित्वा**)

**अमतिविहितैरंहस्तोमैर्झटित्यहमुज्झितश्शमितविपथैस्सत्त्वोदग्रैश्शमादिभिराश्रितः ।**

**परमपुरुषध्यानस्तोत्रप्रणाममुखैर्मखैः परिहृतमुधाकालक्षेपः फलोदयमाद्रिये ॥ ४३ ॥**

**श्रद्धा**— भट्ट ! अण्णाअपरमत्था इद्धिआवि किं वि विण्णवेमि पहरिस जोग्गेवि समए किं पुणो अप्पा अवमाणिज्जइ । णं अच्चासण्णा खु तुम्हाणं मोक्खसिद्धी । [ भर्तः ! अज्ञातपरमार्था स्त्र्यपि किमपि विज्ञापयामि । प्रहर्ष-योग्येऽपि समये किं पुनरात्माऽवमन्यते । नन्वत्यासन्ना खलु युष्माकं मोक्षसिद्धिः । ]

**पुरुषः**— भद्रे ! भविष्यत्यपि परमपुरुषार्थे दृष्टिं प्रतिरुणद्धि मे दुर्वाराऽसौ दोषानुवृत्तिः । तथा हि,

**सकृदपि विनतानां सर्वदे सर्वदेहिन्युपनिषदभिधेये भागधेये विधेये ।**

**विरमति न कदाचिन्मोहतो हा हतोऽहं विषमविषयचिन्तामेदुरा मे दुराशा ॥ ४४ ॥**

**श्रद्धा**— भट्ट ! बालिसबुद्धि अहं किं वो पडिभणामि । तह वि तरळसहावाए मए भणिज्जइ । चिरगअं वि उत्तन्तं दाणिं वि चिंताहिं आअड्ढिऊण भट्टिणा अप्पा विळपज्जइ । [ भर्तः ! बालिशबुद्धिरहं किं वः प्रतिभणामि । तथाऽपि तरलस्वभावया मया भण्यते । चिरगतमपि वृत्तान्तमिदानीमपि चिन्ताभिराकृष्य भर्त्रा आत्मा विलप्यते । ]

**पुरुषः**— अयि सूनृतवादिनि श्रद्धे ! कीदृशः पुनरनागतः प्रारब्धकर्मफलप्रवाहः भविष्यतीति नित्यं बिभेति मे चेतः । अथ वा किमनया निरर्थकचिन्तया ? अच्छिद्रपरमजनयोगिना तु मया नित्यमवहितेन वर्तितव्यम् । तत्र च,

**मृत्युरद्येति विदुषा यत्कर्तव्यं हितैषिणा । तदेव नित्यं कर्तव्यमनिर्धारितमृत्युना ॥ ४५ ॥**

**श्रद्धा**— एव्वं वि पडिऊलचिंता भट्टिणा ण काअव्वा। अज्ज वा परं वा मोक्खो होहिति विस्सद्धहिअएण होदव्वं।
[एवमपि प्रतिकूलचिन्ता भर्त्रा न कर्तव्या। अद्य वा परं वा मोक्षो भविष्यतीति विस्रब्धहृदयेन भवितव्यम्।]

**पुरुषः**— भद्रे! साधु भवत्या संसारितोऽस्मि। यत्तदाम्नातं "इति यस्य स्यादद्धा न विचिकित्साऽस्ति" इति। तद्भवती मद्विमोक्षणैकतानमनसो विष्णुभक्त्यास्सकाशं गत्वा ममेदृशीमवस्थामावेदय।

**श्रद्धा**— जं भट्टा आणवेइ। [यद्भर्ता आज्ञापयति।] [इति निष्कान्ता।

**पुरुषः**— (विचिन्त्य साभिलाषमिव स्थित्वा) नाद्यापि तावत्,

**पितृपथघटीयन्त्रारोहावरोहपरिश्रमैर्निरयपदवीयातायातक्रमैश्च निरन्तरैः।**
**अधिगतपरिश्रान्तीनाज्ञाधरैरतिवाह्य नस्सुखयति निजच्छायादायी स्वयं हरिचन्दनः॥ ४६॥**

**संकल्पः**— (सहर्षम्) अवधारितस्वभावोऽयमसत्स्वामिसंमतोऽनन्यभक्तः।

**मिथ्यादृष्टिमुखैर्विवेकमुषितैरस्पृष्टधीः कश्मलैरुत्तीर्णः प्रतिबुद्धदोषचिदचिद्भोगस्पृहाकर्दमात्।**
**निध्यानस्थिरदर्पणप्रतिफलं निःश्रेयसश्रीरसाद्य प्रत्यवपत्तुमिच्छति भवाकूपारपारस्थलीम्॥ ४७॥**

अपि च, **प्रगुणवृत्तिरपथ्यपराङ्मुखः कृपणचित्तहरैर्व्यसनग्रहैः।**
**अयमपत्रपते निरुपप्लवः परगतैरपि दृष्टपरावरः॥ ४८॥**

अहह! कति कति जगति न सन्ति कर्मिणो योगिनस्तपस्विनश्च। न तेषु कस्यचिदेतादृशस्स्वभावः।

**कम्पन्ते यमकिंकराः स्वयमसौ कालश्च सर्वंकषः शङ्कन्ते किल निर्जरा निजपदावष्टम्भनं पाक्षिकम्।**
**रक्षोदानवयक्षगुह्यकमुखा धावन्त्यतो दूरतः पद्मावल्लभपादपद्मयुगलप्रत्यर्पितस्वात्मनः॥ ४९॥**

**यत्राप्यसौ सुकृतिभिर्विदितानुभावैरभ्यर्चितो जनपदे निवसत्यनन्यः।**
**सिद्धाश्रमप्रतिनिधाविह सर्व एते निर्व्याधयश्च विचरन्ति निराधयश्च॥ ५०॥**

अहो नु खल्वमुष्य परमपुरुषप्रीतितोऽपि तद्भक्तप्रीतिरतिशेते। इत्थं किलास्य नियतमालापः।

**नाथे नस्तृणमन्यदन्यदपि वा तन्नाभिनालीकिनीनालीकस्पृहणीयसौरभमुचा वाचा न याचामहे।**
**शुद्धानां तु लभेमहि स्थिरधियां शुद्धान्तसिद्धान्तिनां मुक्तैश्वर्यदिनप्रभातसमयासत्तिं प्रसत्तिं मुहुः॥**

तदेनमतिगाढसमाधिसंश्लेषादमृतजलधिनिहितमकरन्दबिन्दुवदविभक्तमिव भगवताऽवस्थितमनन्ययोगिनम(हं)नुमन्यमानः स्वयमपि धन्यो भवितुमिच्छामि। (सहर्षबहुमानमुपसृत्य) महात्मन्! आश्चर्योऽसि, धन्योऽसि, परमपुरुषदास्यप्रियोऽसि।

**पुरुषः**— (सहर्षसंभ्रमसाध्वसमुत्थाय तत्प्रभावपरवशः प्रणिपत्य प्राञ्जलिस्तिष्ठन्) भगवन्!

**अनवधिकवैभवं त्वामवधारयितुं न पारयति चेतः। आद्यस्स एव भगवानथ वा तस्य त्वमन्तरङ्गतमः॥**

**संकल्पः**— महाभाग! अहं किल परमपुरुषसंकल्पः। परमैकान्तिपरिषदग्रगण्यमनन्तसुकृतदुष्कृतनिगलयुगलविगलनपूर्विकया परमपदपर्यङ्कपरिष्कारकपरब्रह्मसेवापर्यन्तया भक्तिपरिपाकसंपदा सङ्घटयितुं तदेकवल्लभया कृपण-

जनविषयकृतपक्षपातया कृपया नियुक्तश्चिरप्रार्थितदर्शनं भवन्तमुपगच्छामि । तदिह निकटवर्तिन्यां निःश्रेयससम्पदि निर्विशङ्केन भवता भवितव्यम् । अद्य च,

**कच्चित्क्षिप्तरजस्तमस्कमधुना सत्त्वं समुज्जृम्भते कच्चिन्मोचितविप्लवश्च करणग्रामो वशे तिष्ठति ।**

**कच्चित्संघटते समाधिरनघः कच्चित्प्रसन्नं मनः किं वा कैटभकण्टकस्य कृपया जुष्टस्य ते दुर्घटम् ॥**

**पुरुषः**— (सहर्षगद्गदम्) अहो नु खलु धन्योऽयमनन्यशरणो जनः । यदेनमनिदंप्रथमसम्पदा भगवदनुकम्पया प्रचोदितस्तत्रभवान् प्रसीदन् प्रेक्षते । कश्च त्वदीक्षितः समीहितसिद्धौ संदिग्धे । निर्धारितश्च निगमान्तनिरूढ-बुद्धिभिस्त्वदनुभावः ।

**यस्याज्ञा त्रिबुधेशमौलिवलभीवास्तव्यपारावती यद्भ्रूविभ्रमकिंकरी विधिशिवस्वस्थानसुस्थासिका ।**

**ब्रह्मस्तम्बधुरंधरेण मुरभित्संकल्पभूम्ना त्वया कस्मिन् किं नु न जाघटीति न च किं कस्मिन्न जाघट्यते ॥**

**संकल्पः**— (स्वगतम्) प्रष्टव्यः पुनरसौ विशेषतः सांयमिकीं सिद्धिम् । (प्रकाशम्) भद्र ! कीदृशी भवत इदानीं कृपणजनदवीयसी कृतमुखसंमुखी समाधिसंपत्तिः ।

**पुरुषः**— देव ! प्रस्पष्टमनुभूयमानाऽप्यसौ विशेषतो निर्देष्टुं न शक्यते । तथाऽपि किंचिदावेदयामि ।

**निरूढनिगमत्रये निखिललोकचिन्तामणौ प्रसक्तिमधिजग्मुषि प्रणिदधानभावास्पदे ।**

**रतिं भजति आत्मनालयमितोपयाति द्रुतं रमावसुमतीसहाचरितधर्मणि ब्रह्मणि ॥ ५५ ॥**

**संकल्पः**— (सहर्षम्) महात्मन् ! अनन्यलभ्या तवेयमवस्था विस्मयावेशविह्वलं विदधाति मामकं मानसम् । इयं हि

**निवृत्तिरसवासनानिरवशेषितोपप्लवा परप्रणिधिपद्धतौ धृतिमुपेयुषी शेमुषी ।**

**द्रुतप्रसरशर्कराभरितदुग्धधाराकृतिप्रतिक्षणविकल्पनाकलहलङ्घिनी वर्तते ॥ ५६ ॥**

अपि च, **कवित्वमदकश्मलं कथकदर्पतिग्मज्वरं विकत्थनमिलद्बहुप्रलपनाभिमानग्रहम् ।**

**परप्रतिपदार्पणप्रथनयातनां च स्वयं निवर्त्य निरवग्रहान्निभृतवृत्तिमातिष्ठसि ॥ ५७ ॥**

**पुरुषः**— देव ! भवत्प्रसादसंभवेयं पराङ्मुखस्वभावस्य मे प्रत्यङ्मुखी बुद्धिवृत्तिः । अचिन्त्यप्रभावश्च भवानागमेषु जोघुष्यते ।

**क्रियाशक्तिं केचिद्दनुजमथनीं हेतिमपरे मनस्तत्त्वं चान्ये मधुविजयिनस्त्वामभिदधुः ।**

**तमेवैके तत्तत्पदविषयजुष्टं तदिह नः सदोत्तुङ्गः प्रादुर्भवसि भवसिन्धुप्रमथनः ॥ ५८ ॥**

**संकल्पः**— भद्र ! अप्रत्यूहस्त्वयि भगवत इदानीमनघः प्रसादः । अहमपि तदनुप्लवः । ततश्च,

**निरपायमुख्यरागं निजपक्षनिविष्टनित्यहरितत्त्वम् । गुणपञ्जरस्थितं त्वां शुकमिव मोक्ष्यामि दिव्यगतियोग्यम्**

शृणु चेदानीमागामिनीमनन्यलभ्यामपवर्गसिद्धिम् ।

**निर्णिक्तत्रिगुणाञ्जनस्य सगुणब्रह्मोपसम्पत्तितः प्रादुर्भूतगुणाष्टकस्य परमं साधर्म्यमभ्येयुषः ।**

**पारावर्यविभागलक्षणपरित्यागप्रसङ्गोज्झिता शेषादेरिव शेषवृत्तिरपि ते सत्तावधिस्सेत्स्यति ॥ ६० ॥**

अपि च, सुहृदस्त्वाददीरन् सुकृतफलं यत्त्वया परित्यक्तम् । दुष्कृतफलं द्विषन्तः प्रारब्धान्ते परं पदं विशतः ॥

पुरुषः— देव! भवत्प्रसादलभ्यां भाविनीमवस्थां प्रतिबुध्य निरूढहर्षा मुक्तकलिर्नृत्यतीव मे बुद्धिः । अपुनर्भवस्तु भविष्यति न वेति संदिहानो भृशं दूये । तदिह कथं कल्पितोऽहमिति,

वितमसि पदे लक्ष्मीकान्तं विचित्रविभूतिकं सचिवगमितः संपद्याविर्भवत्सहजाकृतिः ।

स्फुटतदपृथक्सिद्धिः सिद्ध्यद्गुणाष्टकतत्फलो भजति परमं साम्यं भोगे निवृत्तिकथोज्झितम् ॥

ततश्च यद्यहमभिज्ञातुमर्हामि तदाज्ञापयितुमभिवाञ्छामि ।

संकल्पः— भद्र! (कथं) किं नु भवते प्रदित्सितस्वाराज्याय सिद्धं न संवेद्यते ।

अवतारहस्यतत्त्ववेदी विबुधग्रामटिकासु वीतरागः ।

अपुनर्भवने न निर्व्यपायं प्रतिगन्ताऽसि परं पदं त्रिधाम्नः ॥ ६३ ॥

श्रद्धत्स्व चैनमपि सत्यवाचो मे सशपथं व्याहारम् ।

स्वसेवासार्वभौमत्वं भवते परमात्मना । विवेकस्य च वीरस्य यौवराज्यं प्रदित्सितम् ॥ ६४ ॥

अपि च, मुक्तस्त्वं सकृदेव सांप्रतमितः प्रागुत्तरैः कर्मभिः प्रत्यक्षाल्परसं परित्यज न वा प्रारब्धभोगं प्रियम् ।

अस्माभिः पुनरादिपूरुषदयादेवीकृतप्रेक्षणैः त्वद्वृत्तान्तसतत्त्वविज्ञपनतस्सिद्धोत्सवा सेव्यते ॥ ६५ ॥

तदामन्त्रयामि भवन्तम् । (इति द्वित्रिपदमतिक्रम्य) विद्यासन्तत्यविच्छेदाय जगति विख्यापयामि किंचित् ।

भगवति नियतात्मा भागधेये श्रुतीनां पुरुष इह महात्मा वर्तते भूतधात्र्याम् ।

तदयमवदधानैः सर्वमन्तेवसद्भिः पृथुमतिभिरभीष्टं पृच्छ्यतां विश्वदर्शी ॥ ६६ ॥

[इति पुरुषं परिवृत्य पश्यन्निष्क्रान्तः ।

पुरुषः— (सहर्षम्) प्रत्यक्षितप्रभावा मयीदानीं विश्रुतपूर्वा विश्वकर्तुरघटितघटनाशक्तिः । यदहमनन्तापराधसंततोऽप्यपवर्गहेतुना प्रसादेन परिगृहीतोऽस्मि । किं च,

यदिह पुरा पुराणपुरुषेण बहिष्करणात् प्रमितविरुद्धवृत्तिविषमं प्रचचार बहिः ।

तदिदमहो तमेकमनुभूय रसातिशयात् स्वपिति मनो मदीयमवलिम्पति मुह्यति वा ॥ ६७ ॥

अपरमपि विचित्रमेतदनुभवामि ।

अन्येषामजहत्त्रिवर्गमनसामायुःक्षयत्रासदैरप्रत्यूहगतिक्रमैरवितथव्यापारधन्यस्य मे ।

भ्रश्यद्भिर्दिवसैः प्रवृद्धवृजिनाकूपारपारीभवन् प्रत्यासीदति मुक्तिवासर इति प्रीतिः प्रतिष्ठाप्यते ॥ ६८ ॥

इदमपि महत्तरं प्रीतिकारणम् । यदेतत्,

दहरकुहरे देवस्तिष्ठन्निषद्वरदीर्घिकानिपतितनिजापत्यादित्सावतीर्णपितृक्रमात् ।

धमनिमिह नस्तस्मिन् काले स एव शताधिकामकृतकपुरप्रस्थानार्थं प्रवेशयति प्रभुः ॥ ६९ ॥

अधिगतं च महदिदानीमस्माकमैश्वर्यम् ।

**प्रत्यूहानवधीद्विवेकसुभटो युद्धेषु बद्धेषुधिस्तद्भग्नैव हता धियस्तरलता संभूय सा भूयसा ।**
**प्रत्यक्षागमयुक्तिभिः प्रणिहितत्रित्वेषु तत्त्वेष्वमी लक्ष्यालक्ष्यगुणेषु लब्धधिषणोत्सेधास्समेधामहे ॥**

अपि च, निरन्तरमन्तरात्मानुभवरसमीश्वराज्ञानुवर्तनप्रीतिं च यावज्जीवमनुपालयतो मे नित्यसंनिहितैव नैश्रेयसी सिद्धिः । तदेतदखिलं यन्मुखेन मया समधिगतं तमसहायवीरं विवेकं विचित्रमहिमशालिनीं विष्णुभक्तिं चामोघवाञ्छितः संद्रष्टुमिच्छामि । अत्र चैतौ तुलसीवननिवासिनीं द्वादशीमुपसेवमानौ नूनमुपस्थास्येते । यावदिमावुपसर्पामि,

[ ततः प्रविशतिविवेकः सुमतिर्विष्णुभक्तिश्च । ]

**विष्णुभक्तिः**— महाराज ! दिष्ट्या त्वया जिताश्शत्रवः । पुरुषश्चाशेषविकृतिप्रसूत्या प्रकृत्याऽनिदंप्रथमबंभ्रम्यमाणगर्भजन्मजरामरणादिचक्रयन्त्रमारोप्य निपीड्यमानो निवृत्तिधर्मप्रभृतिनिःश्रेणिकाक्रमेण निःश्रेयसप्रासादसमारोहणाय नियोजितः । अहो नु खलु भवन्तमनवधिकवैभवमवधारयामि ।

**महासत्त्वोदारस्थिरमधुरगम्भीरहृदयः कृपोत्साहोत्तुङ्गः कृतविदभिगम्यः प्रणयिनाम् ।**
**श्रुतप्रज्ञामेधास्मृतिजलधिरक्षुद्रचरितः त्वमेकः सर्वासामनघफणितीनामभिमतः ॥ ७१ ॥** अपि च,

**धीरोदात्तानुकूलोत्तमगुणमहिमानायकेष्वग्रणीस्त्वं स्वाधीना त्वत्सनाथा सुमतिरभिमता धर्मपत्नी तवासौ ।**
**स्वायत्ता चाद्य सिद्धिस्समजनि भवतस्स्वामिनिःश्रेयसार्था रामस्त्वं च त्रिलोक्यां रणविहतिमुखैरप्रधृष्यानुभावौ**

**राजा**— महाप्रभावे ! सर्वमिदं त्वत्प्रसादप्रसूतमेव । "भक्त्या त्वनन्यया" इति भगवतैव च गीयते । (विचिन्त्य) अद्यापि न प्रकृत्या पुरुषः परित्यक्तः, नापि चासौ ।

**ज्वलनदिवसज्योत्स्नापक्षोत्तरायणवत्सरान् पवनतपनप्रालेयांशून् क्रमादचिरद्युतिम् ।**
**जलधरपतिं देवाधीशं प्रजापतिमागतस्तरति विरजां दूरे वाचस्ततः परमद्भुतम् ॥ ७३ ॥**

अयं हि, **मलिनिमदशामातन्वानैर्मलीमसवस्तुभिर्मणिरिव महानन्तर्ज्योतिर्निरुद्धनिजप्रभः ।**
**शुभतररुचिप्रत्यासेधस्वकर्मफलच्छलाज्जडपरिषदि न्यस्तो दैव्या न दीव्यति मायया ॥ ७४ ॥**

**सुमतिः**— अय्यउत्त ! अविच्छिण्णप्पवुत्तकेवळपरसंतवणकेळिसाळिणीए माआए किं फळं ळद्धं ळहिज्जइ वा ? [आर्यपुत्र ! अविच्छिन्नप्रवृत्तकेवलपरसंतपनकेलिशालिन्या मायया किं फलं लब्धं लभ्यते वा ?]

**राजा**— न किंचिदपि । (सनिश्वासम्)

**विषतरुफलपाकदर्शनीयैर्विषयरसैः पुरुषं निरुद्धदृष्टिम् ।**
**अलभत किमसौ फलं विचेता विषमगुणागुणिनं विलोभ्य माया ॥ ७५ ॥**

**विष्णुभक्तिः**— नासौ महाराजस्य निर्वेदावसरः । अद्य हि परसंकल्पकल्पान्तपावकेन प्रारब्धकर्मलेशपरिशेष उपशोषितः पुरुषस्य दुरितार्णवः । प्रकृतिरपि निर्मोककल्पाशेषपरिशुद्धस्वभावं पुरुषमायुषः पारे तमसः पारे च निर्मोक्ष्यति ।

**राजा**— (सहर्षम्) भगवति सिद्धप्रायस्समीहितः । तर्हि सफलप्रयासोऽस्मि ।

सुमतिः— अय्यउत्त ! किं एदं भअवईए भासणं अम्हाणं उवच्छन्दणं अहवा अणळिअं ति डोळाअंतमाणसम्हि । [ आर्यपुत्र ! किमेतद्भगवत्या भाषणमस्माकमुपच्छन्दनम्, अथवा अनलीकमिति डोलायमानमानसाऽस्मि ।]

राजा— प्रिये ! मैवं मन्वीथाः । सत्यवादिनी खल्वेषा सनकसनन्दनादिभिर्महनीया महातपस्विनी । श्रद्धत्स्व चैतत्,

**निर्जरीभिरपि नित्यदुर्लभे जातु काचिदिह जातकौतुका ।**

**लप्स्यसे ललितकाङ्क्षिणी स्वयं मत्प्रिया त्वमनघं मनोरथम् ॥ ७६ ॥**

सुमतिः— महंतो खु एसो पसाओ सहधम्मआरिणीविसए महाराअस्स । [ महान् खल्वेष प्रसादः सहधर्मचारिणीविषये महाराजस्य ।]

राजा— (परिक्रम्य) इदमहमिदानीं मदेकार्थेभ्यश्चिरपरिचर्यापरिश्रान्तेभ्यः प्रहर्षकारणं विज्ञापयामि ।

**विद्याभिः स्वविपक्षभङ्गपटुषु स्थानेष्वग्रस्थीयतां सिद्धार्थैरनुमन्यतां शमदमस्वाध्यायतोषादिभिः ।**

**मत्सूतस्य मनोरथस्य रथिना दृष्टाध्वना संप्रति प्रत्यावृत्तिकथोज्झितेन परमं ब्रह्म प्रतिष्ठाप्यते ॥७७॥**

अपि च, **प्राचीमेकपदीं त्यक्त्वा प्रतीचीमास्थितः प्रभुः । उदीचीमेव गन्ताऽसौ नत्ववाचीं कथंचन ॥७८॥**

(आकाशे डिण्डिमध्वनिः । सर्वे समाकर्ण्याद्भुतकौतुकं नाटयन्ति ।)

विष्णुभक्तिः—श्रूयतामिदं महाराजेन,

**निवृत्तमतिकश्मलो निभृतबुद्ध्यबुद्धीन्द्रियः परप्रणिधिवैभवत्रुटितकर्मबन्धः कृती ।**

**विमुक्तिपदमद्भुतं द्रुतमुपैति विद्वानिति त्रिवर्गरसघस्मरस्त्रिदशडिण्डिमस्ताड्यते ॥ ७९ ॥**

पुरुषः— (सहर्षं) अस्मन्महोदयसन्तुष्टोऽयं वत्सो विवेकः सुमतिविष्णुभक्तिभ्यां सह इत एवाभिवर्तते । तदहमेतान् प्रत्युद्गच्छामि ।

विवेकः— (पुरस्तान्निर्दिश्य) प्रिये ! एष कुलपतिरस्माकं अतर्कितोपनतपरसंकल्पनिवृत्तपूर्वापरपुण्यपापराशिरस्मद्दिदृक्षया समायाति । तदयमस्माभिस्समाहितैरभिगम्योपसर्तव्यः । (सर्वे सप्रश्रयं त्वरितमुपसृत्य प्रयतबुद्धयः प्रणिपतन्ति ।)

पुरुषः— सर्वे दीर्घायुषो भूयास्त । भद्रे विष्णुभक्ते ! अनन्यसाधारणावगतप्रभावनिर्धूतनिखिलपरपक्षेण जितकाशिना वत्सेन विवेकेन दिष्ट्या समागतोऽस्मि । (विवेकमुपगूह्य सस्नेहबहुमानम्) वत्स विवेकमहावीर ! निजकर्मसन्ततिप्रवृत्तया निद्रया निर्भरप्रसुप्तोऽहं त्वयैव खलु अस्मत्प्रतिकूलसकुल्यघातिना प्रतिबुद्धदशां प्रापितः । अनया च परित्यक्तफलान्तरया विष्णुभक्त्या पुनरस्मद्धितैकनिरतया दुःसहानन्तदुःखसन्तत्यनुवृत्तिनिदानभूतदुरितराशिरुपसंहृतः ।

राजा— (स्वगतं) हन्त कुलक्षयहेतुरयमिति कुलपतिरक्षकं मां कुटिलमतयः केचिदपवदितुमिच्छन्ति ।

**गतद्रविणदोहलं गलितमाननागौरवं यशस्यनभिसन्धिकं यमिनमप्यनुद्भूतति ।**

**तिरस्करणकौतुकग्रहगृहीतचित्ते जने गुणग्रहणलालसो न खलु कश्चिदालक्ष्यते ॥ ८० ॥**

अलमनेन । (प्रकाशं) तात.... इत्यर्धोक्ते सवैलक्ष्यमवनतमुखस्तिष्ठति ।

विष्णुभक्तिः— भगवन् ! महाराजस्य विवेकस्य विवक्षितं विज्ञापयामि ।

कुल्यत्वेन परिग्रहेऽपि कुटिलप्रस्थानगामिष्वसौ कूटस्थप्रतिकूलवृत्तिषु कृपादाक्षिण्यलेशोज्झितः ।
कामादेः स्वयमौर्ध्वदेहिकविधिं कृत्वा यथार्हं कृती द्रष्टुं त्वां त्रुटितस्वकर्मनिगलं प्राप्तो विवेकः प्रभुः ॥

पुरुषः— (सहर्षबहुमानम्) भद्रे, परमयोगिबहुमतप्रभावे, विष्णुभक्ते! परित्यक्तस्वप्रयोजनमसंभवत्प्रत्युपकारमेवमुपकृतवद्भ्यो भवद्भ्यः परितोषानुगुणं कमपि वरं प्रयच्छामि ।

विवेकोऽयं तत्त्वेष्ववितथविशेषग्रहतनुर्भवोदन्वद्दोषप्रतिगमनिकात्मा च सुमतिः ।
परप्रेमाकारा त्वमिति समवेतास्त्रय इमे तमःपारे त्यक्तत्रिगुणमपि च त्यक्ष्यथ न माम् ॥ ८२ ॥

(विवेको विष्णुभक्तिश्च साञ्जलिबन्धम्) अनन्यलभ्यः प्रसादोयं अस्मास्वलभवतः ।

सुमतिः— (सहर्षम्) महंतो हि एसो वरो महणिज्जो जं अय्यउत्तस्स सहधम्मआरिणी होम्मि । [महान् हि एष वरः महनीयः यदार्यपुत्रस्य सहधर्मचारिणी भवामि ।]

विष्णुभक्तिः— भगवन्! अद्य खल्वासन्नसिद्धिरेव स भवानिति देशिकप्रसादलब्धदिव्यश्रुतिचक्षुषो मे हृदयमेव कथयति । तथा च, सिद्धपूर्वैः सुनिमित्तैरपि सूच्यते । इह हि,

दिव्यस्संप्रति दुन्दुभिर्दिशि दिशि ध्वानैर्मुहुः श्रूयते देवानामपि हावुहावुलहरी विक्षोभयत्यम्बरम् ।
आरब्धप्रतिसंस्कृतिः कृतमुखैरर्चिर्मुखैः श्रीपतेराज्ञाधारिभिरातिवाहिकगणैरादिश्यते पद्धतिः ॥ ८३ ॥

पुरुषः— (सहर्षोल्लासं) अतस्तर्हि कृतकृत्यान् भवतः कृतार्थोऽहमामन्त्रयामि ।

अलं कालप्रहाणेन प्रतीक्षे पश्चिमं दिनम् । अस्मदेकहितैषिभ्यः स्वस्ति वः साधयाम्यहम् ॥ ८४ ॥

अपि च, ग्रहस्वप्ननिमित्तादिमोघचिन्तापराङ्मुखः । प्राप्तं प्राप्तमुपासीनः प्रवेक्ष्यामि परं पदम् ॥ ८५ ॥

अहह! रसरुधिरपिशितमेदःकीकसमज्जाशुक्लमयकलेबरकारागृहान्निष्क्रान्तः शबरकुटीरकोटरात् सार्वभौमपितृसदनसौधाधिरोहणाय संत्वरमाण इव राजकुमारस्तत्तद्देशाधिकारिभिः आतिवाहिकगणैः अनितरसुलभेन देवयानेन त्रिगुणमरुकान्तारमतिवाहितस्तमःपारभूतं परमपदमधिरोक्ष्यामि । यत्र च,

सव्यं पादं प्रसार्य श्रितदुरितहरं दक्षिणं कुञ्चयित्वा जानुन्याधाय सव्येतरमितरभुजं नागभोगे निधाय ।
पश्चाद्बाहुद्वयेन प्रतिभटशमने धारयन् शङ्खचक्रे देवीभूषादिजुष्टो जनयति जगतां शर्म वैकुण्ठनाथः ॥

(परिक्रम्य, सविनयमञ्जलिं बद्ध्वा ।)

दिवि भुवि च निविष्टान् देशिकान् दिव्यभूम्नः प्रणतिनियतवृत्तिः प्रार्थये कंचिदर्थम् ।
अधिजिगमिषुराद्यं धाम युष्मत्प्रभावात् प्रियगतिरनुगृह्य प्रेक्ष्यतां भृत्य एषः ॥ ८७ ॥

अपि च, एते मह्यमपोढमन्मथशरोन्माथाय नाथादयः त्रय्यन्तप्रतिनन्दनीयविविधोदन्ताः स्वदन्तामिह ।
श्रद्धातव्यशरण्यदम्पतिदयादिव्यापगाव्यापकाः स्पर्धाविप्लवविप्रलम्भपदवीवैदेशिका देशिकाः ॥

[इति विवेकसुमतिविष्णुभक्तीस्सप्रसादबहुमानं समीक्षमाणः सिषाधयिषितोत्तरकृत्यो निष्क्रान्तः ।]

सुमतिः— अय्यउत्त! अह किं पडिवालिअ मोरूखदिअहस्स अम्ह कुलवइणो अहिळसिअळाहो विळंबिज्जइ ।

[ आर्यपुत्र ! अथ किं प्रतिपालितमोक्षदिवसस्य अस्मत्कुलपतेरभिलषितलाभो विलम्बेत । ]

**राजा**— देवि ! अस्माभिरनया च महाप्रभावया विष्णुभक्त्या नित्यप्रत्यूढनिखिलान्तरायस्य किं नाम संप्रति काङ्क्षित-विलम्बकारणम् । पश्य पश्य ।

**नन्वहं सुमतिजानिरेकधीः त्वं विवेकसहधर्मचारिणी । आवयोर्मतमनन्यभावयोरर्थ्यमेतदचिरेण सेत्स्यति ॥**

**सुमतिः**— अय्यउत्त ! दाणिं कुत्थ गओ एसो किअकज्जो महापुरुसो । [आर्यपुत्र ! इदानीं कुत्र गत एष कृत-कृत्यो महापुरुषः । ]

**राजा**— प्रिये ! वक्तव्यमेतत् । भूतभाविसमस्तवस्तुवेदिन्या भगवत्या विष्णुभक्त्या ।

**विष्णुभक्तिः**— ( निमीलितदृष्टिः प्रणिधानमभिनीय ) नूनमनिकेतो यत्रसायंगृहत्वमास्थितो यथालब्धवृत्तिर्योगी ।

अथ वा, **श्रीरङ्गं वृषभाचलं करिगिरिं श्रीमद्यदुक्ष्माधरं साकेतं मधुरामुपैष्यति हरिक्षेत्रं बदर्याश्रमम् ।**
**अन्तस्संभृतसप्ततन्त्ववभृथाद्वादेहपातोदयाद्यद्वा संप्रति यत्र कुत्रचिदसौ यत्रैकतानं मनः ॥ ९० ॥**

अपि च, **स्वयंव्यक्तक्षेत्रे विपिनविषये वा विधिवशात्प्रशस्ते दुष्टे वा क्वचन विषये त्यक्तवपुषः ।**
**मुकुन्दस्त्रय्यन्तप्रथितमहिमा सोऽयमनघान् प्रपन्नानुद्धृत्य स्वपदमनपायं गमयति ॥ ९१ ॥**

अद्य चासौ निखिलजगदेकदेहिना नित्यनिरवद्येन देवेन निजनगरपर्यन्तमनवमपुनरावृत्तिमध्वानं निनीषितः । तेन,

**देवर्षिभूतपितृमर्त्यऋणातिलङ्घी दत्ताभयस्य कृपया दृढभक्तिशाली ।**
**पत्युः समस्तजगतां परमं पदं तत्प्राप्स्यत्यसौ गुरुजनैः प्रथमाधिरूढम् ॥ ९२ ॥**

इदमपि किंचिदचिन्त्यमहिमशालिनि अमुष्मिन् महात्मनि अद्भुतमवलोकयामि । अद्य हि,

**कृतमिह दुरितं प्रमादवृत्त्या किमपि मुकुन्दकृपानिमग्नमेनम् ।**
**पवनतनयवालवह्निनीत्या न दहति धक्ष्यति योजितं परेषु ॥ ९३ ॥**

**राजा**—( सहर्षबहुमानम् ) भगवति विष्णुभक्ते! विश्वसाक्षात्कारविचक्षणायास्ते किमेतावत्परिमितातिशयदर्शनमाश्चर्यम् । ( विचिन्त्य स्वगतम् ) महाप्रभावैषा मम वन्दनीया । (प्रकाशम्)

**विधिवशनियतेन विष्णुभक्ते प्रणिपतनेन वयःक्रमाधिकोऽपि ।**
**उचितमुपचरामि विश्वमान्यां हरिपदपद्मरतिं परामहं त्वाम् ॥ ९४ ॥**

(सुमतिं विलोक्य) प्रिये ! त्वमप्येनामसत्प्रयुक्तप्रतिष्ठामप्यादिपूरुषमूर्तिमिव प्रणन्तुमर्हसि ।

**विष्णुभक्तिः**— ( सप्रश्रयम् ) महाराज ! अनादिसंसारसागरनिमग्नमस्मत्कुलपतिं पुरुषमुद्धृतवते पूर्वजाय भवते प्रतिप्रणाममभिरोचयामि ।

**विवेकः**— महायोगेश्वरि !

**किं विज्ञानैः किं तपोदानयज्ञैः किं वाऽन्यैश्च त्वत्परित्यागदीनैः ।**
**ज्ञातुं द्रष्टुं तत्त्वतश्च प्रवेष्टुं शक्यं ब्रह्मानन्यभाजा त्वयैव ॥ ९५ ॥**

विष्णुभक्तिः— (विचिन्त्य) भवत्वेतदेवमन्यथा वा। प्रत्येमि तावन्मत्समक्षमेव मनीषितं साधयतः स्वयमकर्तृत्वाभिमानाभिप्रायम्। सर्वथा निस्तरति तावदयमसौ निष्प्रत्यूहभगवदनुकंपावलंबितः पुरुषस्सर्वदोषाकरं संसारसागरं प्रविशति च परमं पदम्। किं ते भूयः प्रियमुपहरामि।

राजा— भगवति महानुभावे !

किं तत्प्रियं परमतः प्रतिपादनीयं पद्मासहायपदपद्मजुषा भवत्या।
पश्यामि यत्पुरुषमेवमपास्तपङ्कं राकाशशाङ्कमिव राहुमुखाद्विमुक्तम्॥ ९६॥

अपि च, अपुनरुदयो मायामोहः स्थलीमधिशायितः स्फुरति मुरभिद्भक्तिर्भव्या भवत्यनुपप्लवा।
सरणिमपुनःप्रत्यावृत्तिं भजत्यनघः पुमान् किमिह बहुभिः क्रीडत्यग्रे समीहितमद्य नः॥ ९७॥

किमन्यदहमिह भवत्यास्सकाशादाशासे। तथापीदमस्तु।— भरतवाक्यम्।

अङ्गीकुर्वन्त्वकलुषधियो नित्यमध्यात्मविद्यामाद्यो धर्मः स्पृशतु वसुधामाशिषः पारवर्ती।
देवः श्रीमान् निरवधिदयासिन्धुरस्मिन्प्रबन्धे वक्ता श्रोता वचनविषयः प्रीयतां वासुदेवः॥ ९८॥

[ इति निष्क्रान्तास्सर्वे।

इति श्रीकवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य श्रीमद्वेदान्ताचार्यस्य कृतिषु संकल्पसूर्योदयनाटके दशमोऽङ्कः।

---

स्तोतुं निन्दितुमस्मदुक्तमथवा सोढुं समूढं जगत् किं नश्छिन्नमनन्तचिन्तनरसे सुस्थे सुखं तस्थुषाम्।
शिष्याः शिक्षितबुद्धयः श्रुतिपथे येषां वयं ये च नस्तत्सन्तोषसमर्पणक्षममिदं साडम्बरैः किं परैः॥

॥ ग्रन्थश्च समाप्तः॥

श्रीवेदान्तदेशिकग्रन्थमालायां
काव्यनाटकविभागः समाप्तः॥

## क्रय्य पुस्तक सूची.

---

श्रीभगवद्रामानुजमुन्यनुगृहीत श्रीभाष्याद्यखिलग्रन्थविभूषिता भगवद्रामानुजग्रन्थमाला.

(तैलङ्गाक्षर).... 6—0—0

श्रीमद्वरवरमुनीन्द्रग्रन्थमाला.

( श्रीवचनभूषण—तत्त्वत्रय—मुमुक्षुप्पडि—आचार्यहृदयव्याख्यानविभूषिता ) ,, .... 5—0—0

श्रीमद्वेदान्तदेशिकग्रन्थमालायाम्—

हयग्रीवस्तोत्रादि पादुकासहस्रान्त सकलस्तोत्रसंभृतः स्तोत्रावलीविभागः .... .... 2—0—0

अधिकरणसारावली शतदूषणीविशिष्टम्— वेदान्तविभागस्य प्रथमसंपुटम् .... .... 3—0—0

मीमांसापादुका—सेश्वरमीमांसा—न्यायपरिशुद्धि—न्यायसिद्धाञ्जनविशिष्टम्—

वेदान्तविभागस्य द्वितीयसंपुटम् .... 3—0—0

सर्वार्थसिद्धिसमेत तत्त्वमुक्ताकलापात्मकम्— ,, तृतीयसंपुटम् .... 4—0—0

गीताभाष्यतात्पर्यचन्द्रिकादिग्रन्था अचिरात् सज्जीभवन्ति. तथा अन्ये च बहवो ग्रन्थाः.

**सर्वत्र प्रापणव्ययः पृथक्.**

प्राप्तिस्थानम् :—

ग्रन्थमाला आफीस,

३९. सन्निधि वीथी,

कञ्जीवरम्.

20—3—1941.